॥ श्रीहरिः ॥

# परिभाषेन्दुप्रभा

भावप्रकाशिकाव्याख्यासंवलिता

ासावटङ्कश्रीमदमृतलालशास्त्रिविरचिता



सम्पादकः परिवेषकश्च

कृष्णशङ्करशास्त्री ❀ अतिथिः

# PARIBHĀṢENDU PRABHĀ

WITH

# BHĀVAPRAKĀSIKĀ

*By*

ŚRĪ AMṚTALĀLA ŚĀSTRĪ





*Edited By*

ŚRĪ KṚṢṆA ŚAṄKARA ŚĀSTRĪ

*Publishers*

VIṢṆU ŚAṄKARA AMṚTALĀLA VYĀSA

AND

MĀNA ŚAṄKARA AMṚTALĀL VYĀSA

FIRST EDITION] [PRICE Rs. 5

1964

॥ श्रीहरिः ॥

# परिभाषेन्दुप्रभा

भावप्रकाशिकाव्याख्यासंवलिता

पेटलादपुरस्थश्रीनारायणसंस्कृतमहाविद्यालयप्रधानाचार्य-
वेदान्तव्याकरणतीर्थेन

श्रीत्रिभुवनतनयेन श्रीमदमृतलालशर्म्मणा

विरचिता





सम्पादकः परिवेषकश्च

श्रीदलसुखरामात्मजः कृष्णशङ्करशास्त्री

'अभिनवशुकः' वेदान्ताचार्यः साहित्यतीर्थः श्रीभागवतसुधानिधिः ।

प्रकाशकौ

श्रीविष्णुशङ्करशास्त्री
श्रीमन्मानशङ्करव्यासः

सं० २०२० ] मूल्यं रूप्यकपञ्चकम् [ प्रथमावृत्तिः

प्रकाशकौ

विष्णुशङ्करशास्त्री अमृतलालशास्त्री

गीताविद्यालय जामखंभालिया (सौराष्ट्र)

मानशङ्कर-अमृतलालव्यासः

६४ पङ्कज-शारदासोसाइटी अहमदाबाद (गुजरात)



पुस्तकप्राप्तिस्थानानि

कृष्णशङ्करशास्त्री

आतिथेयम्, नडियाद (गुजरात)

मनुभाई व्यास

६४ पङ्कज शारदासोसाइटी एलीसब्रिज, अहमदाबाद

मोतीलाल बनारसीदास

नेपाली खपड़ा, वाराणसी ।

मुद्रकः

बालकृष्णशास्त्री

ज्योतिषप्रकाश प्रेस

कालभैरव मार्ग, वाराणसी ।



श्रीत्रिभुवनात्मज श्रीअमृतलाल शास्त्रिणः

जन्म : श्रावण कृष्ण ५
बृहस्पति सं. १९४६

मुक्ति : ज्येष्ठ शुक्ल
शनि सं. १९९३



## ❃ कुसुमाञ्जलिः ❃

तीर्थेषु तातचरणेषु नतिं विहाय
नान्यां कृतिं स्मृतिरताः प्रभवन्ति कर्त्तुम् ।
यत्पुत्र-छात्र-सखि-मित्र-सुहृत्स्वरूपैः
संपालिताः कृतिविदः किमु विस्मरेम ॥

नित्यं त्वनित्यधनमोहसुखादिवाञ्छां
स्वच्छान्तरात्मबलनिश्चयतो विजित्य ।
स्वाध्यायशास्त्रपरिशीलनचिन्तनार्थै-
र्भाव्यं भवद्भिरनिशं ह्युपदिष्टमार्यैः ॥

यैर्जीवितं परहिते सततं प्रदत्तं
यैर्नार्थितं धनसुखं न्युषितं विरक्त्या ।
यैरर्चितं हरिपदं विजितं सुभक्त्या
शक्त्या कया नु गुणवर्णनमेमि तेषाम् ॥

प्रभां प्रभावं मधुरं स्वभावं
निधाय याताः सुनिधिं विधिज्ञाः ।
गृह्णन्तु येषामुपयोग एषां
सन्तो न सक्ताः फलभाजनेषु ॥

प्रभाप्रभावार्द्रमृदुस्वभाव-
स्वभावविद्भिर्ननु कृष्णशङ्करैः
आचार्यविद्भिश्च मुदा प्रभायाः
"प्रकाश" आचार ईहार्जितस्तैः

आचार्यवर्या व्रजराजलाला
राजन्त एते भुवि सूरिसूर्याः।
सभापतित्वेऽत्र वृताः प्रभाया
नैमित्तिके भागवतस्य सत्रे ॥

प्रधानभूतातिथिसद्विशेषाः
'बलवन्त जी' गुर्जरसत्प्रधानाः।
लसन्ति चान्ये सदि सूरिवर्या
अनेकदेशान्तरतः समेताः ॥

व्याख्यानिके कर्मणि कृष्णशङ्कराः
अध्वर्यवो वैष्णवभावपुष्टाः
वाचस्पतित्वं प्रथितं सभासु
तान् तांश्च सूरीन् च सभां नमामः

अतिथिभ्यश्च सर्वेभ्यो
मित्रेभ्यश्च मुदा वयम्।
स्नेहार्द्रभावसंपुष्टं
पुष्पाञ्जलिं ददामहे ॥

समर्पकाः
विष्णुशङ्करशास्त्री
मानशङ्करव्यासः
कुटुम्बिनश्च

# विषयान्वयिका

Rashtrapati Bhawan
New Delhi—1
October 7, 1964.

I am glad to know that the late Shri Amritlal Tribhuvan Shastri's research work on the Paribhashendu Shekher of Vyakarana Shastra has been published and that the inauguration ceremony is being held at Ahmedabad. I am sure that Shri Amritlal's work is a very valuable addition to the studies on Sanskrit Grammar and will be widely appreciated by scholars all over the country.

Sd./S. Radhakrishnan.

राष्ट्रपतिभवनम्
न्यू दिल्ली-१
अक्तूबर ७, १९६४

## राष्ट्रपतिश्रीमत्सर्वपल्लिराधाकृष्णन्-महोदयानां
## सम्मतिः

प्रमोदे बुद्ध्वेदं यद् व्याकरणशास्त्रस्य परिभाषेन्दुशेखरनामकं ग्रन्थम् अधिकृत्य, त्रिभुवनात्मजश्रीमदमृतलालशास्त्रिणाम् अनुसन्धानग्रन्थः प्राकाश्यम् आनीयते। तत्प्रतिष्ठापनोत्सवश्च अहमदावाद-पत्तने समायोज्यते। विश्वसिमि यच्छ्रीमदमृतलाल-महोदयानां कार्यं संस्कृत-व्याकरणानुशीलनविधौ वरीवर्ति महत्त्वाधायकम्; अनूनके राष्ट्रे विपश्चिदपश्चिमैः सुसत्करिष्यते चेति।

एस. राधाकृष्णन्

॥ श्रीगुरुः शरणम् ॥

( वाराणसेयसंस्कृतविश्वविद्यालयीय-राजशास्त्रविभागाध्यक्षाणाम् )

## 'पद्मभूषण' इत्युपाधिभाजां पण्डितराजानां श्रीमद्राजेश्वरशास्त्रि-द्राविडमहाभागानां सम्मतिः

अर्थशास्त्रे शासनाधिकारप्रकरणे राजशासनानाम् "अकारादयो वर्णास्त्रिषष्टिः। वर्णसङ्घातः पदम्। तच्चतुर्विधं नामाख्यातोपसर्गनिपाताश्चेति। तत्र नाम सत्त्वाभिधायि। अविशिष्टलिङ्गमाख्यातं क्रियावाचि। क्रियाविशेषकाः प्रादय उपसर्गाः। अवयवाश्चादयो निपाताः। पदसमूहो वाक्यमर्थपरिसमाप्तौ। एकपदावरस्त्रिपदपरः परपदार्थानुरोधेन वर्गः कार्यः। (१०-२) इत्यादिना यत्स्वरूपं निरूपितं तद्व्याकरणसिद्धसाधुपदसापेक्षम्। अन्यथा भारतीयराजनीतेः स्थापनं दुष्करम्। तदभावे प्रत्यवायोऽप्यस्मान् धार्मिकान् परिभवति। "याज्ञे कर्मणि नापभाषन्ते" इति महाभाष्यम्, मीमांसाया व्याकरणाधिकरणं चात्र प्रमाणं यथा, तथा वीरमित्रोदयव्यवहारप्रकाशस्थिता निम्नलिखितपङ्क्तयोऽपि। तथाहि—"इदं च साधुशब्दैरेव लेखनीयं न लौकिकवत्तदनियमः। तथा च संग्रहकारः—

"राजस्वहस्तचिह्नेन राजादेशेन संयुतम्।
युक्तं राजाभिधानेन मण्डितं राजमुद्रया॥
सुलिप्यनपशब्दोक्तिसम्पूर्णावयवाक्षरम्।
शासनं राजदत्तं स्यात्सन्धिविग्रहलेखकैः॥"

अन्तिमपदोत्तरं लिखितमिति शेषः।" इति।

अपशब्दश्च—"लिङ्गवचनकालकारकाणामन्यथाप्रयोगोऽपशब्दः" (कौ० अ०) इत्युक्तः। एवं स्थिते भारतीयराजनीतिशासनस्थापनकामैर्व्याकरणस्यापि परिस्थापनमवश्यं कर्तव्यमित्यत्र न कस्यापि विप्रतिपत्तिः स्यात्। व्याकरणशास्त्रे परिभाषेन्दुशेखरग्रन्थोऽभ्यासविषयोऽस्मदालये आसीद्वैयाकरणानाम्। तदुपरि "भूतिटीका" स्व. म. म. रामकृष्ण(तात्या)शास्त्रिभिर्निर्मिता मूलग्रन्थवद्वैयाकरणैः

पठ्यमानाऽऽसीत् । तत्र कारणं शेखरग्रन्थस्य दुरूहत्वमेव । तदनु दिवङ्गतैः म. म. जयदेवमिश्रमहाभागैः कृता "विजया" नाम्नी टीका कीर्तिमती प्रावर्तत । टीकयोरनयोः सत्त्वेऽप्यस्मिन् करालसमये व्याकरणशास्त्रं विलुप्यमानमिव दृश्यते । तत्र कारणं काठिन्यमेवास्य शास्त्रस्य । स्व. मिश्रमहोदयानामन्तेवासिभिः पूजनीयास्मत्पितृचरणद्वारावेदान्तशास्त्राध्ययनशालिभिः दिवंगतैः श्रीमदमृतलालशास्त्रिमहोदयैः कृता स्वकीयटीकासहिता "परिभाषेन्दुप्रभा" नाम्नी कारिकावली न्यायशास्त्रीयमुक्तावलीकारिकामनुकरोति ।

भारतीयराजनीतिस्थापकस्य वर्णाश्रमस्वराज्यसङ्घस्येदं कार्यं सङ्घान्तर्गतैरेव श्रीशास्त्रिमहोदयैः कृतम् । तस्य मुद्रणं पुनर्व्याकरणजिज्ञासासमयेऽवलम्बभूतं भविष्यतीति विश्वसिमि । तादृशजिज्ञासोत्थापनं तु सर्वैर्धार्मिकैः कार्यम् । अत एतत्प्रकाशनं यैर्महोदयैः कृतं तान् सर्वान् पुण्यभाजोऽभिनन्दामि । इति ॥

महाशिवरात्रिः
२०२१

श्री राजेश्वरशास्त्री द्राविडः




॥ श्रीः ॥

## वाराणसेयसंस्कृतविश्वविद्यालये भूतपूर्वपुराणविभागाध्यक्षाणां श्रीमदनन्तशास्त्रिफडकेमहाशयानां सम्मतिः

श्रीमतां विद्वद्वराणां संप्रति सुरराजातिथ्यं सेवमानानां पण्डितश्रेष्ठानाममृतलालशास्त्रिणां परिभाषेन्दुशेखरस्य श्रीनागेशकृतस्य नूतनायाः प्रभानाम्न्याष्टीकाया निर्माणं नितरां विनेयानां छात्राणां परस्मै श्रेयसे समजनीति कथने न मिथ्यावादभीतिर्जिह्वायाः ।

प्रतिशास्त्रं विद्यमानानां सन्देहग्रन्थीनां भेदकाः केचन संकेताः सन्ति, त एव शब्दात्मकं रूपं धृत्वा परिभाषाकोटिमाटीकन्ते । व्याकरणशास्त्रेऽपि सन्ति शताधिकाः परिभाषारूपसंकेताः । यैर्विना व्याकरणशास्त्रस्थितसंदेहग्रन्थीनां भेदनं न शक्यमिति जानन्ति वैयाकरणाः ।

ताः परिभाषाः क्वचिद्वाक्यरूपेण भाष्ये निबद्धाः, क्वचिद् ज्ञापकैर्न्यायैश्च सिद्धाः, श्रीसीरदेवेन परिभाषावृत्तिनाम्ना ग्रन्थेन, श्रीनागेशभट्टेन च परिभाषेन्दुशेखरेण च व्याख्याता उपजीवति वैय्याकरणकुलम् । अथापि सर्वथाच्छात्राणां मार्गेणर्जुनोपकारं भवत्विति विचार्य पण्डितवरैरमृतलालशास्त्रिभिरार्यावृत्तैः श्रीनागेशाभिप्रायस्य स्फोरणं यया कुशलया रीत्या समपादि, तां तेषां रीतिं दृष्ट्वा विदुषां हृदि प्रमोदोऽमन्दो हठात्प्रादुर्भवति । अत्र प्रभाटीकायां शास्त्रसाधकादिप्रकरणेषु सहस्राधिका आर्याणां हृद्या आर्याः सन्ति । अलङ्काराणामिव तासां लघुना परिश्रमेण कण्ठस्थीकरणं छात्राणां संसदि श्रेयसे भवेत् ।

क्वचिच्च परिभाषेन्दुतोऽप्यत्र परिभाषाणां विशदीकरणमुपलभ्यते, यथा— निर्दिश्यमानप्रत्ययग्रहणे यस्मादित्यादि-परिभाषाः समुदाहर्तुं शक्यन्ते ।

प्रभाया अपि प्रकाशनाय भावप्रकाशनाम्नीं टीकामपि शास्त्रिमहोदयैर्निर्माया- धमर्णीकृतं छात्रकुलमिति निश्चप्रचम् ।

पुनश्च प्रभा-भावप्रकाशसहितपरिभाषेन्दोः प्रकाशनं विना सकलदेशस्थितानां छात्राणामुपकृतिर्न संभवेदिति संनिधार्य अभिनवशुक-वेदान्ताचार्याद्यने-

कोपाधिधारिभिरपि ब्रह्मोपाधिपरित्यागाय श्रीमद्भागवतव्याख्यानद्वारा जनानुपदिशद्भिः श्रीमद्भिः कृष्णशङ्करशास्त्रिभिर्बहुना द्रव्यव्ययेन संमुद्य ग्रन्थः संप्रति प्रकाशमानीयत इति सुवर्णे सुगन्ध इव श्रीमतां कृष्णशास्त्रिणामिदं कार्यम्। ग्रन्थेन साकं सुललितया भाषया श्रीनागेशस्य प्रभाकारस्य च चरितमन्ते चेश्वरोपकारनिरूपणस्तुतिर्मोक्षमार्गोपदेशश्चेति प्रभाकर्तुः सुमधुर-ललित-सुगेयस्तोत्रद्वयं संयोज्य सूपकारः कृतो विद्वत्कुले श्रीमद्भिः प्रकाशकमहोदयैः। आस्ताम्। स्वभावतः प्रशस्तस्य प्रशंसयालम्। अहं ग्रन्थस्यास्य प्रचारः सर्वत्र भवत्विति हृदयेन कामये, तदर्थं प्रार्थये च गङ्गातरङ्गभङ्गरञ्जितचरणं विश्वेषां नाथं महेशमिति।

माघ शु० ५/२०२१
ता० ६–२–१९६५

श्री अनन्तशास्त्री फडके

## भारतशासनेन सम्मानपत्रप्राप्तानां वाचस्पतिसाहित्यवाचस्पत्याद्यनेकोपाधिविशिष्टानां वाराणसेयसंस्कृतविश्वविद्यालये सम्मानितप्राध्यापकानां म. म. श्रीगिरिधरशर्मणां सम्मतिः

विद्वद्वरश्रीमदमृतलालशास्त्रिविरचिता 'परिभाषेन्दुप्रभा' नाम्नी परिभाषेन्दुशेखरग्रन्थस्य पद्यमयी संस्कृतव्याख्या अनेकेषु स्थलेषु मया दृष्टा। यद्यपि संस्कृते समुपनिबद्धानां पुरातनानां ग्रन्थानामप्यवगाहः दुस्साध एव जातोऽद्यत्वे। अभिनवग्रन्थावलोकनविमुखानां प्राचीनकतिपयग्रन्थमात्रसीमितपरिश्रमाणां संस्कृतप्रणयिनां मध्ये ईदृशस्याभिनवस्य ग्रन्थस्य कियान् प्रचारो भविष्यतीति न सम्यगवधारयामि। परिभाषेन्दुशेखरे च बहुभिः सूरिभिर्बहु पराक्रान्तम्। तेषां सर्वेषां संग्रहस्तु दुस्साध एवात्रास्ति तथापि बहुषु स्थलेष्वत्र परिष्कारप्रणाल्या अप्युपजीवनं कृतम्। ईदृशस्य ग्रन्थस्य पद्यमयं व्याख्यानमप्यतिदुष्करम्। तथापि तत्र ग्रन्थकर्तृमहाशयेन साफल्यमासादितमिति स्पष्टमहं ब्रवीमि। ईदृशस्याभिनवस्यातिपरिश्रमसाध्यस्य कार्यस्य संपादनकृते विद्वांसमेनं धन्यवादैरहमभिनन्दामि, प्रचारं चास्य ग्रन्थस्य हृदयेनाशासे—

रंगभरी एकादशी
२०२१

गिरिधरशर्मा चतुर्वेदी

वाराणसेयसंस्कृतविश्वविद्यालये वेदान्तविभागाध्यक्षाणां सर्वतन्त्र-स्वतन्त्रश्रीमद्रघुनाथशर्ममहोदयानां सम्मतिः—

श्रीमता विदुषामग्रेसरेण अमृतलालशास्त्रिणा निरवद्यैर्विविधैः पद्यैरुपनिबद्धा परिभाषेन्दुप्रभा इन्दुप्रभेव परिभासार्थे परिभाषार्थमवद्योतयन्ती केषां न विद्वच्च-कोराणां मनोमोदहेतुः। एष च ग्रन्थः श्लोकबद्धतया सद्य एव विविदिषूणां बुद्धिमध्यमध्यारोक्ष्यति भट्टिकाव्यमिवेति समादरविषयो विदुषाम्। अपेक्षितानां दुरूहाणाञ्चार्थानां श्लोकबन्धः प्राचामपि स्वभावसिद्ध आसीदिति सर्वस्मिन् संस्कृत-वाङ्मये कारिकबन्धदर्शनेन विज्ञायत एव। आशासे—इमां सतर्षेण चक्षुषाऽऽपीय कुतुकोत्के च हृद्यवस्थाप्य सफलीकरिष्यन्ति सन्तो लेखक-श्रममिति।

रघुनाथ शर्मा
वा० सं० वि० वि०
वाराणसी।

वसन्त पञ्चमी
२०२१

# ॥ आशीर्वचनम् ॥

अनन्तश्रीविभूषितजगद्गुरुशङ्कराचार्यकाशीसुमेरु-
पीठाधीश्वरस्वामिमहेश्वरानन्दसरस्वतीपादानाम्
( कवितार्किकचक्रवर्तिपण्डितमहादेवशास्त्रिणाम् )

( १ )

सुन्दरैर्विशदैः प्रौढैर्मार्मिकैः सरसैः शुभैः ।
प्रामाणिकैर्नातिदीर्घैः संप्रदायार्थशालिभिः ॥

( २ )

कवित्वपूर्णैस्तर्काढ्यैरार्यावृत्तैर्मनोहरैः ।
आचार्यानुगतैः शुद्धैः सूक्ष्मदर्शनसस्पृहैः ॥

( ३ )

छात्रोपकारप्रवणैः सुलभाभ्यासभासितैः ।
परिष्कारप्रकारेद्धैः सविशेषनिरुपणैः ॥

( ४ )

श्रीमतामृतलालेन व्युत्पत्तिप्रतिभाजुषा ।
सद्गुरूपासनावाप्तव्याकृतिज्ञानभानुना ॥

( ५ )

श्रीमत्त्रिभुवनाभिख्यविद्वदुत्तमसूनुना ।
भावप्रकाशिकाव्याख्यायुता विषयगह्वरा ॥

( ६ )

पारिभाषेन्दवी भव्या प्रभा भारतभासिनी ।
कृता समज्ञां चुम्बन्ती वर्धमाना प्रदीप्यताम् ॥

( ७ )

श्रीमन्महेश्वरानन्दशङ्कराचार्यलक्षणैः ।
विहिताशिराशिरेष ग्रन्थकृद्भ्योऽस्तु मङ्गलः ॥

शुभाशंसिता—
महेश्वरानन्दसरस्वती

# परिभाषापरम्परा

## शास्त्रत्वसाधकप्रकरणम्

## बाधबीजनिरूपणप्रकरणम्

## शेषार्थनिरूपणप्रकरणम्

॥ श्रीहरिः ॥

# किञ्चित् प्रासङ्गिकम्

## भद्रैषां लक्ष्मीर्निहिताधिवाचि

परिभाषेन्दुशेखरो व्याकरणग्रन्थः। पाणिनीयसूत्राद्यर्थनियमविषयिणीयं परिभाषा। श्रीनागेशभट्टसूरयोऽस्य ग्रन्थस्य निर्मातारः। प्रायेण तमनुसृत्य श्रीमताममृतलालशास्त्रिणां पद्यमयी "प्रभा" ख्या व्याख्या। तत्पद्यग्रन्थस्योपर्यपि विशदा भावप्रकाशिका अतः प्रसङ्गप्राप्तं व्याकरणशास्त्रं प्रयोजनविषयं पाणिनीयोपकारककालविषयं श्रीनागेशमहाशय जीवनलेखनविषयं श्रीमदमृतलालशास्त्रिणां कवनजीवनविषयं च मनसि निधाय किञ्चित् प्रासङ्गिकं महद्भ्यः सूरिभ्यो नमोवाकं निवेदयन् पुरस्कुर्वे।

बुभुक्षितैर्व्याकरणं न भुज्यत इति विद्यमाने हि विरोधिवाक्ये किमर्थं वारं वारमादिश्यते—'तस्मादध्येयं व्याकरणम्' 'यद्यपि बहु नाधीषे तथापि पठ पुत्र व्याकरणम्' इति जागर्ति प्रश्नः। तत्रेदमुच्यते यद् भाषावबोधाय चेद् न, अनधीयाना अप्यर्भका निजनिकेतनेषु तत्तच्छब्दैस्तेषु तेषु पदार्थेषु त्यागादाने प्रवृत्तिनिवृत्ती निजाप्ता-नामन्वीक्षमाणाः शिक्षणमन्तरा भाषाविदो विचक्षणाः कार्यक्षमाश्चावलोक्यन्ते। कुतः पुनरुद्घोष्यते—'तस्मादध्येयं व्याकरणम्' इति।

अवधारयन्तु, भाषाव्यवहारसत्त्वासत्त्वेऽपि सर्वशास्त्रतत्त्वावबोधायाभ्युदयाय निःश्रेयसे च व्याकरणमध्येतव्यम्। तथाहि—

> शक्तिग्रहं व्याकरणोपमानकोशाप्तवाक्याद् व्यवहारतश्च।
> वाक्यस्य शेषाद् विवृतेर्वदन्ति सान्निध्यतः सिद्धपदस्य वृद्धाः॥

शक्तिग्रहे व्याकरण-उपमान-कोश-आप्तवाक्य-व्यवहार-वाक्यशेष-विवृति-सिद्धपद-सान्निध्यादिषु परिगणितेषूपायेषु व्याकरणशास्त्रस्य स्वरूपाधायकत्वाद् भाषायाः सर्वथोप-कारकत्वान्महत्त्वमविवादग्रस्तम्। संस्कृतभाषाभाषणव्यवहारस्य सत्त्वेऽपि न तोषाय व्यवहारः, यतो हि पदार्थतात्पर्यबोधो व्यञ्जितार्थध्वनितार्थलक्षितार्थबोधमन्तरा न सुलभः। तत्र तु व्याकरणमेव विलसति तथा। एवञ्च भाषाव्यवहाराभावे तु समापतितमध्ययनं स्वत एव। यद्यपि कोशस्याप्युपकारकत्वमस्ति किन्तु तस्य नाम्नां ग्रहणेनोपरामः। व्याकरणे त्विमानि 'रक्षोहागमलध्वसंदेहाः प्रयोजनम्' इति साकल्येन निर्दिष्टानि कारणानि केषां नाभिमतानि? लोपागमवर्णविकारज्ञो हि सम्यग् वेदान् पठिष्यति

परिपालयिष्यति ज्ञास्यति च वेदार्थान् विधास्यत्यनुष्ठानं परिप्राप्स्यति च निःश्रेयससिद्धिम्। अतो हि वेदरक्षार्थं व्याकरणाध्ययनमापतत्येव । तदुक्तं महाभाष्ये—'आगमः खल्वपि—'ब्राह्मणेन निष्कारणो धर्मः षडङ्गो वेदोऽध्येयो ज्ञेयश्च'इति । प्रधानं च षट्स्वङ्गेषु व्याकरणम् । प्रधाने च कृतो यत्नः फलवान् भवति ।"

एवं व्याकरणाध्ययनेन साधुशब्दज्ञानद्वारा तदज्ञानजपापक्षयादिरूपादृष्टानि वेदरक्षारूपदृष्टानि च फलानि सम्पत्स्यन्ते । वेदेषु च सर्वैर्लिङ्गैः सर्वाभिश्च विभक्तिभिर्न मन्त्राः निरूपिताः । ते च यज्ञविधानपरेण पुरुषेण तत्तल्लिङ्गादिबोधकपदघटिततया विपरिणमयितव्या भविष्यन्ति । यथा "अग्नये त्वा जुष्टं निर्वपामि" इत्यत्र 'सौर्यं चरुं निर्वपेत् ब्रह्मवर्चसकामः' इति सौर्ये चरौ मन्त्र ऊह्यते—'सूर्याय त्वा जुष्टं निर्वपामि'इति । विपरिणमनात्मकमिदमूहनमवैयाकरणेनाशक्यम् ।

श्रीबादरायणा अप्याहुः—

> वेदार्थज्ञो जपं ज्ञात्वा तथैवाध्ययनं द्विजः ।
> कुर्वन् स्वर्गमवाप्नोति नरकं तु विपर्यये ॥

अत्र जपपदं मन्त्रसाध्यकर्ममात्रोपलक्षणम् । ज्ञाधातोश्च ज्ञानानुकूलो मनःप्रणिधानविषयेन्द्रियसंयोगसम्पादनादिरूपो व्यापारोऽर्थस्तस्यैवात्र विधेयत्वम् । भाषालाघवं पाटवं च भाषायां व्याकरणादेवेति सर्वानुभूतम् । संदेहनिवृत्तिरपि शब्दशास्त्रसंबलादेवेति निश्चप्रचम् । 'मुखं व्याकरणं प्रोक्तम्' 'काणादं पाणिनीयं च सर्वशास्त्रोपकारकम्' इत्युक्तेः पाणिनीयव्याकरणस्यैवाध्ययनं हिताय । श्रुतिरपि निगदति गौरवं शास्त्रस्यास्य मन्त्रेणानेन—

> चत्वारि शृङ्गा त्रयो अस्य पादा
> द्वे शीर्षे सप्त हस्तासो अस्य ।
> त्रिधा बद्धो वृषभो रोरवीति
> महो देवो मर्त्यॉं आविवेश ॥ इति ।

चत्वारि पदजातानि नामाख्यातोपसर्गनिपाताः शृङ्गाणि । शृङ्गाणीत्यत्र "शेश्छन्दसि बहुलम्" ६।१।७० इत्यनेन शिलोपे नलोपे च कृते सिद्धिः । अथवा "सुपां सुलुक् पूर्वसवर्णाच्छेयाडाड्यायाजालः"—७।१।३९ इत्यनेन शेर्डादेशे निष्पत्तिः । 'नामशब्देन सुबन्तं नमत्याख्यातार्थं प्रति विशेषणीभवतीति व्युत्पत्तेः । आख्यातं तिङन्तम् । उपसर्गनिपातयोः पृथगुपादानं गोबलीवर्दन्यायेन'इति नागेशः । त्रयो भूतभविष्यद्वर्तमानाः काला अस्य पादाः । द्वे शीर्षे—द्वौ शब्दात्मानौ नित्यः कार्यश्च । शीर्षशब्दोऽत्राकारान्तनपुंसकलिङ्गः कोशोक्तो ग्राह्यः । सप्त हस्तासो अस्येति सप्त विभक्तयः हस्तरूपाः, 'आज्जसेरसुक्' ७।१।५० इत्यनेनासुकि देवास इतिवद् हस्तासरूपम् । त्रिधा

बद्धः = त्रिषु उरसि कण्ठे शिरसि स्थानेषु निबद्धः। वृषभो वर्षणात्। रोरवीति = शब्दं करोति। महो देवो महान् देवः शब्दः। मर्त्यां मनुष्यानाविवेश। ब्रह्मविद् ब्रह्मैव भवतीति श्रुतेः शब्दब्रह्मस्वरूपत्वादध्येयं व्याकरणम्।

एतदपि विचिकित्स्यं यत् सन्ति बहूनि व्याकरणानि। किं तावत् तत्र पठनीयं ? तथाहि

इन्द्रश्चन्द्रः काशकृत्स्नापिशली शाकटायनः।
पाणिन्यमरजैनेन्द्रा जयन्त्यष्टादिशाब्दिकाः॥

पद्येऽस्मिन् अष्टौ व्याकरणप्रणेतारः पठिताः। एतादृशमपरमप्यस्ति वचनम्। तत्र व्याकरणानामुल्लेखोऽस्ति तत्कर्तृभिः सत्रा—

ऐन्द्रं चान्द्रं काशकृत्स्नं कौमारं शाकटायनम्।
सारस्वतं चापिशलं शाकलं पाणिनीयकम्॥

अवधेयमेतदत्र—एतेषां व्याकरणविधातृत्वमौपचारिकम्। पद्येऽपि ते आदिशाब्दिकत्वेनाख्याताः। शाब्दिकत्वं नाम शब्दशास्त्रपारङ्गतत्वं शब्दव्यवस्थापकत्वं शब्दशास्त्रप्रसारकप्रचारकत्वं चेत्यनेकेऽर्थाः सन्ति। शब्दशास्त्रपदेन कोशमीमांसादिकमपि संगृह्यते। महत्सु सूरिषु प्रयुज्यमाने "पदवाक्यप्रमाणपारावारीणः" इति पदे 'पद'शब्देन व्याकरणं 'वाक्य'—शब्देन मीमांसां 'प्रमाण'शब्देन च न्यायं निर्दिशन्त्यभिज्ञाताः। अतः शब्दपदेन पदं वाक्यमित्युभयं ग्रहीष्यते। तस्माद् वाक्यार्थनिर्णयित्री मीमांसापि शब्दशास्त्रम्। एवं परिगणितेष्वेतेषु शाब्दिकेषु शाब्दिकत्वं विभिन्नार्थद्योतकत्वं प्रसिद्ध्यति। तेन केचन मीमांसकाः शाब्दिकाः केचन शब्दकोशसंकलनकर्तारोऽपि शाब्दिकाः। अस्तीन्द्रविषये विप्रतिपत्तिर्बहुशः श्रूयमाणत्वादिन्द्रस्य। पद्ये निर्दिष्टः व्याकरणकर्ता शाब्दिकः कस्तावदिन्द्रः किञ्च तद्विनिगमकम्। एको ह्यविग्रहो जगन्निर्माता प्राणविशेष इन्द्रः 'इन्द्रो मायाभिः पुरुरूप ईयते' इति श्रुतिगीतः। अपरस्तारामण्डलस्थश्चित्रानक्षत्रस्याधिपतिस्तद्योगतारारूप इन्द्रः। एकश्च द्युलोकवासिषु विग्रहधारिषु परिगणितेषु सर्गनिर्मातृषु देवेषु 'ब्रह्मा प्रजापतिरिन्द्रः' इत्यादिगृहीतेषु देवेषु देव इन्द्रः "अष्टौ वसव एकादश रुद्रा द्वादश आदित्याः इन्द्रः प्रजापतिश्च" इति श्रुतिः। कश्चन हिमवत उत्तरस्यां दिशि भूमितलशास्ता इन्द्रः कर्णपथं नीयते, यस्मादिन्द्रात् सव्यसाचिना शस्त्राणि समासादितानि।

तैत्तिरीयेऽपि पठ्यते—"वाग् वै पराच्यव्याकृता अवदत्। ते देवा इन्द्रमब्रुवन् इमां नो वाचं व्याकुरु इति। सोऽब्रवीत् वरं वृणै···। तामिन्द्रो मध्यतोऽवक्रम्य व्याकरोत् तस्मादियं व्याकृता वागुच्यते" इति श्रुतिः।

अपरा चेयं श्रुतिः—'बृहस्पतिरिन्द्राय दिव्यं वर्षसहस्रं प्रतिपदोक्तानां शब्दानां शब्दपारायणं प्रोवाच नान्तं जगाम। बृहस्पतिश्च प्रवक्ता, इन्द्रश्चाध्येता' इत्यादि

महाभाष्यम् । श्रुत्योरुभयोः विसंवादिता । एकोऽध्येता रचयिता व्याकरणस्य । स च तैत्तिरीयः प्राणविघोऽशरीरीन्द्रः । अपरश्चेन्द्रः शब्दकोशरूपव्याकरणव्याकर्तृत्व-विरोधः । तत्र यो हि प्रथमः स वाचं मध्यत आक्रम्य पदवाक्यादिरूपेण विभजति तदेव व्याकरणकर्तृत्वं तस्य, द्वितीयस्तु स्पष्टः ।

इदमैदम्पर्य्यं यत् पाणिनिरेव भगवान् व्याकरणस्य प्रथमः पुरस्कर्ता संस्कर्ता कर्ता वा । वास्तविकतया शब्दब्रह्मस्वरूपिणोऽस्य शास्त्रस्यानादित्वम् । रचयितृत्वं ताण्ड-विनस्त्र्यम्बकस्य ततश्चेतरेषु प्रवृत्तिस्तेन प्राथम्यकर्तृत्वकीर्तिकलशाभिषेको हि भगवति पाणिनीये ।

यद्यपि पाणिनेः पूर्वं शाकल्य–काश्यप–स्फोटायन–चाक्रवर्म–गालव–भरद्वाज–गार्ग्य–सेनकप्रभृतयोऽनेके विशन्ति श्रुतिविवरं किन्तु न तेन निर्माणत्वेनाशङ्क्यते केवलं व्याकरणरसिकत्वमुपासकत्वादिकं वा सुतरामभ्युपगच्छन्तु । तेषामूर्ध्वमपि व्याकरणमासीत् । वाल्मीकिना रामायणे पद्यमेकमुच्यते यद् वायुसुतस्यास्ति व्याकरणवित्त्वम् । श्रीजानकी-जानयो निगदन्ति लक्ष्मणं प्रति प्रथमदर्शने तस्य—

नूनं व्याकरणं कृत्स्नमनेन बहुधा श्रुतम् ।
बहु व्याहरताऽनेन न किञ्चिदपशब्दितम् ॥

वेदेषूपनिषत्सु ब्राह्मणग्रन्थेषु च व्याकरणपदार्थानामुपलभ्यते निर्देशः । वस्तुतस्तु नित्यस्यास्य शास्त्रस्य जलराशेः सुखोपभोगाय बन्धविधायकैरिव व्याकरणशास्त्रराशेः सम्यगवबोधाय निबन्धविधातृभिर्भगवद्भिः श्रीपाणिनीयकात्यायनपतञ्जलिप्रभृतिभि-र्भृशमुपकृतमस्मास्विति पादरेणून् नमामस्तेषां पुनः पुनः ।

तत्र पाणिनिकात्यायनयोः समानकालिकत्वं सुनिश्चितम् । श्रूयते पाणिनेः कात्या-यनेन शास्त्रार्थः । उमाभ्यामुमानाथचरणार्चनं शरणं च विधायोपलब्धः शब्दब्रह्मवारिधिः । वर्तमानेऽपि महति विसंवादे नन्दराज्यकाले पाणिनिकात्यायनयोराविर्भावः । नन्दराज्य-कालनिर्देशो भागवते द्वादशस्कन्धे द्वितीयाध्याये दृश्यते—

आरभ्य भवतो जन्म यावन्नन्दाभिषेचनम् ।
एतद् वर्षसहस्रं तु शतं पञ्चदशोत्तरम् ॥

पद्येनानेन निश्चिनुमो वयं यत् परीक्षिन्नृपतेर्जन्मानन्तरं व्यतीतेषु १११५ वर्षेषु नन्दाभिषेकः । कलिप्रादुर्भावोपि तत्समसामयिकः । साम्प्रतं कलेः ५०६४ समतीताः अब्दाः । तेन नन्दाभिषेकस्य पाणिनिमुनेः कात्यायनमुनेश्च कालः ३९४९ वर्षेभ्यः प्राक्तनः । यद्यपि कात्यायनपाणिनी नैककालिकौ, सर्वथैतद् विनिर्णीतम् । पाणिनिमुने-रनन्तरं चतुष्पञ्चशताब्दी कात्यायनमुनिजन्मकालः ।

पाणिनिमुनीनां जन्मभूमिः "शालातुरीयः" इति पाणिनीयनामसु कोशेषु संग्रहणात् शलातुरो ग्रामः । अयं ग्रामः साम्प्रतं कन्धहारनाम्ना प्रसिद्धस्य गान्धारदेशस्य 'उद्भाण्ड'

ग्रामात् क्रोशद्वयान्नातिदूरं वर्तमानस्य लहुरग्रामस्य समीपे "शलातुर"-नाम्नैव विदितोऽस्ति। पाणिनिमुनयो नन्दराजसम्मानिता इत्यविवादम्। तेषामध्ययनं तक्षशिला-विश्वविद्यालय एव, न तु पाटलिपुरे।

यद्यपि कात्यायनमहाभागानां कृते केचन दाक्षिणात्या इति, अन्ये तु पूर्वीयाः एवेति मन्यन्ते तथापीत्थं वक्तुं शक्यते बहूनां प्रमाणानामाधारेण यत् ते दाक्षिणात्या आसन् इति, 'कौशाम्बी' नगरी जन्मस्थानमेतेषां संभाव्यते, दक्षिणप्रान्ते तन्नाम्नी काचिन्नगरी भवेदपि।

अतः परं महर्षेर्जन्मदेशनिर्णये तु विवाद एव नास्ति। तेषां जन्मदेशः "गोनर्द" इति सर्वसम्मतम्। गोनर्ददेशश्चाधुना "गोंडा" प्रान्त इति प्रसिद्धः। पाटलिपुत्राधि-ष्ठातुरपि साकेतमधिवसतो नृपस्य पुष्यमित्रास्याश्वमेधराजसूययज्ञीयाध्यक्षाः श्रीपतञ्जलि-महर्षय इति समयनिर्णये सौकर्यं भाति। कात्यायनमुनेः पश्चाच्चतुष्पञ्चशताब्दान्तराल-कालस्तेषामाविर्भावस्येति बहुसम्मतम्।

## परिभाषेन्दुशेखरकाराः

परिभाषेन्दुशेखरकाराणां समयं १६०० तः १८०० शताब्द्या अन्तराले मन्वते समय-चिन्तकाः। पाणिनीयसूत्राण्यवलम्ब्य तदर्थसुखबोधाय परिभाषाग्रन्थमकार्षुः। ग्रन्थस्यास्य कर्तृणां 'नागोजि भट्टाः' अथवा 'नागेशभट्टाः' इत्यभिधानमास्ते। महाराष्ट्रो देशस्तदीय-जन्मना यशोभागभवत्। जनकपादानामभिधानं श्रीशिवभट्टा विप्रकुलावतंसाः। जननी च सतीधुरीणा "सती" संज्ञावती। यद्यपि जन्मभूमिर्महाराष्ट्रे तथापि शृङ्गवेरनृपतयो "नृपतिरामसिंहाः" सेवकाः समासन् तेषाम्। शृङ्गवेरपुरं प्रयागराजाद् इलाहाबाद-नगरादुत्तरस्यां दिशि साम्प्रतं "सिंग्रोर" नाम्ना प्रसिद्धमस्ति। कुत्रचिद् ग्रन्थे नागेशो-पाध्याया इत्यप्युल्लेखो लभ्यते। उपाध्यायस्तेषां पाण्डित्यपदवी वर्तते। न त्वाजी-विकाकर्मणा प्ररूढा। शृङ्गवेरपुरमध्युषितत्वादेके तत्रत्यजन्मान इति कत्थन्ते किन्तु तन्न प्रामाणिकम्। तेषां समयनिर्णायिकैका कथा विलसति जयपुरनरेशैः श्रीमद्भिः सवाईजयसिंहनृपैरश्वमेधो यागः १७१४ ईस्वीयसंवत्सरे विहितस्तदा तेषां पाण्डित्य-प्रतिभाप्रतिष्ठाभिराकृष्टैर्नरनाथैर्निमन्त्रिताः। किन्तु परिव्राजकाश्रमं जिगमिषुभिरुत्तरितं यत् साम्प्रतं मम मनो धावते चतुर्थाश्रमे। तेन संन्यासदीक्षाकामेन मया वाराणसीं विहायाऽन्यत्र न गन्तव्यमिति क्षन्तव्योऽयं जनो धर्मवद्यः। संभवति तस्मिन् काले तेषां पञ्चाशद्वर्षीयं वयः। केचन तेषां १७७५ ईस्वीय—संवत्सरं निर्वाणकालमाहुः। शतं वर्षाण्यधारयन् प्राणानिति बहुशो जनश्रुतिः।

## विद्याव्यासङ्गः

अपूर्वस्तेषां विद्यास्नेहः। जीर्णत्वात् कलेवरस्य वलितत्वात् कटिप्रदेशस्योद्ग-

मितत्वाच्च ककुदो नाशक्नुवन्नासनबन्धनायेति भूमावासनानुकूलं गर्तं विधाय तत्रैव ग्रन्थानलिखन्नुत्तरावस्थायाम् । धर्मशास्त्रे चतुर्दश, योगे ह्येकम् , त्रीनलङ्कारशास्त्रे, द्वादश व्याकरणे, वाल्मीकिरामायणेऽप्येकम्, अध्यात्मरामायणेऽपि टीकात्मकमेकम्, गीतगोविन्दटीकां सुधालहरीटीकां सप्तशतीटीकां चेति बहुविधान् ग्रन्थानरचयन् ।

विविधा विराजते कर्णोपकर्णकथाऽध्ययनविषयिणी । बाल्यत एव मल्लकर्मनिपुणाः षोडशवर्षीयं वयः सलिलमिव शीघ्रमनयन् । कदाचित् काश्यां पण्डितसभामगच्छन् । तत्र चोद्दण्डतामाचरन्निति ते नितरामवमानमवापुः । स एवाऽवसरस्तेषामभ्युदयस्य । समाराध्य वाग्देवतां सदाशिवं च श्रीहरिदीक्षितेभ्यो व्याकरणशास्त्रं श्रीरामरामसूरिभ्यो न्यायशास्त्रमध्यगीषत । मञ्जूषायामस्त्युल्लेखः—

अधीत्य फणिभाष्याब्धिं सुधीन्द्रहरिदीक्षितात् ।
न्यायशास्त्रं रामरामाद् वादिरक्षोघ्नरामतः ॥

अयमधस्तादेतेषां पितृगुरुवंशानुक्रमः—




व्याकरणशास्त्रे मुद्रितं वाङ्मयमेतदुपलभ्यते तेषां विदुषाम्—भाष्ये प्रदीपे उद्योतः, परिभाषेन्दुशेखरः, लघुशब्देन्दुशेखरः; बृहच्छब्देन्दुशेखरः, शब्दरत्नम्—प्रौढमनोरमाटीका; वैशाली शब्दकौस्तुभटीका; वैयाकरणसिद्धान्तमञ्जुषा (व्याकरणविज्ञानतत्त्वमयी), परमलघुमञ्जषा, स्फोटवादश्च । धर्मशास्त्रे—प्रायश्चित्तेन्दुशेखरो व्रात्यताप्रायश्चित्तनिर्णयश्च । न्यायशास्त्रे युक्तिमुक्तावली । ग्रन्थानामेतेषामवलोकनेन विनिश्चीयते सर्वशास्त्रपाण्डित्यसार्वभौमत्वम् । तदानीन्तनैर्वैयाकरणैरभिर्वयं स्मेति स्वाभिमानं चरितार्थयद्भिरपि विद्वद्भिरेते "सर्वतन्त्रस्वतन्त्र"—पदवीपुरस्कारेणार्चिताः ।

'तेजस्तिमिरयोरिव श्रियो धिय एकत्र कुतोऽधिवासः' इत्युक्तिं सत्कुर्वन्तो महाशयाः नागेशाः सम्यगकिञ्चनदशायां विद्याकिञ्चनसर्वस्वं स्वमादधाना न कदाचिद् बहुशो निजाङ्गनायाऽभ्यर्थिता अर्थार्जनायाप्यर्थमनर्थं मन्वाना वाराणसीमन्नपूर्णां विश्वेश्वरं च मात्यजन्। तत्यजुस्तत्रैव मायां कायं च चेतो निधाय चिन्तने चिदम्बायाः शारदायाः सुचेतसः।

एवमपि श्रूयते, यथा न धनं तथा न संततिः। सापि नश्वरा किमर्थमित्यनश्वरां ज्ञानसन्ततिं निधायं याता इत्यादरभाजो भृशम्। अस्त्येतत्पोषकमिदं वचः—

शब्देन्दुशेखरं पुत्रं मञ्जूषां चैव कन्यकाम्।
स्वमतौ स्वयमुत्पाद्य शिवयोरर्पितौ मया॥

परिभाषेन्दुशेखरः—

परिभाषा इन्दुरिव शेखरे यस्येत्यर्थः परिभाषेन्दुशेखरस्य। परिभाष्यत इति परिभाषा। सर्वसाधारणतया साकल्येन सारल्येनावबोधयन्तो नियमाः परिभाषापदेनोच्यन्ते। इयं परिभाषा पाणिनिमुनीनां चतुःसहस्रसूत्राण्यधिकृत्य वर्तते। ग्रन्थेऽस्मिन् प्रकरणत्रयी। शास्त्रत्वसम्पादनोद्देशो बाधबीजं तन्त्रशेष इति प्रकरणानि। परिभाषा द्वेधा—शास्त्रत्वसम्पादिका शास्त्रत्वावच्छिन्नोद्देशिका च। अस्या अपि त्रयो भेदाः—




एतादृशे व्याकरणशास्त्रीयदुरूहे निबन्धे सुखावगाहनाय पानाय पावनाय धियः सुधियां सुगमा प्रभाव्याख्या गीतिमवलम्ब्याविगीता गीतेवारचिताऽमृतमयी श्रीमदमृतलालव्यासैः। तेषां कवनं पुरस्क्रियते तत एव मेधामाश्लेषयिष्यन्ति धीमन्तो धीमतोऽधुना जीवने नयामि न यामि, यामि पारावारपारमिति न जाने, जाने निजचेतसो मार्जनमनेनार्जवेन जवेन भावस्येति विदाङ्कुर्वन्तु विदः सुहृदः।

## पितामहाः

सौराष्ट्रदेशे "भोईका" ग्रामो जन्मस्थली "गणेशजी"—व्यासानां, ये पितामहाः श्रीमताममृतलालशर्मणां ते व्याकरणपुराणज्योतिर्विदो विद्वांसः श्रीनारायणकवचं साक्षात्कृतवन्तः सन्तः समवर्तन्त। परमा च प्रीतिः श्रीमद्भागवते श्रीगणेशव्यासानामासीत्। एकदोपजग्मुर्व्यासा निजसुहृन्निवासे मूलीग्रामे। शिवार्चनमन्तरा न

कदाचिददन्ति। तदा मूलीग्रामशिवालये गिरिशमाराधयन्तो दृष्टिपथं गता मूलीनृपतीनाम्। अर्चनतो निवृत्तान् प्रणिपत्य 'मूली' निवासायार्थिताः सरलाः स्वीचक्रुन्यवसन् मूलीग्रामे।

श्रीकृष्णभक्तैस्तैः श्रीकृष्णलीलामुररीकृत्य 'वखत विलासं' नाम काव्यं व्यरचि। नृपसख्येन सुहृदा मुदा व्यासेन वखतसिंहेति नरेशनामतो वखतशब्दमादाय काव्याभिधानं व्यधायि।

कदाचिदेके सिद्धास्तेषामावसमागच्छन्। तानभिषवाय जननी समीपगतं कूपमनयत्। रज्जुपात्रमानिनीषन्तीं तामूचुस्तेऽलमेतावता श्रमेण। स्वयमेवैष्यति सलिलं स्नापयिष्यत्यव्यलीकम्। कूपमधिरोहता तेन तुम्ब्या कूपकण्ठगतं जलमुन्निनीयाऽस्नायि। सा च सर्वप्रभूतं प्रभाविता प्रभावन्तं तं गणेशजीसन्तं विहाय। सिद्धैः सावकासं निगदितम्—अयि! व्यासा गृह्णन्त्विमां विद्यां सिद्धादिति। व्यासा अवोचन्-कृपा महती भवतां किन्तु यदाणकद्वयक्रीतेन रज्ज्वा सिद्ध्यति कार्यं जलानयनं तदर्थं किं मन्त्रग्रहणेन। यदि भवेत् काचित् सिद्धिः श्रीकृष्णदर्शनदात्री भृशमुपकुर्वन्तु जनमिमम्। श्रूयते तेषां नारायणकवचं प्रत्यक्षमासीत् साक्षात्कृताश्च नारायणाः।

## जनकाः श्रीशास्त्रिणाम्

श्रीत्रिभुवनशङ्करशर्म्माणः पितरोऽमृतलालानाम्। बहुश्रुता बहुविदो भागवतप्रवक्तारः सुललितकषायकण्ठा अभूवन्। कदाचिदहमदाबादनगरे रामजी-मोनजीभट्टानां मोक्षमन्दिराधिष्ठातॄणां श्रीमद्भागवतस्याष्टोत्तरशतमनोरथमहोत्सव आसीत्। ध्वनिवर्धकयन्त्राणि नाविरभवन् तेषां काले। जनसम्मर्दोऽपि महान्, विदुषां समाजोऽप्यसाधारणः। न केऽपि पारयामासुः प्रवचने। तदा त्रिभुवनशङ्करव्यासाश्रक्रुः श्रुतिमद्भिरुद्घोषितं नूनमिमे बादरायणा व्यासाः इति।

## श्रीमदमृतलालशास्त्रिणः

श्रीमतां जन्मभूमिः 'मूली' ग्रामः। त्रिभुवनशङ्कराः पितृचरणाः, स्वभावतः सुशीलाः स्वरूपतः सुभगाः सद्गुणैश्च समृद्धाः "श्रीमणिबा" तेषां मातरः। श्रावणकृष्णषष्ठ्यां १९४६ संवत्सरे धरणीमुपेयुः श्रीमदमृतलालाः।

बाल्यत एव क्रीडाविमुखाः पठनाभिमुखाः सुमुखाः श्रीव्यासाः। मध्येऽध्ययनं वृद्धैर्विवाहिता श्रीनृसिंहपाठकानां सुपुत्री जडीबाई। संवृत्तेप्युद्वाहे नाध्ययनान्न्यवर्तन्त। विप्रोचितचित्तवेषौ नित्यं सत्त्वविवर्धकौ तेषामभवताम्।

राजनगरमहाविद्यालयाध्यापकाः श्रीमन्तो रामकृष्णमहामहोपाध्यायाः श्रीमन्तः श्रीस्वामिनारायणमहाविद्यालयप्रधानाचार्याः श्रीगिरिजाशङ्करशास्त्रिणः प्रथमतो नवीने मेधाभाजने विद्यासंस्काराधानं विदधुः। पूर्वमाङ्ग्लशालायां पठन्तः सुपुत्राः पितृचरणै-

रार्यावर्तसंस्कारेऽनुबद्धचेतसा गीर्वाणभाषाध्ययने नीता विनीतास्तस्मिन्नपि निदेशे प्रसन्नाः प्रावीण्यमाप्नुवन्।

वर्धमानेनाऽनुरागेण वाराणसीं समाययुः। पण्डितमण्डलमण्डनेभ्यः साक्षाच्छिवेभ्यः शिवकुमारशास्त्रिभ्यो व्याकरणशास्त्रं वेदवेदान्तनिष्णातधर्मप्राणश्रीलक्ष्मणशास्त्रिभ्यो वेदान्तादिशास्त्रं समधिगतम्। प्राक्तनजन्मविद्ययेवाविलम्बेन पारं जग्मुः शास्त्रपारावारस्य। बङ्गदेशे राजकीयसंस्कृतविद्यालयेऽप्यधीतवन्तः।

## व्यवहारकालः

काशीतः समेत्य बड़ोदाराज्यनगरस्थसंस्कृतमहाविद्यालये व्याकरणाध्यापनमकुर्वन्त। किन्तु भगवदिच्छया तेषां महोपदेशकपदे नियुक्तिरभवत्। उपदेशाय केवलमाचार्याः एव प्रभवन्ति न वयं वशंवदा इति दृढं मन्यमानैस्ततोऽध्यापनार्थं सुरतनगरे गमनमकारि। एम० टी० बी० आङ्गलमहाविद्यालये संस्कृताध्यापकाचार्यपदमलभन्त। चेतसः सन्तोषावहं सर्वशास्त्राध्यापनकार्यमनाप्नुवतां मनसि क्षोभः समजनि। एतस्मिन्नवसरे शास्त्रिणां रमणलालगुप्त श्रेष्ठि महोदयैः सौहार्दमजायत। सुहृद्भिः सुहृदो व्यासाः सुरभारती समुपास्तये श्रीनारायणसंस्कृतमहाविद्यालये प्रधानाचार्यपदमलङ्कर्तुं प्रार्थिताः। स्वाभीष्टं सुहृदभिलाषं सस्नेहमाद्रियन्त।

चारुजनेषु सुचारुजलवायुषु सुखदेषु सुभगेषु सर्वसमानवर्तिषु गुर्जरेषु विद्यार्थिनां शुभावहः सुखावहः श्रीनारायणसंस्कृतमहाविद्यालयो विलसतीदानीमपि यथापूर्वम्। मन्येऽस्य विद्यालयस्यारम्भमुहूर्तमेतेषामेव साधुशीलानां करसरोरुहाभ्यामवर्तत।

अध्यापनसमयाद् रिक्तः समयो नीयते नित्यं शास्त्रविलोकनेनैव श्रीमद्भिर्व्यासैः। भूयान् स्नेहस्तेषां पाणिनीयव्याकरणे। पुनः पुनः स्मरन्ति स्म छात्राणां संसदि दिव्यताशीलान् व्याकरणशास्त्रविधातॄन् पाणिनीयकात्यायनपतञ्जलिनागेशादीन्। प्रेरयन्ति च व्याकरणपठनेऽन्तेवासिनः।

एकदा वाग्देवता समादिदेश ग्रन्थनिर्माणाय व्यासान्। चकिताः पुलकाङ्गाः सार्द्रनयनास्तमादेशमनुग्रहं मन्यमानाः प्रारभन्त परिभाषाणामुपरि परिभाषेन्दुशेखररूपां व्याख्यां प्रायेणोपजीव्य प्रभानाम्नीं भास्वतीं पद्यमयीं व्याख्याम्। सा च विदुषां पुरस्तादुपस्थिताऽस्ति। किमधिकं तत्राक्षराणां संवर्धनेन।

"कार्यरतमेव कार्याणि वृण्वते" इति न्यायेनोत्तरोत्तरं कार्यभारोऽप्यवर्धत कार्यभारक्षमे क्षमाशालिनि क्षमानिर्जरे श्रीमति व्यासे। इतश्छात्राणामध्यापनं ततो ग्रन्थस्यालेखनम्, पुनः समागच्छतां विद्वदतिथिविशेषाणां समादरणं धार्मिकानेकसंसदां संचालनम्, विविधानां विद्यापीठानां परीक्षाकार्यं त्वासीदेव शिरसि। तत्र वाराणसेयपरीक्ष्याणां श्रेयसे बङ्गीयपरीक्षादातॄणां छात्राणां च हिताय परीक्षाकेन्द्रोद्घाटनार्थं कृपावृत्तिराविर्भूता। उभयस्थलीयरजिष्ट्रारमहोदयैरनुनयेन संपर्कमासाद्य केन्द्रद्वयी समुद्घाटिता पेटलादनगरे श्रीनारायण-

संस्कृतमहाविद्यालये स्थायित्वेनापायि सम्यगुपकरोति सहस्रशः छात्रान् प्रतिवर्षम् । अस्मिन् कर्मण्यध्वर्यवो न विस्मर्तव्याः किल "राजमित्र" "दातार" इति सम्मानपदद्वयेन श्रीसयाजीरावबडोदानरेशैः सम्मानिताः श्रेष्ठिनः श्रीरमणलालगुप्ताः 'दातार' श्रीचन्दुलाल-भाईश्रेष्ठिनश्च । उभयोरुभौ सुशीलौ विद्वांसौ कुमारौ श्रीमदमृतलालश्रेष्ठिश्रीनवीनचन्द्र-भाईश्रेष्ठिनौ ।

प्रतिपक्षं विद्यालयं समेत्य छात्रावासस्य विद्यालयस्य च सुविधासुविधे विज्ञाय सानुकूल्यं विरचय्य सोदरनिर्विशेषस्नेहेनापीपलन्नन्तेवासिनः । श्रेष्ठिन एते चिरं जीवन्त्विति हृद्गतोद्गारमर्पयन्ति स्म, अर्पयिष्यन्ति च विद्यालयीयच्छात्राः परीक्षार्थिनश्च विद्यार्थिनः ।

न कुत्रापि वर्तते व्यवस्थैतादृशी यत् परीक्षादित्सून् छात्रान् निजातिथीन् मत्वाऽतिथिविशेषेभ्य इव भोजनावासवासांसि दक्षिणां च प्रदाय प्रोत्साहयन्तोऽर्थिनः परमार्थ-निपुणाः पुण्यशीलाः श्रीरमणलालचन्दुलालसमानाः ।

प्रासङ्गिकं श्रेष्ठिस्मरणं विलिख्य पुनः श्रीमदमृतलालशास्त्रिणां कमप्यनिर्वाच्यं छात्र-वात्सल्यं निवेद्य चरितमुपसंहरामि ।

यावन्नैपुण्यं पाठने ततः शताधिक्यं पालने वात्सल्यं छात्रेषु तेषाम् । श्रीमन्तः चिन्नस्वामिमहोदया महामहोपाध्यायाः श्रीहाथीभाईशास्त्रिणः श्रीसुरेन्द्रनाथझाः रजिष्ट्रारमहोदयाः श्रीवङ्गीयसंस्कृतपरीक्षायाः, वाराणसेयराजकीयसंस्कृतमहाविद्यालय-रजिष्ट्रारमहोदया मङ्गलदेवशास्त्रिणश्चान्येऽनेके प्रचेतसः सूरयो यदैवायान्ति पावयन्ति विद्यालयं तदा तैरवश्यं दर्शनस्पर्शनालापानकारयन् छात्रानिति स्मरामि साम्प्रतमपि ।

कथं शीलिनः स्युश्छात्रा इति विचिन्त्य प्रातःकाले पञ्चवादने पञ्चायतनदेवतानां प्रातःस्मरणानि सायं प्रतिदिनं पृथक् पृथग् देवतानां स्तोत्राणि यथा दक्षिणमूर्तिस्तोत्रं शक्रादयस्तुतिरम्बाष्टकं देवीक्षमापनस्तोत्रं शिवताण्डवस्तोत्रं स्वनिरूपिता चेश्वरोपकार-निरूपणस्तुतिरिति संस्कारसामग्र्यश्छात्रेषु निहिता हितेप्सुभिस्तैः ।

मया तु बहुशः स्मर्यन्ते तेषां मधुराणि वचांसि ह्यमृतायमानान्यमृतलालशास्त्रिणाम् । भृशं प्रीयन्ते मयि कार्यादेशैर्देशिकास्ते । उद्धवकरमादाय साचिव्ये पृच्छन्तं भगवन्तं श्रीकृष्णमिवानेकेषु कर्म्मसु पृच्छतो नियोजयतो बोधयतः पालयतस्तानधिकृत्य नाधिकं विवेक्तुं प्रभवामि ।

तेषामुदारानात्मजानपि सावसरं स्मरामि श्रीवेदान्तशास्त्रिणो विशुद्धशीलान् श्रीविष्णु-शङ्करव्यासान्, ये साम्प्रतमध्यापयन्ति सौराष्ट्रे जामखंभालीयानगरे । मत्सुहृदो देशसेव-कान् श्रमजीविवर्गस्वजनायमानान् श्रीखंडुभाई देसाईमहोदयानामाप्तसचिवान् "मनुभाई" इति नाम्ना व्यवह्रियमाणान् मानशङ्कराभिधान् स्मरामि विरमामि ।

बहुशः स्खलितानि क्षालयिष्यन्ति नीराद् रसग्राहिणो गुणिनो विद्वांस इति प्रार्थये ।

यन्त्रालयसंचालकान् सच्छीलान् श्रीबालकृष्णशास्त्रिणो बहु मानयामि । व्याकरण-न्यायशास्त्रादिनिष्णाताचार्यान् श्रीनारायणसंस्कृतमहाविद्यालयप्रधानाचार्यान् याज्ञिकान् श्रीकान्तिलालशास्त्रिणो मे मनसि नयामि ये कृपया दुरूहेऽस्मिन् ग्रन्थे प्रस्तावनाप्रदानेनामुं जनं ग्रन्थं चात्मसात्कृतवन्तः ।

वाराणसीमधिवसतो न्यायव्याकरणादिशास्त्रचणान् सुकोमलचित्तान् मङ्गलस्वभावान् "वागीशशास्त्री" इति प्रसिद्धान् "विद्यावारिधि" (पी-एच्. डी.)—पदवी-समलङ्कृतान् वाराणसेयसंस्कृतविश्वविद्यालये ज्येष्ठानुसन्धानपण्डितगणाभ्यन्तरान् ( Senior Research Fellow ) डॉ० भागीरथप्रसादत्रिपाठिनः सूरीन् नमामि यैर्ग्रन्थमुद्रणावसरे रसमाधाय सर्वविधं परामर्शादिरूपं साहाय्यमकारि ।

श्रीमतः प्राणलालशास्त्रिणो बी. ए. वेदान्ताचार्यानमृतलालशास्त्रिशिष्यान् न विस्मरामि । यैर्मुद्रणालयीयकार्ये सायासं दत्तावधानैः संस्कर्तृत्वं ( Proof-reading ) व्यधायि । तेषां श्रमेणापगतश्रमोऽहं जात इति ।

आश्विनशुक्ल प्रतिपद्
मङ्गलवारः, २०२० वै० ।
८।१०।६४ ई०

विदुषां वशंवदः
कृष्णशङ्करः

# उपोद्धातः

इह जगति निखिललौकिकव्यवहारस्य शब्दायत्तत्वात्, दुरूहशास्त्रीयविषयाणामपि शब्दजन्यप्रतीतिविषयत्वात्, चेष्टादिस्थलेष्वपि वाचकशब्दस्मरणपूर्वकार्थोपलब्धेः स्वीकृतत्वात्;

न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते ।
अनुविद्धमिव ज्ञानं सर्वं शब्देन भासते ॥
शब्दोपहितरूपांस्तान् बुद्धेर्विषयतां गतान् ।
प्रत्यक्षानिव कंसादीन् साधनत्वेन मन्यते ॥

इति हर्युक्तेः ।

नैयायिकैरप्यभिधेयत्वस्य 'पदार्थसामान्यसाधर्म्योक्तेः कोऽपि पदार्थस्तादृशो नास्ति यद्वाचकः शब्दो नोपलभ्येत ।

शक्तिग्रहं व्याकरणोपमानकोशाप्तवाक्याद् व्यवहारतश्च ।
वाक्यस्य शेषाद् विवृतेर्वदन्ति सान्निध्यतः सिद्धपदस्य वृद्धाः ॥

इत्यभियुक्तोक्तशक्तिग्राहकपरिगणने व्याकरणस्यैव शक्तिग्राहकशिरोमणित्वेनाभ्यर्हितत्वात् प्रथमोक्तेः ।

यो वेद वेदवदनं सदनं हि सम्यग्
ब्राह्म्याः सवेदमपि वेद किमन्यशास्त्रैः ।
यस्मादतः प्रथममेतदधीत्य धीमान्
शास्त्रान्तरेषु भवति श्रवणेऽधिकारी ॥

इति श्रीमद्भास्कराचार्योक्तेः ।

मन्त्रो हीनः स्वरतो वर्णतो वा
मिथ्याप्रयुक्तो न तमर्थमाह ।
स वाग्वज्रो यजमानं हिनस्ति
यथेन्द्रशत्रुः स्वरतोऽपराधात् ॥

इति पतञ्जल्युक्तेश्च ।

शब्दस्यैवं प्राधान्यं सर्वत्रावसीयते । शब्दप्रतिपादकं शास्त्रं व्याकरणम् । तच्च वेदाङ्गम् ।

तथाहि—

छन्दः पादौ तु वेदस्य हस्तौ कल्पोऽथ पठ्यते।
ज्योतिषामयनं चक्षुर्निरुक्तं श्रोत्रमुच्यते ॥ १ ॥
शिक्षा घ्राणं तु वेदस्य मुखं व्याकरणं स्मृतम्।
तस्मात् साङ्गमधीत्यैव ब्रह्मलोके महीयते ॥ २ ॥

इति शिक्षोक्तेर्व्याकरणं वेदपुरुषस्य मुखरूपाङ्गत्वेन प्रधानम् । प्रधाने च कृतो यत्नः फलवान् भवतीति पतञ्जलिः । तच्च व्याकरणं शब्दसाधुत्वबोधकः सूत्रात्मको लक्ष्यलक्षणात्मको वा ग्रन्थविशेषः ॥

उक्तञ्च भाष्ये—'लक्ष्यलक्षणं व्याकरणं लक्ष्यं च लक्षणं चैतत्समुदितं व्याकरणं भवति किं पुनर्लक्ष्यं लक्षणं च, शब्दो लक्ष्यः सूत्रं लक्षणम्' इति । तच्च व्याकरणम्—

ऐन्द्रं चान्द्रं काशकृत्स्नं कौमारं शाकटायनम्।
सारस्वतं चापिशलं शाकलं पाणिनीयकम् ॥

इत्यष्टविधम्, तथाप्यद्यत्वे पाणिनीयव्याकरणस्यैव वेदाङ्गत्वम् । अन्यत्र वैदिकानां लौकिकानाञ्च सर्वेषां व्युत्पादनाभावात् । अत एव "अइउण्" इत्युपक्रम्य ऋक्तन्त्र-व्याकरणे उक्तम्—'इदमक्षरच्छन्दो वर्णशः समनुक्रान्तं ब्रह्मा बृहस्पतये प्रोवाच, बृहस्पतिरिन्द्राय, इन्द्रो भरद्वाजाय, भरद्वाज ऋषिभ्यः, ऋषयो ब्राह्मणेभ्यस्तं खल्विममक्षर-समाम्नायमित्याचक्षते । न भुक्त्वा न नक्तं प्रब्रूयाद् ब्रह्मराशिः' इति । पराशरपुराणेऽपि—

पाणिनीयं महाशास्त्रं पदसाधुत्वलक्षणम्।
सर्वोपकारकं ग्राह्यं कृत्स्नं त्याज्यं न किञ्चन ॥ इति ।

तथा च शब्दसाधुत्वप्रतिपादकं शास्त्रं व्याकरणम् । स च शब्दो नित्योऽखण्डश्च । तद्व्यञ्जयस्य स्फोटस्यैव वाचकत्वमिति वैयाकरणानां सिद्धान्तः । स्फोटानां वर्णादिभेदेन नानात्वेऽपि—वाक्यस्फोटोऽतिनिष्कर्षे तिष्ठतीति मतस्थितिः ॥

पदे वर्णा न विद्यन्ते वर्णेष्ववयवा न च।
वाक्यात् पदानामत्यन्तं प्रविवेको न कश्चन ॥
यथैवानर्थकैर्वर्णैर्विशिष्टार्थोऽभिधीयते।
पदैरनर्थकैरेव विशिष्टार्थोऽभिधीयते ॥

वाक्यादपोद्धृत्य पदान्यन्वाख्यायन्त इति वाक्यस्यैवाखण्डस्य वाचकत्वं प्रतिपादितम् । नन्वेवं शब्दस्याखण्डत्वे च शब्दानुशासनस्य वैयर्थ्यापत्तिरिति चेद् ? न,

उपाया: शिक्ष्यमाणानां बालानामुपलालनाः।
असत्ये वर्त्मनि स्थित्वा ततः सत्यं समीहते ॥

उपेयप्रतिपत्त्यर्था उपाया अव्यवस्थिताः ।

इत्याद्युक्त्याऽखण्डवाक्यस्फोटज्ञानार्थमेव प्रकृतिप्रत्ययविभागकल्पनस्य, तत्तदर्थ-विभागकल्पनस्य चावश्यकत्वात् । यथा वेदान्तिमते सच्चिदानन्दरूपस्य ब्रह्मतत्त्वस्यैव पारमार्थिकत्वेऽपि ब्राह्मप्रपञ्चस्य व्यावहारिकी सत्ताऽङ्गीक्रियते तथैव वाक्यस्याखण्डत्वेऽपि शब्दानुशासनसार्थक्याय प्रकृतिप्रत्ययविभागकल्पनमुपपद्यते । उपपन्ने च शब्दानुशासने विधिशास्त्रप्रवृत्तिनिवृत्त्युपयोगिज्ञानजनकत्वेन परिभाषाणामावश्यकत्वमुपपद्यते । परि-भाषाविषयकग्रन्थेषु श्रीव्याडिकृतः परिभाषापाठः, तदनु सीरदेवविरचितवृत्तिश्चेमौ द्वावपि गणनार्हौ । श्रीमन्नागेशप्रणीतश्च परिभाषेन्दुशेखरस्तत्रभवतां वैयाकरणप्रका-ण्डानां न परोक्ष्यमावहति । अस्य च शब्दानुशासनसहस्ररश्मीयमानस्य श्रीभैरवमिश्रकृता "भैरवी" प्रातः स्मरणीयनामधेयवाराणसेयविबुधावलिमूर्धन्यपण्डितप्रवरमहामहोपाध्याय-श्रीजयदेवमिश्रप्रणीता "विजया" विविधशास्त्रसमभ्यासार्जितपवित्रयशःसमुद्भासित-दिगन्तपटवर्धनोपनामकश्रीरामकृष्णतात्याशास्त्रिविरचिता श्रीशशिशेखरललाटोल्लसित-भूतिरिव "भूतिः" इति टीकात्रयमुपलभ्यते तथापि परमकारुणिकैः, सौजन्यजन्ययशोधव-लितदिगन्तैः, परमास्तिकैः, नित्यनैमित्तिकानुष्ठाननिष्ठैः सहृदयहृदयान्तर्निविष्टमूर्तिभिश्छात्र-समूहे सुतनिर्विशेषं व्यवहरद्भिः सुरभारतीसमुपासनसमर्पितसकलसमयसमासादितसमु-ज्ज्वलज्ञानराशिभिः, निगमागमपरिशीलनप्राप्तप्रकृष्टप्रतिभैः परमानन्दसन्दोहनिमग्नैः, सकलसंसृतिभाक्स्पृहणीयवानप्रस्थाश्रमाश्रितैः, व्याकरणवेदान्तसाहित्यादिसकलसंस्कृत-वाङ्मयनदीष्णैः श्रीगुर्जरदेशान्तर्गतपेटलादनगरस्थश्रीनारायणविद्यालयीयप्रधानाचार्यपदम-लङ्कृतवद्भिः सौराष्ट्रमण्डलान्तर्गतमूलीग्रामवास्तव्यैर्व्यासोपनामकश्रीत्रिभुवनशर्मतनुजनुर्भिः पण्डितप्रकाण्डश्रीमदमृतलालशर्मभिर्निखिलपरिभाषार्थप्रकाशनाप्रतिमप्रदीपोपमाभिर्द्वादशशा-तोत्तरैकसप्ततिकारिकाभिः सकलपरिभाषार्थरहस्यसुधां संगृह्य परिभाषेन्दुप्रभाभिधं ग्रन्थरत्नं प्रणीय भावप्रकाशाभिधया स्वोपज्ञटीकया समलङ्कृतमेतत् पुस्तकमपूर्वं प्रकाश्य पातयति ।

अत्र यावत्परिभाषार्थः सपरिष्कृतिः कारिकास्वेव ग्रथितः । एतत्पर्यालोचनेन ग्रन्थकर्तुर्व्याकरणशास्त्रे प्रभुत्वं कारिकाविरचननैपुण्यं च सम्यक् प्रतीयते । नैतत् कार्यं स्वल्पव्युत्पत्तिप्रतिभोपपाद्यमिति नैव परोक्षं प्रेक्षावतां सुरभारतीसमुपासकानाम् । परिभाषार्थस्य परिष्कृतस्य लक्ष्ये सङ्गतिरपि कारिकास्वेव निबद्धा । इयमपरा चातुरी ।

एतद्ग्रन्थस्य भूयःपरिशीलनं क्रियेत चेद् व्याकरणशास्त्रस्य निखिलसिद्धान्ता बुद्ध्यारूढा भवेयुस्तत्र नास्ति काचिदधिकोक्तिः । अत्र प्रथमप्रकरणे शास्त्रत्वसाधके पञ्चत्रिंशदुत्तरचतुःशतं बाधबीजाख्ये द्वितीयप्रकरणे चतुरुत्तरचतुःशतं शेषार्थनिरूपणाख्ये तृतीयप्रकरणे द्वात्रिंशदुत्तरचतुःशतं कारिका निर्माय समस्तवैयाकरणसिद्धान्ताः समुप-वर्णिताः । इतरवर्णनशून्यम् अलङ्कारादिवर्जितं केवलव्याकरणपदार्थानामेव कारिकासु समुपवर्णनं पण्डितप्रवराणां भूयसीं प्रतिभां प्रख्यापयति । इमे पण्डितप्रवराः पञ्चदश-

वर्षाणि पेटलादनगरस्थश्रीनारायणसंस्कृतमहाविद्यालयस्य प्रधानाचार्यपदमलमकार्षुः। अनेके छात्रा एभ्यः शास्त्राण्यधीत्य गुरुपादानामधियन्त विशुद्धवृत्त्या स्वजीवनं यापयन्ति। एतद्ग्रन्थनिर्माणकालिकच्छात्रास्तु शास्त्रिपादानां निर्माणाभिनिवेशं वर्णयन्तो रात्रिन्दिवं परिश्रममगणयद्भिः शास्त्रीयपदार्थपर्यालोचनानुवेशनसमासक्तैर्दीर्घजागरणपरायणैः शास्त्रिपादैः शरीरशैथिल्यमासाद्य देहोत्सर्गोऽप्येतन्निमित्तमेव व्यधायीति वदन्तीत्यलमिति—

विद्वद्विधेयः—

**कान्तिलालशर्मा याज्ञिकः**

प्रधानाचार्यः श्रीनारायणसंस्कृतमहाविद्यालयस्य पेटलादपुरस्थ।
जि॰ खेडा ( गुजरात )



॥ श्रीमन्महागणपतये नमः ॥

# अथ परिभाषेन्दुप्रभा

## तत्र प्रथमं शास्त्रत्वसाधकप्रकरणम्

ईशमखिलविद्यानां सचित्सुखरूपमद्वयमनन्तम् ।
जगदुद्भवादिलीलं गिरिजार्धतनुं शिवं वन्दे ॥

*श्रीमन्महेश्वरं नत्वा पद्यबन्धे स्वनिर्मिते ।*
*स्वाशयं विशदीकर्तुं कुर्वे भावप्रकाशिकाम् ॥*

प्रारिप्सितग्रन्थसमाप्तिप्रचारादिप्रतिबन्धकदुरितोपशमनाय कृतं स्वेष्टदेवताऽऽदिस्तुति-नमस्कारात्मकं मङ्गलं शिष्यशिक्षायै व्याख्यातृश्रोतॄणामनुषङ्गतो मङ्गलाय च ग्रन्थादावुप-निबध्नाति—**ईशमित्यादिभिस्त्रिभिः पद्यैः। ईशमिति।** "ईशानः सर्वविद्यानामीश्वरः सर्वभूतानाम्" इति श्रुतेः सर्वविद्याधीश्वरस्य भगवतो महेश्वरस्य स्वप्रसादलब्धज्ञानाति-शयमहर्षिपाणिनिप्रणीतव्याकरणशास्त्रव्यवस्थोपयोगिपरिभाषाविवरणात्मकेऽस्मिन् ग्रन्थे विशिष्टकृपोत्कर्षाधायिका भवत्वित्याशयेनेदं विशेषणम्। तस्यैव भगवतः स्वरूपलक्षण-माह—**सच्चिदित्यादिना।** "सत्यं ज्ञानमनन्तं ब्रह्म" "आनन्दो ब्रह्मेति व्यजानात्" इत्यादिश्रुतिषु सत्यपदेन त्रैकालिकबाधरहितम्, ज्ञानपदेन स्वप्रकाशनित्यचैतन्यम्, आनन्द-पदेन च नित्यनिरतिशयानन्दस्वरूपमखण्डैकरसं वस्तु शब्दप्रवृत्तिहेतुभूतजात्यादिराहित्येन शक्त्यविषयत्वेऽपि लक्षणया प्रतिपादितं परं ब्रह्मेत्यर्थः। **अद्वयमित्यनेन** स्वभिन्नवस्तुसत्ता-रूपस्य वस्तुपरिच्छेदस्य, **अनन्तमित्यनेन** च देशकालपरिच्छेदस्य निराकरणम्।

कामदुघाममरगवीमपशब्दमहान्धकूपपतनभयात् ।
ये सूत्रादिविधानैर्जुगुपुस्तान्नौमि पाणिनिप्रभृतीन् ॥ २ ॥

यैः शब्दशास्त्रमनघं गुरुभिर्मे बोधितं दयानिधिभिः ।
यैश्चात्मतत्त्वशास्त्रं तच्चरणरजांसि धारये शिरसा ॥ ३ ॥

---

तटस्थलक्षणमाह—**जगदुद्भवादिलीलमिति** । "यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत्प्रयन्त्यभिसंविशन्ति । तद्विजिज्ञासस्व तद् ब्रह्म" इत्यादिश्रुतिप्रतिपादितं जगदुत्पत्तिस्थितिलयकारणत्वं तटस्थलक्षणम्, कादाचित्कत्वे सति व्यावर्तकत्वात् । लीलापदेन च "लोकवत्तु लीलाकैवल्यम्" इति ब्रह्मसूत्रोपदर्शित आप्तकामस्य भगवतो जगद्रचनायां प्रयोजनान्तराभावः सूचितः । उक्तस्वरूपलक्षणलक्षिते निर्गुणे निर्विशेषे च ब्रह्मणि स्वनिष्ठापकृष्टत्वप्रकारकबोधानुकूलव्यापाररूपवन्दनक्रियाकर्मत्वस्य गुणवत्ताव्याप्यस्य बाधान्मायाख्यमहाशक्तिवैशिष्ट्येनानन्तकल्याणगुणाकरस्यापारकारुण्यवतोऽस्य भगवतः स्तुतिनमस्काराद्यर्हं सर्वमङ्गलासमलंकृतं दिव्यविग्रहमाह—**गिरिजार्धतनुमिति** । "उमासहायं परमेश्वरं प्रभुं त्रिलोचनं नीलकण्ठं प्रशान्तम् । ध्यात्वा मुनिर्गच्छति भूतयोनिं समस्तसाक्षिं तमसः परस्तात्" इति कैवल्योपनिषत्प्रतिपादितम् । **शिवम्**—शेतेऽस्मिन्नविद्यानिद्रायां ( सत्याम् ) सर्वं जगदिति शिवस्तं समस्तप्रपञ्चाधिष्ठानं भगवन्तं महेश्वरं वन्देऽभिवादय इत्यर्थः ॥ १ ॥

अथ व्याकरणशास्त्रप्रणेतृन्महर्षींस्तत्कृतमहोपकारस्मरणपूर्वकं स्तौति—**कामदुघामिति** । कामानभिलषितान् सर्वानपि पुरुषार्थान्दोग्धि प्रपूरयतीति कामदुघा तां सर्वार्थसंपादिकाम्, **अमरगवीम्** = अमराणां देवानां गौर्वाग्धेनुश्च । अमरगवी गीर्वाणभाषारूपा धेनुस्ताम् । गोरतद्धितलुकीति समासान्तटच्प्रत्यये टित्त्वाड्ढिड्ढेति ङीप् । अपशब्द एव महानन्धकूपः, यज्ञादौ तत्प्रयोगेऽनर्थजनकत्वात् । तस्मिन्पतनमपभ्रंशताऽऽपत्तिस्तद्भयात् । **सूत्रादिविधानैः** = सूत्रवार्तिकभाष्यरचनाभिः । धेनुपक्षे सूत्रनिर्मितरज्ज्वादिभिः । ये **जुगुपुः** = ररक्षुः, तान् पाणिनिप्रभृतीन् पाणिनिकात्यायनपतञ्जलिमहर्षीन् नौमि स्तवीमि । यथा कश्चिदितस्ततो भ्रमन्तीं गोमतल्लिकां रज्ज्वादिनैकदेशे बद्ध्वा कूपादिपतनभयाद्रक्षेत् तद्वदिमे संस्कृतभाषां लोकानां भ्रमप्रमादादिदोषैरपभ्रंशताऽऽपत्तिभयाद्ररक्षुः । सोऽयमेषां महानुपकारः । अतस्ते स्तुत्या इति भावः ॥ २ ॥

गुरून्नमस्करोति—**यैरिति** । अत्र प्रथमयच्छब्देन स्वस्य व्याकरणशास्त्राध्यापकानां विद्यावाचस्पतिश्रीमद्गिरिजाशङ्करशास्त्रिणां, वैयाकरणकेसरिमहामहोपाध्यायश्रीमज्जयदेवमिश्राणां च परामर्शः । द्वितीययच्छब्देन वेदान्ताध्यापकानां महामहोपाध्यायधर्मप्राणश्रीमल्लक्ष्मणशास्त्रिद्राविडानाम् ॥ ३ ॥

प्रह्लादपुरस्थश्रीनारायणगुप्तनिर्मिते रम्ये ।
विद्यालये निरन्तरमध्यापनशास्त्रचिन्तनरतेन ॥ ४ ॥

त्रिभुवनशर्म्मसुतेनामृतलालाख्येन विदुपेयम् ।
विशदार्था पद्यमयी परिभाषेन्दुप्रभा क्रियते ॥ ५ ॥

परिभाषेन्दुरहस्यप्रकटननिपुणै रुचिरपद्यैः ।
तद्धारणसौकर्यं विदधत्येषा विदां मुदे भवतु ॥ ६ ॥

---

परिचयप्रदानाय कीर्त्यनुवृत्तये च स्ववासस्थान–विद्यालय–व्यवसायपितृनाम स्वनामोल्लेखपूर्वकं ग्रन्थनिर्माणं प्रतिजानीते—**प्रह्लादपुरस्थेत्यादिना** । प्रह्लादपुरं गुर्जरदेशान्तर्गतं पेटलादनामकं पुरम् । नारायणगुप्तश्च धार्मिकप्रवरो राज्यरत्नपदालङ्कृतः श्रेष्ठी श्रीनारायणभाईनामा । तन्निर्मितविद्यालयश्च श्रीनारायणसंस्कृतविद्यालयाख्यः ॥ ४ ॥

**त्रिभुवनशर्म्मेति** । ननु "आत्मनाम गुरोर्नाम नामातिकृपणस्य च । श्रेयस्कामो न गृह्णीयाज्ज्येष्ठापत्यकलत्रयोः ॥" इति स्मृत्या निषिद्धत्वात्स्वपितुः स्वस्य च नामनिर्देशो न युक्त इति चेन्नैष दोषः "जराया जरस्" (७।२।१०१) इति सूत्रे भाष्यकृता गोनर्दीय आहेति स्वनामसंकीर्तनाद् भाष्यप्रदीपारम्भे कैयटेन कैयटो जैयटात्मज इति पितृनामसहितस्वनाम्न उल्लेखादुदयनाचार्यप्रभृतिभिश्च किरणावल्यादिषु स्वनामनिर्देशाद् वक्तव्यार्थविषयकप्रतिज्ञावाक्यघटकतया नामसंकीर्तने प्रत्यवायाभावकल्पनात् । अत एव स्वयमुक्तेष्वपि वचनेषु "इति शातातपोऽब्रवीत्" इत्यादिर्मुनीनां स्वनामोल्लेख उपपद्यते । विशदार्था = वक्तव्यार्थस्य स्पष्टतया प्रकाशिका । परिभाषा इन्दुरिवेति परिभाषेन्दुः । वैयाकरणसिद्धान्तप्रकाशकत्वेन, विधिवाक्यार्थविषये तत्प्रवृत्तिनिवृत्तिविषये च तत्तदाशङ्काजन्यक्लेशात्मकसंतापनिवारकतया चेन्दुसादृश्यम्, परिभाषेन्दोः प्रभेवेयं तद्व्याख्या तदर्थविशदीकरणात् । अपि च परिभाषेन्दुः परिभाषेन्दुशेखरः । सत्या भामेतिवन्नामैकदेशेन नामनिर्देशात् । तस्य प्रभेवेयं तत्रोक्तानामर्थानामत्र स्पष्टीकरणात् ॥ ५ ॥

अथ प्रेक्षावत्प्रवृत्तिप्रयोजकमनुबन्धचतुष्टयं दर्शयति—**परिभाषेन्द्विति** । तद्धारणेति । तत्पदेन परिभाषेन्दुरहस्यस्य परामर्शः । धारणं गृहीतस्य स्मरणयोग्यताऽऽपादनं तत्सौकर्यं विदधती कुर्वत्येषा व्याख्या विदां वैयाकरणानां मुदे आनन्दाय भवतु । आनन्दजनिकास्त्वित्यर्थः । गद्याऽपेक्षया पद्यधारणस्य सुकरत्वान्मनोरञ्जकत्वाच्चेति भावः । एवं च परिभाषार्थो विषयः । तज्जिज्ञासुस्तद्धारणेच्छुश्चाधिकारी । परिभाषानिगूढार्थज्ञानं तद्धारणसौकर्यं च प्रयोजनम् । ग्रन्थतत्प्रयोजनयोर्हेतुहेतुमद्भावः, ग्रन्थतद्विषययोश्च प्रतिपाद्यप्रतिपादकभावः संबन्धोऽर्थात् सूचित इति ज्ञेयम् ॥ ६ ॥

**विधिशास्त्रप्रवृत्तिनिवृत्त्युपयोगिज्ञानजनयित्री ।**
**साधुत्वशक्त्यविषयाऽधिकारभिन्ना च परिभाषा ॥ ७ ॥**

परिभाषापदार्थस्य शास्त्रभेदेन भिन्नतया प्रकृते परिभाषापदार्थः क इति जिज्ञासायामाह—**विधिशास्त्रेति**। परिभाषया कस्यचिद्विधिशास्त्रस्य कुत्रचित्प्रवृत्तिः कुतश्चिन्निवृत्तिश्च संपाद्यते। यथा यदागमपरिभाषया प्रणिदापयतीत्यादौ पुगागमविशिष्टस्य दानित्यस्य दाग्रहणेन ग्रहणबोधनाद् घुसंज्ञया नेर्गदनदेतिणत्वविधायकशास्त्रस्य प्रवृत्तिः संपाद्यते। अर्थवद्ग्रहणपरिभाषया च प्रोढवानित्यत्र ऊढवच्छब्दैकदेशस्योढशब्दस्य प्रादूरोढेतिवार्तिकस्थोढशब्देन ग्रहणाभावप्रतिपादनात्तत्र तन्निवृत्तिः सम्पाद्यते। एवं तस्मिन्निति परिभाषया इको यणचीत्यस्याजपेक्षया व्यवहितपूर्वे इकि प्रवृत्त्यभावः सम्पाद्यत इति समन्वयः। **साधुत्वशक्त्यविषयेति**। लक्ष्यसाधुत्वं पदशक्तिश्च न विषयः प्रतिपाद्यं यस्या इत्यर्थः। अपवादैः स्वीयोद्देश्यातिरिक्तत्वेनोत्सर्गशास्त्रीयोद्देश्ये संकोचात्स्वविषये उत्सर्गशास्त्रनिवृत्तिसंपादनात्तेष्वतिव्याप्तिनिरासाय साधुत्वाविषयेति साधुत्वाप्रकारकबोधजनिकेत्यर्थः। संज्ञासूत्रैश्च वृद्ध्यादिपदार्थज्ञानद्वारा विधिशास्त्रप्रवृत्तिसंपादनात्तत्रातिव्याप्तिनिरासार्थं शक्त्यविषयेति शक्त्यविषयकबोधजनिकेत्यर्थः। सापादिकविषये त्रैपादिकनिवृत्तिसम्पादके पूर्वत्रासिद्धमित्याद्यधिकारेऽतिव्याप्तिनिरासार्थमधिकारभिन्नेति। एवमनेन "विधिशास्त्रप्रवृत्तिनिवृत्त्युपयोगि-साधुत्वाप्रकारकशक्त्यविषयकबोधजनकत्वे सत्यधिकारशास्त्रभिन्नत्वं परिभाषात्वम्" इति गुरुचरणैर्विजयायामुपसंहारे उक्तं लक्षणं संगृहीतम्। तत्र प्रथमम् "अप्रामाण्यज्ञानानास्कन्दितसाधुत्वप्रकारकबोधोपयोगि-शक्त्यविषयक-साधुत्वाप्रकारकबोधजनकत्वं परिभाषात्वम्" इति लक्षणं दर्शितम्। तस्येत्थं समन्वयः—तस्मिन्नित्यादिपरिभाषासहकारं विना इको यणचीत्यादेरनुपश्लिष्टस्येकः प्रसङ्गे यण् साधुरित्येवार्थः स्यात्तत्र सप्तम्यर्थस्योपश्लेषस्य व्यवहिताव्यवहितसाधारणतया पूर्वपरसाधारणतया च तज्जन्यबोधोऽप्रामाण्यज्ञानास्कन्दितः। परिभाषासहकारेण जायमानस्तु अजव्यवहितपूर्वस्येको यणिति तदनास्कन्दित इति तादृशबोधोपयोगिबोधजनकत्वेन तस्याः परिभाषात्वमुपपन्नम्। एवं निर्दिश्यमानपरिभाषामन्तरा "जराया जरस्" इत्यनेन जरान्ताङ्गस्य निर्जरशब्दस्यापि जरसादेश इत्यप्रामाण्यज्ञानास्कन्दितो बोधः। परिभाषासहकारेण तु तदनास्कन्दित इति तस्याः परिभाषात्वमेवमन्यत्रापि योज्यम्। संज्ञासूत्रेष्वपवादसूत्रेषु चातिव्याप्तिनिरासार्थं शक्त्यविषयकसाधुत्वाप्रकारकेति चरमबोधविशेषणे। पूर्वत्रासिद्धमित्यादेः प्रथमोक्तबोधोपयोगिबोधजनकत्वाभावान्न तत्रातिव्याप्तिः। एवं तल्लक्षणस्य शास्त्रत्वसंपादकपरिभाषासु संगतत्वेऽपि "असिद्धं बहिरङ्गमन्तरङ्गे" इत्यादिपरिभाषास्वव्याप्तिस्तासां तथात्वाभावात्। अत उपसंहारे विधिशास्त्रप्रवृत्तिनिवृत्तीत्यादिलक्षणमेव समादृतम्। विधिशास्त्रप्रवृत्तीत्यत्र संयुक्ताक्षरप्रशब्दात्पूर्वस्याप्यकारस्य "प्रहे वा" इति पिङ्गलसूत्रेण गुरुत्वविकल्पबोधनान्नच्छन्दोभङ्गदोषः ॥ ७ ॥

प्राचीनव्याकरणे पठिता याः पाणिनीयतन्त्रे तु ।
लिङ्गन्यायाधिगताः परिभाषा भाष्यवार्तिकानुमताः ॥ ८ ॥

नागेशभट्टरचितां तद्व्याख्यां प्रायशः समनुसृत्य ।
वक्तव्यविशेषानपि संगृह्णन् विशदयंश्च गूढार्थान् ॥ ९ ॥

आर्याचरणसमाश्रय आर्याश्रितवागुपासनारूपम् ।
कृशमतिरपि गुरुकृपया रचये पद्यप्रबन्धमिमम् ॥ १० ॥

---

ननूक्तलक्षणलक्षितानामप्यष्टाध्यायीस्थानाम् "इको गुणवृद्धी" इत्यादीनामत्राव्याख्यानेन न्यूनतेत्याशङ्कां वारयितुं व्याख्येयपरिभाषास्वरूपं दर्शयति—**प्राचीनेति**। इन्द्रादिनिर्मितव्याकरणे साक्षाद्वचनरूपेण पठिता अस्मिन् पाणिनीयव्याकरणे तु लिङ्गन्यायाधिगताः = ज्ञापकसिद्धा न्यायसिद्धाश्च। भाष्यकारवार्तिककाराभ्यां सम्मता याः परिभाषास्तद्व्याख्यामित्यग्रिम-कारिकायामन्वयः। एवं च पाणिनिपठितपरिभाषाणां स्वतः सिद्धत्वेन ज्ञापक-न्यायसिद्धत्वाभावान्नात्रव्याख्येयत्वम्। एवं प्राचीनव्याकरणे पठितानामपि कासांचिद् भाष्यवार्तिकासम्मतया नात्रोपन्यासः। भाष्यवार्तिकनिबद्धा इत्यनुक्त्वाऽनुमता इति कथनं तत्र साक्षादपठितानामपि ध्वनितानां संग्रहार्थम्। यस्मिन्विधिरित्यादीनां वाचनिकीनामप्यत्र व्याख्यानात्प्रतिज्ञाविरोध इति तु नाशङ्क्यम्, सर्वासामेव ज्ञापकन्यायान्यतरसिद्धत्वाङ्गीकारात्। तत्र तत्र वाचनिकत्वकथनं तु भाष्ये ज्ञापकादिनोपन्यस्तमित्याशयेनैवेति बोध्यम् ॥ ८ ॥

**तद्व्याख्याम्** = तासां परिभाषाणां व्याख्यां परिभाषेन्दुशेखररूपाम्। प्रायश इत्युक्त्या क्वचित्तदनौचित्यप्रतिभाने प्रकारान्तरेण व्याख्यानं सूच्यते। **वक्तव्यविशेषानिति**। परिभाषेन्दुशेखरे मूलेऽनुक्तानप्यावश्यकान्विशेषार्थान् संगृह्णन्, मूलस्थान्गूढार्थांश्च विशदयन् = स्पष्टीकुर्वन्नित्यर्थः ॥ ९ ॥

**आर्येति**। आर्यायास्तन्नामकच्छन्दसश्चरणाः पादाः समाश्रयोऽवलम्बनं पद्यनिर्माणे यस्य सः। अस्य ग्रन्थस्य प्रायेणार्याचरण-विन्यासभेदेन तदीयदलद्वयविन्यासभेदेन च भिन्नैः पथ्या-विपुला-गी-त्युपगीत्यादिभिर्निबद्धत्वात्। अपि चार्याया भगवत्या जगदम्बायाश्चरणारविन्दयुगलं समाश्रयोऽवलम्बनं यस्येति श्लेषः। आर्यैः सदाचारसंपन्नैर्ब्राह्मणादिभिराश्रिताया वाचः सुरसरस्वत्या उपासनारूपमिमं पद्यप्रबन्धं पद्यात्मकं ग्रन्थं रचये इत्यर्थः ॥ १० ॥

त्रीण्यत्र च प्रकरणान्याद्यं शास्त्रत्वसाधकं तेषु ।
अपरं बाधनिबन्धनबोधकमन्त्यं च शेषार्थम् ॥ ११ ॥
तत्रैकदेशविकृतमनन्यवदित्यन्तमादिमं ज्ञेयम् ।
अपरमुभयनिर्देशे इत्यन्तमतः परं चान्त्यम् ॥ १२ ॥
प्रथमेऽपि च प्रकरणे महेशपठितानुबन्धमूलत्वात् ।
अभ्यर्हिततरासां प्रवर्तिका चोच्यते प्रथमम् ॥ १३ ॥
अ इ उ ण् सूत्रे लणिति च सूत्रेऽप्येकस्य णस्यैव ।
ग्रहणादणिण्पदार्थे सन्देहस्तन्निवारणायाह ॥ १४ ॥

---

शास्त्रत्वसाधकमिति । निश्चितप्रामाण्यकबोधजनकत्वं हि शास्त्राणां शास्त्रत्वम् । तथाविधबोधजनकत्वं च व्याख्यानत इत्यादि परिभाषासहकारेणैवेति तत आरभ्यैकदेशविकृतमनन्यवदित्यन्तपरिभाषाप्रकरणं शास्त्रत्वसाधकमित्युच्यते । शास्त्रत्वसंपत्तौ सत्यामेव बाधचिन्ताया योग्यत्वात् तत्प्रथममुक्तम् । तदुत्तरं परनित्यान्तरङ्गापवादानामुत्तरोत्तरं बलीय इत्यादि उभयनिर्देशे पञ्चमीनिर्देशो बलवानित्यन्तं बाधबीजनिरूपणात्मकं द्वितीयं प्रकरणम् । उक्तप्रकरणद्वयावशिष्टार्थप्रतिपादकं प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणमित्यादि ग्रन्थसमाप्तिपर्यन्तं तृतीयं प्रकरणमिति क्रमो ज्ञेयः । उभयनिर्देशे इत्यन्तमित्यत्र, "इकोऽचि विभक्तौ" (७-१-७२) इति सूत्रस्थभाष्यकारिकायां "व्यवधानान्नुमा अपि । नुड्वाच्य उत्तरार्थं तु इह किंचित्त्रपो इति" इत्यत्रैव संहिताया अविवक्षितत्वात्सन्ध्यभावो न दोषाय ॥ ११-१२ ॥

महेशपठितेति । "नृत्तावसाने नटराजराजो ननाद ढक्कां नवपञ्चवारम् । उद्धर्तुकामः सनकादिसिद्धानेतद्विमर्शे शिवसूत्रजालम् ॥" इति नन्दिकेश्वरकृतकाशिकास्थश्लोकानुसारेण सनकादीनां परब्रह्मावबोधं पाणिनेश्च शब्दानुशासनज्ञानमेकयैव क्रियया संपादयितुं परमकारुणिकेन भगवता महेश्वरेण नृत्तावसानकालिकचतुर्दशकृत्वो ढक्कानिनादद्वारा समुपदिष्टो यश्चतुर्दशसूत्रात्मकोऽक्षरसमाम्नायस्तदन्तर्गतणकारानुबन्धमूलकत्वाद् व्याख्यानत इति परिभाषा इतरापेक्षयाऽभ्यर्हिता । अपि च तया विशेषनिर्णयस्य व्याख्यानैकसाध्यत्वप्रतिपादनाद् व्याख्यानरूपाणामितरासां परिभाषाणां प्रवृत्तिप्रयोजिका सेति तस्याः प्रथममुपन्यास इति भावः ॥ १३ ॥

सन्देह इति । "ढ्रलोपे पूर्वस्य दीर्घोऽणः" इत्यादावणपदे पाणिनितात्पर्यसंदेहो भवति—किमिदमण्पदमकारादिपूर्वणकारान्तसमुदायघटकवर्णवृत्ति जात्यवच्छिन्ननिरूपितशक्तिज्ञानाधीनबोधजननेच्छयोच्चरितम्, आहोस्विद् अकारादिपरणकारान्तसमुदाय-

# व्याख्यानतो विशेषप्रतिपत्तिर्न हि सन्देहादलक्षणम् ॥१॥

शिष्टकृताद्व्याख्यानादर्थविशेषस्य निर्णयः कार्यः ।
न हि सन्देहाच्छास्त्रं स्यादनुष्ठापकं किमपि ॥ १५ ॥

पुण्यजनकतारूपेष्टसाधनत्वस्य निश्चये हि गिराम् ।
उच्चारणे प्रवृत्ति र्भवेन्नृणां नैव सन्देहे ॥ १६ ॥

तन्निश्चायकशास्त्रे सन्देहकरं वचो ह्यनुपपन्नम् ।
ज्ञापयति निवर्त्यः खलु सन्देहो व्याख्ययैवेति ॥ १७ ॥

---

घटकवर्णवृत्तिजात्यवच्छिन्ननिरूपितशक्तिज्ञानाधीनबोधजननेच्छयेति । एवमिण्कोरित्यादाविण्पदार्थेऽपि सन्देहः । यद्यपि मदीयः पुत्रो धनवान् भवतु पण्डितश्चेत्येकस्मिन्नपि पदार्थेऽनेकेच्छाविशेष्यत्वदर्शनेनैकत्र तात्पर्यद्वयं न विरुद्धं, तथापि सकृदुच्चरितः शब्दः सकृदेवार्थं गमयतीति न्यायात्सकृदुच्चरितादण्पदाद् बोधद्वयं न संभवति, आवृत्तौ च न मानम् । सूत्रस्य च काव्यत्वाभावेनोभयार्थपदश्लेषो न युक्तः । अतोऽण्पदं पाणिनिचित्तगतोभयतात्पर्यविषयतापन्नं नेति निश्चयादेकत्रैव तात्पर्यस्य वक्तव्यतया सन्देह उपपद्यते । तात्पर्यसन्देहे च शाब्दबोधाभावः, तन्निश्चयस्यैव शाब्दबोधकारणत्वात् । येषां तु मते तात्पर्यज्ञानमेव शाब्दबोधकारणं न तु तन्निश्चयस्तन्मते तात्पर्यसंदेहे शाब्दबोधोऽपि संदेहात्मक एव जायते अत उक्तसंदेहनिवारणाय परिभाषामाहेत्यर्थः ॥१४॥

अर्थविशेषस्येति । सन्दिह्यमानयोर्द्वयोरर्थयोर्मध्येऽन्यतरस्य बहूनां वाऽन्यतमस्यार्थस्य निर्णयो व्याख्यानेनैव कर्तव्य इत्यर्थः । तत्र हेतुमाह—न हीति । लक्षणं शास्त्रम् । अननुष्ठापकं लक्षणमलक्षणम् । शास्त्रस्य साधुशब्दोच्चारणरूपानुष्ठानोपयोगिनिर्णयजनकत्वौचित्यात्तद्विरुद्धं सन्देहप्रयुक्तमननुष्ठापकत्वं नोचितं, किन्तु तथा प्राप्तमतो व्याख्यानेन सन्देहनिवृत्तिः कर्तव्येति भावः ॥ १५ ॥

वर्णसमाम्नाये द्विर्णकारानुबन्धोच्चारणमस्या ज्ञापकम् । तत्र ज्ञापनप्रकारमाह—पुण्येत्यादिना । तद्विषयकप्रवृत्तिं प्रति तन्निष्ठेष्टसाधनत्वनिश्चयस्य हेतुत्वात् प्रकृते च "एकः शब्दः सम्यग् ज्ञातः" इत्यादिश्रुत्या व्याकरणान्वाख्यातसाधुशब्दप्रयोगस्य पुण्यजनकत्वप्रतिपादनात् साधुत्वनिश्चये सत्येव शब्दोच्चारणे प्रवृत्तिः संभवति न तु संदेहे इत्यर्थः ॥ १६ ॥

तन्निश्चायकेति । अणादिसंज्ञाद्वारा लक्ष्यसाधुत्वनिश्चयार्थके शास्त्रे "अ इ उ ण्" इत्यत्र "लण्" इत्यत्र च निःसंदेहप्रतीत्युपाये खकाराद्यनुबन्धकरणे संभवत्यपि सन्देहजनकं द्विर्णकारानुबन्धकरणं सर्वज्ञस्य भगवतो महेश्वरस्यानुपपन्नं सत्, अर्थापत्त्या सन्देहनिवृत्ति-

अणुदित्सूत्रं हित्वाऽण् पूर्वेणैवेण् परेणैव ।
इति लण्सूत्रे भाष्ये व्याख्या विहितैव निर्णेत्री ॥ १८ ॥
संज्ञापरिभाषोद्भवविध्युपकारप्रकारभेदेन ।
शास्त्रेऽस्मिन्पक्षद्वयमुदीरितं तन्निरूपयति ॥ १९ ॥

## यथोद्देशं संज्ञापरिभाषम् ॥ २ ॥

## कार्यकालं संज्ञापरिभाषम् ॥ ३ ॥

अधिकरणघञन्तस्योद्देशपदस्योपदेशदेशोऽर्थः ।
देशपदं चोच्चारणकालार्थकमेवशास्त्रेऽस्मिन् ॥ २० ॥
उपदेशकाल एवावबुध्य संज्ञाऽऽदिसूत्रार्थान् ।
संस्कारोत्थस्मरणात्सर्वत्र व्यवहृति र्यथोद्देशम् ॥ २१ ॥

---

र्व्याख्यानेनैव कर्तव्येति स्वोपपादकं कल्पयित्वोपपन्नमतस्तदस्या ज्ञापकमिति भावः। व्याख्ययैवेत्येवकारेण विरुद्धकोटिद्वयोपस्थितौ भाष्यकारादिव्याख्यानेनैव संदेहनिवृत्तिः कर्तव्या न तु पाणिनीयन्यासादिद्वारककल्पनान्तराश्रयणेनेति सूच्यते, यथोत्तरं मुनीनां प्रामाण्यमित्यङ्गीकारात् ॥ १७ ॥

अणुदित्सूत्रं हित्वेति । तत्सूत्रे त्वण् परणकारेणैव निष्पन्नो ज्ञेयः । पूर्वेणैवेति । पूर्वणकारेणैवेत्यर्थः । एवं परेणेत्यस्य परणकारेणेत्यर्थः । निर्णेत्री = निर्णयजनिका । इयं परिभाषाऽपि लण्सूत्रे भाष्ये स्पष्टा ॥ १८ ॥

व्याख्यानत इति परिभाषा यथा सकलशास्त्रोपकारिका तथा यथोद्देशमित्यादि परिभाषाद्वयं सकलपरिभाषोपकारकमत आदौ तदुपन्यासः । संज्ञापरिभाषेति । संज्ञापरिभाषाप्रयोज्यो यो विधिशास्त्रोपकारः, लक्ष्यसंस्कारकबोधोपयोगिबोधजननरूपो विधिशास्त्रप्रवृत्तिनिवृत्तिसंपादनरूपश्च तद्रीतिभेदप्रयुक्तं शास्त्रे पक्षद्वयमुक्तं तदाहेत्यर्थः । शास्त्रे इत्युक्त्या शास्त्रत्वावच्छेदेन पक्षद्वयं न तु प्रतिसंज्ञं प्रतिपरिभाषं च पक्षद्वयमिति बोध्यते । एवं च लक्ष्यानुरोधेन यथोचितं तत्तत्संज्ञादौ तत्तत्पक्षाश्रयणं ज्ञेयम् ॥ १९ ॥

उद्देशपदस्य = यथोद्देशमित्येतत्पदघटकस्योद्देशपदस्य ॥ २० ॥

संक्षेपेण प्रथमपरिभाषार्थमाह—उपदेशेति । उद्देशमनतिक्रम्य यथोद्देशम् । उद्देशपदस्य चोक्तरीत्या उपदेशकाल इत्यर्थः । एवं च संज्ञापरिभाषाशास्त्रोपदेशकाल एव

कार्येण काल्यते निजसन्निधिमुपनीयते शास्त्रम् ।
संज्ञापरिभाषात्मकमिदमुक्तं कार्यकालमिति ॥ २२ ॥
संज्ञापरिभाषार्थान् गुरुणा तद्देश एवोक्तान् ।
गुरुवचने श्रद्धावाञ्छिष्यस्तत्रैव सादरं वेत्ति ॥ २३ ॥
तत्तत्संबन्धिपदश्रवणादेतस्य विधिदेशे ।
संस्कारोद्बोधे सति तत्तत्सूत्रार्थसंस्मृत्या ॥२४॥
विधिवाक्यार्थज्ञानं प्रमात्मकं लक्ष्यसाधकं भवति ।
तदपेक्षोऽस्ति प्रथमः पक्षो वाक्यैकवाक्यतया ॥२५॥

---

संज्ञाशास्त्रैस्तत्तत्पदशक्तिं, परिभाषाशास्त्रैश्च तद्बोध्यार्थान् अवबुध्य ज्ञात्वाऽनुभवजनित-संस्कारोद्बोधेन सर्वत्र विधिसूत्रेषु तत्स्मरणाद् व्यवहृति र्व्यवहारो लक्ष्यसंस्कारोपयोगी शाब्दबोधो भवतीत्येष यथोद्देशपक्ष इत्यर्थः ॥२१॥

द्वितीयपरिभाषार्थमाह—कार्येणेति । विधिदेशे संज्ञापरिभाषाशास्त्रोपस्थित्या तत्रै-वोक्तविधो बोध इति भावः ॥२२॥

उक्तमर्थं विशदीकुर्वन्नधिकारिभेदेन पक्षद्वयप्रवृत्तिरिति कैयटमतानुसारेण निरू-पयति—संज्ञेत्यादिना । तद्देशे = संज्ञापरिभाषादेशे । श्रद्धावान्—गुरुभिर्यन्मां प्रत्युपदिश्यते तदवश्यं मदुपयोगीति विश्वासवान् यथाश्रुतग्राही ॥२३॥

तत्तदिति । उक्तविधशिष्यस्य "वृद्धिरेचि" "इको यणचि" इत्यादि विधिशास्त्र-देशे संज्ञासूत्रबोधितादैजादिशक्यार्थसंबन्धिवृद्ध्यादिपदश्रवणात्, परिभाषाबोधितार्थ-संबन्ध्यौपश्लेषिकाधिकरणवाच्यचीत्यादिसप्तम्यन्तपदश्रवणाच्च, एकसंबन्धिज्ञानमपर-संबन्धिस्मारकमिति नियमेन संस्कारोद्बोधे सति पूर्वानुभूततत्तत्सूत्रार्थस्मृत्या विधि-वाक्यार्थज्ञानं भवतीत्युत्तरेणान्वयः । अनुभवेन संस्कारोत्पत्तावपेक्षिताया अपेक्षाबुद्धेः सत्त्वादस्य शिष्यस्य संस्कारोत्पत्त्या, उद्बोधकलाभे उद्बुद्धसंस्कारबलेन स्मृति र्जायत इति भावः ॥ २४ ॥

प्रमात्मकम् । संज्ञापरिभाषासहकारेण जातत्वादप्रामाण्यज्ञानानास्कन्दितमित्यर्थः। लक्ष्यसाधकम् = इदं लक्ष्यं साध्विति लक्ष्यधर्मिकसाधुत्वप्रकारकम्। तदपेक्षः = यस्योक्त-रीत्या ज्ञानं जायते तच्छिष्यापेक्षः । अपेक्षावदधिकारिक इत्यर्थः । तथा च "ईदूदेत्"— (१।१।११) इति सूत्रे कैयटः—कथं पुनरयं पक्षो यावता कार्यार्थत्वात्संज्ञापरिभाषस्य कार्यकालतैव न्याय्या । नैष दोषः । यदाऽनुद्दिश्य प्रयोजनविशेषं प्रयोजनमात्रमभिसंधाय भविष्यति किंचिदनेन प्रयोजनमिति संज्ञापरिभाषं प्रणीयते तदा संभवत्येवायं पक्षो-

यस्तु गुरोर्वाक्येष्वपि फलदर्शन एव सादरो भवति ।
स तु लक्ष्यसिद्धिकार्ये संज्ञादेर्नोपयोग इति मत्वा ॥२६॥

तद्देश उपेक्षत इति विधिदेशे नास्य तत्स्मरणम् ।
अत इह वृद्ध्याद्यर्थप्रतिपित्सायां पुन र्गुरुप्रोक्तैः ॥२७॥

तत्तत्सूत्रैः साकं विधिवाक्यानां पदैकवाक्यतया ।
उत्पद्यत उक्तविधं ज्ञानमतः कार्यकालपक्षोऽस्य ॥२८॥

उपजीव्यतदुपजीवकभावापन्नावबोधजनकत्वम् ।
यद्भिन्नवाक्ययोस्तत् कथितं वाक्यैकवाक्यत्वम् ॥ २९ ॥

उपजीव्यः संज्ञापरिभाषाबोधो यतः स्वसाहाय्यात् ।
विध्यप्रामाण्यधियं हरति तदुपजीवकश्च विधिबोधः॥ ३० ॥

---

यथाश्रुतग्राहिप्रतिपन्नपेक्षः" इति । वाक्यैकवाक्यतया = उक्तरीत्या वाक्यैकवाक्यताऽऽश्रयणेन यथोद्देशपक्ष इत्यर्थः ॥ २५ ॥

लक्ष्यसिद्धिकार्ये = लक्ष्यधर्मिकसाधुत्वनिश्चयरूपे स्वप्रवृत्त्युद्देश्ये । संज्ञादेः = गुरूक्तस्य संज्ञापरिभाषासूत्रार्थस्य ॥ २६ ॥

तद्देश इति । स खलु गुरूक्तमर्थं संज्ञापरिभाषादेशे उपेक्षतेऽतस्तस्यापेक्षाबुद्ध्यभावात्संस्कारानुत्पत्त्या विधिदेशे संज्ञापरिभाषार्थस्मरणं न भवति । तेन यथोद्देशपक्ष इव वाक्यैकवाक्यतया लक्ष्यसंस्कारको विधिवाक्यार्थबोधस्तस्य न जायत इति भावः । इह = विधिदेशे । वृद्ध्यादीति । वृद्धिरेचीत्यादौ वृद्ध्यादिपदस्य कोऽर्थः ? इको यणचीत्यादावचीति सप्तम्यन्तेन किं बोध्यत इत्यादिजिज्ञासायां सत्यामित्यर्थः । उक्तविधम् = लक्ष्यसंस्कारोपयोगि । अस्य = उपेक्षकस्य । उपेक्षकाधिकारिक इत्यर्थः ॥२७-२८॥

यथोद्देशपक्षे संज्ञादिसूत्रैः सह विधिसूत्राणां वाक्यैकवाक्यता, कार्यकालपक्षे तु पदैकवाक्यतेत्युक्तम् । तयोः स्वरूपं समन्वयसहितं दर्शयति—उपजीव्येत्यादिना । द्वयोर्वाक्ययोरुपजीव्योपजीवकभावापन्नबोधजनकत्वं वाक्यैकवाक्यत्वम् ॥ २९ ॥

उपजीव्य इति । उपजीवयतीत्युपजीव्य उपकारकः । बाहुलकात्कर्तरि यत् । संज्ञापरिभाषाबोधस्योपजीव्यत्वे हेतुमाह—यत इति । "वृद्धिरादैच्" इत्यादिसंज्ञासूत्रसहकाराभावे "वृद्धिरेचि" इत्यादौ वृद्ध्यादिशब्दस्यैव विधेयत्वं प्रतीयेत । "इको गुणवृद्धी" इत्यादिपरिभाषासहकाराभावे च 'सार्वधातुकार्धधातुकयोः" इत्यादौ यस्य कस्यचिद् गुणविधानं प्रतीयेत । अतः स बोधोऽप्रामाण्यज्ञानास्कन्दितः । संज्ञापरिभाषा-

यानि निरूप्यनिरूपकभावापन्नार्थबोधकपदानि ।
तद्घटितत्वं सूत्रद्वयस्य कथितं पदैकवाक्यत्वम् ॥ ३१ ॥
विधिगतवृद्धिपदं खलु संज्ञास्थादैजितिपदार्थे ।
परिभाषोक्तो निर्दिष्टाद्यर्थो विधिगताच्प्रभृत्यर्थे ॥ ३२ ॥
याति विशेष्यविशेषणभावेनान्वयमभेदसंसर्गात् ।
तत्र निरूप्यनिरूपकभावोऽतस्तत्पदैकवाक्यत्वम् ॥ ३३ ॥
संस्कार्यसूत्रघटकाच्प्रभृतिपदार्थस्य भेदकविषयिणी ।
शाब्द्याकाङ्क्षा शाब्देनैव निवर्त्या न तु स्मृत्या ॥ ३४ ॥

---

सहकारेण जायमानस्तु तदनास्कन्दितो यथार्थः । अतः संज्ञापरिभाषाजन्यबोध उपजीव्यः । विधिसूत्रजन्यबोधश्च—उपजीवति उपकृतो भवति अत उपजीवकः । एतादृशबोधजनकत्वेन तयोर्वाक्यैकवाक्यत्वमिति भावः ॥ ३० ॥

यानीति । निरूप्यनिरूपकभावापन्नविषयताप्रयोजकपदघटितत्वं पदैकवाक्यत्वमित्यर्थः ॥ ३१ ॥

उदाहरणे समन्वयमाह—**विधिगतेत्यादिना** । वृद्धिरेचीति विधिसूत्रस्थं वृद्धिपदं वृद्धिरादैच् इति संज्ञासूत्रस्थस्य आदैच इति पदद्वयस्यार्थेऽभेदसंबन्धेन विशेषणतयाऽन्वयं प्राप्नोति । वृद्धिपदाभिन्ना आदैचः स्युरित्यर्थात्, वैयाकरणनये शब्दार्थयोस्तादात्म्याङ्गीकारात् । अत एव "रामेति द्व्यक्षरं नाम मानभङ्गः पिनाकिनः" इत्यादिव्यपदेश उपपद्यते । एवं तस्मिन्निति निर्दिष्टे पूर्वस्येतिपरिभाषाघटकनिर्दिष्टपदस्यार्थे इको यणचीति विधिसूत्रस्थाच्पदस्यार्थेऽभेदसंबन्धेन विशेषणतयाऽन्वेति—अव्यवहितोच्चारितेऽचीत्यर्थात् । एवं पूर्वपदस्यार्थे इक्पदार्थे । तत्र प्रकारताविशेष्यतयोर्निरूप्यनिरूपकभावापन्नत्वेन तत्तत्पदानां च तादृशविषयताप्रयोजकत्वेन पदैकवाक्यत्वमिति भावः ॥ ३२, ३३ ॥

प्राचीनमते परिभाषाणां यथोद्देशपक्षे वाक्यैकवाक्यता, कार्यकालपक्षे पदैकवाक्यतेति निरूपितं तन्मतेऽरुचिहेतुं दर्शयति—**संस्कार्येति** । परिभाषया संस्कार्यं विधिसूत्रम् इको यणचीत्यादि तद्घटकम् अचीत्यादि पदं तदर्थस्य भेदकविषयिणी कीदृशेऽचीत्यादिविशेषणविषयिणी शाब्दी शब्दश्रवणजनिताऽऽकाङ्क्षा शब्देनैव निवर्तितुमर्हा न तु प्राचीनमतानुसारेण, वाक्यार्थस्मृत्या घटादिपदश्रवणेऽनुमानेनोपस्थितस्याकाशस्यापि शाब्दबोधविषयत्वापत्तेः । एवं चोपेक्षाबुद्धिमतामिवापेक्षाबुद्धिमतामपि न स्मरणेन

इत्यरुचेरिह निजमतमुक्तं नागेशभट्टेन ।
विधिभिः परिभाषाणामुभयत्र पदैकवाक्यतैवेति ।। ३५ ।।
तस्मिन्नित्यादीनां परिभाषाणामधिगतेऽर्थे ।
कुत्रास्ति सप्तमीनिर्देशादीत्येवमत्र हि विचारे ।। ३६ ।।
सर्वेषां तादृशविधिवचसां तत्र ह्युपस्थितौ सत्याम् ।
निर्दिष्टे पूर्वस्येत्यादिविधेयांशमावर्त्य ।। ३७ ।।
लक्ष्यान्वाख्यानकरो बोधो जन्यः पदैकवाक्यतया ।
अयमेव यथोद्देशाख्यः पक्षः प्रोच्यते नव्यैः ।। ३८ ।।
पक्षे तु कार्यकाले विधिसूत्रैः स्वीयसंस्कृत्यै ।
स्वान्तःस्थलिङ्गचिह्नितपरिभाषाऽऽकर्षणं क्रियते ।।३९।।

---

निर्वाहोऽपि तु पदसंबन्धेनैव । स च पदसंबन्धोऽपेक्षाबुद्धिमतां परिभाषादेशे विधिशास्त्रोपस्थित्या, उपेक्षाबुद्धिमतां तु विधिदेशे परिभाषोपस्थित्येति तत्प्रयुक्तमेव परिभाषाविषये पक्षद्वयम् । पदैकवाक्यत्वं तूभयत्र तुल्यमिति स्वमतं परिभाषेन्दुशेखरे "केचित्तु" इत्यादिना ग्रन्थेन नागेशभट्टेनोक्तमिति भावः ।। ३४, ३५ ।।

संक्षेपेणोक्तं नागेशादिनवीनमतं विस्तरेण दर्शयति—**तस्मिन्नित्यादिना** । अधिगतेऽर्थे अर्थे ज्ञाते सतीत्यर्थः ।। ३६ ।।

तादृशविधिवचसां परिभाषाकाङ्क्षितसप्तम्यन्तपदादिघटितविधिवाक्यानाम् । तत्र = परिभाषादेशे । **निर्दिष्ट इति** । परिभाषादेशे उपस्थितानां विधिसूत्राणां लक्ष्यसंस्कारोपयोगिबोधजननरूपसंस्कारार्थं यावद्विधिसूत्रं निर्दिष्टे पूर्वस्येत्यादि परिभाषाविधेयांशस्यावृत्तिं कृत्वोक्तविधो बोधः परिभाषया पदैकवाक्यतया संपाद्यते । संपूर्णपरिभाषाया आवृत्तेः प्रयोजनाभावाद् विधेयांशमावर्त्येत्युक्तम् । सकृदुच्चरितः शब्दः सकृदेवार्थं गमयतीतिन्यायादेकेन विधेयबोधकपदेन सह सर्वविधिसूत्रस्थपदानामन्वयासंभवादावृत्त्याश्रयणम् । इदं च कैयटेनाप्यङ्गीकृतम् । तथाहि क्ङिति च ( १।१।५ ) इति सूत्रे कैयटः अथवा यथोद्देशपक्षाश्रयेण भाष्यम् । तथाहि—"प्रधानान्यात्मसंस्काराय सन्निधीयमानानि गुणभेदं प्रयुञ्जते" इति ।। ३७, ३८ ।।

नव्यमते परिभाषाविषये पक्षद्वयेऽपि पदैकवाक्यत्वाङ्गीकारे यथोद्देशपक्षात्कार्यकालपक्षे को विशेष इत्येतद्दर्शयितुं तत्र तावद् विधिदेशे परिभाषोपस्थितिमुपपादयति—**पक्षे त्विति** । लिङ्गं परिभाषोपस्थापकं सप्तम्यन्तपदादि । आकर्षणमुपस्थापनम् ।। ३९ ।।

त्रैपादिकानि यद्यपि परिभाषां प्रत्यसिद्धानि ।
तद्दृष्ट्या सा सिद्धेत्याकृष्यत एव पक्षेऽस्मिन् ॥४०॥

एतावानेव यथोद्देशत्वापेक्षया विशेषोऽत्र ।
तुल्यं परिभाषाणां पक्षद्वितये पदैकवाक्यत्वम् ॥४१॥

अत एव च भाष्यकृता ह्यधिकारः कश्चिदेकदेशस्थः ।
शास्त्रमखिलमेवाभिज्वलयति दीपो यथा वेश्म ॥४२॥

इत्येवं पारार्थ्यादधिकारपदेन परिभाषाम् ।
बोधयता प्रतिपादितमिदं च पक्षद्वयानुगतम् ॥४३॥

दीपः प्रभया गृहमिव परिभाषा हि स्वबुद्धिजननेन ।
उपकुरुते शास्त्रमिति हि पदैकवाक्यत्वमेवेष्टम् ॥४४॥

---

'कार्यकालपक्षे सापादिकशास्त्रेष्विव त्रैपादिकेष्वपि परिभाषोपस्थितिरिति यथोद्देशपक्षाद्विशेषं सहेतुकं दर्शयति—त्रैपादिकानीति । त्रैपादिकानां परिभाषादृष्ट्याऽसिद्धत्वेऽपि त्रैपादिकदृष्ट्या परिभाषायाः सिद्धत्वात्सा तैराकृष्यत एव । 'यथा स्वयमदृष्टेनापि पिशाचेन मनुष्याकर्षणं क्रियते, यथा वा कश्चित् स्वयं देवान्द्रष्टुमसमर्थोऽपि पुण्यप्रभावेण देवैः स्वर्गं नीतस्तत्र देवान्पश्यति तद्वत् ।' तथा च "पूर्वत्रासिद्धम्" (८।२।१) इति सूत्रे भाष्ये "झलो झलि" (८।२।२६) "ह्रस्वादङ्गात्" (८।२।२७) "संयोगान्तस्य लोपः" (८।२।२३) इत्येतेषु त्रैपादिकसूत्रेषु तस्मिन्निति, तस्मादिति, षष्ठी स्थानेयोगेति परिभाषाणामप्रवृत्तिमाशङ्क्य "नैष दोषः । यद्यपीदं तत्रासिद्धं तत्त्विह सिद्धम् । कथम् ? कार्यकालं संज्ञापरिभाषम् । यत्र कार्यं तत्रोपस्थितं द्रष्टव्यम्" इत्युक्तम् ॥४०॥

**एतावानेवेति** । 'यथोद्देशपक्षे परिभाषाणां त्रिपाद्यामनुपस्थितिः, कार्यकालपक्षे तु त्रिपाद्यामपि तदुपस्थितिरित्येतावानेव विशेष इत्यर्थः ॥४१॥'

**अत एवेति** । पक्षद्वयेऽपि परिभाषाणां पदैकवाक्यतया बोधकत्वादेवेत्यर्थः । **भाष्यकृतेति** । षष्ठी स्थानेयोगा (१।१।४९) इति सूत्रे भाष्ये—"अधिकारो नाम त्रिप्रकारः । कश्चिदेकदेशस्थः सर्वं शास्त्रमभिज्वलयति । यथा प्रदीपः सुप्रज्वलितः सर्वं वेश्माभिज्वलयति" इत्याद्युक्तम् । अत्राधिकारशब्देन पारार्थ्याद् गौण्या वृत्त्या परिभाषाप्युच्यते । उक्तं हि कैयटेन—कश्चित् परिभाषारूप इति । इदं च भाष्यं पक्षद्वयसाधारणम् । असति बाधके प्रमाणानां सामान्ये पक्षपातात् । उक्तभाष्यस्य पदैकवाक्यतातात्पर्यकत्वप्रदर्शनाय प्रदीपदृष्टान्तं विवृणोति—दीप इत्यादिना ।

विधिदेशे बुद्धावपि परिभाषायाः स्व एव देश इति ।
सिद्धान्त एकदेशस्थ इति पदेनात्र सूचितो भाष्ये ॥४५॥
व्यवहर्तॄणां हि यथा कार्यार्थमनेकदेशगमनेऽपि ।
न हि तद्देश्यत्वमपित्वभिजनदेश्यत्वमुच्यते तद्वत् ॥४६॥
अत एव ङमो ह्रस्वादिति विधिसूत्रे द्वयोरुपस्थितयोः ।
तस्मादिति तस्मिन्नित्यनयोः परिभाषयोर्युगपत् ॥४७॥
अष्टाध्यायीपाठप्रयुक्तपरताऽऽश्रयेण भाष्यकृता ।
तस्मादिति पञ्चम्या निर्देशः प्रबल इत्युक्तम् ॥४८॥
संज्ञाशास्त्रस्य तु निजदेशे नैवोक्तविधबोधः ।
विधिदेश एव तस्य तु भवत्यसौ कार्यकालत्वे ॥४९॥

---

स्वबुद्धिजननेन—स्वस्य आत्मीयस्य निर्दिष्टे (अव्यवहितोच्चारिते) पूर्वस्येत्याद्यंशस्य या विशिष्टविधिवाक्यार्थघटकतया बुद्धिस्तज्जननद्वारेत्यर्थः । अत्र प्रभास्थानीयं परिभाषाबोध्यार्थस्य विशिष्टवाक्यार्थसंवलनं प्रकाशस्थानीयश्च विशिष्टवाक्यार्थबोधः । इति हि—इत्येवं दृष्टान्ततात्पर्यात्पदैकवाक्यत्वमेव भाष्यकाराभिप्रेतमित्यर्थः ॥ ४२–४३–४४ ॥

ननु कार्यकालपक्षे परिभाषाणां विधिदेश उपस्थितौ तद्देशस्थत्वेन स्वदेशप्रयुक्तपौर्वापर्यव्यवहारो न स्यात् । उक्तं च कैयटेन "इको गुणवृद्धी" इति सूत्रे—यथोद्देशपक्षे च परिभाषयोः पौर्वापर्यं न तु कार्यकालतायाम्" इति । अत आह—विधिदेश इति । स्व एवेति । पाणिन्युच्चारणाधिकरणभूत एव देश इत्यर्थः । अत्र भाष्ये=पूर्वोक्तभाष्ये ॥ ४५ ॥

उक्तमर्थं लौकिकदृष्टान्तेन समर्थयति—व्यवहर्तॄणामिति । यत्र पूर्वैरुषितं स्वयं च निवसति सोऽभिजनः ॥ ४६ ॥

उक्तार्थाङ्गीकारादेव "तस्मिन्निति निर्दिष्टे पूर्वस्य" (१।१।६६) इति सूत्रस्थं भाष्यमुपपन्नमित्याह—अत एवेत्यादिना । यदि तु विधिदेशे उपस्थित्या तद्देश्यत्वं मन्येत तर्ह्युभयोरप्युक्तपरिभाषयोर्ङमोह्रस्वादित्येकसूत्रस्थत्वेन, परत्वादुभयनिर्देशे पञ्चमीनिर्देशो बलीयानिति भाष्यमसंगतं स्यादिति भावः । एवं च "इको गुणवृद्धी" इति सूत्रस्थ उक्तकैयटग्रन्थश्चिन्त्य एव ॥ ४७–४८ ॥

एवं परिभाषाविषये पक्षद्वयं निरूप्य संज्ञाविषये तन्निरूपयति—संज्ञाशास्त्रस्य त्वित्यादिना । उक्तविधबोधः=परिभाषाया इव विधिशास्त्रेण सह पदैकवाक्यतया

तत्र प्रगृह्यादीनां संज्ञानां कार्यकालतापक्षे ।
विधिदेश एव शक्तिग्रहेण तद्देशतैवेष्टा ॥ ५० ॥

तस्मादणोऽप्रगृह्यस्येत्येतेनैकवाक्यतापन्नम् ।
अदसो मादिति सूत्रं प्रति मुत्वादिकमसिद्धं न ॥ ५१ ॥

कार्यार्थमसिद्धत्वं प्रकल्पितं कार्यधीश्च विधिदेशे ।
तद्देशस्था संज्ञाऽसिद्धत्वान्नात्र पूर्वपदबोध्या ॥ ५२ ॥

एवं विधिदेशे खलु संज्ञाबोधोत्तरं विरोधमतेः ।
विधिशास्त्रस्य परत्वे संज्ञाऽपि परेति पूर्वतो बलिनी ॥ ५३ ॥

---

लक्ष्यसंस्कारको बोधः । कार्यकालत्वे = कार्यकालपक्षे । अत्रेदं बीजम्—परिभाषायाः स्वोद्देश्यज्ञानार्थं विधिशास्त्रापेक्षासत्त्वात्तया तदुपस्थापनेन स्वदेशे लक्ष्यसंस्कारकबोधजननं युक्तम्, संज्ञाशास्त्रस्य तु शक्तिग्राहकत्वाच्छक्तिग्रहे जाते शक्तपदेन व्यवहर्तुरनपेक्षणात्तद्देशे नोक्तविधो बोध इति । अतस्तस्य कार्यकालपक्षे विधिशास्त्रदेश एव पदैकवाक्यतया तादृशो बोधः । तत्र शक्तिग्रहेऽपेक्षाबुद्धौ यथोद्देशपक्षः । उपेक्षाबुद्धौ कार्यकालपक्ष इति बोध्यम् ॥ ४९ ॥

तत्र = संज्ञाशास्त्रेषु । तद्देशतैव = विधिदेशस्थतैव ॥ ५० ॥

तत्फलमाह—**तस्मादिति** । "अणोऽप्रगृह्यस्यानुनासिकः" (८।४।५७) इति विधिसूत्रैकवाक्यतापन्नत्वेन, "अदसो मात्" (१।१।१२) इति प्रगृह्यसंज्ञासूत्रस्य तद्देशस्थत्वात्, "अदसोऽसेर्दादु दो मः" (८।२।८०) इति मुत्वविधायकस्य "एत ईद् बहुवचने" (८।२।८१) इति मीत्वविधायकस्य च तदपेक्षया पूर्वत्वाभावात्पूर्वत्रासिद्धमित्यनेनासिद्धत्वं न भवतीत्यर्थः ॥ इदम् अदसो मादिति सूत्रे भाष्ये स्पष्टम् ॥ ५१ ॥

तत्रोपपत्तिमाह—**कार्यार्थमिति** । अत्र = कार्यकालपक्षे । न पूर्वपदबोध्या = पूर्वत्रासिद्धमिति सूत्रघटकपूर्वपदग्राह्या नेत्यर्थः ॥ ५२ ॥

त्रैपादिक इव सापादिकेऽपि परविध्येकवाक्यतापन्नस्य संज्ञासूत्रस्य परत्वं भाष्योक्तं दर्शयति—**एवमिति** । **विरोधमतेरिति** । विप्रतिषेधशास्त्रप्रवृत्त्युपयोगिविरोधावधारणादित्यर्थः । पूर्वतः = पूर्वशास्त्रात् । बलिनी = बलवती ॥ ५३ ॥

अत एव कार्यकाले प्लुतप्रगृह्या अचीतिदेशस्था ।
भाष्ये प्रगृह्यसंज्ञाऽयादिभ्यः खलु परेत्युक्तम् ॥ ५४ ॥

भपदाख्याविषये त्वाश्रितो यथोद्देशपक्ष एवैकः ।
पौर्वापर्यमतः खलु पाणिनिपाठप्रयुक्तमेव तयोः ॥ ५५ ॥

निजदेशजातशक्तिज्ञानेन पदादिसंज्ञानाम् ।
त्रैपादिकशास्त्रेष्वपि भवति व्यवहार इति बोध्यम् ॥ ५६ ॥

---

अत एव = उक्तव्यवस्थाङ्गीकारादेव । भाष्य इति । "अदसो मात्" (१।१।१२) इति सूत्रे भाष्ये "अमी आसते" "अमू आसाते" इत्यादावीत्त्वोत्त्वयोरसिद्धत्वादयावाद्या-देशापत्तिमाशङ्क्य प्रगृह्यसंज्ञावचनसामर्थ्यादयादयो न भविष्यन्तीत्येकं समाधानमुक्त्वा, कार्यकालपक्षे प्रगृह्यसंज्ञायाः प्लुतप्रगृह्या अचीत्येतद्विधिदेशस्थत्वेन परत्वादयादीन् बाधित्वा सैव भविष्यतीति समाधानान्तरमुक्तम् । तेनायमर्थो भाष्यसम्मत इति भावः ॥ ५४ ॥

भपदेति । आकडाराधिकारस्थभपदसंज्ञाविषये तु यथोद्देशपक्ष एवाश्रीयते । तेन तयोः संज्ञयोः पौर्वापर्यं पाणिनिपाठप्रयुक्तमेव = पाणिन्युच्चारणाधिकरणदेश एव तयोः पौर्वापर्यप्रयोजक इत्यर्थः । तत्र कार्यकालपक्षाश्रयणे तु "यचि भम्" (१।४।१८) इत्यस्य "अल्लोपोऽनः" इति विधिदेशस्थत्वेन भसंज्ञां प्रति "नलोपः प्रातिपदिकान्तस्य" (८।२।७) इति त्रैपादिकविधिसूत्रैकवाक्यतापन्नपदसंज्ञाया असिद्धत्वापत्त्या पूर्वं भत्वेऽल्लोपे च सति पदत्वान्नलोपापत्तिः स्यात् । तत्पक्ष आकडारीयत्वाभावेनैकसंज्ञानियमा-भावात्कृत्कृत्यसंज्ञयोरिव भपदसंज्ञयोः समावेशसम्भवात् । अनस्तक्ष्णेत्यादावाद्याकारलोपा-पत्तिवारणाय कार्यकालपक्षाश्रयणेन "अल्लोपोऽनः" इत्यत्र यचि भमित्यस्योपस्थितिप्रदर्शकं, "ष्यङः संप्रसारणम्" (६।१।१३) इति सूत्रस्थं भाष्यं त्वेकदेश्युक्तिरिति शब्देन्दुशेखरे निरूपितम् । अतस्तद्विरोधोऽत्र नाशङ्क्यः ॥ ५५ ॥

नन्वेवं भपदसंज्ञयोर्यथोद्देशपक्षस्यैवाश्रयणे त्रिपाद्यां तदप्रवृत्तौ नलोपः प्रातिपदिकान्त-स्येत्यादेरिष्टार्थबोधो न स्यादत आह—निजेति । अत एव "पूर्वत्रासिद्धम्" इति सूत्रे भाष्ये परिभाषाणामेव यथोद्देशपक्षे त्रिपाद्यामप्रवृत्तिमाशङ्क्य कार्यकालपक्षाश्रयणेन समाहितं न तु संज्ञानाम् ॥ ५६ ॥

वस्तुत एतत्पक्षद्वयमफलं क्लेशबहुलश्च ।
पौर्वापर्यनियामक उच्चारणदेश एव संज्ञाऽऽदेः ॥ ५७ ॥
परिभाषा च द्विविधा काचिच्छास्त्रत्वसाधिका भवति ।
काचिच्छास्त्रत्वावच्छिन्नोद्देश्येति भेदेन ॥ ५८ ॥
आद्या यथा हि तस्मिन्नित्यपरा चान्तरङ्गपरिभाषा ।
त्रैपादिकमाद्यां प्रति नासिद्धं तां विना ह्यशास्त्रत्वात् ॥ ५९ ॥
अपरां प्रति तदसिद्धं न च दोषस्तद्वदेव संज्ञायाम् ।
शक्तिग्रहेण तत्रोत्पन्नेन व्यवहृतेः सुसाधत्वात् ॥ ६० ॥

---

एवं परिभाषेन्दुशेखरानुसारेण व्याख्याय तत्र भपदसंज्ञाविषये पाणिन्युच्चारणाधिकरणदेश एव पौर्वापर्यप्रयोजकः प्रगृह्यसंज्ञादौ तु लक्ष्यसंस्कारकबोधाधिकरणदेशः, परिभाषासु च पाणिन्युच्चारणाधिकरणत्वविशिष्टो लक्ष्यसंस्कारकबोधाधिकरणदेशस्तत्प्रयोजक इत्यननुगमः; प्राचीननवीनमतविवेचनपरिश्रमः क्वचिद् । वाक्यैकवाक्यता क्वचित्, पदैकवाक्यतेत्यादिविचारक्लेशश्चेत्यरुचेः परमपूज्यश्रीमद्बालशास्त्रिमतमाह—वस्तुत इत्यादिना । उच्चारणदेश एव = पाणिन्युचारणाधिकरणदेश एव । संज्ञाऽऽदेः = संज्ञापरिभाषयोः ॥ ५७ ॥

शास्त्रत्वसाधिका = अप्रामाण्यज्ञानानास्कन्दितसाधुत्वप्रकारकबोधजनकत्वरूपशास्त्रत्वसंपादिका । शास्त्रत्वावच्छिन्नोद्देश्या=शास्त्रप्रवृत्तिनिवृत्त्यादिव्यवस्थासंपादिका॥५८॥

तस्मिन्निति । तस्मिन्निति निर्दिष्टे पूर्वस्येति परिभाषा । त्रैपादिकमिति । आद्यां शास्त्रत्वसाधिकां परिभाषां प्रति त्रैपादिकं शास्त्रं नासिद्धम्, तत्सहकारमन्तरा शास्त्रत्वस्यैवाभावात् । पूर्वत्रासिद्धमित्यनेन शास्त्रस्यैवासिद्धत्वबोधनादिति भावः ॥ ५९ ॥

अपरां प्रतीति । शास्त्रत्वावच्छिन्नोद्देश्यिकाम्, असिद्धं बहिरङ्गमन्तरङ्गे, विप्रतिषेधे परं कार्यम्, अनुदात्तं पदमेकवर्जम्—इत्यादिपरिभाषां प्रति त्रैपादिकमसिद्धमेव । न चैवं सति कश्चिद्दोषः । एवमेव संज्ञाशास्त्रं प्रति त्रैपादिकमसिद्धं तथापि न काचित्क्षतिः । संज्ञासूत्रप्रदेशे जातेन शक्तिग्रहेण सापादिकेष्विव त्रैपादिकेष्वपि संज्ञाप्रयुक्तव्यवहारस्य साधयितुं शक्यत्वात्, तज्ज्ञानमन्तरा संज्ञापदघटितानां त्रैपादिकानां शास्त्रत्वसंपादकयथार्थबोधस्यैवासम्भवाच्च ॥ ६० ॥

अदसो मादिति सूत्रे सिद्धं मुत्वादि सूत्रसामर्थ्यात् ।
पक्षद्वयकृतचिन्ता सकला विफलेति शास्त्रिचरणमतम् ॥ ६१ ॥

अनुबन्धशब्दवाच्या इत्संज्ञा नादयः सनादिस्थाः ।
स्वघटितपदाघटितसुबघटितघटकबोधकांशका नो वा ॥ ६२ ॥

---

नन्वेवम्, अमी आसते, अमू आसाते इत्यादावयावाद्यादेशापत्तिः, मीत्वमुत्वयोरसिद्धत्वेन प्रगृह्यसंज्ञाया अप्रवृत्तेरत आह—**अदसो मादिति** । तत्सूत्रं प्रति मुत्वादि सूत्रारम्भसामर्थ्यादेव सिद्धम्, न च "अणोऽप्रगृह्यस्यानुनासिकः" इति सूत्रैकवाक्यतापन्नां प्रगृह्यसंज्ञां प्रति मुत्वादेः सिद्धत्वेन तत्र तच्चरितार्थमिति वाच्यम्, कार्यकालपक्षाङ्गीकार एव तथा वक्तुं शक्यत्वात् । अस्माभिस्तु द्वयोरपि पक्षयोरनङ्गीकारात् । किञ्च कार्यकालपक्षवादिनं प्रति नैकं प्रयोजनं योगारम्भं प्रयोजयति । यद्येतावत्प्रयोजनं स्यात्तत्रैवायं ब्रूयादणोऽप्रगृह्यस्यानुनासिकोऽदसो नेति' अदसो मादिति सूत्रे भाष्योक्त्या प्रथमं सामर्थ्याश्रयणेनैवोक्तदोषनिवारणात्तदेवाश्रयणीयं किं कार्यकालपक्षेणेति भावः । **पक्षद्वयेति** । उक्तरीत्या पक्षद्वयाश्रयणस्य निष्प्रयोजनत्वात्तदाश्रित्य परिभाषेन्दुशेखरे कृतः सकलो विचारो निष्फल इत्यर्थः ॥ ६१ ॥

संज्ञोद्देश्यकत्वेन पूर्वपरिभाषासादृश्यादनेकान्तपरिभाषा स्मृता । अतः स्मृतिविषयत्वे सत्युपेक्षानर्हत्वरूपप्रसङ्गसङ्गत्या तामवतारयति—**अनुबन्धेत्यादिना** । 'अनु = अप्राधान्येन, बध्यन्ते = उच्चार्यन्त इत्यनुबन्धाः । आचार्यकर्तृकाप्रधानोच्चारणविषया इत्यर्थः । अप्राधान्यं च तेषां लक्ष्यासमवायात् । योगरूढश्चायं शब्दस्तेन इत्संज्ञा इत्यर्थः । सनादिस्थाः गुप्तिज्किद्भ्यः सन्नित्यादौ सन्नित्यादिपदघटका नकारादय इति स्वरूपपरिचयः, अनेकान्ता अनुबन्धा इति परिभाषायाः परार्थानुमानवाक्यरूपत्वात् ।' प्राचीनमते च पर्वतो वह्निमान् नवेत्याकारकस्य साध्यतदभावावगाहिनः पक्षविशेष्यकसाध्यप्रकारकसंशयस्य पक्षतात्वात् पक्षतायाश्चानुमितिकारणत्वात् सन्देहोऽवश्यं निरूपणीयः । तत्रानुबन्धा अवयवा न वेत्येतावन्मात्रोक्तावयवत्वस्य सनिरूपकपदार्थत्वेन, एकनिरूपितावयवत्वस्यान्यनिरूपितानवयवत्वस्य चैकस्मिन्नपि धर्मिणि संभवेन तयोर्विरोधाभावात्सन्देहो नोपपद्येत । बोधकावयवा न वेत्युक्तावप्येकबोधकावयवत्वस्यान्यबोधकानवयवत्वस्य च संभवेन विरोधाभावस्तदवस्थः । स्वघटितघटकबोधकावयवा न वेत्युक्तावपि स्वपदवाच्योऽनुबन्धस्तद्घटिताऽष्टाध्यायी तद्घटका येऽन्ये बोधकास्तदनवयवत्वस्य सशब्दरूपबोधकावयवत्वस्य च सत्त्वेनाविरोध एव । स्वघटितपदघटकेति पदशब्दनिवेशेनाष्टाध्याय्या व्यावृत्तावपि "प्रमाणे द्वयसज्दघ्नञ्मात्रचः" इत्यत्र प्रथमचकारे द्वयसावयवत्वेऽपि स्वघटितसमासात्मकपदघटकोऽन्यो बोधको मात्रप्रत्ययस्तदनवयवत्वस्य च

अनुबन्धेषु विभक्तिप्रकृतिघटकताऽस्त्यतोऽवयवतायाः ।
लक्ष्ये चादर्शनतोऽनवयवतायाः परिस्फूर्तेः ॥ ६३ ॥

बोधकता सनि किं वा से पर्याप्तेति संशयाज्जाते ।
उक्तविधे सन्देहे तदपाकरणार्थमिदमाह ॥ ६४ ॥

---

सत्त्वेनाविरोधतादवस्थ्यम् । स्वघटितपदाघटितपदघटकेति पदे पदाघटितत्वविशेषणदानेऽपि, "सन्यतः" इत्यत्र पदाघटितं पदं "सनि" इति तद्घटकेकाररूपबोधकानवयवत्वस्य सशब्दावयवत्वस्य च सत्त्वेन विरोधाभावात्सन्देहानुपपत्तिरतो निष्कृष्य सन्देहाकारं दर्शयति—**स्वघटितेत्यादिना** । स्वघटितपदाघटितसुबघटितपदघटकबोधकावयवा न वेत्यर्थः । अत्राधिकस्य सुबघटितेत्यस्य पदविशेषणस्य निवेशाच्चरमोद्भावितानुपपत्तिनिरासो ज्ञेयः । समन्वयो यथा—"गुप्तिज्किद्भ्यः सन्" इत्यत्र स्वपदबोध्योऽनुबन्धो नकारस्तद्घटितः पदाघटितः सुबघटितश्च 'सन्' इति शब्दस्तद्घटको लक्ष्यस्थसप्रत्ययबोधकः सशब्दस्तदवयवत्वं नकारेऽस्ति न वेति सन्देहः ॥ ६२ ॥

ननु साधारणासाधारणधर्मज्ञानादेः सन्देहप्रयोजकस्याभावात्कथमत्र सन्देह इत्याकाङ्क्षायामाह—**अनुबन्धेष्विति** । विभक्तिप्रकृतिः सन् इत्यादिस्तद्घटकतया सकारादेरिव नकारस्याप्यवयवताऽवभासते । लक्ष्ये जुगुप्सतीत्यादावदर्शनात् स्वं रूपमित्यनेन बोध्यवृत्तिश्रावणप्रत्यक्षविषयतावच्छेदकधर्मावच्छिन्नस्यैव बोधकत्वावगमादनवयवताऽप्यवभासते । एवं चैकस्मिन् धर्मिण्यनुबन्धेऽवयवत्वव्याप्यस्य विभक्तिप्रकृतिघटकत्वस्य, अनवयवत्वव्याप्यस्य बोध्येऽनुपलब्धिविषयत्वस्य च दर्शनेन, उभयसहचरितानुबन्धत्वज्ञानप्रयुक्तः; कदाचित्केशसहचरितत्वेन दृष्टस्य कदाचिच्च केशाभावसहचरितत्वेन दृष्टस्य चैत्रत्वस्य ज्ञानेन प्रावृतशिरसि चैत्रे केशवान् निष्केशो वा चैत्र इति संशयवदत्रापि साधारणधर्मज्ञानप्रयुक्त एव संशय इति बोध्यम् ॥ ६३ ॥

ननु नकारस्य सन्निरूपितावयवत्वं सनिरूपितानवयवत्वं च श्रावणप्रत्यक्षेणैव निर्णीतमतो न सन्देहावसरोऽत आह—**बोधकतेति** । सनिरूपकपदार्थसन्देहस्य निरूपकसन्देहाधीनत्वाद् बोधकसन्देह एवोक्तसन्देहप्रयोजकः । तत्र सन्-शब्दो बोधकः सशब्दो वेति न सन्देहाकारः, भिन्नधर्मिकत्वात् । किन्तु बोधकता सन्पर्याप्ता सपर्याप्ता वेत्याकारकः । बोधकतासन्देहे किं प्रयोजकमिति जिज्ञासायां तु हलन्त्यमित्यत्रावयववाचकान्यपदप्रयोगात्, शित्-किदित्यादिबहुव्रीहिनिर्देशाच्चानुबन्धविशिष्टे बोधकतापर्याप्तिरिति प्रतिभाति । 'जराया जरस्' इत्यादौ च बोध्यबोधकयोः समानानुपूर्वीकत्वदर्शनाद्बोध्यसमानानुपूर्वीकस्यैव बोधकत्वमिति प्रतीत्याऽनुबन्धरहित एव बोधकतेत्यपि प्रतिभातीत्येतदेव तत्प्रयोजकं ज्ञेयम् ॥ ६४ ॥

# अनेकान्ता अनुबन्धा इति ॥ ४ ॥

**अनुबन्धा अनवयवाः पूर्वोदितबोधकस्वरूपाणाम् ।**
**बोध्यावयवत्वेनोपलब्धिविषयत्वराहित्यात् ॥ ६५ ॥**

---

परिभाषायां साध्यवत्त्वेन पक्षवचनात्मिका प्रतिज्ञैव दृश्यते, न च प्रतिज्ञामात्रेण कस्यचिदर्थस्य सिद्धिरतस्तत्राकाङ्क्षितं हेत्वादि दर्शयन्ननुमानाकारमाह—अनुबन्धा इत्यादिना। **पूर्वोदितेति।** सन्देहनिरूपणावसरे स्वघटितेत्यादिविशेषणविशिष्टा बोधका उल्लिखितास्तत्स्वरूपाणां स-प्रभृतीनामित्यर्थः। तत्र विरोधोपपादनायोक्तानि विशेषणान्यत्र यथायोगं सिद्धसाधनस्य बाधस्य च निवारणार्थानीत्यूह्यम्। तत्सहितेन स्वरूपपदेन च, स्वघटितपदाघटितविभक्त्यघटितयावद्वृत्तिश्रावणप्रत्यक्षविषयतावच्छेदकधर्मावच्छिन्नविषयताप्रयोजकपदानवयवत्वस्य साध्यत्वबोधनाद् "आद्गुणः" इत्यत्र गुणशब्दघटकगकारे न व्यभिचारः। गुणशब्दस्य श्रावणप्रत्यक्षेत्यादिविशेषणविशिष्टस्वरूपबोधकपदत्वाभावात्। अन्यथा तत्र गकारे गुणपदबोध्याकाराद्यवयवत्वेनोपलब्धिविषयत्वाभावरूपहेतोः सत्त्वेन, बोधकानवयवत्वरूपसाध्यस्य चाभावेन व्यभिचारः स्यात्। तत्र विभक्त्यघटितगुणपदघटकत्वं गुणेत्यस्य व्यपदेशिवद्भावेन ज्ञेयम्। उक्तपरिष्कारेऽन्तिमविषयता चोक्तधर्मेण साक्षादवच्छिन्ना ग्राह्या। तेन गुणपदस्य गुणपदवत्त्वेन बोधकतयाऽदेङ्निष्ठविधेयतायाः परम्परया गुणेतिशब्दावच्छिन्नत्वेऽपि साक्षादवच्छिन्नत्वाभावान्न दोषः। यावत्पदनिवेशात् स्थाम्नोऽकार इत्येतद्विधेयाकाररूपबोध्ये ककारस्याभावेन बोधकेऽकारेतिशब्दे च सत्त्वेन प्राप्तो व्यभिचारो निवार्यते। तत्राकारस्यैव विधेयत्वेन विधेयताख्यविषयताया उक्तविशेषणविशिष्टाकारेतिशब्दरूपयावद्वृत्त्यकारशब्दत्वरूपश्रावणप्रत्यक्षविषयतावच्छेदकधर्मेणावच्छिन्नत्वाभावात्। हेतुदले बोध्यपदेन स्वघटितपदघटकबोधकबोध्य एव विवक्षितः। तेन सन् इत्यस्य शब्दादिपदबोध्यत्वमादाय, नकारस्य तदवयवत्वेनोपलब्धिविषयत्वस्यैव सत्त्वात्पक्षे हेत्वभावरूपा स्वरूपासिद्धिर्नाशङ्क्या। ननु प्रत्युच्चारणं वर्णभेदाङ्गीकारे सूत्रे सन्–शब्दोऽस्तीत्येतद्वाक्यस्थसन्नकारस्य सूत्रस्थसन्नकाराभिन्नतयोक्तवाक्यस्थसन्शब्दस्य स्वघटितपदघटकबोधकत्वापत्त्या तद्बोध्यसूत्रस्थसन्निरूपितावयवत्वस्यैव नकारे सत्त्वेन हेत्वसिद्धिः स्यात्। मनिन्–घटकानुबन्धनकारे मनिन्बोध्यमन्प्रत्ययावयवत्वोपलम्भेन च भागासिद्धिः स्यात्। अतः प्रत्युच्चारणं वर्णभेद एवाङ्गीकार्यः। तदङ्गीकारे च साध्याभाववति सूत्रस्थसन्घटकसकारे हेतोः सत्त्वेन व्यभिचाराद्धेतोरनैकान्तिकत्वापत्तिरिति चेन्न, प्रत्युच्चारणं वर्णभेद एव। हेतुश्च स्वघटितपदघटकबोध्यतावच्छेदकधर्माभावरूपो ज्ञेयः। ततश्च सन्रूपबोधकघटकसकारापेक्षया बोध्यघटकसकारस्य भेदेऽपि बोध्यतावच्छेदकसकारत्वस्य तत्र सत्त्वात्साध्याभाववति सन्घटकसकारे हेतोरप्यभावान्न व्यभिचारः, बोध्यतावच्छेदकधर्मश्च बोध्यतावच्छेदकता-

यन्नैवं तन्नैवं यथा सनः सस्य सोऽवयवः ।
दृश्यत एव स बोध्ये जुगुप्सतीत्यादिलक्ष्यस्थे ॥ ६६ ॥
तेषामवयवताया विरहेऽपि च शित्किदित्यादिः ।
उपपद्यते समासस्त्वासन्नेऽवयवताऽऽरोपात् ॥ ६७ ॥

---

पर्याप्त्यधिकरणभूतो ग्राह्यः । तेन मनिन्घटकानुबन्धनकारे न भागासिद्धिः, मन्त्वस्यैवोक्तरूपधर्मत्वात्तस्य च नकारेऽभावात् । सत्वस्य तु, अकाराव्यवहितपूर्वसकाररूपत्वेन तस्य च सकारे सत्त्वेन न व्यभिचारः । न चैवमपि कुग्मुग्घटकककारमकारयोरुक्तविधबोध्यतावच्छेदककत्वमत्वरूपधर्मवत्त्वेन, अनुबन्धत्वरूपपक्षतावच्छेदकाक्रान्तयोस्तयोर्हेतोरवृत्त्या भागासिद्धिरिति वाच्यम्; पक्षे तदीयककारमकारातिरिक्तत्वविशेषणदानेनादोषात् । कुगमुमोरनुबन्धौ ककारमकारौ स्वघटितघटकबोधकानवयवौ, स्वघटितघटकबोधकानवयवत्वप्रकारकनिश्चयविशेष्यावधिकोत्तरत्वात् । यन्नैवं तन्नैवमित्यनुमानान्तरेण तयोर्बोधकानवयवत्वसिद्धिः । तद्घटकोकारस्य पूर्वानुमानेनानवयवत्वश्रियात्ककारमकारयोश्च तदुत्तरत्वाद्धेतोः सङ्गतिः ॥ ६५ ॥

उक्तानुमानस्य व्यतिरेकिरूपत्वाद्व्यतिरेकव्याप्तिं दर्शयति—यन्नैवमिति । व्यतिरेकव्याप्तौ साध्याभावो व्याप्यः, साधनाभावश्च व्यापकः । यत् स्वघटितघटकबोधकानवयवत्वाभाववत् तत् स्वघटितघटकबोध्यावयवत्वेनोपलब्धिविषयत्वाभावाभाववदिति व्याप्त्याकारः । व्याप्तिग्रहस्थलमुदाहरति—यथेति । 'अनवयवत्वाभावस्यावयवत्वरूपत्वादवयव इत्युक्तम् । स्वपदबोध्यानुबन्धनकारघटितस्य सनो घटको यः सशब्दस्तदवयवः सकार उक्तबोधकबोध्यस्य जुगुप्सतीत्यादिलक्ष्यस्थसशब्दस्यावयवत्वेन दृश्यत एव = उपलब्धिविषयो भवत्येवेत्यर्थः ।' अनुबन्धा बोधकानवयवाः, बोधकावयवत्वेनोपलब्धिविषयत्वाभावात् इति प्रथममनुमानम् । तत्र हेतोरनुमितिमन्तरेणासिद्धेस्तत्सिद्ध्यर्थम्, अनुबन्धा बोधकावयवत्वेनोपलब्धिविषयत्वाभाववन्तः, बोध्यावयवत्वेनोपलब्धिविषयत्वाभावादित्यनुमानान्तरं "यो ह्यवयवः स कदाचित्तत्रोपलभ्यत एव । अयं तु न तथा, तदर्थभूते क्ङिये कदाप्यदर्शनात्" इति वदतः शेखरकारस्याभिप्रेतमित्यपि वदन्ति । तत्र द्वितीयानुमानहेतुः प्रथमसाध्यस्यापि संभवति, स्वव्याप्यव्याप्यस्य सुतरां स्वव्याप्यत्वादतः स एवात्रोपन्यस्तः ॥ ६६ ॥

नन्वेवं शित्, कित्, ङित् इत्यादौ बहुव्रीहिरनुपपन्नः, श् इत् यस्येत्यादिविग्रहेऽवयवत्वसंबन्धस्यैव षष्ठीबोध्यत्वात्सामीप्यस्य षष्ठ्यर्थत्वाभावादत आह—तेषामिति । अनुबन्धानामित्यर्थः । आसन्ने समीपे ॥ ६७ ॥

**व्याख्यानान्निर्णयं णित्वं पूर्वस्य वुञ्छणित्यादौ ।**
**ज्ञेयश्च परसमीपार्थकमन्त्यपदं हलन्त्यमिति सूत्रे ॥ ६८ ॥**

---

नन्वेवमपि वुञ्छण्कठजिलेत्यादिसूत्रे णकारादीनां पूर्वपरसामीप्यस्याविशेषात्, पूर्वस्य = छस्यैव णित्त्वं न तु कस्येति व्यवस्था न सिध्येदत आह—**व्याख्यानादिति** । व्याख्यानं च "प्रमाणे द्वयसज्दघ्नञ्मात्रचः" इति सूत्रे द्वयसोत्तरचकारस्य पूर्वपरोभयसमीपतयाऽवयवत्वारोपेणोभयोश्चित्त्वे सिद्धे दघ्नचश्चकारस्य वैयर्थ्यापत्त्या, स्वसमीपत्वे सति स्वाघटितपदाघटक एवानुबन्धे स्वावयवत्वारोप इति ज्ञापनरूपम् । ज्ञापिते च तस्मिंस्तस्य चकारस्य दघ्नशब्दाघटितद्वयसच्पदघटकत्वात्तत्र दघ्ननिरूपितावयवत्वारोपो नेति दघ्नचश्चकारश्चरितार्थः । समस्तपदमादाय प्राप्तातिप्रसङ्गवारणाय पदान्तराघटक इत्यनुक्त्वैवमुक्तिः । एवं च छण्घटकणकारे कनिरूपितावयवत्वारोपो नेति पूर्वस्यैव णित्त्वमित्यादि सिद्धम् । नन्वनुबन्धानामनवयवत्वाङ्गीकारे हलन्त्यमिति सूत्रेऽन्त्यवाच्यन्त्यपदमनुपपन्नमत आह—**ज्ञेयं चेति** । तत्रान्त्यपदं परसमीपमित्यर्थे लाक्षणिकमिति भावः । नन्वत्रापि समीपेऽवयवत्वारोपेणैव व्यवहारोपपत्तेर्लक्षणाश्रयणमयुक्तमिति चेत् श्रूयताम् । सर्वत्र तथाऽऽरोपे नानुबन्धकृतमनेकाल्त्वमित्यादिपरिभाषात्रयकरणगौरवात्तदकरणरूपलाघवाय इत्त्वघटितशित्त्वकित्त्वादिधर्मानयन एव समीपेऽवयवत्वारोपो नान्यत्रेत्याशयेनैव लक्षणाश्रयणम् । नन्वेवं शक्यार्थबाधे लक्षणाङ्गीकारादुपदेशान्त्यहलो बोधकानवयवत्वज्ञानरूपबाधग्रहे सत्येव लक्षणा । बोधकानवयवत्वज्ञानं च बोध्यतावच्छेदकधर्माभावरूपहेतुज्ञानाधीनम्, हेतुज्ञानं च तस्य लोप इति सूत्रवाक्यार्थबोधाधीनम्, स च बोधो हलन्त्यमिति सूत्रार्थबोधाधीनः, स च लक्षणाग्रहाधीन इति स्वापेक्षणीयापेक्षितसापेक्षत्वरूपचक्रकदोषापत्तिः । एवमेव हेतुनिर्णयेऽपि स दोष इति चेन्न । बोध्यस्य जुगुप्सतीत्यादिलक्ष्यदर्शनेन निर्णीतत्वात्, तत्पर्याप्तबोध्यतावच्छेदकधर्माभावरूपहेतोर्निर्णयसंभवेन चक्रकापत्तेरभावात् । अनेकान्तत्वपक्षे बोधकताया अनुबन्धरहित एव पर्याप्तत्वात् स्वरूपमिति सूत्रेण च बोधकत्वेन निर्णीतवृत्तिश्रावणप्रत्यक्षविषयतावच्छेदकधर्मावच्छिन्नस्यैव शक्यत्वबोधनात् सन्यत इत्यादावुद्देश्यबोधकसशब्दस्य नकारेत्संज्ञकसशब्दे लक्षणा, णप्रत्यये परेऽणप्रयुक्तकार्यपरिहाराय चाण्पदस्थाकारस्य अन्त्याभिन्नणकारेत्संज्ञकेऽकार इत्यर्थे लक्षणेति यथायथमूह्यम् । गुप्तिज्किद्भ्यः सन्नित्यादौ तु विधेयबोधके तु न विधौ परः शब्दार्थ इति सिद्धान्ताल्लक्षणाया अनौचित्याच्छक्त्या सा भवतीत्येवार्थः । नकारेत्संज्ञकत्वादेर्भूतपूर्वगत्या सत्वादेश्च प्रत्यक्षप्रमित्या प्रक्रियायां लक्ष्ये नकारेत्संज्ञकसत्वादिकमुपपाद्यम् । अस्य पक्षस्य ज्ञापकम्—"उपदेशेऽजनुनासिक इत्" इति सूत्रस्थमुपदेशपदम् । तद्धि भ्रम्र ओँ अटित इत्यादावादितश्चेतीट्प्रतिषेधाभावाय । स च प्रतिषेधोऽनेकान्तपक्ष एवोपपद्यते । एतत्पक्षाश्रयेणैव ध्वसोरेद्धा-

आनङ्बोध्ये नस्य च गणबोध्ये चाप्यकारस्य ।
सर्वत्रैव हि लोपाल्लक्ष्येऽनुपलब्धिसत्त्वेऽपि ॥ ६९ ॥
अस्त्येव तयोर्बोधकनिरूपिताऽवयवतेत्येवम् ।
उक्तानुमानहेतोर्व्यभिचारादाह सिद्धान्तम् ॥ ७० ॥

वस्तुतस्तु—

## एकान्ताः ॥ ५ ॥

अनुबन्धाः खलु बोधकशब्दानामवयवा ज्ञेयाः ।
बोधक उपलम्भे सत्यन्यत्रैषामनुपलम्भात् ॥ ७१ ॥
यो यो यत्र हि दृष्टः सम्बन्धेनैकरूपेण ।
अन्यत्र नैव दृष्टस्तत्सम्बन्धेन तन्तुरिव सोंऽशः ॥ ७२ ॥

---

वभ्यासलोपश्चेत्यत्र शकारप्रश्लेषेण लोपस्य सर्वादेशत्व सिध्यति । आश्रितश्चायं पक्षो दा धा घ्वदावित्यादिसूत्रेषु भाष्ये । एतत्पक्षाश्रयणे नानुबन्धकृतमित्यादिपरिभाषा-त्रयाकरणलाघवं, तथापि समीपेऽवयवत्वारोप आद्यन्तशब्दयोर्लक्षणाश्रयणमनुबन्ध-घटिताद्विभक्तेरयुक्तत्वेन तस्याः सौत्रत्वकल्पनमित्यादिगौरवग्रस्तत्वाद् वक्ष्यमाणहेतुना भाष्य एकान्तत्वपक्षस्यैव न्याय्यत्वोक्तेश्च स एव सिद्धान्तत्वेनाश्रित इति बोध्यम् ॥६८॥

'अनेकान्तत्वसाधकानुमानहेतोरनैकान्तिकत्वदोषोद्भावनपुरस्सरमेकान्तत्वपक्षं सिद्धा-न्तयति—आनङ्बोध्य इत्यादिना । "आनङ् ऋतो द्वन्द्वे" इतिसूत्रस्थानङ्पदबोध्ये आन् इत्यत्र यो नकारस्तस्य होतापोतारावित्यादौ सर्वत्र लक्ष्ये नलोपः प्रातिपदि-कान्तस्येत्यनेन लोपात् । "गण संख्याने" इति धातुपाठस्थगणशब्दबोध्येऽदन्ते गण-धातौ योऽकारस्तस्य च णिचि, अतो लोप इत्यनेन सर्वत्र लोपाल्लक्ष्येऽनुपलब्धि-सत्त्वेऽपि तयोर्बोधकावयवत्वमस्त्येवेत्युक्तानुमानहेतुर्व्यभिचरितः, तस्मात्सिद्धान्तपक्षमा-हेत्यर्थः ॥ ६९, ७० ॥

बोधकशब्दानाम् । स्वघटितघटकबोधकशब्दानां स-शब्दादीनाम् । बोधक इति । बोधकेऽवयवत्वेनोपलभ्यमानत्वे सत्यन्यत्र लक्ष्यस्थे बोध्ये एषामनुबन्धानामनुपलम्भाद-दर्शनादित्यर्थः ॥ ७१ ॥

अन्वयव्याप्तिमाह—यो य इति । एकरूपेण = एकजातीयेन । तन्तुरिवेति । यथा पटावयवस्तन्तुः स्वानुयोगिकसमवायप्रतियोगित्वसम्बन्धेन पटे उपलभ्यते । अन्यत्र

अनवयवः काकादिः संयोगेनोपलभ्यते बहुषु ।
उभयविधव्याप्त्यैवं सिद्धाऽनुमितिर्हि निर्दोषा ॥ ७३ ॥

अनवयवत्वे णशकादिप्रत्ययवृत्तिणादिवर्णानाम् ।
इत्त्वं न स्यादपि च व्यर्थः स्याद्वहचश्चकारोऽत्र ॥ ७४ ॥

न समीपेऽवयवत्वारोपोऽत्र च लक्षणाऽपि नान्त्यपदे ।
अत एवैकान्तत्वं भाष्यकृता न्याय्यमित्युक्तम् ॥ ७५ ॥

---

भूतलादौ सम्बन्धान्तरेण तदुपलम्भेऽपि तेन सम्बन्धेन तदुपलम्भो नास्ति । तस्मात्तन्तुः पटावयवः । तथाऽनुबन्धोऽपि स्वघटितपदघटकत्वसम्बन्धेन बोधके उपलभ्यते । अन्यत्र = बोध्ये तत्सम्बन्धेन नोपलभ्यते, तस्मात्स बोधकावयव इति भावः । ननु चक्रे उत्पन्नस्य तत्रैव नष्टस्य च घटस्य संयोगसम्बन्धेन चक्रे एवोपलम्भेऽन्यत्र चानुपलम्भे सत्यपि न चक्रावयवत्वमिति व्यभिचार इति चेन्न । अन्यत्रोपलब्धि-योग्यत्वाभावस्य विवक्षितत्वात् । घटस्य चक्रे विनष्टत्वाभावेऽन्यत्र संयोगेनोपलब्धियोग्यत्वात् । अत उक्तानुमानं निर्दोषम् ॥ ७२ ॥

व्यतिरेकव्याप्तिमाह—अनवयव इति । बहुषु गृहवृक्षादिषु ॥ ७३ ॥

अनेकान्तत्वपक्षे दोषानाह—अनवयवत्व इति । इत्त्वं न स्यादिति । प्रत्ययादित्वाभावादिति भावः । व्यर्थः स्यादिति । तत्पक्षे एकेनैव द्वयसोत्तरचकारेणोभयोश्चित्त्वसिद्धेरिति भावः ॥ ७४ ॥

अस्मिन्पक्षे लाघवमस्यैव च न्याय्यत्वं भाष्यकृतोक्तमित्याह—नेति । अनेकान्तत्वपक्षे श्चित्किदित्यादिसमासोपपादनार्थं समीपेऽवयवत्वारोपः, हलन्त्यमित्यत्रान्त्यपदं परसमीपे लाक्षणिकमिति लक्षणाऽऽश्रयणम्, एवं ण शक प्रत्ययादौ 'चुटू' 'लशक्वतद्धिते' इत्यादिभिः प्रत्ययादिवर्णस्येत्संज्ञाविधानात्तत्र चावयवत्वव्याप्यस्यादित्वस्य वक्तुमशक्यत्वाण्णकारादेरित्संज्ञाया असिद्धिः, तत्राप्यादिशब्दस्य पूर्वसमीपे लक्षणाऽऽश्रयणे तु तदेवान्याय्यमित्येते सर्वे दोषा अस्मिन्नेकान्तत्वपक्षे नोद्भवन्ति । अत एवास्य पक्षस्य न्याय्यत्वं भाष्यकृतोक्तम् । तथाहि—तस्य लोपः ( १।३।९ ) इति सूत्रे भाष्ये—"अयं यस्यानुबन्ध आसज्यते किं स तस्यैकान्तो भवत्याहोस्विदनेकान्तः" इति संशयमुपन्यस्य "एकान्तस्तत्रोपलब्धेरिति वार्तिकमुक्त्वा तत्र कांश्चिद्दोषान्दर्शयित्वा अस्तु तर्ह्यनेकान्त इत्युक्त्वा तत्रापि दोषानुक्त्वा समाधाय चान्ते" "उभयमिदमनुबन्धेषूक्तमेकान्ता अनेकान्ता इति । किमत्र न्याय्यम् ? एकान्ता इत्येव न्याय्यम् । कुत एतत् । अत्र हि हेतुर्व्यपदिष्टः । यच्च नाम सहेतुकं तन्न्याय्यम्" इत्युक्तम् । अस्मिन्पक्षे "गुप्तिज्किद्भ्यः

नन्वेवमनेकाल्त्वात्सर्वादेशत्वमौशिशादीनाम् ।
सिद्धमतश्चानेकाल्सूत्रे शित्पदमपार्थमत आह ॥ ७६ ॥

**नानुबन्धकृतमनेकाल्त्वम् ॥ ६ ॥**

शिद्ग्रहणमेव तस्मिन्सूत्रेऽस्या ज्ञापकं बोध्यम् ।
तेनार्वणस्तृ सजुषो रुश्चादेशो न सर्वस्य ॥ ७७ ॥
सर्वादेशात्पूर्वं नैवेत्संज्ञाऽस्ति डा-शि-शी-शेषु ।
तेनानेकाल्त्वात्सति सर्वादेशेऽभिमतसिद्धिः ॥ ७८ ॥

---

सन्" इत्यादावनुबन्धसहितस्य सन्नित्यादिपदस्य बोधकत्वात्स्वंरूपमितिसूत्रबलेन अनुबन्धसहितस्य शक्यार्थत्वेऽपि उच्चारणेनाभिव्यक्तस्य तदव्यवधानेनैवेत्संज्ञायां तस्य लोप इति शास्त्रसहकारेणानुबन्धरहित एव सन्त्वादिना रूपेण बोध्यते तेन नकारेत्संज्ञकः सो भवतीत्यर्थः । पक्षद्वयेऽप्यनुबन्धविनिर्मुक्तपदार्थोपस्थितिः । अत एवाणुदित्सूत्रे भाष्ये अप्रत्ययादेशटित्किन्मित इति वक्तव्यमित्युक्त्वाऽऽदेशोदाहरणम् "इदम इश् । इतः । इह" इत्युक्तम् । तच्चानुबन्धरहितस्यैव बोध्यत्वे उपपद्यते । अन्यथा इश् इत्यस्याण्त्वाभावेन सवर्णग्रहणाप्रसक्त्या तदसङ्गतिः स्पष्टा । लक्ष्ये च नकारेत्संज्ञकत्वादि भूतपूर्वगत्या स एवायमिति तत्त्वप्रत्यभिज्ञया वाऽऽश्रित्य तत्तत्कार्यप्रवृत्तिः संपादनीयेति बोध्यम् ॥ ७५ ॥

अनुबन्धानामेकान्तत्वे न्यायबलात्स्वीकृते समापतितान्दोषानुद्धर्तुं भाष्यकृदुक्ताः परिभाषाः क्रमेणावतारयति—**नन्वेवमिति** । एवमनुबन्धानामेकान्तत्वस्वीकारे । **औशिशादीनाम्**—। "अष्टाभ्य औश्" "इदम इश्" इत्यादिसूत्रविहितादेशानाम्, अनेकाल्त्वेनैव सर्वादेशत्वं सिद्धम् । ततश्चानेकाल्शित्सर्वस्येति सूत्रे शिद्ग्रहणं व्यर्थमित्यर्थः । नन्वनुबन्धविनिर्मुक्तपदार्थोपस्थित्या बोध्यस्यौकारादेरेवादेशरूपत्वादनेकाल् आदेशः सर्वस्येति सूत्रार्थेनात्र तत्प्रवृत्तिर्नैव स्यादिति शिद्ग्रहणं सार्थकमेवेति कथं तद्वैयर्थ्यम् ? अनेकाल्बोधकबोध्यः सर्वस्येत्यर्थे तु लोपविसर्जनीयादीनामपि सर्वादेशत्वापत्तिरिति चेन्न । स्वरूपबोधकस्थले स एवायमिति तत्त्वप्रत्यभिज्ञया बोध्यबोधकयोरभेदाभ्युपगमेन, औकारादेरादेशस्याप्यनेकाल्त्वाङ्गीकारेण शिद्ग्रहणवैयर्थ्यशङ्कायाः सूपपादत्वात् ॥ ७६, ७७ ॥

नन्वेवं लुटः प्रथमस्येति डाऽऽदेशस्य, जसः शीति श्यादेशस्य, सुपां सुलुगिति शे इत्यादेशस्य चानुबन्धकृतानेकाल्त्वाभावे सर्वादेशत्वं न स्यादत आह—**सर्वादेशात्पूर्वमिति** । डाऽऽदीनामौपदेशिकप्रत्ययत्वाभावेन चुटू इत्यादिना प्रत्ययादेर्विहिता इत्संज्ञा

इत्संज्ञायोग्यत्वं नागेशमतेऽनुबन्धत्वम् ।
तन्मत आप्रश्लेषाच्छित्त्वाच्चैतेऽपि सर्वस्य ॥ ७९ ॥

ननु मास्त्वियं, विधेयौ तृरूङितौ त्यज्यतां शिदिति मैवम् ।
अनुबन्धाः खलु नाल्पदबोध्या इत्येव शित्पदाज्ज्ञप्तेः ॥ ८० ॥

एतन्मूलकमेवानुबंधकार्येष्वनल्विधाविति न ।
इतिवाक्यमस्ति, नल्यपि सूत्रं तत एव चरितार्थम् ॥ ८१ ॥

---

पूर्वं न प्राप्नोति । अत एतत्परिभाषाया अप्रवृत्त्याऽनेकाल्त्वात्सर्वादेशे कृते स्थानिवद्भावेन प्रत्ययत्वातिदेशे सति डकारादेरित्संज्ञालोपाविति क्रमेणैव भवितेत्याद्यभीष्टरूपसिद्धिरिति भावः । णलादेशस्य तु प्रत्ययाधिकारे पाठेन स्वतः प्रत्ययत्वाण्णकारस्येत्संज्ञा पूर्वमेव भवतीति तस्यात्रानुल्लेखः । तत्राकारप्रश्लेषेणैव सर्वादेशत्वं सम्पाद्यम् ॥ ७८ ॥

उक्तसमाधानं च प्राचीनमतेन । नागेशभट्टमते तूक्तस्थलेषु प्रकारान्तरेण सिद्धिरित्याह—इत्संज्ञायोग्यत्वमिति । तथा च तच्चैतत्परिभाषाप्रवृत्त्या डा इत्यस्यानेकाल्त्वाभावेन सर्वादेशत्वं न स्यादतस्तत्र डा आ इत्याकार प्रश्लेषेणानेकाल्त्वं संपाद्य सर्वादेशत्वं साधनीयम् । श्यादिविषये तु शित्त्वादेव सर्वादेशत्वमिति भावः ॥ ७९ ॥

परिभाषाया अकर्तव्यत्वं शिद्ग्रहणस्य च त्याज्यत्वमाशङ्क्य प्रकारान्तरेण तत्सार्थक्यमुपपादयति—**नन्वित्यादिना** । औशादयोऽनेकाल्त्वादेव सर्वादेशा भविष्यन्ति । "अर्वणस्तृ" इति त्रादेशस्य सख्युरित्यङ्गेहिरिति वादेशस्य च ङित्त्वं क्रियताम् । ङिच्चेत्यनेनान्त्यादेशावेव तौ भविष्यतः । एवञ्चानेकाल्शिति सूत्रे शिद्ग्रहणमपि न कर्तव्यमिति लाघवमिति भावः । समाधत्ते—**मैवमिति** । अनुबन्धा अल्पदबोध्या नेत्येवं ज्ञापनेन शित्पदस्य सार्थक्यात् । अस्याः परिभाषायाश्च तत्सिद्धार्थानुवादरूपत्वादिति भावः। एतच्च स्थानिवत्सूत्रे शब्देन्दुशेखरे प्रतिपादितम् । तत्र हि—"अनुबंधकार्ये त्वनल्विधाविति निषेधो न । अनुबन्धानामनेकान्तत्वात् । एकान्तत्वेऽपि शिद्ग्रहणेन तेषामल्व्यवहाराभावज्ञापनात् । नानुबन्धकृतमनेकाल्त्वमिति ज्ञापयतीति भाष्येऽल्त्वव्यवहाराभावबोधनद्वारेति शेषः" इत्युक्तम् ॥ ८० ॥

**चरितार्थमिति**—क्त्वासम्बन्धिककारस्य स्थान्यल्पदेनाग्रहणादनल्विधाविति निषेधाप्रवृत्त्या घुमास्थेति सूत्रेण प्राप्तस्य हलादिक्ङीदार्धधातुकनिमित्तकस्येत्वस्य निषेधेन नल्यपीति सूत्रं चरितार्थम् । अतस्तेन पृथग्ज्ञापनं न कर्तव्यं किन्तु शिद्-ग्रहण-ज्ञापितेन सामान्यार्थेनैव निर्वाह इति भावः । अल्पदबोध्या नेत्यस्य अल्बोधकपदबोध्या नेत्यर्थे तात्पर्यम् । तेन ओव्रश्चू छेदन इतिधातोर्निष्पन्नेन व्रश्चनशब्देन सह कुशब्दस्य समासे कु

अनुबन्धकृतं नानेजन्तत्वं, नाप्यसारूप्यम् ।
इति परिभाषाद्वयमप्येतस्यैव प्रपञ्च इति बोध्यम् ॥ ८२ ॥
नन्ववदातं मुखमिति सिध्यति घुत्वे विवर्जनाद्दापः ।
घुत्वे ह्यच उपसर्गात्त इति स्यात्, किन्तु दाप्त्वमेव कथम् ॥ ८३ ॥
दैपः पकारसत्त्वेऽनेजन्तत्वेन दुर्लभस्तस्याऽऽत् ।
पस्य निवृत्तावात्वे पकारविरहान्न दाबतः प्राह ॥ ८४ ॥

---

वचन इत्यत्र लुप्तस्यानुबन्धौकारस्य स्थानिवद्भावेनाजादित्वमादाय कोः तत्पुरुषेऽचीति कदादेशो न । अच्पदस्याप्यल्बोधकपदत्वात् । नन्वेवं हलन्त्यमित्यत्र हल्पदेन णकारादेरनुबन्धस्याग्रहणे तस्येत्संज्ञा न स्यात् । किदादिपदघटकेन क् इत्यादिपदेन ककारादेरनुबन्धस्याग्रहणे कित्त्वाद्यनुपपत्तिश्च स्यादिति चेन्न । इत्पदार्थासंसृष्टाल्बोधकपदबोध्या नेति विशेषणदानेनादोषात् ॥ ८१ ॥

अनुबन्धेति । "नानुबन्धकृतमनेजन्तत्वम्" "नानुबन्धकृतमसारूप्यम्" इति चाग्रे वक्ष्यमाणं परिभाषाद्वयमस्यैव प्रपञ्च इत्यर्थः । एजन्तत्वं हि एज्घटितत्वे सत्येजुत्तरकालिकाल्घटितत्वम् । एवञ्च पकारादेरनुबन्धस्याल्पदबोध्यत्वाभावेन दैब्त्यादेरेजन्तत्वमुपपन्नम् । सारूप्यमित्यस्य च समानाल्घटितत्वमित्यर्थः । तदपि ककारादेरनुबन्धस्याल्त्वाभावेनोपपन्नम् । अतस्तयोरेतत्सिद्धार्थानुवादकत्वमिति भावः । इयं च तस्य लोप (१।३।९) इति सूत्रे भाष्ये स्पष्टा ॥ ८२ ॥

अवदातमिति । अवपूर्वकस्य दैप् शोधन इत्यस्य क्तान्तस्येदं रूपम् । तत्रेत्संज्ञकपकारलोपे ऐकारस्यादेच इत्यात्वे दारूपत्वाद्दाधाघ्वित्यनेन प्राप्ताया घुसंज्ञाया अदाबित्यनेन वारणं क्रियते । तेनात्र अच उपसर्गात्त इति तादेशो न भवति । अत्राशङ्क्यते—दाप्त्वमेव कथमिति ॥ ८३ ॥

दैप इति । बोधके दैपि पकारसत्त्वेऽपि, एजन्तत्वाभावेन "आदेच—" इत्यस्याप्रवृत्त्याऽऽकाराभावात्, पलोपोत्तरं बोध्ये दै इत्यत्र एजन्तत्वेनात्वे दाशब्दसत्त्वेऽपि पकाराभावात् दाप्स्वरूपानुपूर्व्या अभाव एवेति भावः । ननु पलोपे कृते उपदिश्यमानत्वाभावात्कथमात्वमिति चेन्न । स एवायमिति प्रत्यभिज्ञया दै इत्यस्याप्युपदिश्यमानत्वावगमात् । दो दद्घोरित्यत्र दाग्रहणेनात्वविधावनुबन्धलोपोत्तरमप्युपदिश्यमानकल्पनेन चादोषात् । ननु पकारेत्संज्ञकत्वे सति दात्वमेव दाप्त्वम् । तच्चात्वे कृते स्वतो दात्वेन स्थानिवद्भावात्पकारेत्संज्ञकत्वेन च सुलभमेवेति चेन्न । स्वंरूपमिति सूत्रेणानुपूर्वीरूपस्यैव दाप्त्वस्य दाप्पदशक्यतावच्छेदकत्वावधारणात् । पकारेत्संज्ञकत्वविशिष्टदात्वरूपदाप्त्वस्य तु लक्षणयैव भानसंभवाल्लक्षणायां च मानाभावात् ॥ ८४ ॥

# नानुबन्धकृतमनेजन्तत्वम् ॥ ७ ॥

ज्ञापकमत्रोदीचां माङ इतीदं कृतात्ववचः ।
उपदेशेऽनेजन्तो मेङ्, तस्यात्वं हि नान्यथा सिद्ध्येत् ॥ ८५ ॥

उपदेशे ङविशिष्टे धातुत्वं नेति तस्य कथमात्वम् ।
इति तु न शङ्क्यं तत्र हि धातोरित्यस्य विनिवृत्तेः ॥ ८६ ॥

नन्वेकान्तत्वनये काण्प्रत्यययोः सरूपताविरहात् ।
अण्बाधककप्रत्ययविषये स्यादणपि तत्राह ॥ ८७ ॥

---

**ज्ञापकमिति** । अपमित्य याचत इत्यत्र व्यतिहारेऽर्थे मेङ्धातोर्वैकल्पिकक्त्वाप्रत्ययविधायके "उदीचां माङो व्यतीहारे" इति सूत्रे माङ् इति कृतात्वनिर्देशोऽस्या ज्ञापकः । न चैष माङ् माने इत्यस्यैव निर्देश इति वाच्यम्, ज्ञापकपरभाष्यप्रामाण्येन कर्मव्यतिहारेऽर्थे माङोऽनभिधानात् ॥ ८५ ॥

ज्ञापकत्वमुपपादयति—**उपदेश इति** । "आदेच—" इति सूत्रे लिटिधातोरित्यतो धातुग्रहणमनुवर्तते । मेङ् इत्यस्य चोपदेशावस्थायां ङकारविशिष्टस्य धातुत्वं नास्ति । न धातुलोप इति सूत्रे भाष्ये—"धातुग्रहणं किम् । लूञ् लविता । पूञ् पविता" इत्युक्त्या, उपदेश एवानुबन्धलोपे कृते ततो धातुसंज्ञेति कैयटेन प्रतिपादनात् । ततश्चोक्तनिर्देश आत्वमनुपपन्नं सदस्या ज्ञापकमिति भावः । तत्र = आदेच इति सूत्रे । शेखरकृता धातोरित्यस्य निवृत्तिप्रतिपादनात् । तन्निवृत्तावपि गोभ्यामित्यादावात्त्वं न, गवादीनामुपदेशाभावात् । चक्रिरे इत्यादौ च इरेप्रभृतीनामुपदेशसत्त्वेऽप्यशितीति निषेधाच्छित्परत्वयोग्यानामेवात्वविधानावगमान्नात्वमिति बोध्यम् ॥ ८६ ॥

**सरूपताविरहात्** = सारूप्याभावात् । ततश्च गां ददातीति गोद इत्यादौ कर्मण्यण् इत्यस्य बाधको य आतोऽनुपसर्गे क इति कप्रत्ययस्तद्विषये वाऽसरूपोऽस्त्रियामित्यनेन पक्षेऽणपि स्यात्, ततश्च गोदाय इति प्रयोग आपद्येत । अनुबन्धानामनेकान्तत्वे तु नैष दोषस्तयोरकाररूपत्वेन सारूप्यादिति भावः । ननु वाऽसरूप इति सूत्रेऽसरूपपदेनौपदेशिकासारूप्यवतो ग्रहणे, उपदेशे उत्सर्गापवादयोर्भिन्नरूपत्वाद्व्यावर्त्यालाभेनासरूपग्रहणवैयर्थ्यापत्त्या प्रायोगिकमेवासारूप्यं ग्राह्यम् । एवं च काणोः प्रयोगे सरूपत्वान्नोक्तापत्तिरतस्तन्निवृत्त्यर्था परिभाषाऽपि न कर्तव्येति लाघवमिति चेन्न । लक्षणैकचक्षुष्काणां विधिवाक्यार्थबोधकाले प्रायोगिकरूपाज्ञानेनौपदेशिकस्यैव रूपस्य ग्राह्यत्वात् । अपि च प्रायोगिकासरूपग्रहणे सर्वलोपिनः क्विपो ण्वुलादिविषये नित्यबाधकत्वापत्तौ ग्रामनायक इत्याद्यसिद्ध्यापत्तेः । न हि तत्र प्रायोगिकासारूप्यं संभवति, तस्य नञिवयुक्तन्यायेन

## नानुबन्धकृतमसारूप्यम् ॥ ८ ॥

अत्र ददाति-दधात्योर्ण विबाधकशस्य वा विधिर्लिङ्गम् ।
तेन च गोदप्रभृतिषु कप्रत्यय एव केवलो न त्वण् ॥ ८८ ॥
स्वघटकसधर्मवर्णैर्घटितत्वमतादृशैरघटितत्वम् ।
सारूप्यमत्र धर्मः श्रवणविषयताविशेषकोऽत्वादिः ॥ ८९ ॥
ननु शास्त्रेऽस्मिन्संख्यापदेन बह्वादिमात्रबोधः स्यात् ।
न त्वेकद्वयादीनां लौकिकसंख्यापदाभिधेयानाम् ॥ ९० ॥
संज्ञाकरणात्तत्र हि तात्पर्यप्रकरणात्तदुत्थश्च ।
न्यायोऽस्ति कृत्रिमाकृत्रिमयोरिति तन्निराकुरुते ॥ ९१ ॥

---

रूपवत्ताव्याप्यत्वात्, क्विपश्च प्रयोगे रूपस्यैवाभावात् । न चासरूपपदवैयर्थ्यम् । इगुपधादिलक्षण-कप्रत्ययस्यापवादे आतोऽनुपसर्गे क इत्यादौ तच्चारितार्थ्यात् । तदभावे इगुपधज्ञाप्रीकिरः क इति कप्रत्ययस्य आतोऽनुपसर्गे कः, तुन्दशोकयोः परिमृजापनुदोरिति च कप्रत्ययो विकल्पेन बाधकः स्यात् । ततश्च ब्रह्मज्ञः, ब्रह्मणो ज्ञः । तुन्दपरिमृजः तुन्दस्य परिमृज इति वैकल्पिकषष्ठीसमासः स्यात् । इष्यते तु तत्रोपपदमतिङिति नित्यसमास एवेति तत्सिद्ध्यर्थमसरूपपदस्यावश्यकत्वं बोध्यम् ॥ ८७ ॥

अत्रेति । श्याद्व्यधेति सूत्रेणादन्तेभ्यो विहितस्य णप्रत्ययस्य बाधको ददातिदधात्योर्विभाषेति शप्रत्ययस्तस्य विकल्पविधानम्, अनुबन्धकृतासारूप्यश्रयणे वाऽसरूप इत्यनेनैव विकल्पसिद्धेर्व्यर्थं सदस्या ज्ञापकमिति भावः ॥ ८८ ॥

सारूप्यं निर्वक्ति—स्वघटकेति । समानो धर्मो येषां ते सधर्माणः । अतादृशैः = स्वघटकवर्णसाधर्म्यरहितैः । अत्र = अस्मिंल्लक्षणे धर्मः, श्रवणविषयताविशेषकः = श्रावणप्रत्यक्षविषयतावच्छेदकोऽत्वकत्वादिरानुपूर्वीरूपश्च ज्ञेयः । ततश्च स्वघटकवृत्तिश्रावणप्रत्यक्षविषयतावच्छेदकधर्मवद्घटितत्वे सति स्वघटकावृत्तितादृशधर्मवदघटितत्वं सारूप्यमिति निष्कृष्टोऽर्थः । धर्मपदेनानुपूर्व्या अपि ग्रहणात् सर-रसशब्दयोर्न सारूप्यम् । सधर्मवर्णघटितत्वेऽप्यानुपूर्व्या भिन्नत्वात् । प्रकृतपरिभाषासहकारेण च धर्मेऽनुबन्धावृत्तित्वं विशेषणं ज्ञेयम् ॥ ८९ ॥

इत्संज्ञाविषयकव्यवस्थायां निरूपितायां संज्ञात्वसामान्येनोपस्थितानां संख्यादिपदानामर्थनिर्णयायाह—नन्विति ॥ ९० ॥

संज्ञाकरणादिति । यथा लोके सैन्धवमानयेत्यादावश्वलवणाद्यनेकार्थनिरूपितानेकशक्तिविशिष्टे सैन्धवादिशब्दे उच्चारिते, प्रकरणादिना वक्तृतात्पर्यनिश्चयोत्तरमेव

उभयगतिरिह भवति ॥ ६ ॥

कृत्रिमतदितरयोरिह शास्त्रेऽवगतिर्द्वयोर्भवति ।
संख्याया इति सूत्रेऽतिशदन्ताया निषेध इह लिङ्गम् ॥९२॥

न हि कृत्रिमाऽस्ति संख्या काऽपि त्यन्ता शदन्ता वा ।
तस्मात्तत्प्रतिषेधो व्यर्थः सन् ज्ञापयत्येनाम् ॥९३॥

अत एव कर्मकरणाधिकरणसंज्ञाविधानसत्त्वेऽपि ।
कर्मव्यतिहारपदे कर्मपदाल्लौकिकक्रियाऽवगतिः ॥९४॥

---

निश्चितशाब्दबोधो भवति। तद्वदत्र शास्त्रे संख्यादिपदे एकत्वादिनिरूपिताया लौकिक्या बह्वादिशब्दनिरूपितायाः शास्त्रीयायाश्च शक्तेः सत्त्वेन कीदृशार्थबोधनेच्छयेदं पदमुच्चारितमिति जिज्ञासायामाचार्येण स्वशास्त्रे बहुगणवतुडतिसंख्येति संज्ञा कृताऽस्ति, अतस्तदर्थबोधनेच्छयैवेदमुच्चारितं स्यादिति ज्ञानरूपप्रकरणेन बहुगणादिष्वेव तात्पर्यं निश्चीयत इति भावः। तदुक्तम्—। प्रकरणस्य तात्पर्यनियामकत्वमूलकः, कृत्रिमाकृत्रिमयोः कृत्रिमे कार्यसंप्रत्यय इति न्यायोऽस्ति। तेन संख्यापदेन बह्वादीनामेव ग्रहणं स्यान्न त्वेकद्वयादीनाम्, अतस्तादृशनियमनिराकरणाय परिभाषामाहेत्यर्थः ॥ ९१ ॥

**संख्याया इति।** "संख्याया अतिशदन्तायाः कन्" इति सूत्रे, अतिशदन्ताया इति त्यन्तशदन्तपर्युदासोऽस्या ज्ञापक इत्यर्थः ॥ ९२ ॥

ज्ञापकत्वमुपपादयति—**न हीति** । नन्वस्ति कतिशब्दस्त्यन्तकृत्रिमसंख्यारूपः। सत्यमस्ति। किन्त्वर्थवद्ग्रहणपरिभाषया तस्य ग्रहणं न भवति। "बहुगण"—(१।१।२३) इति सूत्रे भाष्ये प्रकृतपरिभाषाज्ञापनावसरे—"ननु चोक्तं डत्यर्थमेतत् स्यात्। अर्थवद्ग्रहणे नानर्थकस्येति, अर्थवतस्तिशब्दस्य ग्रहणं न च डतेस्तिशब्दोऽर्थवान्" इत्युक्तत्वात्। नन्वर्थवदनर्थकोभयसंभवे सा परिभाषा प्रवर्तते, ज्ञापनात्प्राक् च डतिरेव कृत्रिमसंख्यारूपस्तत्र पर्युदासयोग्योऽस्ति, तत्र च तिशब्दोऽनर्थक एवेति तस्यैव ग्रहणं भविष्यति। एवं च त्यन्तप्रतिषेधो न ज्ञापक इति चेन्न। अतिशदन्ताया इतिपदजन्योपस्थितिकालेऽर्थवदनर्थकयोस्तिशब्दयोः सम्भवेन पूर्वमर्थवत एव ग्रहणे निर्णीते पश्चात्संख्यापदार्थान्वयवेलायां जायमानानुपपत्तिज्ञानेन ज्ञापकत्वसंभवात्। प्रतिपादितश्चायमर्थ उक्तसूत्रे प्रदीपोद्योतयोः ॥ ९३ ॥

**अत एव**—उभयावगतिसत्त्वादेव। **संज्ञाविधानसत्त्वेऽपि**—तत्तत्संज्ञाकरणज्ञानरूपप्रकरणसत्त्वेऽपि। **कर्मव्यतिहारपदे**—। "कर्तरि कर्मव्यतिहारे" इत्यादिसूत्रस्थे। **लौकिकेति**। लौकिकार्थस्य क्रियारूपस्यावगतिर्ज्ञानं भवति। कर्मणि द्वितीयेत्यादौ तु कृत्रिमस्य कर्मकारकरूपार्थस्य ॥ ९४ ॥

शब्दादिभ्यः करणे क्यङ् विधिसूत्रेऽपि सैव करणपदात् ।
अधिकरणैतावत्त्वे चेत्यत्राधिकरणं द्रव्यम् ॥९५॥
क्वोभयबुद्धिः कुत्राकृत्रिमबुद्धिः क्व कृत्रिमस्यैव ।
इत्येतस्मिन्विषये व्याख्यानं केवलं शरणम् ॥९६॥
तेनाम्रेडितशब्दान्न द्विस्त्रिर्घुष्टमात्रमादेयम् ।
किन्त्विह कृतसङ्केतं द्विरुक्तपरभागरूपं तत् ॥९७॥
केचिद्वदन्ति सर्वे शब्दाः सर्वार्थवाचकास्तस्मात् ।
संज्ञासूत्रविधानं नियमार्थं शास्त्र एतस्मिन् ॥९८॥
वृद्ध्यादिपदैरादैच्प्रभृतय एवेति तेन सिद्धोऽसौ ।
न्यायः कृत्रिममात्रग्रहणपरस्तन्मतमयुक्तम् ॥९९॥

---

शब्दादिभ्य इति । "शब्दवैरकलहाभ्रकण्वमेघेभ्यः करणे" इति क्यङ्विधायकसूत्रेऽपि करणशब्दात् सैव = लौकिकक्रियारूपार्थस्यैवावगतिः, कर्तृकरणयोस्तृतीयेत्यादौ तु कृत्रिमार्थस्य करणकारकरूपस्य । अधिकरणैतावत्त्वे चेति । इदमुपलक्षणम् । विप्रतिषिद्धं चानधिकरणवाचीत्यत्राप्यधिकरणपदेन लौकिको द्रव्यरूप एवार्थोऽवगम्यते । सप्तम्यधिकरणे चेत्यादौ च कृत्रिमस्याधिकरणकारकरूपार्थस्यावगतिः । इत्येवं स्थलभेदेनोभयावगतिरिति भावः ॥९५॥

नन्वनया प्रदेशेष्वकृत्रिमार्थेऽपि तात्पर्यमस्तीति बोधनेऽप्यभीष्टव्यवस्था कथमिति जिज्ञासायामाह—**क्वेत्यादि** ॥ ९६ ॥

उक्तार्थे निदर्शनमाह—**तेनेति** । "नाम्रेडितस्यान्त्यस्य तु वा" इत्यादावाम्रेडितशब्देन "आम्रेडितं द्विस्त्रिरुक्तम्" इत्यमरोक्तस्य द्विस्त्रिरुच्चारितस्य सर्वस्य न ग्रहणं, किन्त्वेतच्छास्त्रे तस्य परमाम्रेडितमिति संकेतितस्य द्विरुक्तशब्दोत्तरभागस्यैव ग्रहणमित्यर्थः । तत् = आम्रेडितम् । आदेयमित्यनुषङ्गः ॥ ९७ ॥

कैयटादिप्राचीनमतमुपन्यस्य निरस्यति—**केचिदित्यादिना** । "बहुगणवतुडति संख्या" ( १।१।२३ ) इति सूत्रे हि कैयटेन—"सर्वार्थाभिधानशक्तियुक्तः शब्दो यदा विशिष्टेऽर्थे संव्यवहाराय नियम्यते तदा तत्रैव प्रतीतिं जनयति नान्यत्र" इत्युक्तम् । तस्यायमभिप्रायः—सर्वे सर्वार्थवाचका इत्यभ्युपगमात्प्रत्येकं सर्वेषां शब्दानां सर्वार्थनिरूपिता शक्तिरस्ति । तात्पर्यवशाच्च कस्यचिदेवार्थस्य प्रतीतिः । यथा हर्यादिशब्देभ्योऽनेकार्थेभ्यः । एवं च वृद्ध्यादिपदानामादैजादिष्वपि शक्तेः सत्त्वान्ततदर्थबोधे सिद्धे "वृद्धिरादैच्" इत्यादिसंज्ञासूत्रप्रणयनं मच्छास्त्रेऽनेन शब्देनैत एव बोध्या इति नियमार्थम् । तन्मूलक एव कृत्रिमाकृत्रिमन्याय इति ॥ ९८, ९९ ॥

सत्यामपि शक्तौ तज्ज्ञानाभावेन लोकानाम् ।
शक्तिज्ञानार्थतया तेषां विधिरूपतौचित्यात् ॥१००॥
योगिदृशैव च सर्वार्थकता न त्वस्मदादिजनदृष्ट्या ।
सामान्यतोऽर्थवत्त्वानुमितावपि न हि विशिष्य तद्बुद्धिः॥१०१॥
नन्वध्येतेत्यादौ धातोर्ङित्त्वाद् गुणो न स्यात् ।
यदि तु प्रत्यय एव क्ङिति स निषेधो गितः सहचरत्वात् ॥१०२॥

---

तन्मतस्यायुक्तत्वे हेतुमाह—सत्यामपीति । शक्तिसत्त्वेऽप्यज्ञातायास्तस्याः शाब्दबोधानुपयोगित्वाल्लोके व्यवहाराभावेन शक्तिग्रहासंभवात्संज्ञासूत्राणामज्ञातशक्तिज्ञानार्थत्वेन विधित्वे संभवति नियमत्वं न युक्तम् । विधिनियमसंभवे विधिरेव ज्यायानिति न्यायादिति भावः ॥ १०० ॥

योगिदृशैवेति । योगिनां योगजधर्मप्रभावेण विशिष्य तत्तदर्थज्ञानसंभवात्तदृष्ट्यैव सर्वशब्दानां सर्वार्थकताभ्युपगमः, नत्वस्मदादिसाधारणजनदृष्ट्या । ननु वृद्धिपदमर्थवाचकं पदत्वात्, घटपदवत् इत्यनुमानेन सामान्यलक्षणाप्रत्यासत्तिसहकृतेनार्थवत्त्वरूपेण सकलार्थनिरूपितशक्तिमत्त्वज्ञानमस्मदादीनामपि संभवत्यत आह—सामान्य इति । शक्तिग्रह-पदार्थोपस्थिति-शाब्दबोधानां समानप्रकारकत्वनियमेन, अर्थवत्त्वरूपसामान्यप्रकारेण शक्तिग्रहे आदैजादिविशेषरूपेण शाब्दबोधासंभव इति भावः । एवं च प्रथमोक्तं प्रकरणस्य तात्पर्यनियामकत्वमेव कृत्रिमाकृत्रिमन्यायबीजमिति सिद्धम् ॥ १०१ ॥

सिंहावलोकनन्यायेनेत्संज्ञायाः पुनः स्मरणात् क्ङिति चेत्यत्र निमित्ततां व्यवस्थापयितुं तत्प्रसङ्गादन्यत्रापि तां व्यवस्थापयितुं परिभाषामवतारयति—नन्विति । अध्येता शयितेत्यादौ इङ् अध्ययने शीङ् स्वप्ने इत्यादि धातोर्ङित्त्वात्, क्ङिति चेत्यनेन गुणनिषेधः स्यात् । "क्ङिति च" (१।१।५) इति सूत्रे भाष्ये "क्ङिति प्रतिषेधे तन्निमित्तग्रहणम्" इति वार्तिकेन क्ङिन्निमित्ते ये गुणवृद्धी प्राप्नुतस्ते न भवत इत्यर्थाश्रयणान्निमित्तशब्दस्य च कारणमात्रार्थकत्वाङ्गीकारादियमाशङ्का । परिभाषायां सत्यां तु पञ्चम्यन्तसप्तम्यन्तपदबोध्ययोरेव निमित्तत्वं पर्यवस्यति । क्ङिति चेत्यत्रान्ते भाष्यकृता तन्निमित्तग्रहणं प्रत्याख्याय परसप्तम्याश्रिता, तत्पक्षे तु अरिरिषतीत्याद्येव परिभाषाप्रयोजनं ज्ञेयम् । यदित्विति । यदि तु ग्लाजिस्थश्चग्स्नुरिति ग्स्नुप्रत्यये जिष्णुरित्यत्र गुणवारणाय क्ङिति चेत्यत्र गकारप्रश्लेषाद्गित्साहचर्येण ङितोऽपि प्रत्ययस्यैव ग्रहणादध्येता शयितेत्यादौ न दोष इति विभाव्यते तर्हि अरिरिषतीत्यादौ साध्ये "ऋ इस" इति स्थितौ द्वित्वनिमित्त इसेत्यस्मिन्परे द्विर्वचनेऽचीत्यनेन स्थानिरूपातिदेशादादेशनिषेधाद्वा

तर्हि ऋधातोः सन्यरिरिषतीत्यादौ द्विरुक्तिजनक इसे ।
द्विर्वचनेऽचीति गुणाभावेऽनिष्टप्रसक्तिरत आह ॥१०३॥

## कार्यमनुभवन् हि कार्यी निमित्ततया नाश्रीयते ॥१०॥

उद्देश्यदलान्तर्गतषष्ठ्यन्तपदेन बोधितः कार्यी ।
साक्षात्कार्यं भजते यस्तद्घटितोऽपि वा स तदनुभवी ॥१०४॥

ज्ञापक इह निर्देशो विज्ञेयः स्थण्डिलाच्छयितरीति ।
स्थानिनिमित्तविभेदः प्रसिद्ध इति बोध्यते च हिना ॥१०५॥

---

द्वित्वात्प्राग् गुणाभावे गुणात्प्रागेव द्वित्वप्रवृत्तौ चानिष्टरूपापत्तिरतस्तद्वारणाय परिभाषोच्यत इत्यर्थः ॥ १०२, १०३ ॥

कार्यिपदार्थमाह—उद्देश्यदलेति । यथा सन्यङोरिति षष्ठ्यन्तपदेन प्रत्ययग्रहणपरिभाषासहकृतेनोपस्थापितं सन्नन्तम् "उर्णु इस" इत्यादि द्वित्वरूपकार्यसंबन्धि कार्यि । तस्य पुनर्यावानंश एकाचो द्वे प्रथमस्य, अजादेर्द्वितीयस्येत्याद्येकवाक्यतापन्नेन सन्यङोरित्यनेन बोधितः । साक्षात्कार्यं भजते = द्वित्वरूपकार्ये साक्षादुद्देश्यत्वेनान्वेति स कार्यानुभवी । शयितेत्यादौ गुणरूपकार्यस्य साक्षादुद्देश्यता इक्येवेति शीङ् इत्यादेः कार्यानुभवित्वं न स्यादतस्तत्राऽव्याप्तिनिरासार्थं तद्घटितोऽपि वेत्युक्तम् । तद्घटितश्च तावानेव गृह्यते यावता विनाऽर्थवत्त्वं न । तेन उर्णुइसेति समुदायस्य कार्यानुभवित्वापत्तिर्नेति बोध्यम् ॥ १०४ ॥

ज्ञापक इति । एतत्परिभाषां विना शयितरीति गुणविशिष्टनिर्देशस्यानुपपन्नत्वेन ज्ञापकत्वम् । यदि तु क्ङितीत्यत्र गित्साहचर्येण प्रत्ययस्यैव ङितो ग्रहणान्नायं निर्देशो ज्ञापक इत्युच्यते तर्हीयं लोकन्यायादेव सिद्धेत्याह—स्थानीति । कार्यस्थानिनो निमित्ताद्भेदः सकललोकतन्त्रप्रसिद्ध इति तस्य निमित्तत्वेनानाश्रयणे हेतोः प्रसिद्धत्वं परिभाषायां हि शब्देन द्योत्यत इत्यर्थः । यत्त्वत्र समवायिकारणनिमित्तकारणयोर्भेदस्य सकललोकतन्त्रप्रसिद्धतयेति परिभाषेन्दुशेखरे उक्तं, तन्नैयायिकवासनया । न्यायभिन्ननये समवायानभ्युपगमेन समवायिकारणाप्रसिद्धेः । कार्यस्य शब्दात्मकतया तत्समवायिकारणत्वस्याकाश एव सत्त्वेन प्रकृते तदसङ्गतेश्च । तस्माद्यन्नैयायिकैः समवायिकारणमित्युच्यते तस्य निमित्ताद्भेदो यथा लोकतन्त्रप्रसिद्धस्तथा स्थानिनो निमित्ताद्भेदोऽपि प्रसिद्ध इत्येवंपरतया तद्वचनं नेयम् ॥ १०५ ॥

जेघ्रीयत इत्यादौ द्वित्वात्पूर्वं यङीत्त्वसिद्ध्यर्थम् ।
द्विर्वचनेऽचीत्यस्मिन्नचिपदमिति भाष्यकारोक्त्या ॥१०६॥
कार्यमनुभवन्नित्ययमंशोऽस्या - ध्वन्यते तेन ।
उर्णुनविषतीत्यादाविसो - द्विरुक्त्यनुभवाभावात् ॥१०७॥
द्वित्वनिमित्ततया प्राङ् न गुणोऽभ्यासे च नुश्रवणसिद्धिः ।
अरिरिषतीत्यादौ त्विस्, द्वित्वमनुभवत्यतो नस निषेधः ॥१०८॥

---

कार्यमनुभवन्नित्यंशेऽपि मानमाह—जेघ्रीयत इत्यादिना । "द्विर्वचनेऽचि" (१।१।५९) इति सूत्रे भाष्ये तत्रत्याज्ग्रहणस्य फलं जेघ्रीयते देध्मीयते इत्युक्तम् । तत्राज्ग्रहणाभावे हि घ्रा-धातोर्यङि द्वित्वनिमित्तयङ्निमित्तकस्य ई घ्राध्मोरितीकारादेशस्य स्थानिरूपातिदेशादादेशनिषेधाद्वा घ्रा-शब्दस्य द्वित्वेऽभ्यास एकारश्रवणं न सिध्येत् । अज्ग्रहणे कृते तु यङ्यकारस्याच्त्वाभावात्तत्सूत्रावृत्त्या पूर्वमीत्वे ततो द्वित्वे च गुणो यङ्लुकोरित्यभ्यासगुणे तत्सिद्धिः । कार्यी निमित्ततया नाश्रीयत एतावन्मात्रोक्तौ तु यङन्तस्य कार्यितया यङो निमित्तत्वानाश्रयणे द्विर्वचन इत्यस्याप्रवृत्त्या तत्सिद्धेरप्रत्यूहत्वादुक्तभाष्यासङ्गतिः स्यादतस्तेनेयं कार्यमनुभवन्नित्यंशविशिष्टा ध्वन्यत इति भावः । लब्धे च तस्मिन्नंशे स्वरान्तरे व्यञ्जनान्युत्तरस्येति मतेन घ्रा-शब्दस्यैव द्वित्वाद्यङवयवयकारस्य द्वित्वरूपकार्याननुभवकर्तृत्वाभावान्निमित्तत्वमक्षतमित्युक्तभाष्यसङ्गतिरिति बोध्यम् । "नटभार्यावद् व्यञ्जनानि" इति षाष्ठभाष्यरीत्या द्वितीयाजवधिक पूर्वस्य घ्राय् इत्यस्य द्वित्वेतु यङः कार्याननुभवकर्तृत्वेन निमित्तत्वं न स्यादिति स्थानिरूपातिदेशाप्रसक्त्याऽज्ग्रहणं व्यर्थं स्यादतस्तन्मतमत्र नाश्रीयते । उक्तांशस्य फलमाह तेनेत्यादिना ॥ १०६, १०७ ॥

प्राङ् न इति गुण इति । द्विर्वचनेऽचीत्यनेन द्वित्वे कर्तव्येऽजादेशनिषेधाद्द्वित्वात्प्राङ् न गुणः । अतश्चाभ्यासे नुश्रवणसिद्धिरित्यर्थः । कार्यमनुभवन्निति विशेषणाभावे तु सन्नन्तस्य द्वित्वकार्यितया तद्घटकस्येसो द्वित्वनिमित्तत्वाभावे द्विर्वचनेऽचीत्यस्याप्रवृत्त्या द्वित्वात्पूर्वं गुणेऽवादेशे चाभ्यासे सन्यत इतीत्वे इकारश्रवणापत्तिः । अरिरिषतीति । ऋधातोः सनि "स्मिपूङ्रञ्ज्वशां सनि" इतीडागमे "ऋ इस" इतिस्थितेऽत्रेस् इति सनोऽवयवस्य द्वित्वरूपकार्याननुभवकर्तृत्वेनानया द्वित्वनिमित्तत्वनिषेधाद् द्विर्वचनेऽचीत्यादेशस्यानिषेधप्रवृत्त्या परत्वाद्द्वित्वं बाधित्वा गुणे "अरिस" इति जाते, अजादेर्द्वितीयस्येति रिस् इत्यस्य द्वित्वे अरिरिषतीति सिद्ध्यति ॥१०८॥

यत्कार्यनिमित्तत्वं द्वित्वनिमित्ताचि पर्याप्तम् ।
तादृशकार्यस्यैव द्विर्वचनेऽचीत्यनेन परिहारः ॥ १०९ ॥
इत्यर्थस्वीकारे त्वरिरिषितीत्यादिकं न फलमस्याः ।
न हि तत्र गुणनिमित्तं केवल इः किन्त्विसेत्येतत् ॥ ११० ॥
उर्णुनविषतीत्यादौ तत्रार्थे गुणनिषेधविरहेऽपि ।
अज्मात्रनिमित्तावादेशनिषेधेन तत्सिद्धिः ॥ १११ ॥
न च दुद्यूषतिसुस्यूषतिप्रभृत्येव फलमस्याः ।
तत्र हि साम्भावनिकं कार्यानुभवित्वमूठ इति वाच्यम् ॥ ११२ ॥

---

द्विर्वचनेऽचीति सूत्रस्य निष्कृष्टमर्थं दर्शयन्नेतत्परिभाषासाध्यफलानां क्रमेणान्यथासिद्धत्वं प्रतिपादयति—**यत्कार्येत्यादिना** । द्वित्वनिमित्तताश्रयाच्पर्याप्तनिमित्ततास्यानादेशात्मककार्यस्यैव द्विर्वचनेऽचीत्यनेन निषेध इत्यर्थः । अस्मिन्नर्थे चक्रुरित्यादौ यणादेशनिमित्तताया द्वित्वनिमित्तताश्रयेऽतुसघटकाकाररूपेऽचि पर्याप्तत्वात्, जग्मतुरित्यादौ च गमहनेत्यत्राचीत्यनुवृत्त्याऽजादौ क्ङित्युपधालोप इत्यर्थेनाच्त्वावच्छिन्ननिमित्तताया अच्पर्याप्तत्वाद्विर्वचनेऽचीति निषेधप्रवृत्त्येष्टसिद्धिः । न च कौमुद्यां द्विर्वचनेऽचीत्यत्राचीति परसप्तम्याश्रयणान्निमित्तार्थो न युक्त इति वाच्यम् । परसप्तम्याश्रयणे जग्मतुरित्यादौ गम्-धातोरचोऽकारस्य मकारव्यवधानाद् द्वित्वनिमित्ताजव्यवहितपूर्वत्वाभावेनोपधालोपनिषेधाभावे, द्वित्वात्पूर्वं लोपे एकाच्त्वाभावेन द्वित्वाभावापत्तेः । येन नाव्यवधानमिति न्यायस्य तु नात्र संचारः । चक्र इत्यादावव्यवहितेऽचि द्विर्वचनेऽचीत्यस्य चारितार्थ्यात् । एवं च अचीति निमित्तसप्तम्येवाश्रयणीया । अतोऽयमर्थो युक्त एव ॥ १०९ ॥

**नहीति** । अरिरिषतीत्यत्र सार्वधातुकार्धधातुकयोरित्येतद्विहितगुणनिमित्तताया इसेतिप्रत्ययपर्याप्तत्वादिकारमात्रपर्याप्तत्वाभावाद् द्विर्वचनेऽचीत्यस्याप्रवृत्त्या तत्सिद्धेरिति भावः ॥ ११० ॥

नन्वेवमुर्णुनविषतीत्यत्रापि गुणनिमित्तताया इसपर्याप्तत्वादिकारमात्रपर्याप्तत्वाभावान्निषेधाप्रवृत्तावभ्यासे उकारश्रवणं न स्यादत आह—**उर्णुनविषतीत्यादाविति** । अज्मात्रेति । तत्र अच्पर्याप्तनिमित्तताकस्यावादेशस्य निषेधेनैवाभ्यासह्रस्वेनोकारश्रवणसिद्धिरित्यर्थः ॥ १११ ॥

दुद्यूषतीत्याद्यस्याः फलमित्याशङ्क्य निराकरोति—**न चेति** । दिवुधातोः सनि, सनीवन्तर्धेतीड्विकल्पादिडभावपक्षे हलन्ताच्चेति सनः कित्त्वेन च्छ्वोःशूडिति वस्योठि

प्रत्यय इति वक्ष्यामीत्येवं खलु भाष्यवचनेन ।
द्वित्वनिमित्तत्वाश्रयप्रत्ययघटकाज्निमित्तकनिषेधात् ॥११३॥
नन्वेवमपि बिभवनीयिषतीत्यादावनस्य योऽकारः ।
प्रत्ययघटकोऽसाविति तत्र निषेधप्रवृत्तिः स्यात् ॥११४॥
इति चेद् द्वित्वं प्रति यः पर्याप्त्या भजति वै निमित्तत्वम् ।
तादृक्प्रत्ययघटकाच्पर्याप्तनिमित्तताकस्य ॥११५॥
कार्यस्य प्रतिषेधो न च तादृगनस्तदा तु विफलेयम् ।
अत एवेयं भाष्ये क्वापि न पठितेति विज्ञेयम् ॥११६॥

---

दि "ऊ स" इति स्थिते द्वित्वात्परत्वादन्तरङ्गत्वाच्च यणि द्यू इत्यस्य द्वित्वेऽभ्यासकार्ये च दुद्यूषतीति सिध्यति । तत्रोक्तार्थेऽपर्याप्त्या द्वित्वनिमित्तताश्रय उकाररूपोऽच्, तत्पर्याप्तनिमित्तताकस्य यणादेशस्य निषेधे दिशब्दस्य द्वित्वेऽभ्यास इकारश्रवणापत्तिः । एवं सुस्यूषतीत्यत्रापि । अतस्तद्वारणाय परिभाषाऽऽवश्यकीति भावः । ननु तस्यामवस्थायामूकारस्य द्वित्वरूपकार्यानुभवकर्तृत्वाभावेन परिभाषाप्रवृत्तिर्न स्यादत आह तत्रहीति । यदि द्विर्वचनेऽचीति न प्रवर्तेत तर्हि यणादेशो सति द्यूइत्यस्य द्वित्वे ऊकारस्य द्वित्वरूपकार्यानुभवित्वं स्यादिति संभावनया साम्भावनिकं कार्यानुभवित्वं तस्यास्त्येवेति भावः ॥ ११२ ॥

उक्ताशङ्कां निराकरोति प्रत्यय इति । द्विर्वचनेऽचीति सूत्रे भाष्ये दुद्यूषतीत्यादावभ्यासरूपसिद्ध्यर्थम् "एवं तर्हि प्रत्यय इति वक्ष्यामि" इत्युक्तत्वेन द्वित्वे कर्तव्ये द्वित्वनिमित्तताश्रयप्रत्ययघटकाज्निमित्तकाजादेशस्यैव निषेधात्, दुद्यूषतीत्यादौ चोकारस्य प्रत्ययत्वाभावान्न तत्प्रवृत्तिरिति तदपि नास्याः फलमिति भावः ॥ ११३ ॥

द्विर्वचनेऽचीत्यस्योक्तार्थाश्रयणे दोषमाशङ्कते नन्विति । एवमपि = तस्मिन्नर्थे दुद्यूषतीत्यादिसिद्धावपि, बिभवनीयिषतीत्यादेरसिद्धिः । भूधातोर्ल्युटि भवनमिति । भवनमात्मन इच्छतीत्यर्थे क्यचि भवनीयति । तत इच्छार्थे सनि बिभवनीयिषति । तत्र पर्याप्त्या द्वित्वनिमित्तताश्रयः सन्नन्तसमुदायस्तद्घटकस्यानप्रत्ययस्यापर्याप्त्या द्वित्वनिमित्तताऽऽश्रयत्वात्तद्घटकाकारपर्याप्तनिमित्तताकस्यावादेशस्य द्विर्वचनेऽचीत्यनेन निषेधेऽनिष्टरूपापत्तिरिति भावः ॥ ११४ ॥

उक्ताशङ्कां समाधत्ते—इति चेदित्यादिना । द्वित्वनिमित्ततापर्याप्त्यधिकरणप्रत्ययघटकाच्पर्याप्तनिमित्तताक आदेशो नेत्यर्थः । अनप्रत्ययस्तु द्वित्वनिमित्ततापर्याप्त्यधिकरणस्वरूपो नास्ति । तेनोक्तस्थले न दोषः । तदा तु एवं विचारे त्वियं परिभाषा

प्रणिदापयतीत्यादौ ननु दाबित्यस्य दात्वविरहेण ।
नास्ति घुसंज्ञा न च दा इत्यंशस्यार्थरहितत्वात् ॥ ११७ ॥

दाधेत्यर्थविशिष्टग्रहणेनानर्थकग्रहायोगात् ।
इत्येवं घुपरत्वाभावान्नेर्नस्य णो न स्यात् ॥ ११८ ॥

ननु घुत्वमनैमित्तिकमतोऽन्तरङ्गे विधेयेऽस्मिन् ।
बहिरङ्गः पुगसिद्धस्तस्माद्दारूपदर्शनाण्णः स्यात् ॥ ११९ ॥

किञ्च यथोद्देशमते प्राक्सिद्धघुसंज्ञयाऽस्तु णत्वविधिः ।
पूर्वं धातुर्युज्यत उपसर्गेणेति वा णिचः प्राङ्णः ॥ १२० ॥

---

निष्फलेत्यर्थः। न चैवमुर्णुनविषतीत्यत्र द्वितीयनिमित्ततायाः सन्नन्तसमुदायपर्याप्तत्वादिसेति प्रत्ययपर्याप्तत्वाभावाद् द्विर्वचनेऽचीत्यस्याप्रवृत्तावभ्यास उकारश्रवणं न सिध्येदिति वाच्यम् । तद्भावभाक्तामात्रेणेह निमित्तत्वमिति मनोरमोक्त्यनुसारेण तत्र सन्प्रत्यये सत्येव द्वित्वं भवतीति सन एव निमित्तत्वाश्रयणात् । बिभवनीयिषतीत्यत्र तु अनप्रत्ययस्य द्वित्वाप्रयोजकत्वान्न निमित्तत्वमिति सर्वमनवद्यम् ॥ ११५, ११६ ॥

पूर्वपरिभाषायां शयितरीति निर्देशो ज्ञापक इत्युक्तं, तत्रेड्विशिष्टस्यार्धधातुकत्वाभावाद्गुणो न प्राप्नोतीत्याशङ्काया निरसनेन तदुपपादकतया "चिन्तां प्रकृतसिद्ध्यर्थामुपोद्घातं प्रचक्षते" इत्युपोद्घातसङ्गत्या यदागमपरिभाषामवतारयति—प्रणिदापयतीत्यादिना । अर्थरहितत्वादिति । आगमसमभिव्याहारे आगमविशिष्टस्यैवार्थवत्त्वमिति । नियमेन दापशब्दस्यैवार्थवत्त्वादिति भावः । उक्तनियमे मानं च "दाधाघ्वदाप्" (१।१।२०) इति सूत्रे "प्रणिदापयति प्रणिधापयतीति । अत्रापि नैतौ दाधावर्थवन्तौ, नाप्येतौ दाधौ प्रति क्रियायोगः" इति भाष्यम् ॥ ११७ ॥

अर्थवद्ग्रहणपरिभाषाप्रवृत्तिप्रयोजकं विशिष्टरूपोपादानमत्रास्तीत्याह—दाधेति । नस्य णः, नेर्गदनदेत्यादिसूत्रविहितः ॥ ११८ ॥

उक्तावतरणस्यायुक्तत्वमाशङ्कते—नन्वित्यादिना । विधेये = कर्तव्ये ॥ ११९ ॥

किञ्चेति । यथोद्देशपक्षाश्रयणेन पूर्वप्रवृत्तघुसंज्ञामादायैव णत्वविधिप्रवृत्तिरस्तु । अथवा अनुभूयत आनन्दश्चैत्रेणेत्यादौ कर्मणि लकारादिसिद्धये "पूर्वं धातुरुपसर्गेण युज्यते" इति मतस्याङ्गीकर्तव्यतया पूर्वमुपसर्गयोगे णत्वे च सति पश्चाण्णिचियुक्ति च प्रणिदापयतीत्यादिरूपं सेत्स्यति ॥ १२० ॥

अथवाऽस्तु णेः पुटो विधिरिति सार्थक एव दा घुसंज्ञोऽस्तु ।
तस्मादिदमवतरणं न युक्तमिति चेच्छृणूत्तरमिहेदम् ॥१२१॥

संज्ञाशास्त्राणां विधिनिमित्तमेवेष्यते निमित्तमिति ।
णत्वनिमित्तनिमित्तकतया घुसंज्ञाऽपि बहिरङ्गा ॥ १२२ ॥

घुत्वे प्राक्सिद्धेऽपि च यद्धात्वर्थक्रियायुक्ताः ।
तं प्रत्येव प्रादय उपसर्गा इत्यनर्थकस्य न ते ॥ १२३ ॥

पूर्वं धातुः साधनयुक्तो भवतीति चास्ति सिद्धान्तः ।
उपसर्गेण तु पूर्वं योगेऽध्ययनाद्यसिद्धिः स्यात् ॥ १२४ ॥

---

**अथवेति** । अर्तिह्रीव्लीति सूत्रेण णेः पुडागम एव विधेयः, तथा च पुडागमस्य णिभक्तत्वाद्दाधातोरर्थवत्त्वमक्षतमेवेति तस्य घुसंज्ञायां तत्परकस्य नेर्नस्य णो भविष्यति । एवं च तदर्थे परिभाषाङ्गीकारो न युक्त इति भावः ॥ समाधातुमुपक्रमते—**शृणूत्तरमिति** ॥ १२१ ॥

यदुक्तं पुगपेक्षया घुत्वमन्तरङ्गमिति तत्राह—**संज्ञाशास्त्राणामिति** । संज्ञायाः कार्यार्थत्वात्कार्यविधायकविधिशास्त्रस्य यन्निमित्तं तदेव संज्ञाशास्त्रस्येत्यभ्युपगमाण्णत्वविधिनिमित्तनिमित्तकत्वेन घुसंज्ञायाः पुगपेक्षया बहिरङ्गत्वादन्तरङ्गपरिभाषया न निर्वाह इति भावः ॥ १२२ ॥

यच्चोक्तं यथोद्देशपक्षे पूर्वप्रवृत्तघुसंज्ञयैव णत्वमिति तत्राह—**घुत्व इति** । "उपसर्गाः क्रियायोगे" इति योगग्रहणात् "यत्क्रियायुक्ताः प्रादयस्तं प्रति गत्युपसर्गसंज्ञा भवन्ति" इति "दाधाघ्वदाप्" (१।१।२०) इति सूत्रस्थभाष्येण यद्धात्वर्थक्रियाद्योतकत्वं प्रादीनां तद्धातुं प्रत्येवोपसर्गत्वमिति नियमाद्दाशब्दे पूर्वजातघुत्वस्य सत्त्वेऽपि तस्यानर्थकत्वेन तदर्थक्रियायोगाभावेन तं प्रति नेरुपसर्गत्वमेव नास्ति । अतो णत्वं न स्यादिति भावः ॥ १२३ ॥

यच्चोक्तं पूर्वं धातुरुपसर्गेण युज्यत इति तन्न युक्तमित्याह—**पूर्वमिति** । पूर्वं धातुः साधनेन युज्यते पश्चादुपसर्गेणेत्येव सिद्धान्तः । अत एव णेरध्ययने वृत्तमिति निर्देश उपपन्नः । अन्यथा तत्र धात्विकारस्य पूर्वमुपसर्गयोगेऽकः सवर्णे इति दीर्घे तदुत्तरं गुणेऽनिष्टरूपापत्तिः स्यात् । एवं प्रत्यय इत्यादावपि ज्ञेयम् ॥ १२४ ॥

अनुभूयत इत्यादौ धातोरेवानुभूतिवाचित्वात् ।
कर्मणि लकारसिद्धिस्तात्पर्यग्राहकोऽनुयोगस्तु ॥ १२५ ॥
णेः पुड्विधावदीदपदित्यादौ ह्रस्वदौर्लभ्यात् ।
पुग्विधिरेव समुचितस्तत्रोक्तापत्तिवारणायाह ॥ १२६ ॥

## यदागमास्तद्गुणीभूतास्तद्ग्रहणेन गृह्यन्ते ॥ ११ ॥

यो हि यमुद्दिश्य कृतोऽवयवत्वेनागमेति पदवाच्यः ।
अत एव तदवयव इत्याहार्यज्ञानविषयोऽस्ति ॥ १२७ ॥
तस्माद्येन विशिष्टस्तदागमिपदेन बोध्य इत्यर्थः ।
अत्र च पूर्वः पूर्वः परं परं प्रत्युदीरितो हेतुः ॥ १२८ ॥

---

पूर्वं धातुः साधनेन युज्यत इति सिद्धान्तेऽप्यनुभूयत इत्यादौ कर्मणि लकारासिद्धिनिर्बाधैवेत्याह—अनुभूयत इति। तात्पर्यग्राहकः। भूधातोरनुभवरूपेऽर्थे वक्तृतात्पर्यं श्रोतारं ग्राहयितुमनुः प्रयुज्यते। न तु तत्र विशिष्टस्यानुभवार्थकत्वम्। उपसर्गाणां द्योतकत्वाङ्गीकारादिति भावः ॥ १२५ ॥

णेरिति। णेः पुडागमविधाने दापेर्लुङि चङि पकारसहितस्य णित्वेन तत्पूर्वाकारस्याङ्गसंबन्ध्युपधात्वाभावेन णौ चङीति ह्रस्वो न स्यात्। अतः पुग्विधिरेव युक्तः। तत्र चौक्तरीत्या प्रणिदापयतीत्यादौ णत्वासिद्धिरूपो दोषस्तन्निवारणायाहेत्यर्थः ॥ १२६ ॥

यस्यागमा यदागमाः। षष्ठ्या उद्देश्यत्वमर्थः। आगमपदार्थश्च, अवयवत्वावच्छिन्नविधेयताश्रयत्वम्। एवं च यन्निष्ठोद्देश्यतानिरूपितावयवत्वावच्छिन्नविधेयताश्रया इत्यर्थस्तदाह—यो हीति। अवयवत्वेन कृतः = अवयवत्वावच्छिन्नविधेयताश्रयः। तद्गुणीभूता इत्यत्र गुणपदार्थोऽवयवत्वम्। च्व्यर्थं आहार्यज्ञानम्। भूता इत्यस्य विषयतापन्ना इत्यर्थस्तेन, तन्निरूपितावयत्वप्रकारकाहार्यज्ञानविषयताश्रया इत्यर्थः। यतो यदागमा अतस्तद्गुणीभूता इति पूर्वस्योत्तरत्र हेतुत्वं विवक्ष्यते तदाह—अत एवेति ॥ १२७ ॥

तद्गुणीभूता इत्यस्यानन्तरं तद्विशिष्टा इत्यध्याहारः। एवं यत इत्यत इति च पदयोरत्राप्यध्याहारः। तदाह—तस्मादिति। तेन आगमेन विशिष्टः शब्दः। गृह्यतेऽनेनेति ग्रहणं बोधजनकं पदम्। तस्य ग्रहणं तद्ग्रहणम्। तेन गृह्यन्ते तदाह—तदागमीत्यादि। अत्र तत्पदेन यमुद्दिश्येत्यत्र यच्छब्दोपात्त आगमनिष्ठविधेयतानिरूपितोद्देश्यताश्रय आगमी विवक्ष्यते। तद्बोधकपदेनागमविशिष्टो बोध्यत इत्यर्थः। यतो

चैत्रस्याङ्गाधिक्येऽपि यथा तद्वाचकेन शब्देन ।
अधिकाङ्गविशिष्टस्य ग्रहणं लोके तथेहापि ॥ १२९ ॥

उद्देश्यत्वनिवेशात्प्रनिदारयतीह दार् घुसंज्ञो न ।
रेफो ह्युरण् रपर इत्याकारोद्देश्यको न दोद्देश्यः ॥१३०॥

नन्वेवमपि दकारोत्तर आ दा आरि चात्वमनयेति ।
दारिति शब्दे दात्वं तेन च घुत्वं हि दुर्वारम् ॥१३१॥

---

यन्निष्ठोद्देश्यतानिरूपितावयवत्वावच्छिन्नविधेयताश्रया अतस्तन्निरूपितावयवत्वप्रकारकाहार्यज्ञानविषयीभूताः, यतस्तथाभूता अतस्तद्विशिष्टास्तद्बोधकपदेन बोध्यन्त इति समुदितार्थः । तद्विशिष्टा इत्यत्र वैशिष्ट्यं च स्वघटितत्व-स्वागमिघटितत्व-स्व-स्वागमिव्यतिरिक्ताघटितत्वैतत्त्रितयसंबन्धेन । तृतीयसंबन्धनिवेशाद्दाग्रहणेन णिजन्तदापेर्न ग्रहणम् । प्रणिदापयतीत्यादौ पकाररूप आगमो यत उक्तविशेषणविशिष्टोऽतस्तद्विशिष्टो दाप्-शब्दो दाबोधकेन दा धाध्वदाबिति सूत्रस्थदापदेन बोध्यते । तेन दाप्-शब्दस्यापि घुत्वं सिद्धमिति समन्वयः । नन्वनयाऽऽगमविशिष्टस्यागमि बोधकपदेन ग्राह्यत्वबोधनेऽपि तत्र तस्य शक्तिलक्षणयोरभावात्कथं तस्य शाब्दबोधविषयत्वमिति चेदत्रेदं बोध्यम्—यद्विना ग्राह्यत्वं न संभवति तदप्यभ्यनुज्ञातमेवेति, आगमविशिष्टसमुदाये आगमिवृत्तिधर्मारोपः क्रियते, तेन दाप्-शब्दे दात्वारोपाद्दापदेन तद्बोध उपपन्नः ॥ १२८ ॥

इयं च लोकन्यायसिद्धेत्याह—**चैत्रस्येति** ॥ १२९ ॥

**उद्देश्यत्वेति** । यमुद्दिश्य कृत इत्युक्तेः, प्रनिदारयतीत्यादौ उरण्रपर इत्येतद्विहितस्य रेफस्याकारनिष्ठोद्देश्यतानिरूपितावयवत्वावच्छिन्नविधेयताश्रयत्वाद्, दानिष्ठोद्देश्यतानिरूपिततादृशविधेयताश्रयत्वाभावादाकारनिरूपितमेवागमत्वं न तु दानिरूपितम् । तेन दाग्रहणेन दार् इत्यस्य न ग्रहणमतस्तस्य घुसंज्ञा नेति तत्र णत्वं न भवति । यन्निष्ठावयवितानिरूपितावयवत्त्वानित्यर्थे त्ववयवावयवः समुदायावयव इति न्यायेन दारे इत्यस्य घुत्वापत्तिः स्यादिति भावः ॥ १३० ॥

उद्देश्यत्वनिवेशे कृतेऽपि दोषतादवस्थ्यमाशङ्क्य परिभाषाया अनित्यत्वेन परिहरति—**नन्वित्यादिना** । दकारोत्तरत्वविशिष्टमात्वमेव दात्वम् । तत्र आर् इति शब्दे आत्वं यदागमपरिभाषया लभ्यं, दकारोत्तरत्वं च स्वत एवास्ति । इत्थं दारं इति शब्दे दात्वं संपन्नमतोऽस्य घुत्वं दुर्वारमित्यर्थः ॥ १३१ ॥

**इति चेन्नानेमुग्विधिलिङ्गेनास्या अनित्यत्वात् ।**
**मुकि सति तत्सहिताऽतः सवर्णदीर्घेऽस्य वैयर्थ्यात् ॥१३२॥**

**तेन दिदीयेप्रभृतिषु युडादिसहितेऽचि न यणादि ।**
**नापि जहारेत्यादौ रेफयुतादात औ णल इतीदम् ॥ १३३ ॥**

---

उक्ताशङ्कां परिहरति—**इति चेन्नेति**। आने मुगिति सूत्रेणानप्रत्यये परेऽदन्ताङ्गस्य मुग्विधानसामर्थ्येनास्याः परिभाषाया अनित्यत्वज्ञापनादुक्तस्थलेऽस्या अप्रवृत्त्या आर् इति शब्दे आत्वारोपो न भवत्यतो नोक्तदोष इति भावः। ज्ञापकत्वमुपपादयति—**मुकि सतीति**। पचमान इत्यादौ मुकि सति मुक्सहिताकारस्य यदागमपरिभाषयाऽकृपदेन ग्रहणे सवर्णदीर्घे अस्य = मुग्विधेर्वैयर्थ्यादित्यर्थः। ननु मुग्विधानसत्त्वे, पच आनेत्यत्र, सवर्णदीर्घस्य, आतो ङित इति यादेशस्य, मुगागमस्य च प्राप्तौ वार्णपरिभाषया दीर्घं बाधित्वाऽङ्गकार्यस्येयादेशस्य प्रसङ्गे तक्रकौण्डिन्यन्यायेन तं बाधित्वा मुगागमे यदागमपरिभाषया च मुक्सहितस्याक्पदेन ग्रहणे सवर्णदीर्घे पचान इति रूपम्। मुग्विधानाभावे तु पचेन इति ततश्च फलभेदान्न ज्ञापकत्वमिति चेन्न। मुगागमस्येयादेशबाधनमात्रप्रयोजनकत्वे, आतो ङितो नानस्येति न्यासेनैव तत्सिद्धेर्मुग्विधानवैयर्थ्यात्तस्य ज्ञापकत्वोपपत्तेः। ननु पचमान इत्यत्र मुग्विशिष्टे अम् इतिशब्देऽनयाऽत्त्वातिदेशेऽपि तत्सवर्णत्वमाकारे दुर्लभम्। अमिति समुदायजनकस्थानस्यैवाभावेन तुल्यस्थानत्वाभावात्। अवयवद्वारकस्थानजन्यत्वाश्रयणेऽप्यकारस्य कण्ठ्यत्वान्मकारस्यौष्ठ्यत्वाच्चावत्स्थानसाम्याभावान्न तुल्यस्थानत्वमिति चेन्न। अत्त्ववत् कण्ठमात्रस्थानजन्यत्वविवृतप्रयत्नजन्यत्वयोरप्यतिदेशेन सावर्ण्योपपत्तेः॥ १३२ ॥

अनित्यत्वफलमाह—**तेनेति**। दीङ्क्षये इति धातोर्लिटि दिदीये इत्यादौ साध्ये दीङोयुडचिक्ङितीत्यनेन एप्रत्ययस्य युडागमे यदागमपरिभाषया युट्सहिते ये इत्यस्मिन्नजादित्वातिदेशे एरनेकाच इति यणादेशापत्तिः। सा च परिभाषाऽनित्यत्वेन निवार्यते। न च तक्रकौण्डिन्यन्यायेन यणोऽपवादे युटि जाते सर्वेषामित्यत्र सुटि जाते नुडिव पुनर्यण् नैव भविष्यतीति वाच्यम्। दीङ्-धातोर्घञर्थे कप्रत्यये दिय इत्यत्र यणोऽप्राप्तिविषये युटश्चारितार्थ्येन तन्न्यायाविषयत्वात्। युड्विधानसामर्थ्याद्यण् न भविष्यतीत्यपि न वाच्यम्।॰ त्रियकारात्मकरूपसिद्ध्यर्थे तद्विधानसम्भवात्। वुग्युटावुवङ्यणोः सिद्धौ वक्तव्याविति वार्तिकारम्भसामर्थ्याच्च यणित्यपि न वक्तुं युक्तम्। साक्षाच्छास्त्रबाधकल्पनापेक्षया परिभाषाऽनित्यत्वकल्पनस्यैवोचितत्वात्। अत एव वाऽरुचेः फलान्तरमाह—**नापीति**। जहारेत्यत्र रेफागमविशिष्टादाकारात्परस्य णल आत औ णल इत्यनेनौकारादेशो नेत्यर्थः। •न च तत्र संनिपातपरिभाषया णल औ न भविष्यतीति वाच्यम्। तद्विषये तस्या अप्रवृत्तेः। अत एव मीनाति मिनोतीति सूत्रेण एज्निमित्तं णलमाश्रित्य

यद्यपि वर्णे वर्णान्तरावयवता न युज्यते तदपि।
आद्यन्तौ टकिताविति कथिताऽऽचार्येण तत्साम्यात्॥ १३४॥
वर्णग्रहणे नास्याः प्रवृत्तिरित्येव तज्ज्ञाप्यम्।
इत्याहुः प्राचीना भाष्यविरोधाच्च तदयुक्तम्॥१३५॥
तास्यनुदात्तेदिति हि स्वरो न पचमानशब्दे स्यात्।
इति शङ्कायां भाष्ये कथितमदुपदेशभक्तो मुक्॥१३६॥

---

जातस्यात्वस्यौकारादेशं प्रति निमित्तत्वेन ममाविति रूपं सिद्ध्यति। आदिपदेन भवेयुरित्यादेः संग्रहः। तत्रास्या अनित्यत्वेनाप्रवृत्त्यैव, अतो येय इति यासुर इयादेशे तद्विशिष्टस्य "इयुस्" इत्यस्य उस्यपदान्तादिति सूत्रस्थेनोस्पदेनाग्रहणात्पररूपं नेत्यादि फलं ज्ञेयम्॥ १३३॥

**यद्यपीति**। अवयवत्वं हि स्वव्यापकत्वे सति स्वव्याप्यत्वाभावरूपं रामेत्यादिसमुदायनिरूपितं रेफादिषु प्रसिद्धम्। अतस्तद् एकवर्णेऽपरवर्णनिरूपितं यद्यपि न संभवति तथापि, आद्यन्तौ टकिताविति सूत्रेण टित्कितोरागमयोरवयवत्वव्याप्यादित्वान्तत्वबोधनादाचार्येण भगवता पाणिनिनाऽऽगमस्यावयवता कथिता वचनेनैव बोधितेत्यर्थः। ननु वचनेनापि नासंभाव्यार्थः सिध्यति। न हि वह्निः शीत इति वचनेन कस्यचिद् वह्नेः शीतत्वबुद्धिरुपजायतेऽत आह—**तत्साम्यादिति**। अवयवसाम्याद्गौणमवयवत्वम्। अवयवसाम्यं च अवयविग्रहणग्राह्यत्वेन। एवं चायं यदागमन्यायस्तेनैवार्थतः सिद्धो नापूर्व इति बोध्यम्॥ १३४॥

प्राचीनमतमनूद्य निरस्यति—**वर्णेत्यादिना**। ज्ञापकसाजात्यादननुगतानित्यत्वज्ञापनापेक्षयाऽनुगतस्थलेष्वप्रवृत्तिज्ञापने लाघवाच्च वर्णग्रहणेऽस्या न प्रवृत्तिरित्येव, आने मुगिति मुग्विधानाज्ज्ञाप्यमिति तदाशयः। किन्तु वक्ष्यमाणभाष्यविरोधाज्ज्ञापकस्य विशेषापेक्षत्वे पचेयुरित्याद्यसिद्ध्यापत्तेश्च सामान्यतोऽनित्यत्वज्ञापनमेवोचितमतः प्राचीनमतमयुक्तमिति भावः॥ १३५॥

भाष्यविरोधमेव दर्शयति—**तास्यनुदात्तेदित्यादिना**। "आने मुक्" (७।२।८२) इति सूत्रे भाष्ये—पचमानो यजमान इत्यादौ मुका व्यवहितत्वेन शानच उपदिश्यमानश्नकाराद्व्यवहितपरत्वाभावात् तास्यनुदात्तेङ्िददुपदेशाल्लसार्वधातुकमनुदात्तमह्न्विङोरिति सूत्रोक्तः स्वरो न स्यादित्याशङ्क्य, अङ्गावयवस्यातो मुगित्यर्थेन, "अदुपदेशभक्तः, अदुपदेशग्रहणेन ग्राहिष्यते" इत्युक्तम्। यदागमपरिभाषयाऽत्पदेन मुग्विशिष्टस्यामो ग्रहणान्न दोष इति तदाशयः। वर्णग्रहणेऽस्या अप्रवृत्तौ तदसङ्गतेस्तद्विरोधः स्पष्टः।

तद्ग्रहणेन ग्राहिष्यत इत्याने सुगिति सूत्रे ।
रेफविशिष्टाकारे वृद्धित्वं चोपदर्श्य कार्तिपदे ॥१३७॥

नत्वस्य रदाभ्यामित्यत्र निषेधः प्रवर्तितो भाष्ये ।
तद् वर्णग्रहणेऽस्याः प्रवृत्त्यभावे विरुध्येत ॥१३८॥

अपि चोक्तमते वर्णग्रहणाभावे पचेयुरित्यादौ ।
पररूपवारणं कथमुसितिपदेनेयुसो ग्रहणे ॥ १३९ ॥

---

वर्णग्रहण इत्यस्य वर्णत्वव्याप्यस्य तद्घटितस्य वा धर्मस्यानयने इत्यर्थः । तेन दीव्यमान इत्यादावुक्तस्वरसिद्ध्यर्थमदन्तोपदिश्यमानादित्यर्थेऽप्यदन्तत्वस्य वर्णत्वव्याप्यास्वरूपधर्मघटितत्वेन वर्णग्रहणमेवेति बोध्यम् । न च तद्भाष्यविरोधपरिहाराय वर्णत्वव्याप्यधर्मानयन एवाप्रवृत्तिर्ज्ञाप्यतामिति वाच्यम् । तथा सति दिदीय इत्यादौ युट्सहितेऽजादित्वातिदेशवारणासंभवात् । अन्यमपि भाष्यविरोधं दर्शयति—रेफविशिष्टेत्यादिना । "रदाभ्यां-निष्ठातो नपूर्वस्य च दः" (८।२।४२) इति सूत्रे भाष्ये कृतस्यापत्यं कार्तिरित्यादौ नत्वाभावार्थकस्य "वृद्धि निमित्तात्प्रतिषेधो वक्तव्यः" इति वार्तिकस्य विवरणे, वृद्धिरेव निमित्तं वृद्धिनिमित्तं तस्माद् अथवा वृद्धिर्निमित्तं यस्य सोऽयं वृद्धिनिमित्तस्तस्मादिति विकल्प्य, आद्यार्थे कार्तिरित्यत्राकारो नत्वस्य न निमित्तं किन्तु रेफ इति प्रतिषेधो न प्राप्नोतीत्याशङ्कायां "वृद्धिर्भवति गुणो भवतीति रेफशिरा गुणवृद्धिसंज्ञकोऽभिनिर्वर्तते" इत्युक्त्या "आर्" इत्यस्य वृद्धिसंज्ञकत्वात्तद्घटकरेफस्य नत्वनिमित्तत्वेन तस्मिन्नर्थेऽपि नत्वप्रतिषेधः सिध्यतीति समाहितम् । तत्र ऋकारस्य स्थाने आकारः प्रसज्यमान एव उरण् रपर इत्यनेन रपरो भवति तेन मूर्धस्थानिकवर्णघटितत्वेनान्तरतम्याद् आर् आदेशो भवतीति पक्षे, अनान्तर्यमेवैतयोरान्तर्यमित्याश्रित्याकारादेशं विधाय तस्य रपरत्वं क्रियत इति पक्षे चेत्युभयत्र रेफविशिष्टस्य वृद्धिसंज्ञा यदागमन्यायेनैव भवति । वर्णग्रहणेऽस्या अप्रवृत्तौ त्वेतद्भाष्यविरोधः स्पष्टः । रेफशिरा इत्यत्रातद्गुणसंविज्ञानबहुव्रीह्याश्रयेणाकारस्यैव केवलस्य वृद्धिसंज्ञत्वं भाष्याभिप्रेतमतो न तद्विरोध इति वदतां तु कार्तिरित्यत्र रेफद्वारा वृद्धिरेव, नत्वनिमित्तमित्युपपादनपरभाष्यप्रयासवैफल्यापत्तिरेव दोष इति सुधीभिर्विभावनीयम् ॥ १३६, १३७, १३८ ॥

ज्ञापकस्य विशेषापेक्षत्वे लक्ष्यासिद्धिरूपं समुच्चिनोति—अपि चेति । पररूपवारणम् = उस्यपदान्तादिति पररूपस्य वारणम् । अत्र यदागमपरिभाषाया अनित्यत्वेनैव पररूपवारणं संभवत्यतस्तदेव ज्ञाप्यमिति भावः ॥ १३९ ॥

कुर्वन्नास्तेऽत्र ङमो ङमुडित्यर्थे न णः प्रथमनस्य ।
तस्य पदान्तपदेन ग्रहणादिति भाष्यवचनं तु ॥ १४० ॥
तत्र मते न विरुद्धं वर्णचयेऽपि हि पदान्ततासत्त्वात् ।
पद्घटकत्वे सति तद्घटकात्पूर्वो न यः स हि पदान्तः ॥ १४१ ॥

अपि चानयाऽऽगमानामागमिधर्मेण वैशिष्ट्यम् ।
बोध्यत इति तद्भाष्याशयवर्णनमप्यनुपपन्नम् ॥१४२॥

एवं सति रामाणामित्यादावामि यत्पदान्तत्वम् ।
अतिदेशेऽस्य नकारे णत्वनिषेधः प्रसज्येत ॥१४३॥

तस्मादागमघटिते नकारयुगले पदान्तताऽऽनेया ।
वर्णग्रहणे जातिग्रहणाच्च निषेध उपपाद्यः ॥१४४॥

---

वर्णग्रहणे यदागमपरिभाषाया न प्रवृत्तिरिति प्राचीनमते ङमुट्सूत्रस्थभाष्यविरोधः परिभाषेन्दुशेखरे प्रदर्शितः, स तु न युक्त इत्याह—कुर्वन्नास्त इति । "ङमो ह्रस्वात्—" (८।३।३२) इति सूत्रे भाष्ये पदावयवस्य ह्रस्वात्परस्य ङमो ङमुडिति सूत्रार्थे कुर्वन्नास्ते इत्यादौ पूर्वनकारस्य पदान्तत्वाभावान्निषेधाप्रवृत्त्या णत्वापत्तिमाशङ्क्य पदान्तभक्तः पदान्तग्रहणेन ग्राहिष्यते तेन पदान्तस्येति निषेधान्न णत्वमिति समाहितम् । तत्र पदान्तस्य वर्णरूपत्वेन वर्णग्रहणसत्त्वात्परिभाषाया अप्रवृत्तौ तद्भाष्यविरोध इति शेखरकाराशयः । किन्तु तत्र विरोधोद्भावनं न युक्तम् । पदघटकत्वे सति पदघटकवर्णप्रागभावाधिकरणक्षणावृत्तित्वरूपस्य पदान्तत्वस्य वर्णसमुदायेऽपि सम्भवेन वर्णत्वव्याप्यत्वाभावादिति भावः ॥ १४०, १४१ ॥

परिभाषेन्दुशेखरे प्राचीनमतनिरासप्रस्तावे "अनया च परिभाषयाऽऽगमानामागमिधर्मवैशिष्ट्यमपि बोध्यत इत्याशयकङमुट्सूत्रस्थभाष्यासङ्गतेः" इत्युक्तं तदपि न युक्तमित्याह—अपि चेति ॥ १४२ ॥

अयुक्तत्वे हेतुमाह—एवं सतीति । आगमानामागमिधर्मवैशिष्ट्याङ्गीकारे रामाणामित्यादौ नुडागमनकारे आम्वृत्तिपदान्तत्वातिदेशे पदान्तस्येति णत्वनिषेधापत्तिः स्यादित्यर्थः ॥ १४३ ॥

एवं नागेशोद्भावितविरोधस्यायुक्ततां प्रदर्श्य स्वमते तद्भाष्यं योजयति—तस्मादिति । कुर्वन्नास्ते इत्यादौ ङमो ङमुडित्यर्थे आगमघटिते नकारद्वयात्मकसमुदाये यदागमन्यायेन नकारनिष्ठं पदान्तत्वमतिदेश्यम् । धिप्सतीत्याद्यर्थे हलन्ताच्चेति सूत्रे यथा वर्णग्रहणे

लोकन्यायात्सिद्धा परिभाषैषा हि शास्त्रेऽपि ।
आश्रीयत इत्यत्र च नेटि तथा णेरनिटि मानम् ॥१४५॥

ननु भाष्यकृतोऽस्ति वचोऽनागमकानां हि सागमकाः ।
आदेशा इति तेनेडादिसिचः स्थानिवद्भावात् ॥१४६॥

प्राप्तायाः सिचि वृद्धेः प्रतिषेधायैव तन्न मानमिह ।
स्थानिवदिति सूत्रेण च गतार्थताऽस्येति चेन्नैवम् ॥१४७॥

नित्येषु हि शब्देषूपचयापचयौ न युज्येते ।
तस्मादागमशास्त्रानुपपत्त्या कल्प्यतेऽपरं वाक्यम् ॥१४८॥

इड्रहितधीप्रसङ्गे सेड्धीः कार्येति निर्दुष्टम् ।
तेनादेशस्थल इव बुद्धिविपरिणाम आगमेऽपीति ॥१४९॥

---

जातिग्रहणमाश्रितं तथा पदान्तस्येति सूत्रे नकारेण नत्वजात्याक्रान्तनकारद्वयस्य ग्रहणाण्णत्वनिषेध उपपादनीय इत्यर्थः ॥ १४४ ॥

नेतीति । यदागमपरिभाषायाः शास्त्रेऽनाश्रयणे मा भवानतीदित्यादाविड्विशिष्टस्य सिच्त्वाभावेनेड्व्यवधाने वदव्रजेति वृद्धेरप्राप्त्या तन्निषेधकं नेटीति सूत्रं व्यर्थं स्यादतस्त-दुक्तार्थज्ञापकम् । एवमिड्विशिष्टस्यार्धधातुकत्वाभावे कारयितेत्यादाविड्व्यवधाने णिलोपाप्रसक्त्या णेरनिटीत्यत्रानिटीति व्यर्थं सदस्यैवार्थस्य ज्ञापकम् ॥ १४५ ॥

उक्तज्ञापकस्यायुक्ततामस्याः परिभाषायाश्च स्थानिवत्सूत्रेण गतार्थतामाशङ्कते—

नन्विति । "आद्यन्तौ टकितौ" (१।१।४६) इति सूत्रे भाष्ये "युक्तं पुनर्यन्नित्येषु शब्देष्वागमशास्त्रं स्यात् । न नित्येषु नाम शब्देषु कूटस्थैरविचालिभिर्वर्णैर्भवितव्यमनपा-योपजनविकारिभिः । आगमश्च नामापूर्वः शब्दोपजनः । अथ युक्तं यन्नित्येषु शब्देष्वादे-शाः स्युः बाढं युक्तम् । शब्दान्तरैरिह भवितव्यम् । तत्र शब्दान्तरात् शब्दान्तरस्य प्रतिपत्तिर्युक्ता । आदेशास्तर्हीमे भविष्यन्ति । अनागमकानां सागमकाः ।" इत्युक्तम् । तेनेत्यादि स्पष्टार्थम् ॥ १४६ ॥

सिचि वृद्धेः—। हलन्तलक्षणायाः सिचि वृद्धेर्निषेधार्थं नेटीति सूत्रं नोक्तार्थज्ञापक-मित्यर्थः ॥ १४७ ॥

नित्येष्विति । कूटस्थनित्यस्य शब्दस्य वृद्धिक्षयायोग्यत्वादार्धधातुकस्येड्वलादेरित्यादिनाऽऽगमविधानानुपपत्त्याऽर्थापत्त्याख्यप्रमाणेन दिवा भोजनमकुर्वाणस्य देवदत्तस्य पीनत्वानुपपत्त्या तदुपपादकं रात्रिभोजनमेव प्रकृते इड्रहितस्यार्धधातुकस्य

**नित्यत्वं शब्दानामक्षतमिति भाष्यतात्पर्यात् ।**
**उपपन्नं च यथाश्रुतसूत्रार्थे ज्ञापकत्वमुक्तानाम् ॥१५०॥**
**न च गृह्यन्ते स्थानिवदिति सूत्रे तादृशादेशाः ।**
**साक्षादष्टाध्यायीविहितादेशेषु - सार्थक्यात् ॥१५१॥**
**तेषां तत्र ग्रहणे स्यादट्सहितस्य पः पिबादेशः ।**
**लावस्थायामडिति च सिद्धान्तो नोपपद्येत ॥१५२॥**
**सूत्रस्थयैव षष्ठ्या स्थानित्वधियैरुरित्यादौ ।**
**लाक्षणिकोऽपि त्वादिर्गृह्यत आदेशशब्दसामर्थ्यात् ॥१५३॥**

---

साधुत्वबुद्धिप्रसङ्गे इट्सहितस्य तस्य साधुत्वबुद्धिः कर्तव्येति वाक्यान्तरं कल्प्यते । तेनादेशस्थल इवागमस्थलेऽपि बुद्धिविपरिणाम एव, नतु शब्दस्योपचयापचयाविति न नित्यताहानिरित्येवोक्तभाष्यस्य तात्पर्यम् । आदेशस्थले च बुद्धिविपरिणाम एवेति स्थानिवत्सूत्रे भाष्ये प्रतिपादितम् । तत्र हि "कार्यविपरिणामाद्वा सिद्धम्" । कार्या बुद्धिः सा विपरिणम्यत इत्याद्युक्तम् । **उपपन्नं चेति** । शास्त्रप्रक्रियानिर्वाहस्तु यथाश्रुतसूत्रार्थेनैवेति नेरीत्यादेर्ज्ञापकत्वमुपपन्नमित्यर्थः ॥ १४८, १४९, १५० ॥

नन्वनागमकानां सागमका आदेशा इति भाष्यस्योक्ततात्पर्यकत्वेऽपि आगमस्थले कल्पितवाक्यान्तरेण स्थान्यादेशभावावगमात् स्थानिवत्सूत्रेणैव निर्वाहादलमनया परिभाषयेत्याशङ्कायामाह—**नचेति** । साक्षात्पाणिन्युच्चारितपदबोधितस्थान्यादेशभावेतस्य सूत्रस्य चारितार्थ्यादागमस्थलीयवाक्यान्तरकल्पिता आदेशास्तत्र न गृह्यन्त इत्यर्थः ॥ १५१ ॥

ननु नेटीत्यादिज्ञापकबलेनोभयविधादेशाः स्थानिवत्सूत्रे गृह्यन्तां, माऽस्तु परिभाषेत्येवं वदन्तं प्रत्याह—**तेषामिति** । पः = पाधातोः । **नोपपद्येतेति** । वाक्यान्तरकल्पितानामप्यादेशानां स्थानिवत्सूत्रे ग्रहणे लावस्थायामडागमेऽट्सहितस्य अपेत्यस्य पिबादेशापत्तेस्तद्वारणाय शब्राद्युत्तरमेवाडागमविधानस्यौचित्यादिति भावः, न च निर्दिश्यमानपरिभाषया पा इत्यस्यैव पिबादेशो भविष्यतीति वाच्यम् । स्थानिवद्भावविषये तस्या अप्रवृत्तेः । अत एव स्त्रीलिङ्गे त्रिशब्दादामि त्रयादेशात्परत्वेन तिस्रादेशे कृते पुनस्तस्य स्थानिवद्भावेन त्रयादेशमाशङ्क्य सकृद्गतिन्यायेन समाधानपरं स्थानिवत्सूत्रस्थं भाष्यं सङ्गच्छते । स्थानिवद्भावविषये निर्दिश्यमानपरिभाषाप्रवृत्तौ तु तयैव त्रयादेशवारणसंभवात्तदसङ्गतिः स्यात् ॥ १५२ ॥

ननु स्थानिवत्सूत्रे काल्पनिकादेशानामग्रहणे भवत्वित्यादेः पदत्वं न सिध्येदत आह—**सूत्रस्थयैवेति** । एवकारेणार्थापत्तिकल्पितवाक्यस्थषष्ठ्या व्यावृत्तिः । लाक्ष-

लाक्षणिकग्रहणेऽपि श्रौतस्थान्यादिकं न हेयमिति ।
सिद्धिः पटयत्यादेरचः परस्मिन्निति च सफलम् ॥१५४॥
नन्वेवमुदस्थादित्यादावागमयुतास्थादेः ।
स्थाऽऽदिपदेन ग्रहणे पूर्वसवर्णप्रसक्तिरत आह ॥ १५५ ॥

---

णिकोऽपीति । "सर्वे सर्वपदादेशा दाक्षीपुत्रस्य पाणिनेः । एकदेशविकारे हि नित्यत्वं नोपपद्यते ॥" इत्यभियुक्तोक्त्याऽर्थवत्येव स्थान्यादेशभावविश्रान्त्यवगमात्, एरुरित्यादौ तात्पर्यानुपपत्तिरूपलक्षणाबीजसत्त्वेन, इपदं लक्षणया इकारान्तबोधकम्, उपदं चोकारान्तबोधकम् । तेन तेस्तुरिति फलितोऽर्थः । तस्यादेशस्य स्थानिवत्सूत्रे ग्रहणं भवत्येव, साक्षादष्टाध्यायीस्थपदबोधितत्वात् । आगमस्थले त्वार्धधातुकस्येत्यादिषष्ठ्या अवयवार्थत्वात्कल्पितवाक्यस्थषष्ठ्यैव स्थानित्वबोधनात्तद्वाक्यबोधितादेशानां न ग्रहणम् । ननु स्थानिवत्सूत्रस्य रामायेत्यादौ श्रौतस्थान्यादेशभावे चरितार्थत्वाल्लाक्षणिकग्रहणे न मानमत आह—**आदेशशब्दसामर्थ्यादिति** । पितृवदधीत इत्युक्ते पुत्रस्येव स्थानिवदित्युक्ते ससंबन्धिकार्थकपदमहिम्नैवादेशस्य लाभसम्भवादादेशपदमधिकमतस्तेन लाक्षणिकादेशानामपि संग्रहो भवति । कल्पितवाक्यबोधितानां त्वतिविलम्बोपस्थितिकत्वान्न ग्रहणमिति भावः ॥ १५३ ॥

नन्वेवं लाक्षणिकादेशकल्पने पटयतीत्यादौ पटुशब्दाण्णिचि टिलोपे पटुशब्दस्य पट् इत्यादेशकल्पनादजादेशाभावेनाचः परस्मिन्नित्यस्याप्रवृत्तावुकारव्यवधानाभावेन अत उपधाया इति वृद्ध्यापत्तिरत आह—**लाक्षणिकेति** । अचः परस्मिन्नित्यादिसूत्रारम्भसामर्थ्यादर्थद्वयेऽपि पाणिनितात्पर्यावधारणाच्छास्त्रप्रक्रियानिर्वाहार्थकस्य श्रौतस्थान्यादेश भावस्य न त्यागस्तेन सकलेष्टसिद्धिरिति भावः ॥ १५४ ॥

अपवादसंगतिं सूचयन्निर्दिश्यमानपरिभाषामवतारयति—**नन्वेवमिति** । एवं = यदागमपरिभाषाङ्गीकारे । आगमयुतास्थादेः = अडागमविशिष्टस्य अस्थेत्यादेः । **पूर्वसवर्णेति** । उदः स्थास्तम्भोरित्यनेन पूर्वसवर्णापत्तिरित्यर्थः । यदि तु उदः स्थास्तम्भोरित्यत्र लुप्तषष्ठ्यन्तसकारप्रश्लेषेण, उदः परस्य स्थास्तम्भुसंबन्धिसकारस्य पूर्वसवर्णा इत्यर्थेनाड्व्यवधाने न तत्प्रवृत्तिरित्युच्यते तर्हीदम् अपिबत्, त्रितां, निर्जरसावित्यादीनामुपलक्षणं ज्ञेयम् । तेष्वागमविशिष्टस्य, जराद्यन्तसमुदायस्य च तत्तदादेशापत्तेर्निर्दिश्यमानपरिभाषयैव वारणात् ॥ १५५ ॥

# निर्दिश्यमानस्यादेशा भवन्ति ॥ १२ ॥

षष्ठी स्थाने योगेत्यस्मादधिगम्यतेऽर्थोऽयम् ।
षष्ठी यतोऽस्ति सा तत्प्रकृतिः स्थानेन युज्यते नान्यत् ॥ १५६ ॥
षष्ठीप्रकृतिसमुत्थप्राथमिकोपस्थितेर्विषयः ।
तदवयवोऽपि च भजते स्थानपदार्थेन संबन्धम् ॥१५७॥
शास्त्रान्तरसहकारप्राप्योऽर्थः स्थानयुङ् न भवतीति ।
प्राथमिकेतिविशेषणपदकृत्यं तत्र विज्ञेयम् ॥१५८॥

---

परिभाषालाभप्रकारमाह—षष्ठीति । षष्ठी यत इति । यतः परा षष्ठ्युच्चारिताऽस्ति सा तस्याः षष्ठ्याः प्रकृतिः, यथा जराया इत्यत्र जराशब्दरूपा षष्ठीप्रकृतिः, स्थानेन स्थानानुयोगिकसंबन्धेन युज्यते । नान्यत्—। षष्ठीप्रकृतिजन्यप्राथमिकोपस्थितीयविषयताश्रय एव स्थानेन युज्यते, न तु शास्त्रान्तरसहकारेण द्वितीयोपस्थितीयविषयताश्रय इत्यर्थः। परिभाषेन्दुशेखरे. षष्ठीस्थानेयोगेत्यस्यावृत्त्याऽयमर्थः संपाद्यत इत्युक्तं, परन्तु तत्सूत्रे भाष्ये—"यद्यपि लोके बहवोऽभिसंबन्धा आर्था यौना मौखाः स्रौवाश्चेति । शब्दस्य तु शब्देन कोऽन्योऽभिसम्बन्धो भवितुमर्हति ? अन्यदतः स्थानात्" इत्यादिना षष्ठ्याः स्थाननिरूपितसम्बन्धार्थकत्वस्य सूत्रं विनाऽपि लाभसंभवमुक्त्वा "न तर्हीदानीमयं योगो वक्तव्यः । वक्तव्यश्च । किं प्रयोजनम् ? षष्ठ्यन्तं स्थानेन यथा युज्येत । यतः षष्ठ्युच्चारिता । किं कृतं भवति ? निर्दिश्यमानस्यादेशा भवन्तीति परिभाषा न कर्तव्या भवति" । इत्युक्तेरावृत्तेर्नोपयोगः। भाष्ये न कर्तव्या भवतीत्यस्य अपूर्ववचनात्मिका न कर्तव्या भवति किन्त्वेतत्सूत्रसिद्धार्थानुवादरूपैव सेति भावः ॥ १५६ ॥

उक्तमर्थं विशदीकरोति—षष्ठीप्रकृतीति । समुत्थेति = जन्येत्यर्थः । अतिशयितः स्यः, अतिस्य इत्यादावुपसर्गतकारस्य सत्त्ववारणाय तदोः सः सावनन्त्ययोरित्यत्र त्यदादिपदीयनिर्दिश्यमानावयवयोस्तकारदकारयोः स इत्यर्थस्यावश्यकतया तत्राव्याप्तिनिरासार्थमुक्तं—तदवयवोऽपीति । षष्ठीप्रकृतिजन्यप्राथमिकोपस्थितिविषयावयवोऽपीत्यर्थः ॥ १५७ ॥

स्थानेन युज्यत इति स्थानयुक् ॥ १५८ ॥

सूत्रं येन विधिरिति न्यायश्च यदागमा इति द्वितयम्।
शास्त्रान्तरपदबोध्यं तदितरलभ्यं तु न त्याज्यम् ॥१५९॥
अणुदित् स्वं रूपमिति स्थानिवदपि लिङ्गसंयुतग्रहणम्।
तन्मध्यन्यायश्चेत्येतैर्लभ्यं हि युज्यते तेन ॥१६०॥

तत्र न भूसुधियोरिति दीर्घस्थानिकयणो निषेधेन।
अणुदित्सूत्रग्राहितवर्णानां ज्ञाप्यते तत्त्वम् ॥१६१॥

अन्येषामपि पूर्वोक्तानामुपलक्षणं चैतत्।
जातिर्वाच्येति मते त्वणुदित्सूत्रं विनैव तद्भानम् ॥१६२॥

---

शास्त्रान्तरपदेन द्वितीयोपस्थितिजनकानि सर्वाणि शास्त्राणि न विवक्ष्यन्ते, किन्तु यत्पदघटितं शास्त्रद्वयमेवेत्याह—सूत्रमिति। न त्याज्यम्—। निर्दिश्यमानत्वेन गृह्यत एवेत्यर्थः ॥ १५९ ॥

उक्तशास्त्रद्वयातिरिक्तानां येषां सहकारेण लभ्यस्यार्थस्य निर्दिश्यमानत्वमिष्यते तान्याह—अणुदिदित्यादिना। अणुदित्सवर्णस्य चाप्रत्यय इत्येतत्सूत्रसहकारलभ्यस्य निर्दिश्यमानत्वस्वीकाराद् "अस्य च्वौ" इत्यत्र अपदेन गृहीतानां दीर्घादीनामपि गङ्गीभवति मालीभवतीत्यादावीत्वं सिध्यति। एवं "जराया जरस्—" इत्यादौ स्वं रूपमिति सूत्रसहकारलब्धस्य लक्ष्यस्थजराशब्दस्य निर्दिश्यमानत्वम्। निर्जरसावित्यत्र जरशब्दस्य स्थानिवद्भावेन जराशब्दत्वबुद्धौ तस्य तथात्वम्। देवीमञ्चतीति देवद्र्यङ् इत्यत्र विश्वग्देवयोश्चेति सूत्रस्थदेववदाल्लिङ्गविशिष्टपरिभाषयोपस्थितस्य देवीत्यस्यापि निर्दिश्यमानत्वेनाद्र्यादेशः। किमः क इत्यत्र किंपदेन तन्मध्यपतितस्तद्ग्रहणेन गृह्यत इति न्यायसहकारेण साकच्कस्यापि किंशब्दस्य निर्दिश्यमानत्वाङ्गीकारात् कादेशः सिध्यति। लिङ्गसंयुतग्रहणम् = लिङ्गविशिष्टग्रहणम्। युज्यते तेन = स्थानेन युज्यत एवेत्यर्थः ॥ १६० ॥

अणुदित्सूत्रग्राहितानां निर्दिश्यमानत्वं ज्ञापकेन साधयति—तत्रेति। तत्र = उक्तपञ्चकमध्ये। अणुदित्सूत्रग्राहितानां निर्दिश्यमानत्वाभावे स्वयंभुवौ सुधियावित्यादौ "ओः सुपि" "एरनेकाचः—" इत्याभ्यां यणोऽप्राप्त्या तन्निषेधार्थकस्य न भूसुधियोरित्यस्य वैयर्थ्यापत्त्या तेनायमर्थो ज्ञाप्यत इति भावः ॥ १६१ ॥

अन्येषामपीति। स्वं रूपमित्यादीनां सहकारेण लब्धस्यापि निर्दिश्यमानत्वमित्यर्थस्येदं ज्ञापकमुपलक्षणम्; उपलक्षणविधया सूचकमित्यर्थः। जातिर्वाच्येति मते =

**नन्वेवमपि जराया जरसाविति विग्रहे जराजरसौ ।**
**इह पूर्वस्यापि जरस् स्यात् खलु निर्दिश्यमानत्वात् ॥१६३॥**

**पादः पदिति च पूर्वस्यापि भवेद् व्याघ्रपात्पद इतीह ।**
**इति चेदेतद्दोषापनुत्तये तत्परिष्क्रियते ॥१६४॥**

**षष्ठीप्रकृतिविशिष्टो ज्ञेयो निर्दिश्यमानशब्देन ।**
**वैशिष्ट्यञ्च स्वकृतोपस्थितिविषयत्वसत्त्वेन ॥ १६५ ॥**

**स्वकृतोपस्थितिविषयाव्यवहितपूर्वालघटिततया ।**
**उक्तविषयसमभिव्याहृतागमेनाप्यघटिततया ॥ १६६ ॥**

---

जातिरेव शब्दशक्येति मते । तद्भानम् = ह्रस्वाकारादिभिर्दीर्घाकारादीनां भानम् = उपस्थितिः । एवं च तत्पक्षे नाणुदित्सूत्रसहकारापेक्षा ॥ १६२ ॥

षष्ठीप्रकृतिजन्यप्राथमिकोपस्थितिविषयत्वं निर्दिश्यमानत्वमित्यङ्गीकारेऽतिव्याप्तिमाशङ्कते—नन्वेति । एवमपि—। उक्तनिर्वचनेन निर्जरसौ, अपिव्रदित्यादौ "निर्जर" "अपा" इत्यादिसमुदायस्य निर्दिश्यमानत्वाभावात्तत्तदादेशाभावस्य, जरपेत्यादेरेव तत्तदादेशस्य च साधनेऽपीत्यर्थः । **पूर्वस्यापीति** । ननु "जराया जरस्" इति सूत्रेऽजादिविभक्त्यव्यवहितपूर्वत्वस्य निर्दिश्यमानविशेषणत्वेन, पूर्वं जराशब्दस्य च विभक्त्यव्यवहितपूर्वत्वाभावेन नैष दोष इति चेन्न, प्रत्ययस्याङ्गांशे उत्थिताकाङ्क्षत्वेन तत्रैवान्वयौचित्यात् । एवं च, अजादिविभक्त्यव्यवहितपूर्वं यज्जराशब्दान्तमङ्गं तदवयवस्य जरापदीयनिर्दिश्यमानस्य जरस् इति सूत्रार्थाज्जराजरसावित्यत्र पूर्वजराशब्दस्यापि निर्दिश्यमानत्वेन जरसादेशापत्तिः स्यादेव ॥ १६३ ॥

उक्तस्थलेऽजादौ विभक्तावित्यस्य निर्दिश्यमानेऽन्वयेन कथंचिद्दोषवारणसंभवेऽपि पादः पदिति सूत्रे तादृशनिमित्ताभावाद् व्याघ्रपात्पद इत्यत्र पूर्वपाच्छब्दस्य पदादेशापत्तिर्दुर्वारेत्याह—**पादः पदिति । दोषापनुत्तये** = दोषनिवारणाय । **तत्** = निर्दिश्यमानत्वम् । **परिष्क्रियते** = तत्तद्दोषनिवारकसंबन्धादिनिवेशेन परिशोध्यत इत्यर्थः ॥१६४॥

**षष्ठीति** । षष्ठीप्रकृतिविशिष्टत्वं निर्दिश्यमानत्वम् । वैशिष्ट्यं च स्वजन्योपस्थितिविषयत्व-स्वजन्योपस्थितिविषयाव्यवहितपूर्ववर्णाघटितत्व-स्वजन्योपस्थितिविषयसमभिव्याहृतागमाघटितत्वैतत्त्रितयसंबन्धेनेत्यर्थः । आगमत्वस्यावयवत्वावच्छिन्नविधेयताश्रयत्वरूपत्वेन सनिरूपकतया प्रत्यासत्त्या चागमेनेत्यनेन स्वनिष्ठोद्देश्यतानिरूपितावयवत्वावच्छिन्नविधेयताश्रयेणेत्यर्थोऽनुसन्धेयः ॥ १६५, १६६ ॥

तत्रोदासीनानां व्यावृत्तय आद्यसंबन्धः ।
अपरश्च जराजरसावित्यादौ दोषविनिवृत्त्यै ॥ १६७ ॥

तत्राव्यवहितवचनाद् व्याघ्रपदः सुपद इत्युभयसिद्धिः ।
अपिबत्प्रभृतिष्वागमविशिष्टपरिवर्जनायान्त्यः ॥ १६८ ॥

तत्र च समभिव्याहृतवचनादभिषिञ्चतीह सनुमोऽपि ।
तत्त्वं सिद्धं समभिव्याहृतता पूर्वपरयोर्हि ॥ १६९ ॥

नन्वव्यवहितवचने ल्यप् स्नात्वाकालकीकृत्य ।
इह पूर्वक्त्वोऽपि स्यात् सजूः सजूर्भ्यामिहाद्यरुर्न स्यात् ॥ १७० ॥

---

क्रमेण तत्तन्निवेशफलान्याह—तत्रेत्यादिना । उदासीनानामिति । द्वितीयतृतीयसंबन्धोक्तवर्णाघटितत्वेन जरादिपदाद्घटादिशब्दानामपि निर्दिश्यमानताऽऽपत्तिवारणायेष्टसंग्रहाय च प्रथमः संबन्ध इत्यर्थः । अपरश्चेति । जराजरसावित्यत्र पूर्वजराशब्दस्य जराजरा, निर्जरेत्यादेः समुदायस्य च निर्दिश्यमानत्वापत्तिवारणाय द्वितीयसंबन्ध इत्यर्थः । तेषां षष्ठीप्रकृतिजन्योपस्थितिविषयजराशब्दाव्यवहितपूर्ववर्णघटितत्वेन व्यावृत्तिः ॥१६७॥

तत्रेति । द्वितीयसंबन्धेऽव्यवहितेति विशेषणनिवेशाद् व्याघ्रपाद् अस् सुपाद् अस इति स्थितौ पूर्वपाच्छब्दघटकदकारस्योत्तरपाच्छब्दावधिकपूर्वत्वेऽप्यवहितपूर्वत्वाभावात्तद्घटितस्यापि पूर्वपाच्छब्दस्य निर्दिश्यमानत्वमक्षतमिति तस्यापि पदादेशादिष्टरूपसिद्धिरित्यर्थः ॥ अपिबदिति । अपिबत् त्रितामित्यादिष्वागमविशिष्टस्य अपा त्रित् इत्यादेर्निर्दिश्यमानत्वाभावाय अन्त्यः = तृतीयसंबन्धः । तेन तत्रागमविशिष्टानां पिबत्रयाद्यादेशा न ॥ १६८ ॥

तत्र चेति । तृतीयसंबन्धे समभिव्याहृतेत्यागमविशेषणदानादभिषिञ्चतीत्यत्र नुमागमविशिष्टस्यापि सिच्धातोर्निर्दिश्यमानत्वं सिद्धम् । अन्यथा तन्मध्यपतितन्यायेन नुम्विशिष्टस्य सिच्पदबोध्यत्वेऽप्यागमघटितत्वेन निर्दिश्यमानत्वं न स्यात् । समभिव्याहृतेत्युक्तौ तु पूर्वपरयोरेव समभिव्याहृतत्वव्यवहारान्नुमस्तथात्वाभावात् तद्घटितस्य सिञ्च् इत्यस्य उपसर्गात्सुनोतीत्यादिषत्वविधायकसूत्रस्थसिच्पदीयमानत्वेन षत्वसिद्धिरिति भावः ॥ १६९ ॥

द्वितीयसंबन्धेऽव्यवहितेति पूर्ववर्णस्य विशेषणमुक्तं तत्र दोषमाशङ्कते—नन्विति । स्नात्वाकालक इति मयूरव्यंसकादित्वात्समासे ततोऽभूततद्भावार्थे च्वौ, च्व्यन्तस्य गतित्वात्कृत्वेत्यनेन सह कुगतिप्रादय इति समासेऽन्त्यस्यक्त्वः समासेऽनञ्पूर्वे क्त्वो ल्यबित्यनेन ल्यपि स्नात्वाकालकीकृत्येति भवति । अत्र पूर्वस्य क्त्व उत्तरक्त्वाऽ-

**इति चेत् पूर्वनिरुक्तौ द्वितीयसंबन्धमपनीय ।**
**तत्स्थाने विनिवेश्यः सम्बन्धोऽयं हि निर्दोषः ॥ १७१ ॥**

**स्वसमुद्भावितशाब्दज्ञानविषयताऽऽश्रयत्वरहितेन ।**
**तज्ज्ञानविषयसमभिव्याहृतवर्णेन खल्वघटितत्वम् ॥१७२॥**

**क्त्वान्तसमासस्य स्याल्ल्यबिति हि भाष्योक्तसूत्रार्थात् ।**
**शाब्दज्ञानविषयताऽन्त्यस्यैव क्त्वो न पूर्वस्य ॥१७३॥**

---

पेक्षयाऽव्यवहितपूर्ववर्णघटितत्वाभावेन निर्दिश्यमानत्वापत्तौ तस्यापि ल्यप् स्यात् । न च "स्नात्वाकालकादीनां प्रतिषेधो वक्तव्यः" इति भाष्यवार्तिकेन तत्र ल्यब् न भविष्यतीति वाच्यम् । "तदन्तनिर्देशात्सिद्धम्" इत्युक्त्या अनञ्पूर्वपदकस्य क्त्वान्तसमासस्य ल्यबित्यर्थाश्रयणेन तद्वार्तिकस्य प्रत्याख्यानात् । यद्यपि मयूरव्यंसकादिषु स्नात्वाकालक इति निपातनेनैव ल्यबभावः साधयितुं शक्यः । एवमनञ इति पर्युदासान्नञिवयुक्तन्यायेनाव्ययपूर्वपदात्परस्यक्त्वो ल्यबित्यर्थेनापि तत्र स साधयितुं शक्यः, तथापि सजूः सजूर्भ्यामित्याद्यर्थं द्वितीयसंबन्धपरिवर्तनस्यावश्यकत्वेनेदमपि तत्साध्यत्वेनोक्तमिति बोध्यम् । सजुषः सजुषौ सजूःसजुषौ ताभ्यां सजूः सजूर्भ्याम् । अत्रोत्तरसजूः शब्दाव्यवहितपूर्वषकारघटितत्वेनाद्य सजूः शब्दस्य निर्दिश्यमानत्वाभावे तदीयषकारस्यरुर्न स्यात् ॥ १७० ॥

समाधत्ते—इति चेदित्यादिना ॥ १७१ ॥

**स्वसमुद्भावितेति ।** स्वप्रयोज्यशाब्दबोधीयविषयतानाश्रयत्वसमानाधिकरणस्वप्रयोज्यशाब्दबोधीयविषयताश्रयसमभिव्याहृतत्ववद्वर्णाघटितत्वं वैशिष्ट्यनियामकद्वितीयसंबन्धत्वेन निवेश्यमित्यर्थः । अत्र समानाधिकरणान्तं समभिव्याहृतान्तस्य विशेषणं ज्ञेयम् ॥ १७२ ॥

एतत्संबन्धाश्रयणेनोक्तस्थलेषु यथा दोषनिवृत्तिस्तथाऽऽह—**क्त्वान्तेत्यादिना** पद्यत्रयेण । "समासेऽनञ्पूर्वे क्त्वो ल्यप्" (७।१।३७) इति सूत्रे भाष्ये "तदन्तनिर्देशात्सिद्धम्" इत्युक्त्या क्त्वान्तसमासावयवो यः क्त्वापदीयनिर्दिश्यमानस्तस्य ल्यबिति सूत्रार्थात् तत्र क्त्वापदप्रयोज्यविषयतायाः समासान्त्य एव क्त्वाप्रत्यये सत्त्वात् स्नात्वाकालकीकृत्येत्यत्र पूर्वक्त्वाघटकवर्णस्य तदनाश्रयत्वात्ताहशविषयताऽऽश्रयान्त्यक्त्वासमभिव्याहृतत्वाच्च पूर्वस्य क्त्वो न निर्दिश्यमानत्वं तेन तस्य ल्यब् न भवति ॥१७३॥

रुविधौ तु सजूस्त्वावच्छिन्ना खलु वर्तते विषयतैका ।
तस्मात्सजूः सजूर्भ्यामिह पूर्वस्यापि सजुषो रुः ॥१७४॥

पादः पदिति विधाने पात्त्वावच्छिन्नविषयताऽप्येका ।
तेन भवति पादः पद् व्याघ्रपदः सुपद इत्युभयोः ॥१७५॥

केचिद्वदन्ति वर्णग्रहणे नास्याः प्रवृत्तिरित्येवम् ।
इयङुवङोर्ङित्वेन ज्ञाप्यत इति तत्तु नादृत्यम् ॥१७६॥

---

रुविधाविति । ससजुषो रुरित्यत्र तु सजूःशब्दान्तस्य पदस्य रुरित्यर्थात् पदनिष्ठ-विशेष्यतानिरूपितायाः सजूःशब्दत्वावच्छिन्नप्रकारताऽऽख्यविषयताया एकस्या एव सत्त्वात्पूर्वसजूःशब्दस्यापि तदाश्रयत्वात्तस्यापि निर्दिश्यमानत्वेन रुः सिध्यति ॥ १७४ ॥

एवमेव पादः पदिति सूत्रेऽपीत्याह—पादः पदिति । "जराया जरस्—" इत्यस्य जराशब्दान्ताङ्गस्य जरस् इत्यर्थाज्जरा जरसावित्यत्र अन्त्यस्यैव शाब्दबोधविषयत्वं न तु पूर्वजराशब्दस्येति तस्य निर्दिश्यमानत्वाभावान्न जरस् । नन्वेवमपि पदद्वित्व-स्थलेऽतिशयिता जरा जरेति सकलजरास्वतिशयरूपार्थव्याप्तिविवक्षायां नित्यवीप्स-योरिति जरापदद्वित्वे प्रादिसमासे द्वितीयैकवचनेऽतिजराजरसं पश्येत्यत्राष्टमिकं द्वित्वं स्थाने द्विर्वचनमिति पक्षे जराजरेति समुदायस्य स्थानिवद्भावेन जरात्वाज्जरापदप्रयोज्य-शाब्दबोधीयविषयताश्रयत्वेन, पूर्वजराशब्दस्योक्तविधविषयताश्रयोत्तरजराशब्दावधिक-पूर्वत्वविशिष्टवर्णघटितत्वेऽपि तादृशविषयतानाश्रयत्वाभावात्तद्घटितेऽपि समुदाये वैशिष्ट्यनियामकद्वितीयसंबन्धसत्त्वेन निर्दिश्यमानत्वापत्त्या समुदायस्य जरसादेशापत्ति-रिति चेद् । "सर्वस्य द्वे" ( ८।१।१ ) इति सूत्रे भाष्ये, स्थाने द्विर्वचनपक्षनिरूपणा-नन्तरम्, अथवा पुनरस्तु द्विः प्रयोगो द्विर्वचनमिति पक्षमुपन्यस्य तत्र आम् पचसि पचसि देवदत्त ३ । आम एकान्तरमामन्त्रितमनन्तिके इत्येकान्तरता न प्राप्नोती त्यादिशङ्कासमाधानकरणवत्, अतिजराजरसमित्यादौ द्विः प्रयोगपक्षेऽन्त्यस्यैव जराशब्दस्य जरसादेशः प्राप्नोतीति शङ्कासमाधानयोरकरणाच्चादृशसमासानामनभिधानस्यैव भाष्यकाराभिप्रेतत्वावगमात् । वीप्साविषये ग्रामो ग्रामो रमणीयः, वृक्षं वृक्षं सिञ्चती-त्यादिवाक्ये व्यापकगुणक्रियादेर्विधेयत्वेन प्राधान्यदर्शनादुक्तसमासे तु तस्य विशेषणत्वेन तथा प्रतीत्यसंभवादेवंविधसमासानौचित्याच्चेति बोध्यम् ॥ १७५ ॥

प्राचीनमतमाशङ्क्य परिहरति—केचिदित्यादिना । अयमेषामाशयः—अचि श्नुधातुभ्रुवामिति सूत्रे इयङुवङोर्ङित्त्वं हि नियौनियः भ्रुवो भ्रुव इत्यादावन्त्यादेशार्थम् । अन्त्यादेशश्च य्वोरिति पदेन निर्दिश्यमानयोरिवर्णोवर्णयोरादेशविधानेन सिद्ध इति तद्

ष्योरिव धात्वादीनामपि निर्देशादच्चिश्वितीह विधौ ।
तेषामन्त्यादेशार्थतया ङित्वं हि चरितार्थम् ॥१७७॥
रिङ्रीङोर्ङित्वं तु स्पष्टार्थकमेव मन्तव्यम् ।
न तु तेनास्या वर्णग्रहणे नास्ति प्रवृत्तिरिति कल्प्यम् ॥ १७८ ॥
वृक्षस्तरतीत्यादौ विसर्जनीयस्य सत्वमनयैव ।
साधयता भाष्येण हि विरोध एतन्मते स्पष्टः ॥ १७९ ॥
अवयवषष्ठीविषयेऽप्यस्त्येवास्याः प्रवृत्तिरत एव ।
उपसर्गतकारस्य न सौ सत्वमतिस्य इत्यादौ ॥ १८० ॥

---

व्यर्थं सद् वर्णग्रहणे निर्दिश्यमानपरिभाषाया अप्रवृत्तिं ज्ञापयतीति । नाद्दत्यम् = नादरणीयम् ॥ १७६ ॥

अनादरे हेतुमाह—ष्योरिति । निर्देशात् = निर्दिश्यमानत्वात् । नन्वेवं जराया इति सूत्रेऽनुवृत्तेनाङ्गपदेन निर्जरेत्याद्यङ्गानामपि निर्दिश्यमानत्वं स्यात्ततश्च समुदायस्य जरसादेशापत्तिरिति चेन्न निर्दिश्यमानत्वलक्षणे षष्ठीप्रकृतिपदेन, अभेदसंबन्धावच्छिन्न-प्रकारतानिरूपितमुख्यविशेष्यत्वाप्रयोजकस्यैव शब्दस्य ग्रहणेनाङ्गशब्दस्य तु तादृशमुख्य-विशेष्यत्वप्रयोजकत्वेन तज्जन्योपस्थितिविषयस्य निर्दिश्यमानत्वाभावात् । विशेष्यत्वे मुख्यत्वम्, अभेदसंबन्धावच्छिन्नप्रकारत्वासामानाधिकरण्यरूपं बोध्यम् । धातुपदप्रयोज्य-विशेष्यतायास्तु तत्रानुवृत्ताङ्गपदप्रयोज्यविशेष्यतानिरूपिताभेदसंबन्धावच्छिन्नप्रकारता-समानाधिकरण्येन मुख्यत्वाभावान्निर्दिश्यमानत्वमुचितमेव ॥ १७७ ॥

नन्वङ्गाधिकारीये रीङृतः, रिङ्शयग्लिङ्क्षु इत्यत्र ऋकारस्यैव निर्दिश्यमानत्वात्त-दितरस्य निर्दिश्यमानत्वाभावादृकारस्यैवादेशे सिद्धे सर्वादेशाप्राप्त्या रीङो रिङश्च ङित्वं व्यर्थं सद्वर्णग्रहणेऽस्या अप्रवृत्तिज्ञापकमस्तु तत्राह—रिङ्रीङोरिति ॥ १७८ ॥

तत्कल्पने भाष्यविरोधं दर्शयति—वृक्ष इति । हयवरट्सूत्रे भाष्ये "अयोगवाहा-नामट्सूपदेशः कर्तव्यः" इत्युपक्रम्य तत्प्रयोजनविचारे "अलोऽन्त्यविधिश्च प्रयोजनम् । वृक्षस्तरति प्लक्षस्तरति अलोऽन्त्यस्य विधयो भवन्तीत्यन्त्यस्य सत्वं सिद्धं भवति" इत्युक्त्वा, "एतदपि नास्ति प्रयोजनं निर्दिश्यमानस्यादेशा भवन्तीति विसर्जनीयस्यैव भवि-ष्यन्ति" इत्युक्तम् । विसर्जनीयस्य स इत्यत्र पदस्येत्यनुवृत्त्या विसर्जनीयान्तस्य पदस्ये-त्यर्थेनात्र समुदायस्यादेशापत्तिर्ज्ञेया । वर्णग्रहणे निर्दिश्यमानपरिभाषाया अप्रवृत्तावे-तद्भाष्यविरोधः स्पष्टः ॥ १७९ ॥

षष्ठी स्थानेयोगेति स्थानपदघटितपरिभाषामूलकत्वादस्याः स्थानषष्ठीविषय एव प्रवृत्तिरिति भ्रमं निराकर्तुमाह—अवयवेति । तदोःसः सावित्यत्र त्यदादीनामित्यङ्गस्येति

निर्दिश्यमानयुष्मच्छब्दाद्यंशोऽस्ति यो मपर्यन्तः ।
तस्यैव च यूयाद्या न सोपसर्गातियुष्मादेः ॥ १८१ ॥
अनया च सहालोऽन्त्यस्येत्यादीनां समावेशः ।
न तु बाध्यबाधकत्वं परस्परेणाविरुद्धत्वात् ॥ १८२ ॥
उभयोश्च परार्थत्वान्नैवास्त्यङ्गाङ्गिभावोऽपि ।
सर्वश्चानेकालिति सूत्रे ह्यनयैव बोधितो ग्राह्यः ॥ १८३ ॥
स्थानकृतात्साम्यान्नतु चेतेत्यादौ गुणो यथैकारः ।
एवं प्रमाणसाम्याद्ध्वेदकारोऽप्यतः प्राह ॥ १८४ ॥

---

चानुवर्तते । तेन त्यदाद्यन्तं यदङ्गं तदवयवत्यदादिपदीयनिर्दिश्यमानस्यावयवयोस्तकारदकारयोः सो भवतीत्यर्थेन, अतिशयितः स्यः अतिस्य इत्यत्रत्यच्छब्दघटकतकारस्यैव सत्वं न त्वतिघटकतकारस्य । तत्रैतत्परिभाषानुपस्थितौ तु त्यदाद्यन्ताङ्गावयवयोस्तदोः स इत्यर्थेऽतिघटकतकारस्यापि सत्वमापद्येतेति भावः ॥ १८० ॥

अन्यत्राप्यवयवषष्ठीविषये प्रवृत्त्याऽनिष्टवारणं दर्शयति—**निर्दिश्यमानेति** । यूयाद्याः=यूयवयौ जसीत्यादय आदेशाः । अतियुष्मादेः=अतियुष्म् अत्यस्म् इत्यादिसमुदायस्य यूयादयो नेत्यर्थः ॥ १८१ ॥

ननु षष्ठी स्थानेयोगेत्येतत्सूत्रनिष्पन्नत्वेन तद्देशस्यैतत्परिभाषाऽपेक्षया "अलोऽन्त्यस्य", "आदेः परस्य" "अनेकाल्शित्सर्वस्य" इत्येषां परत्वात्तैरस्या बाधः स्यादत आह—**अनया चेति** । अलोऽन्त्यस्येत्यस्य विषये समः सुटीत्यादौ सम्पदीयनिर्दिश्यमानान्त्यस्य रुः, आदेः परस्येत्यस्य विषये उदः स्थास्तम्भोरित्यादौ स्थास्तम्भ्पदीयनिर्दिश्यमानादेः पूर्वसवर्णः, इत्यादिरीत्या समावेशसम्भवान्न बाध्यबाधकभावः । विरोधे हि बलीयसा दुर्बलस्य बाधदर्शनादिति भावः ॥ १८२ ॥

**उभयोश्चेति** । अलोऽन्त्यस्येत्यादेर्निर्दिश्यमानपरिभाषायाश्च परार्थत्वात्=विधिशास्त्रोपकारकत्वाद्, गुणानां च परार्थत्वादसंबन्धः समत्वात्स्यादिति न्यायेनाङ्गाङ्गिभावोपि नेति भावः । अङ्गाङ्गिभावे तु सार्वधातुकार्धधातुकयोरित्यादौ निर्दिश्यमानपरिभाषाया अप्रवृत्त्याऽलोऽन्त्यस्येत्यपि न प्रवर्तेत । ननु निर्दिश्यमानपरिभाषया जरा पाद् इत्यादीनामेवादेश इति बोध्यते, अनेकाल्शित्सर्वस्येत्यनया तु तदन्ताङ्गस्य सर्वस्येति तयोर्विरोधाद्बाध्यबाधकभावः स्यादत आह—**सर्वश्चेति** । एवं च तयोः समावेश एवेति भावः ॥ १८३ ॥

स्थानिनियामिकां निर्दिश्यमानपरिभाषां व्याख्यायादेशनियामिकां यत्रानेकेति परिभाषामवतारयति—**स्थानेति** । चेता स्तोतेत्यादौ गुणे कार्ये तालुस्थानजन्य-

## यत्रानेकविधमान्तर्यं तत्र स्थानत आन्तर्यं बलीयः ॥ १३ ॥

अन्तरतम इति योगं स्थानेऽन्तरतम इह प्रथममुक्त्वा ।
षष्ठी स्थाने योगेत्यस्मात्स्थाने इतीदमनुवर्त्य ॥ १८५ ॥
लभ्यः सति प्रसङ्गे सदृशतमादेश इत्यर्थः ।
स्थान इति च योगोऽन्यः स्थानेनेत्यर्थकं चैतत् ॥ १८६ ॥
तत्र स्थानेऽन्तरतम इत्यनुवर्त्यं पदद्वितयम् ।
पूर्वेणैव च सिद्धे नियमार्थं खलु वचनमेतत् ॥ १८७ ॥
स्थानेनैव सदृशतम आदेशः स्यात्सति प्रसङ्ग इति ।
तेनैवेदं सिद्धं स्थानकृतान्तर्यबलवत्त्वम् ॥ १८८ ॥
आन्तर्यं च बहुविधं नियामकं गम्यतेऽत्र तमपैव ।
अन्तर इत्युक्त्यैव हि सिद्धे ज्ञापयति वाक्यभेदं सः ॥ १८९ ॥

---

त्वादिरूपं स्थानप्रयुक्तसादृश्यमेव ग्राह्यं न तु मात्राकालिकत्वरूपं प्रमाणप्रयुक्तसादृश्यमिति विनिगमनाहेतोरभावादेकारौकारवदकारोऽपि पर्यायेण स्यादिति भावः ॥ १८४ ॥

परिभाषासिद्धिप्रकारमाह—अन्तरतम इत्यादिना ॥ १८५ ॥

लभ्यः—। यथास्थितन्यास इव संपादनीयः। स्थान इति। "स्थाने" इति द्वितीयं सूत्रवाक्यम्। तत्र स्थाने इति पदं विभक्तिविपरिणामेन स्थानेनेत्यर्थकं ज्ञेयमित्यर्थः ॥ १८६ ॥

तत्रेति। "स्थाने" इति द्वितीयवाक्ये, पूर्वसूत्रेऽनुवृत्तं स्थाने इति, तत्रत्यमन्तरतम इति पदद्वयमनुवर्तते। पूर्वेण अन्तरतम इति वाक्येनैव सर्वविधान्तरतम्यविशिष्टस्य विधेयत्वबोधनात्स्थानकृतान्तरतम्यवतस्तत्रान्तर्भावात्तस्यापि विधाने सिद्धे आरभ्यमाणमिदं नियमार्थम्। प्रसङ्गे सति जायमान आदेशः सति संभवे स्थानेनैव = कण्ठताल्वादिस्थानघटितधर्मेणैव सदृशतमो भवति न त्वर्थादिना सदृशतम इति। तन्मूलैवेयं परिभाषेत्यर्थः ॥ १८७, १८८ ॥

ननु स्थानेऽन्तरतम इत्येकमेव वाक्यमस्तु, तत्र स्थाने इत्यनुवर्त्य तस्य स्थानेनेत्यर्थं चाश्रित्य प्रसङ्गे सति स्थानेन सदृशतम आदेशो भवतीत्यर्थलाभसंभवाद्वाक्यभेदे किं प्रमाणं तत्राह—आन्तर्यंचेति। एकस्यैव वाक्यस्याश्रयणे हि केवलेनान्तरशब्देनैवोक्तोऽर्थो लब्धुं शक्यः। स्थाने सस्थान इति न्यासेऽपि समानं स्थानं यस्येत्यर्थकसस्थानशब्देन सिद्धेऽन्तरग्रहणसामर्थ्यात्स्थानकृतसादृश्येऽतिशयबोधनसंभवात्। तेन च

साद्दश्याश्रयवृत्तिस्तद्बोधकबोध्यतदितरावृत्तिः ।
यः साधारणधर्मस्तद्वत्त्वं ज्ञेयमन्तरतमत्वम् ॥ १६० ॥

तेन ऌकारस्य यणादेशो हि लकार एव न वकारः ।
केवलदन्तस्थानोद्भवत्वमत्र हि तथाविधो धर्मः ॥ १६१ ॥

स्थानत आन्तर्यमिको यणचीत्यादौ यकारादेः ।
अर्थकृतं चान्तर्यं पद्न्नोमास्प्रभृतिकेषु ॥ १९२ ॥

---

ऌाकृतिरित्यादौ दन्तमात्रस्थानजन्यत्वरूपसाद्दश्यातिशयेन ऌकारस्य लकार एव न तु दन्तस्थानजन्यत्वसाद्दश्येन वकार इति व्यवस्थासंभवात्तमब्ग्रहणं व्यर्थं सद् वाक्यभेदज्ञापनद्वारा बहुविधान्तर्यमादेशनियामकमित्यर्थज्ञापकम् । तस्मिन्नर्थे ज्ञापिते च प्रथमवाक्येन अर्थादिकृतसाद्दश्यवतां विधानलाभायान्तरग्रहणस्य चरितार्थतया तेनातिशयरूपार्थलाभासम्भवेन तदर्थं तमब्ग्रहणं चरितार्थमित्याशयः ॥ १८९ ॥

अन्तरतमपदस्य निष्कृष्टार्थमाह—**साद्दश्याश्रयेति** । आश्रयोऽनुयोगी । साद्दश्यानुयोगित्वेन विवक्षितो यो वर्णस्तत्र वर्तमानः, तद्बोधकयणादिपदबोध्या ये तदितरे साद्दश्यानुयोगिभिन्ना वर्णास्तेष्ववर्तमानो यः साद्दश्यप्रयोजकः साधारणधर्मस्तद्वत्त्वम् अन्तरतमत्वं ज्ञेयमित्यर्थः ॥ १९० ॥

उक्तनिष्कर्षफलमाह—**तेनेति** । ऌ आकृतिरिति स्थितौ ऌकारस्य यणादेशे कर्तव्ये ऌसद्दशो लकार इति ऌप्रतियोगिकसाद्दश्यानुयोगित्वेन विवक्षितो लकारस्तद्वृत्तिधर्मो दन्तमात्रस्थानजन्यत्वरूपः । स च लकारबोधयण्पदबोध्येषु लकारभिन्नेषु यवर इत्येतेषु न वर्तते, साद्दश्यप्रतियोग्यनुयोग्युभयवृत्तित्वेन साधारणश्च । अतस्तद्धर्मवत्त्वं लकारस्य ऌकारनिरूपितमन्तरतमत्वम् । वकारे ऌसाद्दश्यविवक्षायां तु वकारवृत्तिर्दन्तस्थानजन्यत्वरूपो धर्मो वकारबोधकयण्पदबोध्ये वकारभिन्ने लकारेऽपि वर्तते । तस्मात्तस्य न ऌनिरूपितान्तरतमत्वमिति भावः ॥ १९१ ॥

स्थानकृतम्, अर्थकृतम्, गुणकृतम्, प्रमाणकृतम्, अनान्तर्यकृतं चेति पञ्चविधं साद्दश्यं क्रमेणोदाहरणैः स्पष्टीकरोति । **स्थानत** इत्यादिना । **इको यणचीत्यादाविति** । इको यणचीत्यादिसूत्रविषये सुद्ध्युपास्य इत्यत्र तालुस्थानजन्यत्वरूपधर्मेणेकारस्य स्थानेऽन्तरतमो यकार एवेत्यादिरीत्या स्थानघटितधर्मेणान्तरतमत्वमादेशनियामकं ज्ञेयमित्यर्थः । एवं चेता स्तोतेत्यादावपि स्थानकृतान्तरतम्यस्यैवाश्रयणेन, इकारस्य गुण एकार एव उकारस्य च ओकार एव नत्वकार इति बोध्यम् ॥ १९२ ॥

अन्तरतम इति सप्तम्यन्तः पाठो यदाऽभिमतः ।
पत्प्रभृतय आदेशाः सदृशतमस्थानिनामिति तदाऽर्थः ॥ १९३ ॥
स्थान्यर्थोक्तिसमर्थस्यैवादेशत्वमिति नियमात् ।
स्वसमानार्थानां ते पादादीनां समानवर्णानाम् ॥ १९४ ॥
सिद्धान्ते प्रथमान्तः पाठः शब्दान्तराणि च पदाद्याः ।
इति निश्चये तु तृज्वत्क्रोष्टुरिह ज्ञेयमर्थसादृश्यम् ॥ १९५ ॥

---

पद्दन्न इत्यादिष्वर्थकृतमान्तर्यमुपपादयति—अन्तरतम इत्यादिना । स्थानेऽन्तरतम उरण् रपर इति संहितापाठोऽस्ति, तत्र स्थानेऽन्तरतमे इति सप्तम्यन्तपदच्छेदपक्षोऽपि भाष्ये प्रदर्शितः । तत्पक्षे प्रसङ्गे सति सदृशतमे स्थानिन्यादेशः स्यादिति सूत्रार्थात्, पद्दन्न इति सूत्रे च स्थानिनिर्देशाभावाच्छसाद्यव्यवहितपूर्वेषां पदादय आदेशा इति सामान्यतोऽर्थेऽवगते कस्य स्थाने क आदेश इति विशेषजिज्ञासायां, यदर्थाभिधानसमर्थो यः स तस्यादेश इति अर्थकृतसादृश्येन व्यवस्था भवति । तत्रापि पच्छब्दसमानार्थाः पादाङ्घ्रिचरणशब्दास्तन्मध्ये कतमस्य पदादेश इति विचारे पदादेशः स्वसदृशतमस्य, ददादेशःस्वसदृशतमस्येत्येवं क्रमेणार्थः । तत्र पूर्वोक्तान्तरतम्यलक्षणानुसारेण पादशब्द एव चरणवाचकत्वे सति पकारदकारघटितत्वरूपो धर्म आन्तरतम्यप्रयोजकोऽस्तीति तस्यैव पदादेशः, एवं दन्तवाचकत्वे सति दकारतकारघटितत्वरूपधर्मस्य दन्तशब्द एव सत्त्वाद्दन्तशब्दस्यैव ददादेश इत्येवं व्यवस्था सिध्यतीति सिद्धान्त इति भावः ॥ १९३, १९४ ॥

सप्तम्यन्तपाठपक्षे, इको यणचीत्यनेन यकाराद्यादेशो द्विमात्रन्यूनकालिकत्वविशिष्टताल्वादिस्थानजन्यत्वरूपान्तरतम्याद् दध्यत्रेत्यादौ ह्रस्वस्यैव स्यान्न तु कुमार्यर्थमित्यादौ दीर्घस्येत्यादिदूषणान्युद्भाव्य "स्थानेऽन्तरतमः" (१।१।५०) इति सूत्रे भाष्यकृता स पक्षः परित्यक्तः, प्रथमान्तपाठ एव सिद्धान्तितः । अतः सिद्धान्तेऽर्थकृत सादृश्यस्य पादादयो नोदाहरणानि । पदादयस्तु शसादि विषयाणि प्रकृत्यन्तराण्येव न त्वादेशाः । पद्दन्न इति सूत्रं तु स्वादिप्रत्ययपञ्चके तेषां प्रयोगाभाव बोधनार्थमिति भावः । तृज्वदिति । अनेन सूत्रेण तृजन्तरूपातिदेशे शृगालवाचकस्य क्रोष्टुशब्दस्य स्थाने तदर्थवाचकत्वेन सदृशतमः कोष्टृशब्द एवादेश इति भावः । न चात्र सूत्रे स्थानषष्ठ्यभावात्कथं स्थानेऽन्तरतम इत्यस्य प्रवृत्तिरिति वाच्यम् । रूपातिदेशस्थले एकस्मिन्धर्मिणि विद्यमानेऽपरधर्म्यतिदेशे द्वयोः श्रवणापत्तेरेकनिवृत्तेरावश्यकत्वेन गत्यन्तराभावात्स्थान षष्ठीकल्पनेन क्रोष्टुशब्दस्य स्थाने तृजन्तादेश इत्यर्थलाभात्स्थानेऽन्तरतम इति परिभाषोपस्थितेर्निर्बाधत्वात् ॥ १९५ ॥

गुणतः साम्यं बाह्यप्रयत्नकृतमस्ति वाग्घरिप्रभृतौ ।
अदसोऽसेरित्यादौ मात्रात्मककालमानतः साम्यम् ॥ १९६ ॥
कर्त्ता मार्ष्टीत्यादौ चान्तर्यभावरूपमान्तर्यम् ।
तेन ऋकारस्य गुणोऽद् वृद्धिश्चाऽऽत् तदनु रपरत्वम् ॥ १९७ ॥
प्रादूहोढेत्येषा ननु वृद्धिः प्रोढवानिति पदेऽपि ।
ऊढवदन्तर्वर्तिन्यूढे कस्मान्न तत्राह ॥ १९८ ॥

## अर्थवद्ग्रहणे नानर्थकस्य ॥ १४ ॥

सम्भवति ह्यर्थवतो ग्रहणे नानर्थकग्रहणम् ।
तेनार्थवदूढपदे वृद्धिर्नानर्थकेऽर्थवद्घटके ॥ १९९ ॥

---

**मात्रात्मकेति** । मात्रारूपकाल प्रमाणकृतं सादृश्यमित्यर्थः । तेन, अमुम् अदमुयङ् इत्यादौ ह्रस्वव्यञ्जनयोर्द्विमात्रन्यूनकालिकत्वसादृश्याद् ह्रस्व उकारः । अम् इत्यादौ च द्विमात्रस्य दीर्घस्य स्थाने तादृशो दीर्घ ऊकार इति व्यवस्था सिद्ध्यति ॥ १९६ ॥

**आन्तर्याभावरूपमिति** । अनान्तर्यमेवैतयोरान्तर्यमिति भाष्योक्तेः स्थान्यादेशयोः सदृशतमासंभवोऽप्यान्तर्यरूपो मन्यते, तेन कर्तेत्यादौ ऋकारस्य गुणः, अद् = अकारः । मार्ष्टीत्यादौ च वृद्धिः आद् = आकारः । तदनु = गुणवृद्धिसंज्ञकाकाराकोराभिनिर्वृत्त्युत्तरमुरण् रपर इति रपरत्वम् । अयमपि पक्षो भाष्यसम्मतः । गुणवृद्धी अभिनिष्पद्यमाने एव रपरे भवत इति पक्षे तु मूर्धस्थानिकरेफद्वारैवान्तरतम्यमिति तत्रास्य नोपयोगः ॥ १९७ ॥

एवं स्थान्यादेशभावे व्यवस्थापिते निमित्तनिमित्तिभावव्यवस्थापनस्य क्रमप्राप्तत्वात् पूर्वपरिभाषायामर्थकृतान्तरतम्यस्य श्रुतत्वेन तत्प्रसङ्गादर्थवद्ग्रहणपरिभाषामवतारयति—प्रादूहोढेति । 'प्रादूहोढोढ्येषैष्येषु' इति वार्तिकविहिता वृद्धिर्यथा प्रौढ इत्यत्रोढ शब्दे परे भवति, तथा प्रोढवान् इत्यत्रापि वहधातोः क्तवतुप्रत्यये ऊढवच्छब्दान्तर्वर्तिनि ऊढशब्दे परे कस्मान्न भवति । ऊढेत्यानुपूर्व्यास्तत्रापि सत्त्वाद्भवितव्यमेव वृद्ध्येति भावः ॥ १९८ ॥

**सम्भवतीति** । सम्भवतीति पदं परिभाषायामध्याह्रियते, तेनार्थवद्ग्रहणे सम्भवति, अनर्थकस्य ग्रहणं नेत्यर्थः । तेनात्वसन्तस्येति सूत्रेऽर्थवतोऽतोरसम्भवादनर्थकस्यैव ग्रहणम् । ऊढपदे = ऊढशब्दे । अर्थवद्घटक इति । अर्थवतः क्तवत्वन्तस्योढवच्छब्दस्यैकदेशेऽत एवानार्थके ऊढेत्यस्मिन्न वृद्धिरित्यर्थः ॥ १९९ ॥

अस्ति हि शब्दस्यार्थे शब्देऽपि च खण्डशः शक्तिः ।
उभयप्रतीतिसत्त्वाद्व्यवहारस्यापि तुल्यत्वात् ॥ २०० ॥
लोके चानयनादेः शब्दे बाधाद्विशेष्यताऽर्थस्य ।
शब्दस्य विशेषणता घटपदवाच्यार्थमानयेत्येवम् ॥२०१॥
शास्त्रे त्वर्थे कार्यासंभवतस्तद्विशेष्यता शब्दे ।
अर्थे च विशेषणता नृपवाचकराजशब्दतो यदित्येवम् ॥२०२॥
तेनार्थविशिष्टस्य ग्रहणं सिद्धं ततश्च फलितेयम् ।
शास्त्रीयोऽप्यर्थोऽत्रान्वयतदभावोपकल्पितो ग्राह्यः ॥२०३॥

---

यद्यपीयं परिभाषा वक्ष्यमाणरीत्या स्वं रूपमिति सूत्राल्लभ्यते, तथापि तत्सूत्रस्य भाष्यकृता प्रत्याख्यातत्वात्तदुपदर्शितां परिभाषासाधकयुक्तिमाह—अस्ति हीति । हिशब्देनास्यार्थस्य लोकतन्त्रप्रसिद्धत्वं द्योतयति । खण्डशः शक्तिरिति । घटमानयेति वाक्यात् कम्बुग्रीवादिमतोऽर्थस्य घटमुच्चारयेत्यतश्च घटशब्दस्य प्रतीतिर्जायत इति सुविदितं सर्वेषाम् । तत्र अर्थे शक्तिः शब्दे तु लक्षणेत्यस्यां कल्पनायां विनिगमकं नास्ति, व्यवहारस्य तुल्यत्वात् । 'न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते । अनुविद्धमिव ज्ञानं सर्वं शब्देन भासते ।' इति वचनानुसारेणार्थप्रतीतौ शब्दप्रतीतेरवश्यंभावाच, लाघवादुभयत्र खण्डशः शक्तिः स्वीक्रियत इति भावः ॥ २०० ॥

उक्तरीत्या पदशक्त्ययोः शब्दार्थयोर्यथासम्भवं विशेष्यविशेषणभावेन बोधप्रकारमाह—लोके चेति । लोके घटमानयेत्युक्ते घटशब्दस्यानयनक्रियाकर्मत्वासंभवाद् घटशब्दवाच्यमर्थमानयेत्येवमर्थ एव विशेष्यतया भासते शब्दश्च तद्विशेषणतयेत्यर्थः ॥ २०१ ॥

शास्त्रे त्विति । व्याकरणे 'राज्ञो यत्' 'अग्नेर्ढक्' इत्यादौ प्रजापालकभौतिकपिण्डात्मकराजपदार्थस्य, अङ्गारात्मकाग्निपदार्थस्य च प्रातिपदिकेन सहाभेदान्वयासंभवात् प्रत्ययनिरूपितपौर्वापर्यासंभवाच्च शब्दोऽर्थं प्रति विशेष्यतयाऽर्थश्च तं प्रति विशेष्यतया भासते । तेन नृपवाचकराजशब्दादपत्यार्थे यत्प्रत्ययः, वह्निवाचकाग्निशब्दाद्देवतार्थे ढगित्यादि-बोधः सम्पद्यत इति भावः ॥ २०२ ॥

तेनेति—। उक्तरीत्या शास्त्रेऽर्थस्य शब्दं प्रति विशेषणतयैव भानेन, सति संभवेऽर्थविशिष्टस्यैव शब्दस्य ग्रहणं = शास्त्रस्थपदैर्बोधनं सिद्धम् । तत एव चेयं परिभाषा फलितेत्यर्थः । शब्देऽर्थवैशिष्ट्यं च स्वविषयकबोधजनकत्वेन तात्पर्यविषय-

लस्येति सूत्रभाष्ये वर्णग्रहणेषु नेयमित्युक्तम् ।
तेनेयमानुपूर्वीप्रकारकज्ञानकृद् ग्रहण एव ॥२०४।

स्वं रूपमिति च सूत्रे स्वपदेनार्थो विवक्षितः स्वीयः ।
रूपपदेन च शब्दस्वरूपमिति सूत्रसिद्धेयम् ॥२०५॥

---

त्वसंबन्धेन बोध्यम् । ननु लोकेऽर्थबोधजनकत्वं वाक्यस्य यदस्यैव वा न तु पदैकदेशस्य । ततश्च विभक्त्यन्तोढपदैकदेशस्योढशब्दस्याप्यूढवच्छब्दैकदेशोढशब्दवदनर्थकत्वमेव । एवं चानयोक्तव्यवस्था न सिध्येदत आह—**शास्त्रीयोऽपीति** । शास्त्रप्रक्रियानिर्वाहाय शास्त्रकारकल्पितान्वयव्यतिरेककल्पितः प्रकृतिप्रत्ययादीनां शास्त्रीयोऽप्यर्थोऽत्र गृह्यते । तेन प्रौढ इत्यत्रोढशब्दस्य वहनकर्मत्वरूपोऽर्थोऽस्त्येवेति तस्याप्यर्थवत्त्वम् । अपिशब्देन लौकिकोऽपि । तत्फलं पदनिमित्तककार्येषु द्रष्टव्यम् ॥ २०३ ॥

**लस्येति** । लस्य ( ३।४।७७ ) इति सूत्रे भाष्ये लुनाति, लभते इत्यादावपि लकारस्य तिबादेशमाशङ्क्य 'अर्थवद्ग्रहणात्सिद्धम्' इति वार्तिकेन प्रथमं समाधाय 'अर्थवद्ग्रहणात्सिद्धमिति चेन्न, वर्णग्रहणेषु । अर्थवद्ग्रहणात्सिद्धमिति चेत् तन्न । किं कारणम् ? वर्णग्रहणमिदम् । न चैतद्वर्णग्रहणेषु भवत्यर्थवद्ग्रहणे नानर्थकस्येति' इत्युक्तम् । अत एवेयं परिभाषा विशिष्टरूपोपादानविषयेत्याहुर्वृत्तिकारादयो वृद्धाः । विशिष्टरूपोपादानं च, आनुपूर्व्यवच्छिन्नविषयताप्रयोजकपदोच्चारणम् । यथा प्रादूहोढेत्यत्र ऊकारोत्तरढकारोत्तराकारत्वरूपानुपूर्वीप्रकारकबोधजनकं पदमूढेति तत्रेयं प्रवर्तत इति भावः ॥ २०४ ॥

नन्वस्या युक्तिसिद्धत्वे, गोतो णिदित्यादौ गोपदेनैक एवार्थ उपस्थापयितुं शक्यः । सकृदुच्चरितः शब्दः सकृदेवार्थं गमयतीति न्यायात्, ततश्च तत्सूत्रस्य पशूपस्थापकगोशब्दे प्रवृत्तौ पृथिव्युपस्थापकगोशब्दे प्रवृत्तिर्न स्यात्, अतः प्रतिशक्यतावच्छेदकं सूत्रावृत्तिः कर्तव्येति गौरवम् । एवमेव नानार्थकशब्दस्थले सर्वत्र गौरवम् । सामान्यतोऽर्थवाचकाद् गोशब्दादित्यर्थस्तु न वक्तुं शक्यः । अर्थवत्त्वेन रूपेणार्थे गोपदशक्तेरभावादत आह—**स्वं रूपमिति** । अत्रात्मीयवाचिना स्वपदेन शब्दजन्यबोधविषयत्वेन तात्पर्यविषयीभूतोऽर्थत्वावच्छिन्नः सर्वोऽप्यर्थो गृह्यते । रूपपदेन च तत्तदानुपूर्वीविशिष्टं शब्दस्वरूपम् । तदुभयं शब्दस्य संज्ञीति सूत्रार्थः । तेन सर्वेष्वर्थेषु प्रयुज्यमानाद् गोशब्दात्परस्य सर्वनामस्थानस्य णिद्वद्भाव एकेनैव सूत्रेण सिद्ध्यतीत्यावृत्तिक्लेशो नेति लाघवम् । अत इयं स्वं रूपमिति सूत्रमूलैव । तत्प्रत्याख्यानपरं भाष्यन्त्वेकदेश्युक्तिरिति भावः ॥ २०५ ॥

ननु चामहानपि महान्संपन्नश्चन्द्रमा महद्भूतः ।
अत्रान्महत इति स्याच्च्व्यन्तमहत आत्वमत आह ॥२०६॥

## गौणमुख्ययोर्मुख्ये कार्यसंप्रत्ययः ॥ १५ ॥

स्वार्थसमानाधिकरणगुणदर्शनतो य आरोपः ।
स्वार्थप्रकारकस्तद्विशेष्यताश्रय उदीर्यते गौणः ॥२०७॥

गोगतजाड्यादिगुणान् ज्ञात्वा संस्कारहीनवाहीके ।
गोत्वारोपस्तत्र च वाहीकोऽर्थो विशेष्य इति गौणः ॥२०८॥

---

अथर्वंत्परिभाषायामर्थपदेन गौणो मुख्यो वाऽर्थो गृह्यत इत्याशङ्कायां तन्निर्णयजनकत्वेन, उपोद्घातसंगत्या गौणमुख्ययोरिति परिभाषामवतारयति—**ननु चेति** । **अमहानपीति** । वस्तुतः कलङ्कित्वेनामहानपि चन्द्रो भगवता महेश्वरेण शिरसि धारितत्वान्महान् सम्पन्नः, आरोपितमहत्त्वविशिष्टो जात इत्यभूततद्भावार्थे कृभ्वस्तियोगे सम्पद्यकर्तरि च्विरिति सूत्रेण च्विप्रत्यये च्व्यन्तमहच्छब्दस्य भूतशब्देन सह कर्मधारये महद्भूत इति भवति । तत्र च्व्यन्तमहच्छब्दस्याप्यर्थवत्त्वात् 'आन्महतः समानाधिकरणजातीययो' रित्यनेन समानाधिकरणे भूतशब्दे उत्तरपदे परे आकारादेशः स्यादिति भावः ॥ २०६ ॥

परिभाषायां गौणपदं गुणादागतो गौण इत्यर्थेऽण्प्रत्ययेन निष्पन्नम् । गुणपदं गुणज्ञानपरम् । आगत इत्यस्य च ज्ञात इत्यर्थः । तेन गुणज्ञानप्रयोज्यारोपात्मक ज्ञानविषय इत्यर्थः पर्यवसन्नस्तमेव विशदीकरोति—**स्वार्थेत्यादिना** । स्वार्थः स्वशक्यतावच्छेदको धर्मो गोत्वादिः । तत्समानाधिकरणानां जाड्यादिगुणानां शक्यार्थातिरिक्ते वाहीकादौ ज्ञानेन क्रियमाणः, स्वार्थप्रकारकः = स्वशक्यतावच्छेदकगोत्वादिप्रकारको य आरोपो गौर्वाहीक इत्यादिरूपः तदीयविशेष्यताश्रयो वाहीकादिर्गवादिपदस्य गौणोऽर्थ इति भावः ॥ २०७ ॥

उक्तलक्षणस्य लक्ष्ये समन्वयं दर्शयति—**गोगतेति** । गोगताः, गोत्वसमानाधिकरणा ये जाड्यादिगुणास्तान् संस्कारहीनवाहीके = संस्काररहिते कस्मिंश्चद्भारवाहमनुष्ये ज्ञात्वा वाहीको गौरिति गोत्वारोपः । तत्र गोत्वं प्रकारत्वेन भासते, आरोपाधिष्ठानभूतो वाहीकश्च विशेष्यत्वेनेति स गोपदस्य गौणोऽर्थ इति भावः ॥ २०८ ॥

एवं कलङ्किनि विधौ महद्भूतगुणं विशिष्टमान्यत्वम् ।
दृष्ट्वा महत्त्वमारोप्यत इति चन्द्रोऽत्र गौणोऽर्थः ॥ २०९ ॥
रामादिकं च नामाप्रसिद्धपुरुषस्य तद्गुणारोपात् ।
पुत्रादौ रामत्वाद्यारोपेणेति सोऽपि गौणोऽर्थः ॥ २१० ॥
पूर्वत्र गुणज्ञानं वास्तवमपरत्र चाहार्यम् ।
गुणबुद्धिकृतारोपे विशेष्यता तूभयत्र समा ॥ २११ ॥
मुखमिव मुख्यः प्रथमः शक्योऽर्थो गौणमुख्ययोर्मध्ये ।
मुख्यार्थ एव शब्दे कार्याकार्यप्रवृत्तिरित्यर्थः ॥ २१२ ॥

---

महद्भूतश्चन्द्रमा इत्यत्र महच्छब्दार्थस्य गौणत्वं दर्शयति—**एवमिति** । कलङ्किनीति वस्तुतो महत्त्वाभावसूचकं हेतुगर्भं विशेषणम् । **महद्भूतगुणम्** = महन्निष्ठं गुणं महत्त्वसमानाधिकरणं गुणमिति यावत् । **विशिष्टमान्यत्वम्** = विशिष्टपुरुषादरणीयत्वम् ॥ २०९ ॥

आधुनिकः पित्रादिसंकेतित रामादिपदबोध्योऽप्यर्थो गौण एवेत्याह—**रामादिकं चेति** । अप्रसिद्धस्य यस्य कस्यचिन्मनुष्यस्य पित्रादिना रामकृष्णादि नाम क्रियते, तदपि तद्गुणारोपात् = तेषां विश्वप्रसिद्धानां श्रीरामादीनां ये गुणाः पित्राज्ञापालनादयस्तेषां स्वपुत्रे आरोपात्तन्मूलकरामत्वाद्यारोपेणैव क्रियते । अतस्तत्र रामत्वादिप्रकारकारोपविशेष्यः स मनुष्यो रामादिपदस्य गौणार्थ एवेत्यर्थः ॥ २१० ॥

गौर्वाहीक इत्यादिप्रसिद्धोदाहरणादत्र किंचिद्विशेषसत्त्वेऽपि गौणलक्षणसमन्वयोऽस्त्येवेत्याह—**पूर्वत्रेति** । गौर्वाहीक इत्यादौ जाड्यादिगुणज्ञानं वास्तवम् । तद्विषयस्य जाड्यादेर्वाहीकादौ सत्त्वात् । अपरत्र = अप्रसिद्धे पुत्रादौ तु पित्राज्ञापालनाद्यनेकसद्गुणराशिज्ञानमाहार्यम् = बाधकालिकमिच्छाजन्यम् । एतावति विशेषे सत्यपि गुणप्रतिसन्धानप्रयुक्तारोपे विशेष्यता उभयत्र तुल्यैवेति सोऽपि गौण एवेत्यर्थः ॥ २११ ॥

एवं गौणपदार्थं निरूप्य मुख्यपदार्थकथनपूर्वकं परिभाषावाक्यार्थमाह—**मुखमिवेति** । मुखमिव मुख्यः प्रधानः । शाखादिभ्यो य इति इवार्थे यप्रत्ययः । प्राधान्यं चास्येतरार्थानपेक्षत्वात्, लाक्षणिकाद्यर्थेष्वपि प्रथममुपस्थितेश्चेति बोध्यम् । कार्यप्रवृत्तिः कार्या = कर्तव्येत्यर्थः ॥ २१२ ॥

**गौणपदेनोक्तार्थद्वयमेव न तूपसर्जनपदार्थः ।**
**तेन महाबाहुरिहोपसर्जनत्वेऽपि महत आद्भवति ॥ २१३ ॥**
**प्रातिपदिककार्येऽयं न न्यायः किन्तु पदकार्ये ।**
**यत्र निगदितं सूत्रे विशिष्टरूपावबोधजनकपदम् ॥ २१४ ॥**
**सिद्धपदस्य पदान्तरसम्बन्धे सति हि गौणताज्ञानम् ।**
**न तु पदसिद्धेः प्रागिति न बाध्यते पूर्वजातसंस्कारः ॥ २१५ ॥**
**प्रातिपदिकपदमत इञ्सूत्रे नोक्तस्वरूपबोधकरम् ।**
**तेन श्वशुरसमस्यापत्यं श्वाशुरिरितीञ् सिद्धः ॥ २१६ ॥**

---

**गौणपदेनेति ।** परिभाषायां गौणशब्देन, अप्रधानीभूतस्य सर्वस्य न ग्रहणम्, किन्तूक्तार्थद्वयस्यैव । एवं च इतरार्थनिष्ठविशेष्यतानिरूपितप्रकारताप्रयोजकरूपस्योपसर्जनस्यात्र गौणपदेनाग्रहणान्महान्तौ बाहू यस्य स महाबाहुरित्यत्रोपसर्जनस्यापि महच्छब्दस्य आन्महत इत्याकारोऽन्तादेशः सिध्यति । परिभाषेन्दुशेखरे "तेन प्रियत्रयाणामित्यादौ त्रयादेशो भवत्येव" इत्युक्तिस्त्वापाततः । गौणमुख्यन्यायस्य पदकार्यविषयताया वक्ष्यमाणत्वात् त्रयादेशस्य तु विभक्तिनिमित्तककार्यत्वेन पदकार्यत्वाभावात् ॥ २१३ ॥

**पदकार्ये इति ।** पदकार्यत्वं च विभक्त्यनिमित्तकत्वे सति स्त्रीत्वानिमित्तकत्वमित्यग्रे निरूपयिष्यते । **यत्रेति** पदकार्येऽपि न सर्वत्र, किन्तु यत्र = यत्पदकार्यविधायकसूत्रे विशिष्टरूपावबोधजनकम् = साक्षादानुपूर्व्यवच्छिन्नविषयताप्रयोजकं पदं निगदितम् = उच्चारितं वर्तते तत्रैवेत्यर्थः ॥ २१४ ॥

तत्र हेतुमाह—**सिद्धपदस्येति ।** परिनिष्ठितस्य पदस्यार्थद्वारकपदान्तरसंबन्धे सत्येव गौणार्थताप्रतीतिर्भवति । यथा गौर्वाहीक इत्यादौ समानाधिकरणपदबोध्ययोर्गोवाहीकयोरभेदस्य बाधितत्वात्तात्पर्यानुपपत्तिरूपलक्षणाबीजसत्त्वेन गौणलाक्षणिकार्थज्ञानं भवति । न तु पदसिद्धेः पूर्वं प्रातिपदिकसंस्कारवेलायाम् । अतोऽन्तरङ्गत्वात्पूर्वं जातो यः संस्कारस्तत्तत्कार्यप्रवृत्तिरूपः स गौणमुख्यन्यायेन न बाध्यत इत्यर्थः ॥ २१५ ॥

यत्र निगदितमित्यादिनाऽऽनुपूर्व्यवच्छिन्नविषयताप्रयोजकपदोपादान एवायं न्यायः प्रवर्तत इत्युक्तं तत्फलमाह—**प्रातिपदिकपदमित्यादिना ।** 'अत इञ्' इति सूत्रेऽनुवृत्तं प्रातिपदिकपदं हि संकेतसम्बन्धेन प्रातिपदिकपदवत्त्वावच्छिन्ने शक्तम् । ननु प्रातिपदिकेत्यानुपूर्व्यवच्छिन्नबोधकम् । तेन श्वशुरसदृशस्यापत्यमित्यत्र श्वशुरशब्दस्य गौणार्थकत्वेऽपि इञ्प्रत्ययो भवति, तेन श्वाशुरिरिति सिध्यति । ननु प्रातिपदिकपद-

नन्वोत्सूत्रे भाष्येच्व्यन्तनिपातस्य गोऽभवदितीह ।
एतन्न्यायेनैव प्रगृह्यसंज्ञानिवारणं प्रोक्तम् ॥ २१७ ॥
न च तत्सूत्रेऽस्तीदृक्पदमिति चेन्नैवमस्ति तत्रापि ।
चाद्यन्यतमत्वेनोपस्थितिजनकं निपातपदम् ॥ २१८ ॥
देवद्वन्द्वार्थस्याग्नीषोमाविति पदस्य गौणेऽर्थे ।
माणवकादौ वृत्तावपीत्वषत्वे भवत एव ॥ २१९ ॥
समुदायस्य तथात्वेऽप्यवयवयोर्गौणताविरहात् ।
गौणार्थयोस्तु निगदितपदयोर्द्वन्द्वे न ते भवतः ॥ २२० ॥

---

निष्ठविशेष्यतायाः क्रमविशेषविशिष्टपकारादिवर्णनिचयात्मकप्रातिपदिकत्वरूपानुपूर्व्या साक्षादवच्छिन्नत्वेन प्रातिपदिकपदवत्त्वावच्छिन्नमुख्यविशेष्यताया अपि परम्परयाऽऽनुपूर्व्यवच्छिन्नत्वात्प्रातिपदिकपदमपि तथाविधमेवेति चेद् । अनानुपूर्व्या साक्षादवच्छिन्नमुख्यविशेष्यताप्रयोजकपदोच्चारण एवैतन्न्यायप्रवृत्तेरङ्गीकारात् । अत्र चाद्यविषयताया मुख्यत्वाभावादन्त्यायाश्च साक्षादानुपूर्व्यवच्छिन्नत्वाभावादिति बोध्यम् ॥ २१६ ॥

उक्तार्थे भाष्यविरोधमाशङ्कते—नन्विति । ओत् ( १।१।२५ ) इति सूत्रे भाष्ये अगौः गौः समपद्यत गोऽभवत्, इत्यत्र च्व्यन्तस्य गोशब्दस्य निपातत्वात्प्रगृह्यसंज्ञामाशङ्क्य गौणमुख्यन्यायेन समाधानं कृतम् ॥ २१७ ॥

नचेति । तस्मिन् ओदितिसूत्रे ईदृक आनुपूर्व्या साक्षादवच्छिन्नमुख्यविशेष्यताप्रयोजकं पदं नास्ति । प्रातिपदिकपदवन्निपातपदस्यापि तथाविधत्वाभावात् । ततश्चोक्तरीत्या तत्रैतन्न्यायप्रवृत्तेरयुक्तत्वाद्भाष्योक्तप्रवृत्त्यसङ्गतिरिति भावः । समाधत्ते-नैवमिति—। चाद्यन्यतमत्वेनेति । ओत्सूत्रभाष्यप्रामाण्येन निपातपदस्य निपातत्वोपलक्षितचाद्यन्यतमत्वावच्छिन्ने शक्तिः कल्प्यते । तेन निपातपदप्रयोज्यविषयतायाश्चत्वाद्यानुपूर्व्या साक्षादवच्छिन्नत्वेन तत्र भाष्योक्ता गौणमुख्यन्यायप्रवृत्तिर्युक्तैवेति भावः ॥ २१८ ॥

देवद्वन्द्वेति । मुख्य-बोधकयोरग्निसोमपदयोर्द्वन्द्वे "ईदग्नेः सोमवरुणयोः", "अग्नेः स्तुत्स्तोमसोमाः", इत्याभ्यामीत्वषत्वयोः कृतयोर्निष्पन्नं देवताद्वन्द्ववाचि अग्नीषोमाविति पदम् । तस्य तत्सदृशौ माणवकाविति गौणेऽर्थे वृत्तावपि अन्तरङ्गत्वात्पूर्वजाते ईत्वषत्वे भवतस्तिष्ठत एव न तु निवर्तेते इत्यर्थः ॥ २१९ ॥

उक्तार्थे हेतुमाह—समुदायस्येति । समुदायस्य = अग्नीषोमावित्यस्य तथात्वेऽपि = गौणार्थत्वेऽपि । अवयवयोः = अग्निसोमपदयोः । गौणताविरहात् = गौणार्थ-

यद्धि विभक्त्यनिमित्तकमपि च स्त्रीत्वानिमित्तकं कार्यम् ।
तज्ज्ञेयं पदकार्यं तेनायं तद्धितेष्वपि न्यायः ॥ २२१ ॥

गां पाठयेति वक्तुः सुब्जनिसमयेऽस्ति गौणधीस्तदपि ।
अपदप्रयोगविरहाच्छ्रोतुर्गौणार्थधीः पदादेव ॥ २२२ ॥

श्रोतुर्गौणार्थत्वप्रतीतिसमये प्रवर्तते न्यायः ।
तेन विभक्तिनिमित्तकमात्वं गौणार्थकस्यापि ॥ २२३ ॥

---

कताया अभावादित्यर्थः । गौणार्थयोरिति । पूर्वमेव गौणार्थपरयोरुक्तपदयोर्द्वन्द्वकरणे तु ते ईत्वषत्वे नैव प्रवर्तेते इत्यर्थः ॥ २२० ॥

पदकार्य एवायं न्याय इत्युक्तं तत्र पदकार्य इत्यस्य सुबन्तपदोद्देश्यके कार्ये इत्यर्थे तद्धितानां सुबन्तादुत्पत्तावपि प्रातिपदिकाधिकारेण प्रातिपदिकोद्देश्यकत्वात्सुबन्तानुद्देश्यकत्वात्तद्धितेष्वेतन्न्यायाप्रवृत्तौ गर्गादिभ्यो यञ् इत्यनेन विहितो यञ् गर्गसदृशस्य गोत्रापत्यमित्यर्थेऽपि स्यात् । पदसंबन्धिनि कार्ये इत्यर्थे तु सर्वस्यापि कार्यस्य साक्षात् परम्परया वा पदसंबन्धित्वेनाव्यावर्तकतया तदुक्तिवैफल्यं, गोतो णिदिति णित्त्वस्यापि गौर्वाहीक इत्यत्राप्रवृत्तिश्चापद्येत, अतः पदकार्यत्वं निर्वक्ति—यद्धीति । विभक्त्यनिमित्तकत्वे सति स्त्रीत्वानिमित्तकत्वं पदकार्यत्वम् । विभक्त्यनिमित्तकत्वांशे बीजं सिद्धपदस्येत्यादिना प्रागुक्तम् । स्त्रीत्वानिमित्तकत्वांशे च जानपदकुण्डेत्यादिसूत्रे नागशब्दग्रहणं प्रमाणम् । तद्धि गजवाचिनो नागशब्दस्य स्थौल्यगुणयोगाद्गजभिन्नार्थे प्रयोगे ङीष्सिद्ध्यर्थं, मुख्यार्थे जातेरस्त्रीविषयादित्यनेनैव ङीषः सिद्धत्वात् तत्रैतन्न्यायप्रवृत्तौ नागशब्दग्रहणवैयर्थ्यापत्त्या तदुक्तार्थज्ञापकम् । स्त्रीत्वानिमित्तकस्य पदकार्यत्वे ज्ञापिते तु स्त्रीत्वनिमित्तके तत्र गौणमुख्यन्यायाप्रवृत्त्या तच्चरितार्थमिति बोध्यम् ॥ २२१ ॥

ननु पदकार्यत्वलक्षणे विभक्त्यनिमित्तकत्वांशे यद् बीजं सिद्धपदस्य पदान्तरसंबन्धे सत्येव गौणताप्रतीतिरित्युक्तं तन्न सार्वत्रिकम् । गां पाठयेत्यादौ वाक्यसंस्कारपक्षे गोशब्दाद् द्वितीयासिद्ध्यर्थं कर्मत्वाय पाठनक्रियान्वयस्य विभक्त्युत्पत्तिवेलायामेवावश्यकत्वेन गोपदमुख्यार्थस्य बलीवर्दस्य पाठनेऽन्वयासंभवेन तदैव गौणार्थकत्वस्य वक्तव्यत्वादत आह—गां पाठयेति । तत्र विभक्त्युत्पत्तिवेलायां प्रयोक्तुर्गोशब्दस्य गौणार्थत्वज्ञानसत्त्वेऽपि, अपदं न प्रयुञ्जीतेति निषेधेन, अपदस्य प्रयोगाभावात् पदस्यैव प्रयोगाच्छ्रोतुः पदादेव गौणार्थत्वज्ञानम् । यदा च श्रोतुर्गौणार्थत्वज्ञानसंभवस्तदैव न्यायप्रवृत्तिः । एवं च वक्तुः प्रथमं गौणार्थत्वज्ञानेऽपि न तदा न्यायप्रवृत्तिरिति गां पाठयेत्यत्रापि विभक्तिनिमित्तकमात्वं भवत्येव । श्रोतृदृष्ट्या चोक्तबीजस्य सार्वत्रिकत्वमिति भावः । इदं च 'औतोम्शसोः' ( ६।१।९३ ) इति सूत्रे भाष्ये आ गोत इति

अत्वं त्वं सम्पद्यत इत्यादौ, त्वादयः कृता भाष्ये ।
अमहान्महानितीह च दीर्घो गौणार्थकेऽपि कृतः ॥२२४॥
तेन च गम्यत एष न्यायः पदकार्यविषय एवेति ।
न ह्यन्यथोचितास्ते गौणार्थत्वेन वाक्यसंस्कारे ॥२२५॥
किञ्चार्थवदिति, सूत्रे गामित्युक्ते हि कर्म निर्दिष्टम् ।
कर्त्ता क्रियागुणौ चानिर्दिष्टाविति तदीयवचनेन ॥२२६॥

---

वक्तव्यमित्युक्त्या गोत इति न्यासाश्रयणपक्षे ज्ञेयम् । तत्र विशिष्टरूपोपादानसत्त्वात् । सिद्धान्ते तु तत्र वा सुपीत्यतः सुपीत्यनुवर्त्य सुब्रूप एवाम्यात्वप्रवृत्त्या अचिनवम्, असुनवमित्यादौ दोषाभावप्रतिपादनेन यथाश्रुतन्यासाश्रयणात्तत्र विशिष्टरूपोपादानाभावेन प्रकृतन्यायाविषयत्वेऽपि पदस्यैव सर्वत्र गौणार्थकत्वग्रहणमिति नियमस्याव्यभिचरितत्व-प्रतिपादन एवास्य ग्रन्थस्य तात्पर्यमिति बोध्यम् ॥ २२२, २२३ ॥

ननु प्रयोक्तुरेव प्रयोगनिमित्तं ज्ञानमावश्यकम् । अतस्तस्य मुख्यार्थपरत्वज्ञाने तत्तत्कार्यप्रवृत्तिर्गौणार्थपरत्वज्ञाने तु नेत्येव कल्पना समुचिता । श्रोतृप्रतीतिमवलम्ब्य पदकार्यविषयत्वव्यवस्थापनमनुचितमित्यरुचेराह—अत्वं त्वमिति । युष्मद्युपपदे ( १।४।१०५ ) इति सूत्रे भाष्ये—'अथेह, कथं भवितव्यम् । अत्वं त्वं सम्पद्यते इति त्वद्भवति मद्भवतीति । आहोस्वित् त्वद्भवसि मद्भवामीति । त्वद्भवति मद्भवतीत्येवं भवितव्यम् । मध्यमोत्तमौ कस्मान्न भवतः ? गौणमुख्ययोर्मुख्ये संप्रत्ययो भवति' इत्युक्तम् । तत्र वाक्यघटकस्य त्वमित्यस्य आरोपितयुष्मदर्थबोधकत्वेन गौणार्थकत्वेऽपि त्वमावेक-वचन इति विभक्तिनिमित्तकत्वादेशः कृतस्तथा समासे त्वद्भवति मद्भवतीत्यत्र प्रत्ययो-त्तरपदयोश्चेति त्वमादेशौ कृतौ । तत्रापि विभक्तावित्यस्यानुवृत्तेस्तावपि विभक्ति-निमित्तकावेव । अमहान्महानिति । आन्महतः ( ६।३।४६ ) इति सूत्रे भाष्ये 'अमहान् महान् संपन्नो महद्भूतश्चन्द्रमाः' इत्युक्तम् । तत्रापि महान् इत्यस्यारोपित-महत्त्वार्थकत्वेऽपि सान्तमहत इति दीर्घादेशः कृतः । तेनायं न्यायः पदकार्यविषय एवेति ज्ञायते । अन्यथा तत्र ते आदेशा नोचिताः । वाक्यसंस्कारपक्षे परस्परसंसृष्टार्थकपद-समुदायात्मकवाक्यस्य संस्काराभ्युपगमादन्वयानुपपत्तिरूपस्य तात्पर्यानुपपत्तिरूपस्य वा लक्षणाबीजस्य सत्त्वेन गौणलाक्षणिकत्वनिश्चयादिति भावः ॥ २२४, २२५ ॥

ननु तत्र पदसंस्कारपक्ष एवाश्रीयताम् । 'संस्कृत्य संस्कृत्य पदान्युत्सृज्यन्ते, तेषां यथेष्टमभिसंबन्धो भवति । तद्यथा आहर पात्रम्, पात्रमाहरेति' इति वृद्धिरादैच् ( १।१।१ ) इति सूत्रभाष्ये तस्याप्यङ्गीकारात् । व्यवस्थितयोः पक्षयोरेकतरपक्षेण

सामान्यतः क्रियोद्भवफलाश्रयत्वादिना द्वितीयाऽऽदेः।
साधुत्वप्रतिपत्तेर्गौणार्थकताग्रहः पदस्यैव ॥२२७॥
एतन्मूलश्चाभिव्यक्तपदार्था य इत्यसौ श्लोकः।
मुख्यार्थग्रहणपरः पदकार्येष्वेव विज्ञेयः ॥२२८॥
पूर्वपरेति च सूत्रेऽसंज्ञायामित्यनेन सूत्रकृता।
सर्वादिषु संज्ञात्मकशब्दनिषेधेन वार्तिककृता च ॥२२९॥

---

लक्ष्यसिद्धौ पक्षान्तरेण दोषदानस्यानुचितत्वात्। तथाच तत्र पदान्तरसमभिव्याहाराभावेन गौणलाक्षणिकत्वज्ञानाभावात्प्रकृतन्यायाविषयत्वेनोक्तप्रयोगबलेन पदकार्यविषयकत्वव्यवस्थापनमयुक्तमित्यरुचेराह—किञ्चेति। तदीयवचनेन = भाष्यीयवचनेन। "अर्थवदधातुः" (१।२।४५) इति सूत्रे भाष्ये हि 'वाक्यस्य प्रातिपदिकसंज्ञायाः प्रतिषेधो वक्तव्यः। देवदत्त गामभ्याज शुक्लाम्, देवदत्त गामभ्याज कृष्णामिति। किं कारणम्? अर्थवत्त्वात्' इत्युक्ते, पदार्थव्यतिरिक्तार्थस्य वाक्ये उपलब्ध्यभावात्स प्रतिषेधो न वक्तव्य इति प्रतिवादिनोक्तं, तन्निरसितुं पदार्थातिरिक्तस्यापि पदार्थाभिसम्बन्धस्य वाक्ये उपलब्धिर्भवतीत्येवं निरूपणप्रसङ्गे 'इह देवदत्त इत्युक्ते कर्ता निर्दिष्टः। कर्मक्रियागुणौ चानिर्दिष्टौ। गामित्युक्ते कर्मनिर्दिष्टं कर्ता क्रियागुणौ चानिर्दिष्टौ' इत्याद्युक्त्वा 'इहेदानीं देवदत्त गामभ्याज शुक्लामित्युक्ते सर्वं निर्दिष्टम्। देवदत्त एव कर्ता नान्यः। गामेव कर्म नान्यत्। अभ्याजैव क्रिया नान्या। शुक्लामेव न कृष्णामिति। येषां पदानां सामान्ये वर्तमानानां यद्विशेषेऽवस्थानं स वाक्यार्थः' इत्युपसंहृतम्। अस्माद् भाष्यात् सामान्यरूपेण क्रियाजन्यफलाश्रयत्वादिविवक्षयैव द्वितीयादेः साधुत्वान्वाख्यानलाभात्, प्रयोक्तृदृष्ट्याऽपि पदस्यैव गौणार्थकत्वमिति भावः॥ २२६, २२७॥

एतन्मूलश्चेति। गौणमुख्यन्यायमूलकः, 'अभिव्यक्तपदार्था ये स्वतन्त्रा लोकविश्रुताः। शास्त्रार्थस्तेषु कर्तव्यः शब्देषु न तदुक्तिषु॥' इति श्लोकोऽपि पदकार्यविषयक एवेत्यर्थः॥ २२८॥

अस्य न्यायस्य पदकार्यविषयत्वं सूत्रकारादिभिर्ध्वनितमपीत्याह—पूर्वपरेत्यादिना। सर्वादिष्विति। सर्वादीनि सर्वनामानि (१।१।२७) इति सूत्रे "संज्ञोपसर्जनप्रतिषेधः" इति वार्तिकेन संज्ञात्मकशब्दानां सर्वादित्वप्रतिषेधेन वार्तिककृता च ध्वनितमित्यभिसम्बन्धः॥ २२९॥

अन्वर्थसंज्ञया तत्प्रत्याख्यात्रा च भाष्यकृता ।
पदकार्यविषयताऽस्य ध्वनितेतरथा ह्यतः सिद्धेः ॥२३०॥
ओत्सूत्रस्थे भाष्ये त्वर्थाश्रय एतदेवमित्यादि ।
लोकेऽर्थबोधकं पदमभिसन्धायोक्तमिति बोध्यम् ॥ २३१ ॥

## अनिनस्मन्ग्रहणान्यर्थवता चानर्थकेन तदन्तविधिं प्रयोजयन्ति ॥ १६ ॥

अनिनादीनि विशेषणपदानि खलु सार्थकानि नाद्यन्तम् ।
प्रत्याययन्ति चानर्थकानि नाद्यन्तमपि शब्दम् ॥ २३२ ॥
राज्ञा साम्ना दण्डी वाग्ग्मी सुपयाश्च सुस्रोताः ।
अपि च सुशर्म्मा सुप्रथिमेति क्रमतो निदर्शनान्येषाम् ॥ २३३ ॥

---

अन्वर्थसंज्ञयेति । उक्तसूत्रे भाष्ये सर्वनामानीति महासंज्ञाकरणात् सर्वेषां नामानि सर्वनामानीत्यन्वर्थसंज्ञाश्रयणेनोक्तवार्तिकप्रत्याख्यानं कुर्वता भाष्यकारेण चास्य न्यायस्य पदकार्यविषयता ध्वनिता । इतरथा त्विति । अस्य न्यायस्य पदकार्यमात्रविषयत्वाभावे प्रातिपदिककार्येष्वपि प्रवृत्तौ न्यायेनैव संज्ञाशब्देषु सर्वनामसंज्ञाया अप्रवृत्तिसिद्धेः सूत्रकारादीनां तदर्थः प्रयासो विफलः स्यादित्यर्थः ॥ २३० ॥

ननु "ओत्" ( १।१।१५ ) इति सूत्रे भाष्ये गोऽभवदित्यादौ गौणमुख्यन्यायेन प्रगृह्यसंज्ञावारणं कृत्वा "कथं तर्हि वाहीके वृद्ध्यात्वे भवतः । गौस्तिष्ठति गामानयेति । अर्थाश्रय एतदेवं भवति । यद्धि शब्दाश्रयं शब्दमात्रे तद्भवति । शब्दाश्रये च वृद्ध्यात्वे" इति प्रकारान्तरेण समाधानं कृतं न तु पदकार्यत्वाभावेन । अत इयं कल्पना भाष्यकारानभिप्रेतेत्याशङ्कायामाह—ओत्सूत्रस्थ इति । तत्र लोकेऽर्थबोधजनकं यत्परिनिष्ठितं पदं तदभिसन्धाय तत्तात्पर्येणोक्तम् । लौकिकार्थस्य पद एव सत्त्वेन अर्थाश्रय इत्यस्य पदाश्रय इत्यत्रैव तात्पर्यमिति भावः ॥ २३१ ॥

अर्थवत्परिभाषाऽपवादमाह—अनिनस्मन्निति । अत्रार्थवताऽनर्थकेनेति तृतीयान्तद्वयं येन विधिस्तदन्तस्येति सूत्रस्थस्य येनेति तृतीयान्तार्थस्य विशेषणत्वेन विवक्षितम् । अथवा प्रकृत्यादित्वादभेदार्थिका तृतीया । तदर्थस्य तदन्तविधिमित्यत्र तत्पदार्थेऽन्वयः । अनिनस्मन्ग्रहणान्यर्थवदनर्थकाभिन्नं यत् तदन्तसमुदायबोधं जनयन्तीत्यर्थः । तदाह—अनिनादीनीति । सार्थकेति । सार्थका ये अनिनादयस्तदन्तम् । एवमनर्थ-

अल्लोपोऽनस्तत इन्हन्निति दीर्घोऽत्वसन्तदीर्घश्च ।
मन इति ङीप्प्रतिषेधः सिद्धस्तेषूभयत्रापि ॥ २३४ ॥

वचनात्मिकैव भाष्ये पठितेयं येन विधिसूत्रे ।
कार्मस्ताच्छील्य इति ज्ञापकमप्येकदेशसम्मत्या ॥ २३५ ॥

किश्चेणः षीध्वंलुङ्लिटामिहाङ्गग्रहणलिङ्गात् ।
अर्थवदिति परिभाषाऽनित्यत्वेनापि सिद्धेयम् ॥ २३६ ॥

---

केत्यत्रापि बोध्यम् । क्रमेणोदाहरणान्याह—राज्ञेत्यादिना । राज्ञेत्यत्र कनिन्युवृषि (१।१६२) इत्युणादिसूत्रेण राज्धातोः कनिन् प्रत्ययोऽर्थवान् । साम्नेत्यत्र तु षोऽन्तकर्मणीति सोधातोः सातिभ्यां मनिन्मनिणौ (४।१५३) इत्यौणादिको मनिन् । स्यति पापमिति साम । अत्र प्रत्ययैकदेशत्वादन्भागोऽनर्थकः । अनया परिभाषया अल्लोपोऽन इत्यत्रान्पदेनोभयोर्ग्रहणादुभयत्राल्लोपः । दण्डीत्यत्र अत इनिठनाविति इन्प्रत्ययोऽर्थवान् । वाग्मीत्यत्र वाचो ग्मिनिरिति ग्मिन्प्रत्ययैकदेश इन् अनर्थकः । सौ चेत्यत्रानुवृत्ते, इन्हन्पूषार्यम्णामित्यत्रेन्पदेनोभयोर्ग्रहणादुभयत्र दीर्घः । सुपया इत्यत्र पीङ् पाने इति पीधातोः 'सर्वधातुभ्योऽसुन्' (४।१८९) इत्यौणादिकोऽसुन् अर्थवान् । सुस्रोता इत्यत्र स्रुरिभ्यां तुट्च (४।२०२। इत्यसुन् तस्य तुडागमश्च । तत्रागमसमभिव्याहारे आगमविशिष्टस्यैवार्थवत्त्वाद् अस् अनर्थकः । उभयत्रात्वसन्तस्येति दीर्घः । सुशर्मेत्यत्र शृधातोः अन्येभ्योऽपि दृश्यन्ते (३।२।७५) इति सूत्रेण मनिन् अर्थवान् । पृथोर्भावः प्रथिमा प्रथिमानं सुगतेति सुप्रथिमेति तत्पुरुषः । बहुव्रीहावनो बहुव्रीहेरित्यनेनैव ङीब्निषेधसिद्धेः । अत्र पृथ्वादिभ्य इमनिज्वा इति इमनिच् । तत्र मन् इत्येकदेशोऽनर्थकः । उभयत्र मन इति ङीब्निषेधः । एतानि "येन विधिस्तदन्तस्य" (१।१।७२) इति सूत्रे भाष्ये प्रकृतपरिभाषोदाहरणान्युक्तानि । अनेनोणादीनां व्युत्पन्नत्वपक्षोऽपि भाष्यकृत्समादृत इति प्रतीयते ॥ २३२,२३३–२३४ ॥

वचनात्मिकेति । येन विधिस्तदन्तस्य (१।१।७२) इति सूत्रे भाष्ये इयं वचनरूपेणैव पठिता, ज्ञापकं नोक्तम् । ज्ञापकमप्यस्याः सम्भवति तदाह—कार्म्यं इति । 'अन्' इत्यणि प्रकृतिभावविधायके सूत्रे अन्पदे नानर्थकस्याग्रहणे कर्म इत्यत्र प्रकृतिभावाप्राप्त्या नस्ताद्धित इत्यनेनैव टिलोपसिद्धेः कार्मस्ताच्छील्य इति टिलोपनिपातनारम्भो व्यर्थः सन्नेकदेशानुमत्यैनां ज्ञापयतीति भावः ॥ २३५ ॥

अन्यदपि परिभाषासाधकमाह—किश्चेति । इणः षीध्वंलुङ्लिटां धोऽङ्गादिति सूत्रेऽङ्गग्रहणं हि जौहोत्यादिकाद् विष्लृ व्याप्तावित्यस्माद्विधिलिङि वेविषीध्वम् इति

ननु लिङ्सिचाविति विधेरुश्चेत्यस्मिन्ननन्तरत्वेन ।
स्यादात्मनेपदेष्वित्येकस्यैवानुवृत्तिरत आह ॥ २३७ ॥

## एकयोगनिर्दिष्टानां सह वा प्रवृत्तिः सह वा निवृत्तिः ॥ १७ ॥

एकत्रार्थे योगोऽन्वयस्तदर्थेन पठितानाम् ।
अनुवृत्तिनिवृत्ती खलु सहैव भवतो न विश्लिष्य ॥ २३८ ॥
लोके यथैककर्मणि विनियुक्तानामनेकमनुजानाम् ।
दृष्टा सह प्रवृत्तिर्निवृत्तिरपि तद्वदेवात्र ॥ २३९ ॥
ईदूदेति, सूत्रादेतोऽननुवृत्तये, विहितम् ।
अदसो मादिति सूत्रे माद्ग्रहणं ज्ञापकं चास्याः ॥ २४० ॥

---

रूपे ढत्ववारणाय कृतम् । तद्वारणस्य चार्थवद्ग्रहणपरिभाषयैव संभवात्तद्व्यर्थं सत्तस्या अनित्यत्वं ज्ञापयतीति ततोऽप्येषा सिद्धेति भावः । अस् भुवीत्यस्मात्कर्मव्यतिहारे आत्मनेपदे उपसर्गप्रादुर्भ्यामिति षत्वे व्यतिषीध्वमित्यत्रार्थवतः षीध्वमः संभवात्तत्र ढत्वाभावायाङ्गग्रहणमिति तु नाशङ्क्यम् । उपसर्गप्रादुर्भ्यामिति षत्वस्य इणः षीध्व-मित्येद्दृष्ट्याऽसिद्धत्वेन तत्र तदप्राप्तेः । न च विभाषेट् इत्यस्य विषये लविषीध्वमित्यादा-विड्विशिष्टस्यैवार्थवत्त्वेन षीध्वमोऽनर्थकस्यैव संभवादर्थाधिकारानुरोधेन, अत्राप्यनर्थक-स्यैव ग्रहणमिति, भ्रमवारणार्थमङ्गादिति नोक्तार्थज्ञापकमिति वाच्यम् । उत्तरसूत्रेऽर्थवतः षीध्वमोऽसंभवादर्थवत्परिभाषाबाधेऽप्यत्र तद्बाधे मानाभावात् ॥ २३६ ॥

यत्रानेकविधमिति परिभाषायां स्थानेऽन्तरतम इत्यत्र षष्ठीस्थानेयोगेत्यस्मात् स्थानेपदमनुवर्त्तेत इत्युक्तं, तस्य सिंहावलोकनन्यायेन स्मृत्याऽनुवृत्तिनिवृत्तिव्यवस्थापक-परिभाषाद्वयसङ्गतिर्ज्ञेया । लिङ्सिचाविति । लिङ्सिचावात्मनेपदेषु ( १।२।११ ) इत्यस्मात्सूत्रात्, उश्च ( १।२।१२ ) इति सूत्रेऽनन्तरत्वेन = सन्निहितत्वेन "आत्मने-पदेषु" इत्येवानुवर्तेत न तु लिङ्सिचावित्यपीत्यर्थः ॥ २३७ ॥

एकत्रेति । एकस्मिन्नर्थे कार्यरूपे योगोऽन्वयः = सम्बन्धः, तदर्थेन = तेन हेतुना पठितानां यथा लिङ्सिचावित्यत्रैकस्मिन् कित्त्वेऽन्वितानां लिङादिपदानामित्यर्थः ॥ २३८ ॥

इयं च लोकसिद्धेत्याह—लोके यथेति ॥ २३९ ॥

ज्ञापकमप्यस्तीत्याह—ईदूदेदिति । ईदूदेद् द्विवचनं प्रगृह्यमित्यस्मात्सूत्रात् "ईदूत्" इत्येतावन्मात्रानुवृत्त्यैव एकाराननुवृत्तिसिद्धेस्तदर्थम् 'अदसो मात्' इति सूत्रे

नेड्वशि सूत्रादिट्पदसम्बन्धे सम्भवत्यपीड्ग्रहणम् ।
पुनरार्धधातुकस्येडिति सूत्रे तदिह, लिङ्गमिति केचित् ॥२४१॥
तदनुचितं भाष्यकृता गुणरूपविकारवारणार्थोक्तेः ।
नेड्वशिसूत्रे भाष्ये प्रत्याख्यानाच्च तत्रेटः ॥२४२॥
नन्वेकयोगसत्त्वेऽप्यलुगित्यधिकार आनङः पूर्वम् ।
उत्तरपद इत्यङ्गाधिकारतः प्रागिति न युक्तम् ॥२४३॥
संख्यादेरित्यंशोऽनुवर्तते दामहायनेत्यस्मिन् ।
अव्ययपदं निवर्तत इति चानुपपन्नमत आह ॥२४४॥

---

माद्ग्रहणं व्यर्थं सदस्या ज्ञापकम् । ज्ञापितायां त्वस्याम् ईत्, ऊत्, एत् इत्येषां त्रयाणां सहैवानुवृत्तौ, अमुकेऽत्र इत्यत्रापि प्रगृह्यत्वापत्तिः । अतस्तद्वारणार्थमेकारानुवृत्तिफलकं माद्ग्रहणं चरितार्थमिति भावः ॥ २४० ॥

आर्धधातुकस्येड्वलादेरित्यत्रेड्ग्रहणमस्या ज्ञापकमिति केषांचिदुक्तिमुल्लिख्य निरस्यति— **नेड्वशीत्यादिना** पद्यद्वयेन । 'नेड्वशिकृति' इति सूत्रादिट्पदेऽनुवर्तमाने 'आर्धधातुकस्येड्वलादेः' इत्यत्रेड्ग्रहणं हि तत्र नेत्यस्यासम्बन्धार्थम् । तत्संबन्धप्रसक्तिश्च प्रकृतपरिभाषायां सत्यामेव संभवत्यतस्तदस्या ज्ञापकमिति तेषामाशयः ॥ २४१ ॥

निरस्यति—**तदनुचितमिति** । "दीधीवेवीटाम्" ( १।१।६ ) इति सूत्रे भाष्ये तत्सूत्रस्येड्ग्रहणप्रत्याख्यानाय नेड्वशीत्यत इड्ग्रहणेऽनुवर्तमाने पुनरार्धधातुकस्येड्वलादेरित्यत्रेड्ग्रहणस्य प्रयोजनम्—"इट् इडेव यथा स्यात् । यदन्यत्प्राप्नोति तन्मा भूदिति किञ्चान्यत्प्राप्नोति गुणः" इत्युक्तम् । अतस्तेनैतत्परिभाषाज्ञापनं भाष्यविरुद्धमिति भावः । वस्तुतस्तत्प्रत्याख्यातमेवेत्याह—**नेड्वशीति** । आर्धधातुकस्येडित्यत्रेड्ग्रहणं कृत्वा तस्य इट् इडेव यथा स्यादिति नियमार्थत्वाश्रयणं "ग्रहोऽलिटि दीर्घः" "वृतोवा" इतीट्स्थानिकदीर्घस्य सामर्थ्यात्साधनं चेत्यादिगुरुतरयत्नेन दीधीवेवीटामिति सूत्रस्येड्ग्रहणप्रत्याख्यानस्यायुक्तत्वादिति भावः । तत्र = आर्धधातुकस्येडिति सूत्रे ॥ २४२ ॥

उक्तनियमस्यासार्वत्रिकतां दर्शयन्तीमन्यां परिभाषामवतारयति— **नन्विति** । एकयोगसत्त्वेऽपि = अलुगुत्तरपदे ( ६।३।१ ) इत्यधिकारसूत्रस्थयोः, अलुक्, उत्तरपदे इति द्वयोः पदयोः पञ्चम्याः स्तोकादिभ्यः ( ६।३।२ ) इत्यादिष्वेकस्मिन्नर्थे कार्यरूपेऽन्वयसत्त्वेऽपीत्यर्थः ॥ २४३ ॥

**संख्यादेरिति** । संख्याव्ययादेर्ङीप् ( ४।१।२६ ) इति सूत्रे संख्याव्ययोरेकयोग-

## एकयोगनिर्दिष्टानां क्वचिदेकदेशोऽप्यनुवर्तते ॥१८॥

क्वचिदेकान्वयभाजामप्येकोंऽशोऽनुवर्तते नान्यः ।
अत्र च मूलं तावन्मात्रे स्वरितप्रतिज्ञैव ॥ २४५ ॥
नन्त्रिममित्यादौ स्यात्स्यदाद्यकारोऽनुनासिकत्वयुतः ।
अनुनासिकमस्थाने सदृशतमत्वादतः प्राह ॥ २४६ ॥

---

निर्दिष्टत्वेऽपि संख्यादेरित्यंशो दामहायनान्ताच्च (४।१।२७) इति सूत्रेऽनुवर्तते, अव्ययादेरिति तु निवर्तते इत्यप्ययुक्तमित्यर्थः ॥ २४४ ॥

परिभाषाऽर्थमाह—क्वचिदिति । एकान्वयभाजाम् = एकस्मिन्नर्थेऽन्वयं भजन्तीत्येवंभूतानाम् । "यत्तु पक्षात्तिः" (५।२।२५) इति सूत्रे कैयटेन—'एकस्मिन्नर्थे योगः सम्बन्धस्तेन निर्दिष्टयोः समुदायाभिधायिद्वन्द्वनिर्दिष्टयोरित्यर्थः' इत्युक्तं तद् औतोऽम्शसोः (६।१।१९३) इति सूत्रस्थभाष्यविरोधादुपेक्ष्यम् । तत्र हि—अचिनवम् असुनवमित्यादावात्वातिप्रसङ्गनिवारणार्थं "वा सुप्यापिशलेः" (६।१।१९२) इति सूत्रात् सुपीत्यनुवर्तत इत्यभिधाय 'यद्यनुवर्तते, इहापि विभाषा प्राप्नोति । सुब्ग्रहणमनुवर्तते, वाग्रहणं निवृत्तम् । कथं पुनरेकयोगनिर्दिष्टयोरेकदेशोऽनुवर्तते ? एकदेशो न । एकयोगे चैकदेशानुवृत्तिरन्यत्रापि नावश्यमिहैव ।········· । क्वान्यत्र । अलुगधिकारः प्रागानङः । उत्तरपदाधिकारः प्रागङ्गाधिकारात् ।' इत्युक्तम् । उक्तस्थले समुदायाभिधायिद्वन्द्वनिर्देशाभावात्कैयटोक्तार्थे भाष्यविरोधः स्पष्टः । स्वरितेति भावप्रधानो निर्देशः । स्वरितत्वप्रतिज्ञेत्यर्थः ॥ २४५ ॥

पूर्वपरिभाषायामार्धधातुकस्येड्वलादेरित्यत्रेड्ग्रहणं भाष्ये प्रत्याख्यातमित्युक्तं, तत्र इड इडेव यथा स्यात् सवर्णग्रहणेन दीर्घो मा भूदिति नियमार्थत्वेन तस्यावश्यकत्वात्प्रत्याख्यानमयुक्तमित्याशङ्कानिवारणेन तदुपपादकत्वादुपोद्घातसङ्गत्या भाष्यमानपरिभाषामवतारयति—नन्विति । प्रथमाद्विवचने इमावित्यत्र मकारस्थानेऽनुनासिकाकारे सत्यपि तदुत्तरं वृद्ध्येकादेशप्रवृत्त्या शुद्ध एवौकारो भविष्यति अमोऽनुनासिको न ह्यावित्यैचोऽप्युपलक्षणमित्यङ्गीकारेणैचोऽनुनासिकत्वाभावात् । इमे इति बहुवचने च परेकारस्य द्विमात्रत्वेनाधिक्यात्तत्सदृशगुणकः शुद्ध एव एकार एकादेशो भविष्यतीति तत्रापि न दोषः । अतः प्राथम्येऽपि तद्द्वयं विहाय द्वितीयैकवचनान्ते इममित्यत्र दोषोद्भावनं कृतमिति बोध्यम् ॥ २४६ ॥

## भाव्यमानेन सवर्णानां ग्रहणं न ॥ १९ ॥

न भवति विधेयबोधकपदेन बोधः सवर्णानाम् ।
नन्वेवं ह्रस्वेनाननुनासिकह्रस्वबोधनं न स्यात् ॥ २४७ ॥

यणपदसवर्णविरहादिको यणित्यत्र नैषा स्यात् ।
मैवं ग्रहणनिषेधात्स्वविशिष्टावृत्तिधर्मवताम् ॥ २४८ ॥

तत्र च वैशिष्ट्यं निजतादात्म्येन क्वचित्त्वेतत् ।
स्वाश्रितशक्तिनिरूपकतावच्छेदकसमूहघटकतया ॥ २४९ ॥

---

भाव्यमानो विधेयस्तस्य लक्ष्यस्थत्वेन सवर्णग्रहणाप्रसक्तेर्भाव्यमानपदमत्र विधेयताप्रयोजकपदतात्पर्यकमिति दर्शयन् परिभाषार्थमाह—**न भवतीति**। तत्राशङ्कते—**नन्वित्यादिना** । ह्रस्वेन = त्यदादीनामित्यत्र ह्रस्वाकारेण। अननुनासिकस्य शुद्धह्रस्वाकारस्यापि ग्रहणं न स्याद्दीर्घानुनासिकयोरिव शुद्धह्रस्वस्यापि तत्सवर्णत्वादिति भावः ॥ २४७ ॥

अन्यमपि दोषमाह—**यणिति**। इको यणचीत्यादौ विधेयताप्रयोजकं पदं यणिति। तत्र यणपदसवर्णाप्रसिद्ध्या, इयं परिभाषा तत्र न प्रवर्तेत। ततश्चानुनासिकयकारादीनामपि विधानमापद्येतेति भावः। समाधत्ते—**मैवमिति**। विधेयताप्रयोजकपदेन स्वविशिष्टवृत्तिधर्मवतां ग्रहणं न भवतीत्येव परिभाषार्थाङ्गीकारान्नोक्तदोषापत्तिरिति भावः ॥ २४८ ॥

वैशिष्ट्यनियामकसम्बन्धमाह—**तत्र चेत्यादिना** । स्वतादात्म्यस्वनिष्ठशक्तिनिरूपकतावच्छेदकसमुदायघटकत्वैतदन्यतरसंबन्धेन स्वविशिष्टो यस्तद्वृत्तिधर्मवतामित्यर्थः। त्यदादीनाम इत्यादौ स्वपदग्राह्यः सूत्रस्थो ह्रस्वाननुनासिकोऽकारः । तादात्म्यसंबन्धेन तद्विशिष्टस्तादृश एवाकारः। ह्रस्वत्वाननुनासिकत्वधर्मयोस्तद्वृत्तित्वमेव। अतस्तद्वतो ग्रहणं भवत्येव। इको यणचीत्यादौ च स्वपदग्राह्यं यण्पदं तन्निष्ठशक्तिनिरूपकतावच्छेदकः समुदायो वर्णसमाम्नायस्थो यवरलेति वर्णचतुष्टयात्मकः । तद्घटकत्वात्मकसंबन्धेन यकारादयो यण्पदविशिष्टाः । तद्वृत्तिर्धर्मोऽनुनासिकत्वम् । अतस्तद्वतामनुनासिकयकारादीनां न ग्रहणमिति समन्वयो बोध्यः ॥ २४९ ॥

तत्पुरुषीयत्वादीन्वर्जयितुं गृह्यतेऽत्र धर्मश्च।
शास्त्रोदितः स्वरत्वाव्याप्यश्चोदात्ततादि वर्जयितुम् ॥ २५० ॥
अणुदित्सूत्रेऽप्रत्यय इति योगविभागसामर्थ्यात्।
ह्रस्वे पाठ्ये ज्यादादिति दीर्घोच्चारणाच्च सिद्धेयम् ॥ २५१ ॥

---

नन्वेवमपि तत्पुरुषीयत्व-तत्कालिकत्व-तद्व्यक्तित्वादयो ये स्वविशिष्टावृत्तयो धर्मास्तद्वतां ग्रहणं न स्यादत आह—**तत्पुरुषीयत्वादीनिति** । वर्जयितुम्=व्यावर्तयितुम् । शास्त्रोदितः—। शास्त्रसंकेतविषयतावच्छेदको दीर्घत्वानुनासिकत्वादिरेव धर्म उक्तनिर्वचने ग्राह्यः । तत्पुरुषीयत्वादिधर्मस्तु न तथेति नोक्तदोषः । नन्वेवमपि बहुवचने झल्येदितिसूत्रस्थेनोदात्तैकारेणानुदात्तस्य ग्रहणं न स्यात् । ततश्च सर्वेभ्य इत्यादौ स्वाङ्गशिटामदन्तानामिति सर्वनाम्नामाद्युदात्तस्यान्त्याकारस्य स्थाने स्थान्यनुरूपोऽनुदात्त एकारो न स्यादत आह—स्वरत्वाव्याप्यश्चेति । अनुदात्तत्वादिधर्मस्तु स्वरत्वव्याप्य इति तस्य स्वावृत्तित्वेऽपि तद्वतां ग्रहणं भवत्येवेति सर्वमनवद्यम् ॥ २५० ॥

परिभाषायां मानमाह—**अणुदिदिति** । अणुदित्सवर्णस्य चाप्रत्ययः (१।१।६९) इति सूत्रे भाष्ये—'आदेशे इदम इश् इतः इद्वेत्यादौ ई हल्यघोरित्यत्र ह्रस्वेकारकरणेनैव ग्राहकसूत्रबलाद्दीर्घे सिद्धे दीर्घनिर्देशसामर्थ्यात्, आगमे च लविता लवितुमित्यादौ, आर्धधातुकस्येडित्यत्रेट्पदेन ग्राहकसूत्रबलाद्दीर्घस्यापि विधाने सिद्धे वृतो वेति दीर्घविधानसामर्थ्यात्, प्रत्यये च सनाशंसभिक्ष उरित्यादौ दीर्घोकारादेरनभिधानात्सवर्णग्रहणाभावं प्रतिपाद्य, अप्रत्ययग्रहणस्य प्रयोजनान्तरमपि निरस्य 'एवं तर्हि सिद्धे सति यदप्रत्यय इति प्रतिषेधं शास्ति तज्ज्ञापयत्याचार्यो भवत्येषा परिभाषा भाव्यमानेन सवर्णानां ग्रहणं नेति' इत्युक्तम् । अत्र अप्रत्यय इति पृथग् योगः । तत्राणिति न संबध्यते । प्रत्ययः सवर्णग्राहको नेत्यर्थः । प्रत्ययशब्दो न प्रत्ययसंज्ञक एव विवक्षितः । तस्य च योगस्योक्तरीत्या प्रयोजनान्तराभावाद्भाव्यमानस्य प्रत्ययादेशागमरूपांशत्रयात्मकत्वादेशानुमत्या परिभाषा ज्ञाप्यते । तया च सूत्रप्राप्तं जातिपक्षेण प्राप्तं गुणाभेदकत्वेन च प्राप्तं सवर्णग्रहणं प्रतिषिध्यत इति भावः । यत्तु प्रतीयते विधीयत इति यौगिकस्यात्र प्रत्ययस्य ग्रहणमित्युक्तसूत्रे कैयटेनोक्तं, तदनुसारिणा भट्टोजिदीक्षितेन च कौमुद्यां तथैव सूत्रार्थः कृतस्तदयुक्तम् । प्रतिपूर्वस्येणो विधानार्थकत्वस्याप्रसिद्धत्वाद् योगाद्रूढिर्बलीयसीति न्यायविरोधाच्च । किञ्च यदि प्रत्ययपदवाच्यार्थादेव परिभाषा लभ्येत तर्हि प्रत्ययादेशागमेषु सवर्णग्रहणाभावं प्रकारान्तरेण साधयित्वा 'एवं तर्हि सिद्धे सति यदप्रत्यय इति प्रतिषेधं शास्ति तज्ज्ञापयती'त्येवं भाष्यकारो न वदेत् । किन्तु प्रत्ययपदव्युत्पत्तिमेव प्रदर्शयेत् । तस्माद्यथोक्तं नागेशभट्टमतमेव साधु ॥ ज्ञापकान्तरमाह—**ह्रस्व इति** । ज्यादादीयस इति सूत्रे ज्याद ईयस इति

भाव्येनापि सवर्णग्रहणं यचोः कुरित्यादौ ।
तत्तु विधेय उकारोच्चारणसामर्थ्यतो ज्ञेयम् ॥ २५२ ॥

( अनुष्टुप् )

उदित्त्वस्य निषेधस्याप्रवृत्तेरेव नूतनैः ।
भाव्यमानोऽण् सवर्णान्न गृह्णातीत्येवमुच्यते ॥ २५३ ॥
नन्वेवं सत्यदसोऽसेरिति सूत्रेऽप्युकारेण ।
स्वसवर्णस्याग्रहणेऽमूप्रभृतिषु दीर्घदौर्लभ्यम् ॥ २५४ ॥

---

ह्रस्वाकारोच्चारणेऽपि ईयस ईकारस्य दीर्घत्वात्तत्स्थाने आन्तरतम्याद्दीर्घ एव भविष्यति, तथापि क्रियमाणं दीर्घोच्चारणं व्यर्थं सदस्या ज्ञापकम् । ज्ञापितायां त्वस्यामकारस्य विधीयमानत्वेनानया सवर्णग्रहणनिषेधाद्दीर्घो न स्यादतस्तत्सिद्धयर्थं तदावश्यकम् । इदमुपलक्षणम्, ईहल्यघोरित्यत्र दीर्घोच्चारणमपि भाष्योक्तरीत्याऽस्या ज्ञापकं बोध्यम् ॥ २५१ ॥

**भाव्येनापीति** । चोः कुः, स्तोः श्चुना श्चुरित्यादौ विधेयताप्रयोजकैरपि चु कु इत्यादिपदैर्यत्सवर्णग्रहणं भवति तत्तु विधेये उकारोच्चारणसामर्थ्यात् = उदित्करणसामर्थ्यात् । केवलककारादेर्ग्रहणे उदित्त्वस्य वैयर्थ्यापत्तेरिति भावः ॥ २५२ ॥

दीक्षितादिभिः स्वग्रन्थेषूपनिबद्धो भाव्यमानोऽण् सवर्णान्न गृह्णातीति पाठो न मौलिकः किन्तूक्तहेतुना उदित्त्वेतन्निषेधाप्रवृत्तेः फलितार्थपर इत्याह—**उदित्त्वेति** ॥ २५३ ॥

अपवादसंगत्याऽऽह—**नन्वेवमिति** । भाव्यमानस्य सवर्णाग्राहकत्वे "अदसोऽसेर्दादु दोमः" इति सूत्रेऽपि उकारेण स्वसवर्णग्रहणाभावे अमू इत्यादौ दीर्घो न सिध्येदित्यर्थः । ननु तत्र उश्च ऊश्च अनयोः समाहारः उ इति समाहारद्वन्द्वेन ह्रस्वदीर्घयोरुभयोर्विधानं, तत्रान्तरतम्याद् ह्रस्वव्यञ्जनयोर्ह्रस्वो, दीर्घस्य दीर्घ इति व्यवस्था भविष्यति । तथा चोक्तं कौमुद्याम्—"उ इति ह्रस्वदीर्घयोः समाहारद्वन्द्वः" इति चेन्न । उस् उस् इत्यलौकिकविग्रहे सुब्लुकि द्वन्द्वे घि इत्यनेन ह्रस्वोकारस्य पूर्वनिपाते उ ऊ इति स्थिते, नपुंसकह्रस्वसवर्णदीर्घयोः प्राप्तावपरनिमित्तकत्वरूपान्तरङ्गत्वेन पूर्वं नपुंसकह्रस्वे ततः सवर्णदीर्घे लक्ष्ये लक्षणं सकृदेव प्रवर्तत इति न्यायेन विकारकृतलक्ष्यभेदानाश्रयणेन च पुनर्ह्रस्वाप्रवृत्त्या दीर्घश्रवणापत्तेः ॥ २५४ ॥

अत आह—

भाव्यमानोऽप्युकारः सवर्णान्गृह्णाति ॥२०॥

दिव उत्सूत्रे दीर्घव्यावृत्त्यर्थं तपरकरणम् ।
ज्ञापकमत्र सवर्णग्रहणे खलु तस्य वैयर्थ्यात् ॥२५५॥
तद्धि दिवः क्यचि कर्तृक्विप्यल्लोपे यलोपे च ।
वस्योठि द्यूशब्दाद् भ्यामादौ ह्रस्वसिद्ध्यर्थम् ॥२५६॥
ऋत उत्सूत्रेऽप्युदिति ज्ञापकमत्रैव तपरत्वम् ।
वस्तुत एतत्साध्यं नास्ति फलमनन्यथा सिद्धम् ॥ २५७ ॥

---

ज्ञापकमाह—दिव उत्सूत्र इति । तस्य = तपरकरणस्य ॥ २५५ ॥

ननु परिभाषायां ज्ञापितायामपि तपरकरणस्य स्वांशे चारितार्थ्यं दुर्निरूपम् । उकारेण सवर्णग्रहणे सत्यपि स्थानिनो दिवूशब्दान्त्यवकारस्य द्विमात्रन्यूनकालिकत्वेनान्तरतम्याद् ह्रस्वादेशस्यैव प्रवृत्तेः । दिवुधातोः क्विपि च्छ्वोरित्यनेनोठि द्यूशब्दाद् भ्यामादौ ह्रस्वार्थे तदित्यपि न वक्तुमुचितं, निरनुबन्धकग्रहणे न सानुबन्धकस्येति परिभाषया तत्र दिवुधातोर्ग्रहणाभावादित्याशङ्कायां चारितार्थ्यस्थलं दर्शयति—तद्धीति । दिवमात्मन इच्छतीत्यर्थे क्यचि क्यजन्तात्कर्तरि क्विपि अतो लोपे लोपो व्योर्वलीत्यनेन च यकारलोपे दिव् इति स्थिते च्छ्वोः शूडित्यनेन वकारस्योठि द्यूशब्दाद्भ्यामादिषु दीर्घस्य स्थाने आन्तरतम्याद्दीर्घोकारे प्राप्ते ह्रस्वविधानार्थं तपरकरणं हि चरितार्थम् । अत्रापि भाव्यमानपरिभाषाप्रवृत्तौ तु दीर्घप्राप्तेरसम्भवात्तद्वैयर्थ्यमेव स्यादतस्तज्ज्ञापकमिति भावः । ऊठि कर्तव्येऽल्लोपस्य स्थानिवद्भावस्तु नाशङ्क्यः, क्वौ विधिं प्रति स्थानिवत्त्वनिषेधात् ॥ २५६ ॥

अन्यदपि ज्ञापकमाह—ऋत उदिति । पितुरित्यादौ ऋकाराकारयोः स्थाने द्विमात्रे दीर्घे प्राप्ते तन्निवारणार्थमिदं तपरत्वं प्रकृतपरिभाषां विनाऽनुपपन्नमतस्तदप्यस्या ज्ञापकमिति भावः । न च पितू राज्यमित्यादौ ढ्रलोप इति प्राप्तदीर्घं बाधित्वा ह्रस्वविधानार्थं तदिति वाच्यम् । उरण् रपरः (१।१।५१) इति सूत्रे भाष्ये ऊ रपर इति, रामायणे च सवितू रश्मयो यथेति प्रयोगदर्शनेन सूत्रान्तरप्राप्तदीर्घस्येष्टत्वात् । वस्तुतस्त्वियं परिभाषा निष्फलेत्याह—वस्तुत इति ॥ २५७ ॥

सूत्रत्वाद्धि प्रथमं सवर्णदीर्घे ततो ह्रस्वे ।
उ इति समाहारार्थे द्वन्द्वे ना मू प्रभृति सिद्धेः ॥ २५८ ॥

ननु गोहितमित्यादौ लुप्तेऽप्येप्रत्यये सतीवास्मिन् ।
प्रत्ययलक्षणविधिनाऽचपूर्वतया स्यादवादेशः ॥ २५९ ॥

ननु तत्राजव्यवहितपूर्वस्यैज्घटितशब्दस्य ।
स्थानेऽयादिघटित इति शब्दानित्यत्ववारणायार्थः ॥ २६० ॥

---

यदस्याः प्रयोजनमुक्तम्, अमू इत्यादौ दीर्घसिद्धिरूपं तत्तूक्तरीत्या उ इत्यत्र ह्रस्वदीर्घयोः समाहारद्वन्द्वाश्रयणेन सुसंपादम्। अन्तरङ्गत्वात्पूर्वं ह्रस्वप्रवृत्त्या पश्चाल्लक्ष्ये लक्षणन्यायेन ह्रस्वो न स्यादित्याशङ्का त्वस्य सौत्रप्रयोगत्वेन छन्दोवत्सूत्राणि भवन्तीति वचनादन्तरङ्गपरिभाषाया अप्रवृत्त्या प्रथमं सवर्णदीर्घे ततो ह्रस्वे च तत्प्रयोगसिद्ध्या समाधेयेति भावः ॥ २५८ ॥

वर्णप्रसङ्गादाह—**नन्विति**। गोहितमित्यादाविति। गवे हितं गोहितमिति चतुर्थी तदर्थार्थेत्यादिना समासे सुपो धात्विति लुका चतुर्थ्येकवचनस्य एप्रत्ययस्य लोपेऽपि प्रत्ययलक्षणेन एकारस्य विद्यमानतायामिवाचपूर्वत्वबुद्ध्या एचोऽयवायाव इत्यवादेशः स्यादित्यर्थः। नन्वन्तरङ्गानपि विधीन्बहिरङ्गो लुग्बाधत इति परिभाषया ङेघटकङकारस्येत्संज्ञालोपाभ्यां प्रागेव लुका भवितव्यम्। ततश्च प्रत्ययलक्षणेन ङेबुद्धिरेव स्यान्नत्वेकारबुद्धिरत उक्तदोषोद्भावनमयुक्तमिति चेन्न। तया परिभाषया साधुत्वप्रतिपादकशास्त्रापेक्षयैव लुको बलवत्त्वबोधनात्। इत्संज्ञाशास्त्रस्य तस्य लोप इत्यस्य च लक्ष्यधर्मिकसाधुत्वप्रतिपादकत्वाभावेन लुकः पूर्वमेव प्रवृत्तेः, अत एव हे वारे इति भाष्यप्रयोग उपपन्नः। अन्यथा तत्र संबुद्धिसंज्ञायाः प्रागेव सोर्लुकि प्रत्ययलक्षणेन संबुद्धिनिमित्तको गुणो न सिध्येत्। अत एव च न लुमताङ्गस्य (१।१।६३) सूत्रे लुमति प्रतिषेधे एकपदस्वरस्योपसंख्यानमिति वार्तिकं तद्भाष्यं चोपपद्यते। तद्धि गर्गा बिदा इत्यादौ ञिदन्तत्वादिप्रयुक्तस्वरनिषेधार्थम्। इत्संज्ञायाः प्रागेव यञादेर्लुकि तत्तत्स्वराप्राप्तौ तदसंङ्गतिः स्पष्टा ॥ २५९ ॥

**अयादिघटित इति**। साधुरिति शेषः। शब्दानित्यत्ववारणायेति—'सर्वे सर्वपदादेशा दाक्षीपुत्रस्य पाणिनेः। एकदेशविकारे हि नित्यत्वं नोपपद्यते ॥' इत्यभियुक्तोक्तेरिति भावः ॥ २६० ॥

एवञ्चायादिविधेरस्त्युद्देश्यत्वमङ्गपर्याप्तम् ।
तेन न लुमताङ्गस्येति, प्रतिषेधान्न दोष इति चेन्न ॥ २६१ ॥

एतादृशि सूत्रार्थे केशवमनुचिन्तयेत्यादौ ।
एज्घटितकेशवादेः स्थानेऽयुघटितोऽपि साधुः स्यात् ॥ २६२ ॥

तस्मादजव्यवहितप्राक्त्वं ह्येचो विशेषणं वाच्यम् ।
तद्घटितस्य स्थानेऽयादिघटित एव साधुरित्यर्थः ॥ २६३ ॥

लुमता लुप्ताव्यवहितपूर्वत्वविशेषताऽङ्गपर्याप्ता ।
उद्देश्यता यदीया तस्य निषेधात्स नात्र तत आह ॥ २६४ ॥

---

अङ्गपर्याप्तमिति । न लुमतेत्यनेन लुमता लुप्तप्रत्ययनिमित्तकस्याङ्गपर्याप्तोद्देश्यताककार्यस्यैव निषेधः क्रियते । अत एव उत्क्रामेत्यत्र हेर्लुकि प्रत्ययलक्षणेन क्रमः परस्मैपदेष्विति क्रमेरचो दीर्घः सिध्यति । तस्याङ्गपर्याप्तोद्देश्यताकत्वाभावेन न लुमतेति निषेधाविषयत्वात् । एचोऽयवायाव इत्यस्य तूक्तार्थाश्रयणेनाङ्गपर्याप्तोद्देश्यताकत्वमेवेति तत्र न लुमतेत्यस्य प्रवृत्त्या दोषाभावादुक्तावतरणं न सम्यगिति भावः ॥ २६१ ॥

उक्तार्थाङ्गीकारे दोषमाह—एतादृशीत्यादिना ॥ २६२ ॥

अजव्यवहितप्राक्त्वमिति । अजव्यवहितपूर्वत्वम् एच एव विशेषणम् । अजव्यवहितपूर्वो य एच् तद्घटितस्योच्चारणप्रसङ्गे अयादिघटितः साधुरिति एचोऽयवायाव इति सूत्रस्यार्थः । तेन शब्दानित्यत्ववारणमपि सिद्धम्, उक्तस्थले च दोषाभावः । तत्रैकारस्याजव्यवहितपूर्वत्वाभावादिति भावः ॥ २६३ ॥

गोहितमित्यादाववादेशे कर्तव्ये न लुमतेत्यस्य प्रवृत्तिर्नोचितेति दर्शयितुं तस्य निष्कृष्टार्थमाह—लुमतेति । समासबहिर्भूते लुमतेत्यत्र साकाङ्क्षस्यापि लुप्तशब्दस्य शरैः शातितपत्र इत्यादिवद् गमकत्वात्समासो ज्ञेयः । लुमताशब्देन=लुक्श्लुलुप् इत्येतदन्यतमेन यो लुप्तस्तदव्यवहितपूर्वत्वावच्छिन्ना अङ्गपर्याप्ता च यत्कार्यीयोद्देश्यता तस्यैव कार्यस्य न लुमतेत्यनेन निषेधः । लुप्तप्रत्ययनिमित्ताङ्गोद्देश्यककार्यमात्रस्य तेन निषेधे दधि-मध्वित्यादौ पदसंज्ञाया अपि निषेधापत्तेः । एचोऽयवायाव इत्यस्य सूत्रस्य चोक्तार्थे एज्घटिताङ्गनिष्ठाया उद्देश्यताया अङ्गपर्याप्तत्वेऽपि लुप्तप्रत्ययाव्यवहितपूर्वत्वावच्छिन्नत्वं नास्ति । एज्निष्ठायाश्च तस्या लुप्तप्रत्ययाव्यवहितपूर्वत्वावच्छिन्नत्वेऽप्यङ्गपर्याप्तत्वं नास्तीति तत्र न लुमतेति निषेधाप्रवृत्त्या प्रत्ययलक्षणेन गोहितमित्यादाववादेशापत्तिरस्त्येव । अतस्तन्निवारणार्थे परिभाषा वक्तव्येति भावः ॥ २६४ ॥

1215

# वर्णाश्रये नास्ति प्रत्ययलक्षणम् ॥ २१ ॥

लुप्तप्रत्ययनिष्ठं वर्णत्वव्याप्यधर्मपरिकलितम् ।
यत्कार्यनिमित्तत्वं प्रत्ययलक्षणविधिर्न तत्रास्ति ॥२६५॥

वर्णप्राधान्य इयं तच्चास्य प्रत्ययाप्रकारत्वम् ।
तेन हलाश्रयणेऽपीत्वादि भवति मित्रशीःप्रभृतौ ॥२६६॥

प्रत्ययलोपे स्थानिवदित्यनुवृत्त्यैव सिद्धेऽपि ।
प्रत्ययलक्षणवचनात्प्रत्ययप्राधान्य एवेदम् ॥२६७॥

---

परिभाषाया वर्णाश्रय इति बहुव्रीहिः वर्ण आश्रयो निमित्तं यस्य तस्मिन्कार्ये इत्यर्थः। अत्र वर्णोद्देश्यककार्ये प्रत्ययलक्षणं नेत्यर्थे वेधा इत्यादौ ससजुषोरुरिति रुत्वे कर्तव्ये तस्य सकारोद्देश्यकत्वात् प्रत्ययलक्षणसूत्रप्रवृत्त्या पदत्वाभावेन रुत्वं न सिध्येत्। लुप्तप्रत्ययवृत्तिवर्णत्वव्याप्यधर्मावच्छिन्नोद्देश्यताककार्ये इत्यर्थेऽपि वर्णत्वव्याप्यस्य सत्वस्य लुप्तप्रत्ययवृत्तित्वाद् रुत्वस्य च तदवच्छिन्नोद्देश्यताककार्यत्वादुक्तदोषतादवस्थ्यमेव। अतो निष्कृष्टमर्थमाह—लुप्तेति। लुप्तप्रत्ययवृत्तिर्या वर्णत्वव्याप्यधर्मावच्छिन्ना निमित्तता तन्निरूपककार्ये प्रत्ययलक्षणसूत्रं न प्रवर्तते, तेन तत्कार्यं न भवतीत्यर्थः। तेन गोहितमित्यादाववादेशरूपकार्यनिरूपिताया लुप्त एप्रत्यये वर्तमानाया निमित्तताया वर्णत्वव्याप्येनाच्त्वरूपधर्मेणावच्छिन्नत्वात्तत्रानया प्रत्ययलक्षणनिषेधादवादेशो न। वेधा इत्यादौ च रुत्वरूपे कार्ये पदत्वसंपादनद्वारा निमित्तभूतो लुप्तो यः सुप्रत्ययस्तन्निष्ठनिमित्तताया: सुप्त्वेनावच्छिन्नत्वाद्वर्णत्वव्याप्यधर्मावच्छिन्नत्वाभावात्तत्रैतन्निषेधाप्रवृत्त्या प्रत्ययलक्षणेन सुबन्तत्वं तेन पदत्वं ततश्च रुः सिध्यति ॥ २६५ ॥

तच्च = वर्णप्राधान्यं च। अस्य = वर्णस्य। प्रत्ययाप्रकारत्वम् = प्रत्ययनिष्ठविशेष्यतानिरूपितप्रकारतानाश्रयत्वरूपं ज्ञेयमित्यर्थः। उक्तव्यवस्थाफलमाह—तेनेति। हलाश्रयणेऽपीति। मित्रं शास्तीति मित्रशीः। अत्र शासः क्विपि, शास इदङ्हलोरिति हलादिक्ङित्प्रत्ययनिमित्तकेत्वविधौ हल्रूपवर्णस्याश्रयणेऽपि तस्य प्रत्ययविशेषणत्वेनाप्राधान्यादनया प्रत्ययलक्षणनिषेधो न भवति, तेनेत्वं सिध्यति। एवम् अतृणेट् इत्यत्र 'तृणह इम्' इति हलादिपित्प्रत्ययनिमित्तक इमागमस्तिपो लोपेऽपि प्रत्ययलक्षणेन भवति, हलः प्रत्ययविशेषणत्वेनाप्राधान्यात्प्रकृतनिषेधाप्रवृत्तेः ॥ २६६ ॥

इयं च प्रत्ययलोपे प्रत्ययलक्षणमित्येतत्सूत्रस्थतत्तत्पदमहिम्नैव लब्धेत्याह—प्रत्ययलोपे इत्यादिना। प्रत्ययलक्षणवचनात् = प्रत्ययलक्षणमिति कथनात्। इदम् = प्रत्ययलक्षणं प्रत्ययप्राधान्ये प्रत्ययस्य प्राधान्येनाश्रयण एव भवति, न तु वर्णप्राधान्ये, इत्येवं

न तु वर्णप्राधान्ये तत एवार्थादियं लब्धा ।
वर्णाविशेषणत्वं प्राधान्यं प्रत्ययस्य विज्ञेयम् ॥ २६८ ॥
तेनान्यत्र विशेषणभावेऽपि प्रत्ययस्य सुपः ।
वर्णाविशेषणत्वाद्दध्यादेः सिध्यति पदत्वम् ॥ २६९ ॥
टिड्ढेत्यत्राणो योऽकार इति विशेषणं हि वर्णस्याण् ।
चित्रायां जातेत्यणि लुकि चित्रेत्यत्र तेन न भवति ङीप् ॥ २७० ॥

---

प्रत्ययलक्षणपदस्वरसादेवेयं परिभाषा लब्धा । एतदर्थं ज्ञापकान्वेषणं न कर्तव्यमिति भावः । नन्वेवं गोहितमित्यादावेज्निष्ठविशेष्यतानिरूपितप्रकारताश्रयत्वेन लुप्तप्रत्ययस्य प्राधान्याभावात्प्रत्ययलक्षणनिषेधसिद्धावपि हे दीर्घाहो निदाघेत्यादौ रोऽसुपीति सुपि रत्वनिषेधो न सिद्धयेत्, लुप्तप्रत्ययस्य अहन्-शब्दार्थनिष्ठविशेष्यतानिरूपिताव्यवहित-पूर्वत्वसंबन्धावच्छिन्नप्रकारताश्रयत्वेन प्राधान्याभावात् । दधि मध्वित्यादौ च प्रत्यय-लक्षणेन सुबन्तत्वप्रयुक्तपदत्वासिद्धिः । सुपोऽन्यपदार्थे विशेषणत्वेन प्राधान्याभावात्, अतः प्रत्ययप्राधान्यं निर्वक्ति—वर्णाविशेषणत्वमिति । वर्णत्वव्याप्यधर्मावच्छिन्न-विशेष्यतानिरूपितप्रकारतानाश्रयत्वरूपं प्रत्ययस्य प्राधान्यं ज्ञेयमित्यर्थः । गोहित-मित्यादावुक्तविधप्रकारताश्रयत्वेन प्रत्ययस्य न प्राधान्यम् । दीर्घाहो निदाघेत्यादिषु तु प्रत्ययस्येतरत्र विशेषणत्वेऽपि वर्णे प्रत्यविशेषगत्वात्प्राधान्यमक्षतमेवेति न कश्चिद्दोष इति बोध्यम् ॥ २६७, २६८ ॥

तेनेति । प्रत्ययस्य वर्णे प्रत्यविशेषणत्वरूपस्यैव प्राधान्यस्य विवक्षितत्वेनेत्यर्थः । अन्यत्रेति । सुप्तिङन्तं पदमित्यत्र सुब्रूपप्रत्ययस्यान्तपदार्थे प्रत्यभेदेन विशेषणत्वेऽपि वर्णे प्रत्यविशेषणत्वेन प्राधान्याद् दधि मधु इत्यादौ स्वमोर्लुकि प्रत्ययलक्षणेन सुबन्त-त्वात्पदत्वं सिध्यति । एवं सखेत्यत्र सुलोपेऽनङ्सिद्धिरित्यादि फलं ज्ञेयम् ॥ २६९ ॥

प्रत्ययस्य वर्णविशेषणत्वे तु तस्याप्राधान्यात् प्रत्ययलक्षणं न प्रवर्तेत इत्युदाहरति—सन्धिवेलाद्यृतुनक्षत्रेभ्योऽण् टिड्ढेति । टिड्ढाणञ् इति सूत्रे अणो योऽकारस्तदन्तात्प्राति पदिकान्ङीबित्यर्थात्प्रत्ययस्याणोऽकारविशेषणत्वेनाप्राधान्यात्, चित्रायां जाता चित्रा इत्यत्र चित्राशब्दात् 'सन्धिवेलाद्यृतुनक्षत्रेभ्योऽण्' इत्यनेन जातार्थे विहितस्याणप्रत्ययस्य 'चित्रारेवतीरोहिणीभ्य स्त्रियामुपसंख्यानम्' इति वार्तिकेन लुकि प्रत्ययलक्षणाप्रवृत्त्या ङीब् न भवतीति भावः ॥ २७० ॥

न स्थानिवत्त्वमल्विधिविषयेऽतस्तत्र कार्यसिद्ध्यर्थम् ।
प्रत्ययलक्षणविधिरिति वार्तिकमत एतदुपयोगः ॥ २७१ ॥
भाष्यमते तु प्रत्ययनिष्ठमसाधारणं रूपम् ।
यत्राश्रितं तदेव स्यादिति नियमादनुपयुक्ता ॥ २७२ ॥
ननु धातुग्रहणेऽस्ति हि तदादिविधिरित्यतः कृकमिसूत्रे ।
कमिना सिद्धे कंसग्रहणमनुपयुक्तमत आह ॥ २७३ ॥

---

वार्तिककारमतानुसारेणैवेयं परिभाषेत्याह—न स्थानिवत्त्वमिति । अल्विधौ लुप्तप्रत्ययनिमित्तककार्यातिदेशस्य विध्यर्थं प्रत्ययलक्षणसूत्रमिति वार्तिककारमतम् । तथाहि "प्रत्ययलोपे—" (१।१।६२) इति सूत्रे वार्त्तिकम्—"प्रयोजनं ङौ नकारलोपेत्वेम्विधयः" इति । आर्द्रे चर्मन् इत्यादौ छन्दसि ङेर्लुकि प्रत्ययलक्षणेन भसंज्ञया पदत्वप्रयुक्तनलोपस्याभावः प्रयोजनम् । इदं च न ङिसंबुद्ध्योरित्यत्र ङिग्रहणं न कर्तव्यमित्याशयेन । आशीः, मित्रशीः इत्यादौ क्विब्लोपे शास इदङ्हलोरित्यनेनेत्वम् । अतृणेट् इत्यत्र हल्ङ्याब्भ्य इत्यपृक्तलोपे तृणह इम् इतीमागमः । एते विधयोऽल्विधित्वात्स्थानिवत्सूत्रेण न सिध्यन्ति, तदर्थं प्रत्ययलोपे प्रत्ययलक्षणमिति सूत्रमिति तदाशयः । अस्मिन्मते गोहितमित्यादौ प्रत्ययलक्षणेनोक्तरीत्या दोषापत्तिसंभवात्तन्निवारणार्थमियं परिभाषोपयुक्तेति भावः ॥ २७१ ॥

**भाष्यमते त्विति ।** भाष्यकृता तु वार्तिकोक्तप्रयोजनानां प्रकारान्तरेण सिद्धिं प्रदर्श्य "न तर्हीदानीमयं योगो वक्तव्यः । वक्तव्यश्च । किं प्रयोजनम् ? प्रत्ययं गृहीत्वा यदुच्यते तत्प्रत्ययलक्षणेन यथा स्यात् । शब्दं गृहीत्वा यदुच्यते तत् प्रत्ययलक्षणेन मा भूदिति । किं प्रयोजनम् ? शोभना दृषदोऽस्य ब्राह्मणस्य सुदृषद् ब्राह्मणः । सौमनसी अलोमोषसी इत्येष स्वरो मा भूत्" इत्युक्तम् । तेन यत्र कार्ये प्रत्ययस्यासाधारणं = प्रत्ययत्वव्याप्यं रूपमाश्रीयते तदेव कार्यं प्रत्ययलोपे सति भवतीति नियमार्थत्वप्रतिपादनात् एचोऽयवायाव इत्यत्र तादृशरूपाश्रयणाभावाद् गोहितमित्यादौ प्रत्ययलक्षणाप्राप्त्या दोषाभावेन भाष्यमतेऽस्या नोपयोग इति भावः ॥ २७२ ॥

पूर्वपरिभाषायां प्रत्ययस्योपस्थित्या तद्विषयिणीः परिभाषा व्याचिख्यासुरल्पवक्तव्यत्वात्सूचीकटाहन्यायेनादाद्युणादय इत्येतां निरूपयति—**नन्विति ।** विष्वग्देवयोश्चेत्यस्योत्तरपदाधिकारस्थत्वेन अञ्चुरूपे उत्तरपदे विहितस्याद्यादेशस्य क्विबन्त एव तस्मिन् संभवादप्रत्ययग्रहणं व्यर्थं सदन्यत्र धातुग्रहणे तदादिविधिरिति ज्ञापयति । तेन

# उणादयोऽव्युत्पन्नानि प्रातिपदिकानि ॥ २२ ॥

यान्यभिधीयन्त उणाद्यन्ततया शाकटायनमतेन ।
तान्यत्र पाणिनिमते प्रकृतिप्रत्ययविभागशून्यानि ॥ २७४ ॥
इदमेव कंसपदमिह लिङ्गं कंसेस्तु नेष्यते कंसः ।
षत्वं यजुषेत्यादावुणादयो बहुलमिति सिद्धम् ॥ २७५ ॥
भाष्ये क्वचिदेतेषां व्युत्पन्नत्वं मतान्तरेणोक्तम् ।
एवमयामन्तेति तु त्रेत्याद्यपि सूत्रकारवचः ॥ २७६ ॥

---

विष्वगञ्चनमित्यादावद्र्यादेशो न भवति । एवं चातः कृकमीति सूत्रे कमिग्रहणेनौणादिकसप्रत्ययान्तस्य कंसशब्दस्यापि ग्रहणसिद्धेः कंसग्रहणं व्यर्थं स्यात्, अतस्तत्सार्थक्योपपादनायाहेत्यर्थः ॥ २७३ ॥

परिभाषायामुणादय इत्यस्य प्रत्ययबोधकत्वे प्रातिपदिकानीत्यनेन सह सामानाधिकरण्यानुपपत्तिः । उणाद्यन्ततदादिबोधकत्वे त्वव्युत्पन्नानीति कथनं व्याहतं, व्युत्पत्तिमाश्रित्यैवोणाद्यन्तत्वकथनात् अत आह—यानीति । शाकटायनाचार्यमतेन यान्युणाद्यन्ततदादित्वेनाभिधीयन्ते = उच्यन्ते, तानि कारुवाय्वादीनि प्रातिपदिकानि पाणिन्याचार्यमते प्रकृतिप्रत्ययविभागरहितानि ज्ञेयानीत्यर्थः ॥ २७४ ॥

**इदमेवेति** । अवतरणोक्तसूत्रस्थं कंसग्रहणमेवास्या ज्ञापकमित्यर्थः । ननु कसि गतिशासनयोरित्यस्मात्पचाद्यचि कंसशब्दोऽन्योऽस्ति तस्मिन्परे सत्वविधानार्थमावश्यकं कंसग्रहणमतो न ज्ञापकमित्याशङ्कायामाह—**कंसेस्त्विति** । प्रत्ययस्य लुक् श्लु लुपः ( १।१।६१ ) इति सूत्रे भाष्ये कमेः सः कंस इति व्युत्पत्त्यभिधानात्, कैयटेन चानेनैव कंसग्रहणेन प्रकृतपरिभाषाज्ञापनात्कंसिप्रकृतिककंसशब्दस्यानभिधानमिति भावः । नन्वेवमुणादिनिष्पन्नानां सर्पिर्यजुरादिशब्दानामव्युत्पन्नत्वाङ्गीकारे तदीयसकारस्य प्रत्ययावयवत्वाभावादादेशप्रत्यययोरिति षत्वं न सिध्येदत आह—**षत्वमिति** । उणादयो बहुलमित्यनेन पराभिमतरीत्या ज्ञातसाधुत्वानामपि तेषां साधुत्वाभ्यनुज्ञानात्तेनैव तत्र षत्वसिद्धिरिति भावः ॥ २७५ ॥

**भाष्य इति** । ण्वुल् तृचौ ( ३।१।१३३ ) इत्यादिसूत्रेषु भाष्ये उणाद्यन्तानां व्युत्पन्नत्वमाश्रित्य तृचश्चकाराभावे मातृप्रभृतिशब्दानां तृप्रत्ययान्तत्वेन दीर्घापादनादिविचारः कृतः, स तु मतान्तरेण शाकटायनादिमतेन । एवम् 'अयामन्ताल्वाय्येत्न्विष्णुषु' इति सूत्रे अन्त, आय्य, इत्नु इत्येतेष्वौणादिकप्रत्ययेषु णेरयादेशविधानं तथा ति तु त्र त थ सि सुसरकसेषु चेत्यौणादिकानामिण्निषेधार्थकं सूत्रमपि मतान्तरेणैवेत्यर्थः ॥ २७६ ॥

अत एव चायनेयीनिति सूत्रे शङ्खषण्ढादौ ।
ईनादीनाशङ्कयाव्युत्पन्नतया समाहितं भाष्ये ॥ २७७ ॥
चैत्रश्चिकीर्षतीत्यादिषु समुदायस्य चैत्रादेः ।
सन्नन्ततया स्यान्ननु धातुत्वमथ च सुपो लुगत आह ॥ २७८ ॥

## प्रत्ययग्रहणे यस्मात्स विहितस्तदादेस्तदन्तस्य ग्रहणम् ॥ २३ ॥

यस्मात्प्रत्ययविधिरिति विभज्यते सूत्रमङ्गपदरहितम् ।
इह गृह्यमाण उपतिष्ठत इति शेषोऽनुसन्धेयः ॥ २७९ ॥
तेनैतत्परिभाषाघटकतदाद्यन्तभागनिष्पत्तिः ।
सिद्धश्च येनविधिरिति सूत्रेण तदन्तभागोऽस्याः ॥ २८० ॥

---

**अत एवेति** । उणाद्यन्तत्वेनाभिमतानामव्युत्पन्नत्वादेव शङ्खशब्दे खप्रत्ययावयवखकारस्य ईनादेशं, षण्ढशब्दे च ढप्रत्ययावयवढकारस्य एयादेशमाशङ्क्य आयनेयीनीयियः (७।१।२) इति सूत्रे भाष्ये 'प्रातिपदिकविज्ञानाच्च भगवतः पाणिनेराचार्यस्य सिद्धम् । उणादयोऽव्युत्पन्नानि प्रातिपदिकानि' इति समाधानं कृतमित्यर्थः ॥ २७७ ॥

प्रत्ययप्रसङ्गात्तद्विषयिणीं परिभाषामवतारयति— **चैत्र इति** । चैत्रश्चिकीर्षतीत्यादौ सनाद्यन्ता धातव इत्यनेन चैत्रशब्दाद्यवयवकस्य सन्प्रत्ययान्तावयवकस्य "चैत्रश्चिकीर्ष" इति समुदायस्य धातुत्वं स्यात् । धातुत्वे च तदन्तर्वर्तिनः सुपः सुपोधात्वित्यनेन लुगापत्तिः । इदमुपलक्षणम् । विशिष्टाल्लुङाद्युत्पत्त्या विशिष्टस्याडापत्तिः सन्यङोरिति द्वित्वस्य च चैत्रशब्दे प्रवृत्त्यापत्तिरित्यपि बोध्यम् । एवं देवदत्तो गार्ग्य इत्यादौ समुदायस्य तद्धितान्तत्वेन प्रातिपदिकत्वे सुपो लुगापत्तिरपि ज्ञेया ॥ २७८ ॥

परिभाषालाभोपायमाह— **यस्मादिति** । अङ्गपदरहितमिति । "यस्मात्प्रत्ययविधिस्तदादिप्रत्यये" इति योगो विभज्यत इत्यर्थः । इह = अस्मिन्वाक्ये । गृह्यमाणे उपतिष्ठत इति शेषपूर्तिः कर्तव्या । प्रत्यये गृह्यमाणे यस्मात्प्रत्ययविधिस्तदादि उपतिष्ठत इति योजना ॥ २७९ ॥

**तदाद्यन्तेति** । प्रत्ययग्रहणे यस्मात्स विहितस्तदादेरित्यन्तपरिभाषाभागस्य निष्पत्तिः सिद्धिरित्यर्थः । तदन्तभागः = तदन्तस्येत्यंशः ॥ २८० ॥

यत्र विशेष्यं पठितं तत्र तदादाय यत्र चानुक्तम् ।
तत्रादाय विशेष्यं तदादिरूपं तदन्तविधिः ॥ २८१ ॥
स्वप्रकृतिप्रथमांशकसमुदायः प्रत्ययत्वलिङ्गेन ।
अनुमीयतेऽत्र च प्रत्ययो विशेषणमतस्तदन्तविधिः ॥ २८२ ॥
इत्थमभीष्टार्थस्याधिगमाद्विफलेयमिति केचित् ।
तदसदियानित्यादौ प्रत्ययसत्त्वेऽपि तत्प्रकृतिविरहात् ॥ २८३ ॥
तादृशसमुदायस्याभावान्नैकान्तिकं हि तल्लिङ्गम् ।
शब्दोपस्थित एव च शाब्दधियां भाति न त्वनुमितोऽर्थः ॥ २८४ ॥

---

येन विधिस्तदन्तस्येत्यनेन विशेषणं तदन्तस्य संज्ञेति प्रतिपाद्यते, विशेषणत्वं च विशेष्यापेक्षमतस्तद्दर्शयति—यत्रेति । अनुक्तमिति विशेष्यमिति संबध्यते । अयं भावः—यत्र प्रत्ययस्य विशेष्यं साक्षादुच्चारितं यथा यञिञोश्चेत्यत्र प्रातिपदिकादिति तत्र तदेव विशेष्यं गृहीत्वा यञिञोस्तद्विशेषणत्वेन तदन्तविधिः कर्तव्यः । तत्रोपस्थितस्य तदादेरित्यस्याभेदेन तदन्तेऽन्वयः । तेन यञ्यस्माद्विहितस्तदाद्यभिन्नयञन्तादित्यादि क्रमेणार्थः । यत्र तु विशेष्यं नोपात्तं यथा ङ्याप्प्रातिपदिकादित्यत्र, तत्रोपस्थितं तदादिशब्दस्वरूपमेव विशेष्यं गृहीत्वा ङ्यापोस्तद्विशेषणत्वेन तदन्तविधिः । तेन ङ्याबन्ततदादेरित्यर्थः । सनाद्यन्ता धातव इत्यादौ सन्नित्यादिप्रत्ययग्रहणसत्त्वात्तदादेरित्यस्योपस्थितिः । तस्य सनाद्यन्ता इत्यत्राभेदेनान्वयः । एवं च सनादिर्यस्माद्विहितस्तदाद्यभिन्नो यः सनाद्यन्त इति बोधः । तेन चैत्रश्चिकीर्षतीत्यादौ चैत्रादिसमुदायस्य सन् यस्माद्विहितस्तदादित्वाभावान्नोक्तदोषः । न च सनाद्यन्ता इत्यत्र तदादिरूपं विशेष्यमादाय तदन्तविधिसंभवादन्तग्रहणं व्यर्थमित्याशङ्क्यम् । संज्ञाविधौ प्रत्ययग्रहणे तदन्तग्रहणनिषेधात्तदन्तसंज्ञार्थं तस्यावश्यकत्वात् ॥ २८१ ॥

प्रकृतपरिभाषाप्रतिपाद्यार्थस्य प्रकारान्तरेण लाभादियं निष्फलेति केषांचिन्मतमनूद्य निरस्यति—स्वप्रकृतीत्यादिना पद्यत्रयेण । स्वप्रकृतिप्रथमांशकः = स्वप्रकृतिः प्रथमांश आद्यवयवो यस्यैवंभूतः । स्वं = प्रत्ययः । प्रत्ययः स्वप्रकृत्याद्यवयवकसमुदायविशिष्टः प्रत्ययत्वात् । राम इत्येतद्घटकसुप्रत्ययवदित्यनुमानाकारः । अत्र प्रत्ययत्वादित्यनेन परत्वावच्छिन्नविधेयताश्रयत्वस्य हेतुत्वेन विवक्षितत्वाद् बहुच्प्रत्यये न व्यभिचारः । तस्य पुरस्ताद्विधानात् । साध्ये प्रकृतित्वं चापर्याप्त्यापि गृह्यते, तेन रुणद्धीत्यादौ श्नमि न व्यभिचारः । अत्र चेति । उक्तविधसमुदायं प्रति प्रत्ययो विशेषणम् । तेन तदन्तविधौ, प्रत्ययग्रहणे प्रत्ययान्तस्य स्वप्रकृत्याद्यवयवकसमुदायस्य लाभादियं परिभाषा निष्फलेति केचिदाहुः । तदसत् । इयानिति । इदंशब्दा-

यत्र निमित्ततयोक्तः प्रत्ययल्लुटौ यथा स्यतासिविधौ ।
तत्र तदादेः केवलमुपस्थितिर्न तु तदन्तस्य ॥ २८५ ॥
पञ्चम्यन्ताच्च परः प्रत्यय आश्रीयते यत्र ।
तत्रापि तथाऽतश्चेङ्ह्रस्वादिह लभ्यते तदन्तार्थः ॥ २८६ ॥

---

त्परिमाणार्थे वतुप्प्रत्यये वस्य घादेशे तस्य चेयादेशे "इदं किमोरीश्की" इत्यनेन इदंशब्दस्य ईकारादेशे तस्य यस्येति चेत्यनेन लोपे च इयान् इति रूपे प्रकृतेरपहारात्प्रत्ययसत्त्वेऽप्युक्तविधसमुदायाभावेनोक्तहेतोर्व्यभिचरितत्वान्नोक्तार्थसिद्धिरिति भावः। ननु परत्वे सति परत्वावच्छिन्नविधेयताश्रयत्वं हेतुत्वेन विवक्ष्यते इयानित्यत्र तु प्रकृतेर्लोपात्प्रत्यये तदवधिकपरत्वाभावान्न व्यभिचार इत्यत आह—शब्दोपस्थित एवेति। शब्दनिष्ठवृत्तिज्ञानजन्योपस्थितेरेव शाब्दबोधे कारणत्वम्। अन्यथा घटपदश्रवणेऽनुमानेनोपस्थितस्याकाशस्यापि शाब्दबोधे भानप्रसङ्गादिति भावः ॥२८२, २८३, २८४॥

प्रत्ययग्रहणे चापञ्चम्या इति वक्ष्यमाणपरिभाषाबलात् क्वचित्तदाद्यंशस्यैवोपस्थितिरित्याह—यत्रेति। स्यतासिविधौ = स्यतासीलृलुटोरित्यत्र। एवं सुपि चेत्यादावपि ज्ञेयम्। अत्र यथा धातोरिति पञ्चम्यन्तार्थावधिकपरत्वेन प्रत्ययस्याश्रयणात्प्रत्ययग्रहणे चापञ्चम्या इति परिभाषाप्रवृत्तिस्तथाऽग्रिमपरिभाषायां निरूपयिष्यते। स्यतासीलृलुटोरित्यत्रोपस्थितं तदादेरिति, धातोरिति पञ्चम्यन्तानुरोधेन पञ्चम्यन्तम्। लृट् यस्माद्विहितस्तदादेर्धातोर्लृटि परे स्यो भवतीत्यादिक्रमेणार्थः। तत्र व्यपदेशिवद्भावेन स्वस्यैव तदादित्वं ज्ञेयम्। सुपि चेत्यादौ तु अङ्गस्येति षष्ठ्यन्तानुरोधात्तदादेरिति षष्ठ्यन्तं बोध्यम् ॥ २८५ ॥

आश्रीयते—। कार्यान्तरविधानायोद्देश्यत्वेनाश्रीयते। यथा अतो भिस ऐस् इत्यत्र पञ्चम्यन्तार्थावधिकपरत्वविशिष्टो भिस्प्रत्यय ऐसादेश विधानायोद्देश्यत्वेनाश्रीयते, तत्रापि तथा = तदादेरित्यस्यैवोपस्थितिरित्यर्थः। अतश्चेति। उक्तविधस्थले तदादेरित्यस्योपस्थितेरेव एङ्ह्रस्वात्संबुद्धेरित्यत्र तदादेरुपस्थित्या। एङस्तद्विशेषणत्वेन तदन्तविधिना एङन्ताद्ध्रस्वान्ताच्च तदादेरित्यर्थो लभ्यते। तेन हे कतरत् इत्यत्र संबुद्धिदकारलोपो न। कुलेत्यत्र च संबुद्धिमकारलोपः सिद्धः। संबुद्ध्याऽङ्गस्याक्षेपेण तद्विशेषणात्तदन्तविधिरिति कौमुद्युक्तं तु न युक्तम्। आक्षिप्तस्य शाब्दबोधेऽनन्वयाति, इदं शब्देन्दुशेखरे स्पष्टम्। न च हे कतरत्, इत्यत्र संबुद्ध्यवयवाकारपर्यन्तस्यापि संबुद्धिर्यस्माद्विहिता तदादित्वेन ह्रस्वान्तत्वेन च ततः परस्य संबुद्ध्यवयवस्य हलो दकारस्य लोपापत्तिरिति वाच्यम्। एङ्साहचर्येणाङ्गावयवस्यैव ह्रस्वस्य ग्रहणेन दोषाभावात् ॥ २८६ ॥

अपि च परमगार्ग्यायण इति फलमस्याः प्रदर्शितं भाष्ये ।
तत्र यञन्ततदादेर्गार्ग्यपदादेव फग् न तु समासात् ॥ २८७ ॥
तत्र च तावन्मात्रेणैकार्थीभावविरहेऽपि ।
भाष्योक्तिबलादेवैकदेशतस्तद्धितो भवति ॥ २८८ ॥
प्रत्ययमात्रग्रहणे प्रवर्तत इयं न सामान्ये ।
अत उगितश्चेत्यत्र न तत्सिद्धं निर्यवमतीति ॥ २८९ ॥
पूर्वोदितपरिभाषाघटकतदन्तग्रहांशबाधकरम् ।
भाष्येऽस्ति येन विधिरिति सूत्रस्थे निगदितं वचनमेतत् ॥२९०॥

---

भाष्यकृत्प्रदर्शितमन्यदपि परिभाषाप्रयोजनमाह—अपि चेति । भाष्ये = येनविधिस्तदन्तस्य ( १।१ ७२ ) इति सूत्रस्थे भाष्ये । परमगार्ग्यस्यापत्यं परमगार्ग्यायणः । अत्रानया परिभाषया यञिञोश्चेति फक्प्रत्ययविधायके सूत्रे यञ्पदेन यञन्ततदादेर्ग्रहणबोधनाद् गार्ग्यशब्दादेव फग्भवति न तु परमगार्ग्येति समुदायात् । अस्या अभावे तु तस्यापि यञन्तत्वात्ततः फकि पकाराकारस्य वृद्धौ पारमगार्ग्यायण इत्यनिष्टरूपापत्तिः स्यादिति भावः ॥ २८७ ॥

ननु राजपुरुषस्यापत्यं पुमानित्यर्थे पुरुषशब्दादिञ्प्रत्ययेन राजपौरुषिरिति मा भूदित्यर्थः, स्वार्थान्वयितावच्छेदकधर्मावच्छिन्नवाचकतापर्याप्त्यधिकरणादेव तद्धितो भवतीति नियमाङ्गीकारात् प्रकृते गार्ग्येत्यस्य यञन्ततदादित्वेऽपि, अपत्यरूपतद्धितार्थान्वयितावच्छेदकं यत् परमाभिन्नगार्ग्यत्वं तदवच्छिन्ननिरूपितवाचकतापर्याप्त्यधिकरणत्वाभावात् परमगार्ग्येति समुदायस्यैव तथात्वात् कथं गार्ग्यशब्दात् फगित्याशङ्कायामाह—तत्र चेति । भाष्योक्तिबलादिति । उक्तसूत्रे परमगार्ग्यायणः परमवात्स्यायन इति प्रत्ययग्रहणपरिभाषोदाहरणपरभाष्यप्रामाण्यादित्यर्थः ॥ २८८ ॥

प्रत्ययमात्रेति । प्रत्ययबोधकत्वे सति प्रत्ययेतराबोधकं पदं प्रत्ययग्रहणं तत्रैवेयं परिभाषा प्रवर्तते । न तु सामान्ये = प्रत्ययाप्रत्ययबोधके । अत इयमुगितश्चेति सूत्रे न प्रवर्तते उगित्पदं हि मतुबादिप्रत्ययस्येव भवत्विति प्रातिपदिकस्यापि बोधकमिति तस्य प्रत्ययमात्रबोधकत्वाभावात् । तेन निर्यवमतीत्यत्र मत्वन्ततदादिभिन्नादपि निर्यवमच्छब्दान्ङीप् सिद्ध इत्यर्थः ॥ २८९ ॥

अपवादसङ्गतिं दर्शयति—पूर्वोदितेति । भाष्ये निगदितं वचनमित्यनेनेयं वाचनिकीति सूच्यते एतदादिपरिभाषाचतुष्कं प्रत्ययग्रहणपरिभाषाया अपवादरूपम् ॥२९०॥

## प्रत्ययग्रहणे चापञ्चम्याः ॥ २४ ॥

पञ्चम्यन्तार्थात्परमुद्देश्यं प्रत्ययं यदभिधत्ते ।
तादृक् पदं तदन्तावबोधकं नेति वाक्यार्थः ॥२९१॥
अत एव रदाभ्यामिति सूत्रे निष्ठापदान्न निष्ठान्तम् ।
तेन दृषत्तीर्णा परिषत्तीर्णेत्यत्र धातुतस्य न नः ॥२९२॥
अनयाऽत्र तदन्तांशानुपस्थितावपि तदाद्युपस्थित्या ।
आदाय तद्विशेष्यं तदन्तविधिना खलु रदान्तात् ॥२९३॥
निष्ठा यस्माद् विहिता तदादिशब्दात्परस्य निष्ठातः ।
नत्वं स्यादित्यर्थाद्धात्ववयवतस्य नत्वं न ॥२९४॥
निर्दिश्यमाननिष्ठावयवस्येत्येव सिद्धमिदमिति चेत् ।
तर्ह्यनुदात्तादपदादाचारे क्विपि ततश्च निष्ठाक्ते ॥ २९५ ॥

---

**पञ्चम्यन्तेति ।** पञ्चम्यन्तार्थावधिकपरत्वविशिष्टम्, उद्देश्यम् = किंचित्-कार्यनिष्ठविधेयतानिरूपितोद्देश्यताश्रयं प्रत्ययं यत्पदमभिधत्ते बोधयति, तत्पदं तदन्तबोधकं न भवतीत्यर्थः । विधेयबोधकङीबादिघटिते ऋन्नेभ्यो ङीबित्यादौ तु तद्वाक्यार्थबोधात्प्राग् ङीपः प्रत्ययत्वस्यैवाभावेन प्रत्ययग्रहणपरिभाषाया न प्रवृत्तिरित्येतत्फलितमेवोद्देश्यमिति विशेषणं बोध्यम् ॥ २९१ ॥

परिभाषाफलमाह—**अत एवेति । दृषत्तीर्णेति ।** तॄ धातोः क्तप्रत्यये स्त्रीत्वाट्टापि तीर्ता इत्यस्य दृषदादिपदेन संबन्धे दकारात्परस्य धातुतकारस्य नत्वं न भवति, किन्तु प्रत्ययावयवतकारस्यैवेत्यर्थः ॥ २९२ ॥

एतत्परिभाषासहकारेण रदाभ्यामिति सूत्रस्य यादृशोऽर्थः, यथा चोक्तदोषनिवृत्तिस्तत्सर्वं दर्शयति—**अनयेत्यादिना ।** अत्र = रदाभ्यामिति सूत्रस्थे निष्ठापदे । **तदाद्युपस्थित्येति ।** तदादेरित्यंशानुपस्थितौ मानाभावात्सोऽत्र उपतिष्ठत एवेति भावः । तद्विशेष्यम् = तदादिरूपं विशेष्यम्, आदाय तद्विशेषणीभूतेन रदाभ्यामित्यनेन तदन्तविधिना रेफान्तो दान्तश्च यस्तदादिस्तस्मात्परस्येत्यर्थो लभ्यते । तेनोक्तस्थले धात्ववयवतकारस्य नत्वं न भवतीत्यर्थः ॥ २९३ ॥ २९४ ॥

**निर्दिश्यमानेति ।** प्रकृतपरिभाषाऽभावेऽपि निर्दिश्यमानपरिभाषया निष्ठान्ततदाद्यवयवो यो निष्ठापदीयनिर्दिश्यमानस्तदवयवस्य रदाभ्यां परस्य तकारस्य नत्वमिति

इडभावेन तशब्दे दृषदा योगे दृषत्त इत्यत्र ।
निष्ठान्ततदाद्यवयवतस्य न नत्वं तदस्य फलम् ॥ २९६ ॥

अपि चातो भिस ऐसिति सूत्रे न तदन्तधीर्भिसिति वचसा ।
आमा चामन्तमतिर्न नुडादिविधाविति फलानि ॥ २९७ ॥

---

रदाभ्यामिति सूत्रस्यार्थाद्धातुतकारस्य निष्ठापदीयनिर्दिश्यमानावयवत्वाभावादेव नत्वं न भविष्यति । अतो दृषत्तीर्णेत्यादि नास्याः परिभाषायाः फलमिति मन्यते चेत्तर्हि वक्ष्यमाणरीत्या दृषत्त इत्येतत्फलं ज्ञेयम् इत्यभिसंबन्धः । ननु रदाभ्याम् ( ८।२।४२ ) इति सूत्रे भाष्ये चरितं मुदितमित्यादौ नत्वाभावाय रदाभ्यामिति न निष्ठाया विशेषणं किन्तु तकारस्येत्युक्तम् । तत्र निर्दिश्यमानपरिभाषाप्रवृत्तौ तु निर्दिश्यमानतप्रत्ययस्येटा व्यवहितत्वेन रदाभ्यामिति नत्वाप्राप्त्या रदाभ्यामित्यस्य निष्ठाविशेषणत्वेऽपि दोषाभावात्तदसङ्गतिः स्यादतस्तत्र निर्दिश्यमानपरिभाषाप्रवर्तनमयुक्तमिति चेन्न । क्तक्तवतू निष्ठेत्यनेन यदागमपरिभाषासहकारेणेट्सहितस्यापि निष्ठासंज्ञाविधानात्तत्र निर्दिश्यमानपरिभाषाप्रवृत्तावपि दोषसत्त्वात्तन्निवृत्त्यै रदाभ्यामित्यस्य तकारविशेषणत्वावश्यकत्वेन भाष्यविरोधाभावात् । अनुदात्तादिति । अन प्राणने इत्यतः क्विपि आन्शब्दात् स्त्रियां "डाबुभाभ्याम्" इति डाप्प्रत्यये डित्त्वाट्टिलोपे 'सुप्पितावनुदात्तौ' इत्यनेन, आशब्दोऽनुदात्तः । तस्मादाचारक्विबन्तात्कर्तृक्विपि नपुंसकह्रस्वे अ इत्यनुदात्तः शब्दः । तत आचारक्विपि धातुत्वाद् भूतार्थे निष्ठासंज्ञकक्तप्रत्ययेऽनुदात्तत्वाद् एकाच उपदेशेऽनुदात्तादितीण्निषेधे अतो लोप इत्यनेनाकारलोपे त इति रूपम् । तस्य दृषच्छब्देन सम्बन्धे दृषत्त इति । अत्र त इत्यस्य व्यपदेशिवद्भावेन निष्ठान्ततदादित्वान्निष्ठापदीयनिर्दिश्यमानत्वाच्च तदवयवतकारस्य दकारात्परस्य नत्वापत्तिः । सत्यां त्वस्यां परिभाषायामुक्तरीत्या रेफदान्तात्तदादेः परस्य निष्ठापदीयनिर्दिश्यमानावयवस्य तकारस्येत्यर्थाद् दृषदित्यस्य, निष्ठा यस्माद्विहिता तदादित्वाभावान्न दोषः । अतस्तदस्याः फलम् ॥ २९५, २९६ ॥

प्रसिद्धस्थलेषु फलान्तराण्याह—अपि चेति । न तदन्तधीः—। तत्र तदन्तबुद्धौ तु भिस्पदेन भिसन्तग्रहणे हे रामेत्याद्यज्ञात्परस्य विश्वपाभिरित्यादेरैसादेशापत्तिः । आमा चेति । ह्रस्वनद्यापो नुडित्यत्रानुवृत्तेनाम्पदेनामन्तग्रहणं न । एवमामि सर्वनाम्नः सुडित्यादावपि ज्ञेयम् ॥ २९७ ॥

लृलुटोरिति सप्तम्या परयोरिति शेष ऊह्यतेऽत्र पुनः ।
धातोरित्यवधितयाऽन्वेतीत्येषा प्रवर्तते तत्र ॥ २९८ ॥

हल्ङ्याब्भ्य इह ङ्यापोः प्रातिपदिकतः परत्वसत्त्वेऽपि ।
नियतावधिसाकाङ्क्षार्थकपदविरहान्न तत्रेयम् ॥ २९९ ॥

अत एव च निर्देशः सङ्गच्छत उत्तमैकाभ्याम् ।
सुपि चेत्यत्र तदन्ताश्रयणे हि स नैत्र युज्येत ॥ ३०० ॥

नन्वेवमपि कुमारी ब्राह्मणिरूपाऽनयोः सति समासे ।
रूपान्त उत्तरपदे ङ्यन्तह्रस्वो भवेद्धरूपेति ॥ ३०१ ॥

---

स्यतासी लृलुटोरित्यादौ लृलुटोः पञ्चम्यन्तार्थावधिकपरत्वस्य साक्षादनुक्तत्वेऽपि आक्षेपेण तल्लाभादस्याः प्रवृत्तिर्भवत्येव । तेन लृडन्तलुडन्ततदादौ स्यतास्योर्विधानापत्तिर्नेत्याह—**लृलुटोरिति** । **परयोरिति शेष इति** । तस्मिन्निति निर्दिष्टे पूर्वस्येति परिभाषया सप्तम्यन्तार्थाव्यवहितपूर्वस्य कार्यबोधनात्तत्संपत्तये परयोरिति शेषः कल्प्यत इति भावः । **अवधितयेति** । परत्वस्य नियमेनावधिसाकाङ्क्षत्वादिति भावः । ततश्च धातोः परयोर्लृलुटोरित्यर्थेन पञ्चम्यन्तार्थात्परत्वस्य प्रत्यये सत्त्वादस्याः प्रवृत्तिर्भवत्येवेति न दोष इति भावः ॥ २९८ ॥

**न तत्रेयमिति** । हल्ङ्याब्भ्य इति सूत्रे ङ्याप्पदेऽस्याः प्रवृत्तिर्न भवति । तेन तदादितदन्तयोरुभयोरुपस्थित्या ङ्याबन्ततदादेरित्यर्थलाभ इति भावः ॥ २९९ ॥

आक्षेपलभ्यपरत्वमादायाप्यस्याः प्रवृत्तिरित्यत्र प्रमाणमाह—**अत एवेति** । उत्तमैकाभ्यामिति निर्देशोऽत एव सङ्गच्छत इत्यन्वयः । अत एव = उक्तरीत्या परत्वमादायाप्यस्याः प्रवृत्तेरेवेत्यर्थः । अयमेव च निर्देशोऽस्या ज्ञापकः । तस्माद्धर्मिग्राहकमानादेवोक्तार्थः सिद्ध इति भावः ॥ ३०० ॥

तदन्तग्रहणनिषेधकत्वेन पूर्वपरिभाषासजातीयामन्यामपि निरूपयति—**नन्विति** । **एवमपि**—। पूर्वपरिभाषया तदन्तांशनिषेधेऽपि कुमारी चासौ ब्राह्मणिरूपेति कर्मधारये, कुमारी ब्राह्मणिरूपा यस्या इति बहुव्रीहौ वा कुमारी ब्राह्मणिरूपेति रूपमिष्यते । तत्र स्त्रियाः पुंवदित्यनेन प्राप्तं पुंवद्भावं बाधित्वा परत्वेन घरूपेत्यनेन रूपप्रत्ययान्त उत्तरपदे ह्रस्वः स्यादित्यर्थः ॥ ३०१ ॥

पूर्वोक्तया तदादिं विशेष्यमादाय यस्तदन्तविधिः ।
तस्य निषेधेऽप्युत्तरपदमादायैतदापत्तेः ॥ ३०२ ॥

अत आह—

## उत्तरपदाधिकारे प्रत्ययग्रहणे न तदन्तग्रहणम् ॥२५॥

प्रत्ययगताऽऽनुपूर्वीबोधकरं यत्र पठ्यते हि पदम् ।
तत्रैवेयमतः खलु रात्रेः कृति मुम् कृदन्त इति सिद्धम् ॥३०३॥

नन्वेवमुत्तरपदं विशेष्यमादाय घपदेन ।
घान्तग्रहणे तस्मिन् ह्रस्वापत्तिर्भवेन् मैवम् ॥३०४॥

संज्ञाविधौ तदन्तग्रहणनिषेधस्य सामर्थ्यात् ।
विधिदेशेऽपि तदन्ताग्रहणेनापत्तिपरिहारात् ॥३०५॥

---

ननु घरूपेत्यत्रापि सप्तमीश्रवणात् सुपि चेत्यादाविव घादिषु परेष्वित्यर्थेन पञ्चम्यन्तार्थावधिकपरत्वविशिष्टप्रत्ययस्याश्रयणात्पूर्वपरिभाषयैत्र तदन्तग्रहणनिषेधसिद्धेः किमनयेत्यत आह—**पूर्वोक्तयेति** । पूर्वपरिभाषया तदादिरूपं विशेष्यमादाय तद्विशेषणत्वेन प्राप्तो यस्तदन्तविधिस्तस्यैव निषेधादुत्तरपदरूपविशेष्यमादाय तद्विशेषणै रूपादिप्रत्ययैस्तदन्तविधिः स्यादेवेति तन्निवारणायेयं परिभाषाऽऽवश्यकीति भावः ॥ ३०२ ॥

**प्रत्ययगतेति** । प्रत्ययवृत्तिश्रावणप्रत्यक्षविषयतावच्छेदकधर्मावच्छिन्नविषयताप्रयोजकपदोपादान एवास्याः प्रवृत्तिः । अतो रात्रेः कृति विभाषेत्यस्योत्तरपदाधिकारस्थत्वेऽपि कृत्पदेन कृदन्तग्रहणं भवति, ततश्च रात्रिञ्चर इत्यत्र मुमागमः सिध्यति । कृत्पदस्योक्तविधत्वाभावेन तत्रास्या अप्रवृत्तेः । एवं खित्यनव्ययस्येत्यत्राप्युक्तविधपदाभावात् खिदन्त उत्तरपदे परे ह्रस्वस्तेन शुनिन्धय इति सिध्यतीति बोध्यम् ॥ ३०३ ॥

उक्तार्थाङ्गीकारे दोषमाशङ्क्य परिहरति—**नन्वेवमिति** । घरूपेति सूत्रे घपदस्योक्तविधत्वाभावात् कुमारी गौरितरेत्यत्र समासे सति तरबन्त उत्तरपदे पूर्वपदस्य कुमारीत्यस्य ह्रस्वापत्तिरित्यर्थः । परिहरति—**मैवमिति** ॥ ३०४ ॥

हेतुमाह—**संज्ञाविधाविति** । संज्ञाविधौ प्रत्ययग्रहणे तदन्तग्रहणं नास्तीति संज्ञासूत्रे तदन्तग्रहणनिषेधसामर्थ्याद् विधिदेशेऽपि प्रत्ययवाचिसंज्ञोपादाने तदन्तग्रहणं नेति कल्पनेनोक्तापत्तिपरिहारादित्यर्थः ॥ ३०५ ॥

हृदयस्य हृदिति सूत्रे लेखग्रहणं च लिङ्गमेतस्याः।
अण्ग्रहणेन तदन्तग्रहणे सिद्धे तदुक्तिवैयर्थ्यात् ॥३०६॥
ननु लेखग्रहणे स्यात्तदन्तबोधेन हृत्परमलेखः।
अणि तु यतः स तदादिग्रहणात्तन्नेति फलभेदः ॥३०७॥
मैवं गिलेऽगिलस्येत्यत्र तदन्तग्रहेण सिद्धेऽपि।
वार्तिककृतो गिलगिले चेत्युक्त्या ज्ञाप्यतेऽन्यपरिभाषा ॥३०८॥

**उत्तरपदाधिकारे प्रातिपदिकग्रहणे न तदन्तग्रहणमिति।**

अत एव चेष्टकादेः परमचितादौ न ह्रस्वता भवति।
ज्ञापकपरभाष्यादिह लेखेति पदं नहि घञन्तम् ॥३०९॥

---

हृदयस्येति। 'हृदयस्य हृल्लेखयदण्लासेषु' इत्यस्मिन्सूत्रे लेखग्रहणमस्या ज्ञापकम्। ज्ञापकतामुपपादयति—अण्ग्रहणेनेति। अस्या अभावे इत्यध्याहारः ॥३०६॥

ज्ञापकत्वानुपपत्तिमाशङ्कते—नन्विति। तदन्तबोधेनेति। उत्तरपदरूपविशेष्यमादाय तद्विशेषणेन लेखशब्देन तदन्तविधिनेति भावः। न च ग्रहणवता प्रातिपदिकेन तदन्तविधिर्नास्तीति निषेध आशङ्क्यस्तस्य प्रत्ययविधिविषयत्वेनात्राप्राप्तेः। यतः सः = यस्मात्सोऽण् प्रत्ययो विहितस्तदादेरणन्तस्य ग्रहणात्, परमलेखेत्यस्य तु तथात्वाभावात्तत्र परे हृदादेशो न स्यादिति फलभेदाज्ज्ञापकत्वं न युक्तमिति भावः ॥ ३०७ ॥

परिहरति—मैवमिति। 'गिलेऽगिलस्य' गिलशब्दे उत्तरपदे गिलभिन्नस्य मुम् स्यादित्यर्थकेऽत्र वार्तिके गिलपदेन तदन्तविधिना गिलशब्दान्ते गिलगिलशब्देऽपि मुम्विधानसंभवेन तिमिङ्गिलगिल इत्यस्य सिद्धौ तदर्थं गिलगिले चेति वार्तिकारम्भसामर्थ्याद् उत्तरपदाधिकारे प्रातिपदिकग्रहणे न तदन्तग्रहणमित्येषाऽन्यापि परिभाषया ज्ञाप्यत इत्यर्थः ॥ ३०८ ॥

उक्तपरिभाषायाः फलमाह—अत एव चेति। 'इष्टकेषीकामालानां चिततूलभारिषु' इत्यत्रानया चितादिशब्दैस्तदन्तग्रहणाभावाद् इष्टकापरमचित इत्यादौ पूर्वपदस्येष्टकादेर्ह्रस्वो न भवति। एवमत्रापि लेखपदेन तदन्तग्रहणाभावान्नोक्तफलभेद इति भावः। ननु घञन्तस्यापि लेखशब्दस्य सत्त्वात्तस्मिन्परे हृदादेशार्थं लेखग्रहणमतो न ज्ञापकमित्याशङ्कां परिहरति—ज्ञापकपरभाष्यादिति। हृदयस्य हृद् (६।३।५०) इति सूत्रे लेखग्रहणस्य प्रकृतपरिभाषाज्ञापकत्वप्रतिपादकाद्भाष्यादस्मिन् सूत्रे लेखपदं न घञन्तम्। उक्तभाष्यप्रामाण्येन हृल्लेखशब्दे घञन्तस्य तस्यानभिधानादिति भावः ॥३०९॥

नन्वतिकौमुदगन्ध्यापुत्र इह यथा तदादिताविरहात् ।
ष्यङ इति पुत्राद्युत्तरपदे परे संप्रसारणं नास्ति ॥३१०॥

एवं हि परमकौमुदगन्धीपुत्रेऽपि तन्न स्यात् ।
उभयोस्तुल्यन्यायादित्याशङ्क्याह परिभाषाम् ॥३११॥

## स्त्रीप्रत्यये चानुपसर्जने न ॥ २६ ॥

स्वान्तसमूहार्थं प्रति विभाति योऽर्थः प्रकारतया ।
तदवच्छेदकधर्मज्ञानजनकतोपसर्जनत्वमिह ॥ ३१२ ॥

---

प्रत्ययग्रहणपरिभाषाघटकतदाद्यंशनिषेधबोधिकां परिभाषामवतारयति—**नन्विति** । 'ष्यङः संप्रसारणं पुत्रपत्योस्तत्पुरुषे' इति सूत्रे ष्यङ्पदेन प्रत्ययग्रहणपरिभाषया यस्मात् ष्यङ्विहितस्तदादेरुपस्थित्या तत्पुरुषपदाक्षिप्तपूर्वपदरूपविशेष्यस्य सत्त्वात्तद्विशेष्यकतदन्तविधिना च तदाद्यभिन्नं ष्यङन्तं यत्पूर्वपदं तस्येत्यर्थात्, कौमुदगन्ध्यामतिक्रान्ताऽतिकौमुदगन्ध्येत्यस्य ष्यङन्तत्वेऽपि यतः ष्यङ् विहितस्तदादित्वाभावेन पुत्रादावुत्तरपदे परे यथा संप्रसारण न भवति। तथा परमकौमुदगन्ध्येति कर्मधारयस्यापि पुत्रादावुत्तरपदे संप्रसारणं न स्यात्, तस्यापि ष्यङन्ततदादित्वाभावेनोभयोस्तुल्यत्वादिति भावः । उत्तरपदाधिकार इति परिभाषया तदन्तग्रहणनिषेधस्तु नाशङ्क्यः । अत्र सूत्रे तत्पुरुषपदेन पूर्वोत्तरपदयोराक्षेपेऽप्यस्योत्तरपदाधिकारस्थत्वाभावेन तस्या अत्राप्रवृत्तेः ॥३१०–३११॥

**स्त्रीप्रत्यये चेति** । ष्यङः संप्रसारणम् ( ६।१।१३ ) इति सूत्रे भाष्ये—"यदि प्रत्ययग्रहणे यस्मात्स तदादेर्ग्रहणं भवतीत्युच्यते । परमकारीषगन्धीपुत्रः परमकारीषगन्धीपतिरिति न सिध्यति" इत्याशङ्कायाम् "प्रत्ययग्रहणे यस्मात् स तदादेर्ग्रहणं भवत्यस्त्रीप्रत्ययेन" इत्युक्ते तत्रापि दोषमुद्भाव्यान्ते "'स्त्रीप्रत्ययेनानुपसर्जनेन ।' यो ह्यपसर्जनं स्त्रीप्रत्ययो, भवत्येषा तत्र परिभाषा प्रत्ययग्रहणे यस्मात्स तदादेर्ग्रहणं भवतीति' इत्युक्तं तन्मूलैषा । अभावनिरूपणस्य प्रतियोगिनिरूपणाधीनत्वादुपसर्जनपदार्थस्तावद्विचारणीयः । प्रकृते प्रथमानिर्दिष्टमित्यादिशास्त्रसंकेतितमुपसर्जनत्वं न ग्रहीतुं शक्यं, केवलप्रत्यये तदसंभवात् । नापीतरार्थनिष्ठविशेष्यतानिरूपितप्रकारताप्रयोजकत्वरूपं लौकिकं तत्, परमकारीषगन्धीपुत्र इत्यत्रापि ष्यङ उपसर्जनत्वापत्तेः, ष्यङ्बोध्यस्त्रीत्वस्य प्रकारत्वेनैव भानात् । अतोऽत्र यादृशमुपसर्जनत्वं विवक्षितं तन्निरूपयति—**स्वान्तेत्यादिना** । स्वान्तसमुदायपर्याप्तशक्तिनिरूपकार्थनिष्ठविशेष्यतानिरूपितप्रकारता-

स्त्रीत्वार्थकष्यङादेस्तत्त्वं तद्बोधकस्य चावृत्तिः।
तत्रैकमनुपसर्जन-तात्पर्यकमन्यदन्यपरम् ॥ ३१३ ॥

तत्रैषाऽनुपसर्जनतात्पर्ये न हि तदादिनियम इति।
प्रतिपादयत्यतश्चोपसर्जनेऽसौ भवति नियमः ॥ ३१४ ॥

अथवा यस्मिन्सूत्रे स्त्रीप्रत्ययबोधकं पदं पठितम्।
तत्र तृतीयान्तं पदमुपैत्यनुपसर्जनेनेति ॥ ३१५ ॥

तत्र तदादेरिति नोपतिष्ठते बाधनादनया।
सा च तृतीयाऽभेदेऽतश्चानुपसर्जनष्यङन्तमतिः ॥ ३१६ ॥

---

वच्छेदकधर्मज्ञानजनकत्वमुपसर्जनत्वमित्यर्थः। अतिकारीषगन्ध्यापुत्र इत्यत्र स्वं ष्यङ् प्रत्ययः। तदन्तसमुदायोऽतिकारीषगन्ध्यारूपः, तत्पर्याप्तशक्तिनिरूपकोऽर्थः कारीषगन्ध्याकर्मकातिक्रमणकर्तृरूपः। तन्निष्ठविशेष्यतानिरूपिता प्रकारता करीषगन्धिसम्बन्धिस्त्रीत्वविशिष्टापत्यरूपे कारीषगन्ध्यापदार्थे। तदवच्छेदको धर्मः स्त्रीत्वरूपस्तज्ज्ञानजनकताष्यङ् प्रत्ययेऽतः स उपसर्जनमिति समन्वयः ॥ ३१२ ॥

**स्त्रीत्वार्थकेति**। अतिकारीषगन्ध्येत्यादिपदार्थघटकस्त्रीत्वार्थकष्यङादेरित्यर्थः। तत्त्वम् = उपसर्जनत्वम्। तद्बोधकस्य = लक्ष्यस्थष्यङादिबोधकस्य ष्यङ इत्यादिसूत्रस्थस्य ष्यङादिपदस्य आवृत्तिः कर्तव्या। तत्रैकं ष्यङ्पदमनुपसर्जनतात्पर्यकम्, अपरं चोपसर्जनतात्पर्यकमित्यर्थः ॥ ३१३ ॥

**तत्रेति**। तयोर्मध्येऽनुपसर्जनतात्पर्यके तदादिनियमो नेत्येषा परिभाषा प्रतिपादयति। अतस्तदाद्यंशरहितः, अनुपसर्जनष्यङन्तस्य पूर्वपदस्य संप्रसारणमित्येवार्थः। तेन परमकौमुदगन्धीपुत्र इत्यत्र संप्रसारणं भवति। उपसर्जनतात्पर्यके तु तदादिनियमोऽस्त्येवेति अतिकौमुदगन्ध्यापुत्र इत्यत्र पूर्वपदस्य संप्रसारणं न भवतीति भावः ॥ ३१४ ॥

**उक्तकल्पे** आवृत्त्याश्रयणगौरवात्कल्पान्तरमाह—**अथवेति**। उपैति = उपतिष्ठते ॥ ३१५ ॥

**सा चेति**। अनुपसर्जनेनेति तृतीया च, अभेदे = अभेदार्थिका। एवं चानुपसर्जनाभिन्नो यः ष्यङ् तदन्तपूर्वपदस्य संप्रसारणमित्यर्थस्तेनैवोक्तस्थलद्वये संप्रसारणतदभावयोर्व्यवस्थेति भावः ॥ ३१६ ॥

यस्य च समुदायस्यानेयं स्त्रीप्रत्ययान्तत्वम् ।
उपसर्जननिर्वचने स्वान्तसमूहः स एव मन्तव्यः ॥ ३१७ ॥

अतिराजकुमारिपदे राजकुमारीति शब्दस्य ।
स्त्र्यन्तत्वमपेक्षितमतिघटितार्थे तद्विशेषणत्वेऽपि ॥ ३१८ ॥

स्वार्थे मुख्यतया तत्स्त्रीत्वस्य द्योतकोऽस्ति यः खलु ङीष् ।
सोऽनुपसर्जनमत इह तदाद्यनियमाद्भवति ह्रस्वः ॥ ३१९ ॥

स्त्रीप्रत्ययसामान्यग्रहणे वा तद्विशेषवचने वा ।
एषा प्रवर्तते न तु तदितरसाधारणग्रहणे ॥ ३२० ॥

---

ननु राजकुमारीमतिक्रान्तोऽतिराजकुमारिरित्यत्र ङीष उपसर्जनत्वविवक्षायां स्वान्तसमुदायः अतिराजकुमारीत्येषः, तदर्थश्च राजकुमारीकर्मकातिक्रमणकर्तृरूपः, तन्निष्ठविशेष्यतानिरूपिताप्रकारता कुमारीनिष्ठा तदवच्छेदकस्त्रीत्वबोधकत्वेन ङीष उपसर्जनत्वात्, प्रथमकल्पे गोस्त्रियोरिति सूत्रस्थस्त्रीशब्दस्योपसर्जनस्त्रीप्रत्ययतात्पर्यकत्वे तदादिनियमप्रवृत्त्या उपसर्जनस्त्रीप्रत्ययान्ततदादिरूपं यदुपर्जनं—विग्रहे नियतविभक्तिकरूपं तदन्तस्य ह्रस्व इत्यर्थात्, ङीषन्ततदादेः कुमारीशब्दस्य एकविभक्तिचेतिसूत्रोक्तोपसर्जनत्वाभावात्, उपसर्जनीभूतराजकुमारीशब्दस्य च ङीषन्ततदादित्वाभावाद्ध्रस्वो न स्यात्। द्वितीयकल्पे च, अनुपसर्जनाभिन्नो यः स्त्रीप्रत्ययस्तदन्तं यदुपसर्जनं तदन्तस्य ह्रस्व इत्यर्थात्प्रकृते च ङीष उपसर्जनत्वान्न ह्रस्वप्राप्तिरत आह—**यस्य चेति** । यस्य समुदायस्य स्त्रीप्रत्ययान्तत्वम्, आनेयं तत्तत्कार्यसिद्ध्यर्थमपेक्षितं स एव उपसर्जनलक्षणे स्वान्तसमुदायत्वेन ग्रहीतव्यः ॥ ३१७ ॥

उक्तव्यवस्थयाऽतिराजकुमारिरित्यत्र ह्रस्वसाधनप्रकारमाह—**अतिराजकुमारीति** । एतद्घटकस्य राजकुमारी इति शब्दस्य गोस्त्रियोरिति ह्रस्वार्थे स्त्र्यन्तत्वम्—स्त्रीप्रत्ययान्तत्वमपेक्षितम्, अतिघटितार्थे अतिशब्दघटितातिराजकुमारीरूपसमुदायपर्याप्तशक्तिनिरूपकार्थे तद्विशेषणत्वेऽपि तस्य = उक्तार्थनिष्ठविशेष्यतानिरूपितप्रकारताप्रयोजकत्वेऽपि, स्वार्थे राजकुमारीरूपेऽर्थे मुख्यतया प्रकारताया अप्रयोजकत्वेन तत्स्त्रीत्वस्य तदर्थगतस्त्रीत्वस्य द्योतको ङीष् अनुपसर्जनरूप एव। तस्मात्तत्तात्पर्यकवाक्ये तदादिनियमाभावाद् गोस्त्रियोरिति ह्रस्वो भवत्येवेति भावः ॥ ३१८–३१९ ॥

**स्त्रीप्रत्ययेति** । स्त्रीप्रत्ययत्वावच्छिन्नबोधकपदघटिते गोस्त्रियोरित्यादौ, तद्विशेषवचने वा = स्त्रीप्रत्ययत्वव्याप्यधर्मावच्छिन्नबोधकपदघटितेष्यङः संप्रसारणमित्यादौ चेयं प्रवर्तते । न तु स्त्रीप्रत्ययास्त्रीप्रत्ययबोधके प्रत्ययपद इत्यर्थः ॥ ३२० ॥

कथितमतः कृत्तद्धितसूत्रे नियमार्थकं समासपदम् ।
ष्यङ इति सूत्रे भाष्ये स्पष्टा चेयं वचनरूपा ॥ ३२१ ॥
ननु च तरप्तमपौ घः सूत्रेऽस्मिन्प्रत्ययग्रहणात् ।
तरबन्तादेर्घत्वेऽत्र परे ह्रस्वप्रसक्तिरत आह ॥ ३२२ ॥

## संज्ञाविधौ प्रत्ययग्रहणे तदन्तग्रहणं नास्ति ॥ २७ ॥

संज्ञाविधानसाक्षादुद्देश्यप्रत्ययाभिधायि पदम् ।
न तदन्तबोधकमतो नैषा प्रत्ययपदेऽर्थवत्सूत्रे ॥ ३२३ ॥

---

कथितमिति । अतः = स्त्रीप्रत्ययास्त्रीप्रत्ययसाधारणग्रहणेऽस्या अप्रवृत्तेरेव, अर्थवदधातुः ( १ । २ । ४५ ) इति सूत्रे भाष्ये कृत्तद्धितसमासाश्चेत्यत्र समासग्रहणं नियमार्थमिति कथितम् । उभयसाधारणग्रहणेऽप्यस्याः प्रवृत्तौ त्वर्थवत्सूत्रस्थप्रत्ययपदेन स्त्रीप्रत्ययस्यापि बोधादनयाऽनुपसर्जनस्त्रीप्रत्यये तदादिनियमाभावबोधनाद् राजकुमारीति समासस्य प्रत्ययान्तत्वेन पूर्वसूत्रेणाप्राप्तायाः प्रातिपदिकसंज्ञाया विधानार्थमेव तत्स्यादिति तस्य नियमार्थत्वकथनं भाष्यकृतोऽनुपपन्नं स्यादतस्तेनायमर्थो ध्वन्यत इति भावः । वचनरूपेति । भाष्ये ज्ञापकं नोपन्यस्तमत इयं वाचनिकीत्यर्थः । यस्मात्प्रत्ययविधिस्तदादिप्रत्यय इति विभक्तयोगे नेयङुवङ्स्थानावस्त्रीत्यस्मादस्त्रीति पदानुवृत्त्या प्रधानाप्रधानन्यायेन चानुपसर्जनस्त्रीबोधकप्रत्ययातिरिक्ते तदादिरित्युपतिष्ठत इत्यर्थकल्पनया सूत्राक्षरैरपीयं लभ्येति विजयादौ स्पष्टम् ॥ ३२१ ॥

अपवादसङ्गत्यैवाह—ननु चेति । तरबन्तादेरिति— । प्रत्ययग्रहणपरिभाषया तदादेरुपस्थितौ तद्विशेष्यकतदन्तविधिना तरबन्तस्य तमबन्तस्य च तदादेर्घसंज्ञायां घरूपेति सूत्रेण तरबाद्यन्त उत्तरपदे कुमारी गौरितरेत्यादौ समासे पूर्वपदस्य ह्रस्वापत्तिरित्यर्थः ॥ ३२२ ॥

संज्ञाविधायकशास्त्रघटकं प्रत्ययबोधकं पदं तदन्तबोधकं न भवतीति परिभाषार्थे, अर्थवत्सूत्रस्थप्रत्ययपदेन तदन्तबोधो न स्यादतो विवक्षितार्थमाह—संज्ञाविधानेति । संज्ञानिष्ठविधेयतया साक्षान्निरूपिता या प्रत्ययत्वव्याप्यधर्मावच्छिन्नोद्देश्यता तत्प्रयोजकं पदं तदन्तबोधकं न भवतीत्यर्थः । अतः = ईदृशार्थाङ्गीकारात् ॥ ३२३ ॥

कृदतिङिङत्यत्र तु तिङ्पदं तिङन्तं न बोधयति ।
प्रत्ययपदात्तिङन्ते व्यावृत्तेऽस्मिन्नतिङ्ग्रहणात् ॥ ३२४ ॥
षः प्रत्ययस्य सूत्रे प्रत्ययशब्दस्तु सूत्रगतमेव ।
ष्फादिपदं बोधयतीत्यतो न षण्णामितीह षस्येत्त्वम् ॥ ३२५ ॥
सामन्त्रितमिति तु महासंज्ञाकरणात्तदन्तपरम् ।
अन्यत्रापि च दोषा व्याख्यानेनैव परिहार्याः ॥ ३२६ ॥

---

नन्वेवं 'कृदतिङ्' इति सूत्रस्थतिङ्पदस्य कृत्संज्ञानिष्ठविधेयतया साक्षान्निरूपितोद्देश्यताप्रयोजकत्वाभावादतिङ्पदस्यैव तथात्वात्तिङ्पदेन तिङन्तग्रहणं स्यात्ततश्च तिङ्पर्युदासो न सिध्येत् । ततश्च पचति पठतीत्यादेः कृदन्तत्वेन प्रातिपदिकत्वं स्वाद्युत्पत्तिश्चापद्येत । चीयात् स्तूयादित्यादौ चाकृत्सार्वधातुकयोर्दीर्घ इति दीर्घो न सिध्येत्, तिङोऽपि कृत्त्वात् यद्यपि कृदतिङ् इति सूत्रेऽतिङ्ग्रहणं भाष्ये प्रत्याख्यातम् । तथापि यथाश्रुतन्यासपक्षे उक्तदोषाः स्युरेव, अत आह—कृदतिङिङति । तत्र साधकमाह—**प्रत्ययेति** । तत्सूत्रे प्रत्ययपदानुवृत्तिसत्त्वात्तेनैव तिङन्तानां भवतीत्यादीनां व्यावृत्तेः सिद्धत्वात्तिङ्पदस्य तिङन्तपदादिबोधकत्वे, अतिङ्पदवैयर्थ्यापत्तेस्तत्सामर्थ्यात्तदन्तग्रहणं न भवतीत्यर्थः ॥ ३२४ ॥

ननु षः प्रत्ययस्येति सूत्रे प्रत्ययपदार्थस्यादिपदार्थे विशेषणत्वादित्संज्ञानिष्ठविधेयतया साक्षान्निरूपितोद्देश्यताप्रयोजकत्वाभावेन प्रकृतपरिभाषोक्ततदन्तग्रहणनिषेधाप्रवृत्त्या प्रत्ययान्ततदादिशब्दस्यादिः ष इदित्यर्थेन षण्णामित्यादौ प्रकृतिषकारस्येत्संज्ञाऽऽपत्तिरत आह—षः प्रत्ययस्येति । षः प्रत्ययस्येति सूत्रे प्रत्ययपदं तु प्राचां ष्फतद्धित इत्यादि सूत्रघटकं यत् ष्फादिप्रत्ययबोधकं ष्फ इत्यादिपदं तस्यैव बोधकं न तु प्रत्ययबोधकम्, अतस्तत्र प्रत्ययग्रहणपरिभाषाया अप्रवृत्त्या प्रत्ययान्ततदादिबोधाभावेन षण्णामित्यादावुक्तापत्तिर्नेति भावः ॥ ३२५ ॥

सामन्त्रितमित्यत्र संबोधनप्रथमापरामर्शकस्य सेत्यस्योक्तविधोद्देश्यताप्रयोजकत्वादनया तदन्तग्रहणनिषेधः स्यादित्याशङ्कां परिहरति—**सामन्त्रितमिति** । लघ्वीं संज्ञां विहायामन्त्रितमिति महासंज्ञाकरणेन येनामन्त्र्यते तदामन्त्रितमित्यन्वर्थसंज्ञाविज्ञानात् प्रत्ययमात्रेण चामन्त्रणासंभवात्तदन्तग्रहणमिति भावः । **अन्यत्रापीति** । तद्धितश्चासर्वविभक्तिः, कृन्मेजन्त इत्यनयोः प्रत्ययमात्रस्याव्ययसंज्ञायां फलाभावात्तद्धितपदेन तद्धितान्तग्रहणम् । कृत्पदेन च कृदन्तग्रहणम् । एवं कृत्तद्धितसमासाश्चेत्यत्रार्थवत्सूत्रादर्थवत्पदानुवृत्तिसामर्थ्यादर्थवत्पदेन लौकिकार्थप्रत्यासन्नो योऽभिव्यक्ततरोऽर्थस्तद्बोधकस्यैव विवक्षितत्वात् कृत्तद्धितान्तं चैवार्थवत् न केवलाः कृतस्तद्धिता वेति

अन्तग्रहणं ज्ञापकमेतस्याः सुप्तिङन्तमिति सूत्रे ।
एतदभावेऽन्तपदाग्रहणेऽपि तदन्तधीलाभात् ॥ ३२७ ॥

न च सत्यामप्यस्यां तद्व्यर्थं सुप्तिङोः पदत्वेऽपि ।
विधिदेशेषु तदन्तग्रहणात्सिद्धेरिति विशङ्क्यम् ॥ ३२८ ॥

पदसंज्ञायाः स्वादिष्विति विषये प्रकृतिनिष्ठत्वात् ।
प्रत्ययमात्रग्रहणाभावेन तदन्तदौर्लभ्यात् ॥ ३२९ ॥

एतद्विषये पञ्चम्यन्ततदादेरुपस्थितेरेव ।
सिद्धं तदन्तवारणमत एषा निष्फलेत्येके ॥ ३३० ॥

---

भाष्यानुसारेण तदन्तग्रहणम्, इत्यादिरीत्या व्याख्यानेन दोषपरिहारः कर्तव्य इत्यर्थः ॥ ३२६ ॥

ज्ञापकमाह—अन्तग्रहणमिति । प्रकृतपरिभाषाऽभावे सुप्तिङन्तं पदमित्यत्र तदादेरुपस्थित्या तद्विशेष्यकतदन्तविधिना सुबन्ततदादि, तिङन्ततदादीत्यर्थबोधसंभवादन्तग्रहणं व्यर्थं सदेनां ज्ञापयति । न चान्तपदसत्त्वे उक्तार्थकसुप्तिङ्पदस्यान्तपदेन सह बहुव्रीहिणा सुबन्तान्त-तिङन्तान्तयोः पदसंज्ञा, तदभावे तु सुबन्ततिङन्ततदादिमात्रस्येति वैषम्यात्कथमन्तग्रहणस्य ज्ञापकत्वमिति वाच्यम् । प्रकारान्तरेण तदन्तलाभासम्भव एव तदादिविशेष्यकतदन्तविधिप्रवृत्तेः ॥ ३२७ ॥

ज्ञापितेऽप्यचारितार्थ्यमाशङ्क्य निराकरोति—न चेत्यादिना । तत् = अन्तग्रहणम् । सुप्तिङोरिति । अन्तग्रहणाभावे केवलयोः सुप्तिङोः पदसंज्ञायामपि विधिदेशेषु = पदसंज्ञाघटितविधिसूत्रेषु न लोपः प्रातिपदिकान्तस्येत्यादिषु पदशब्देन सुप्तिङ्मात्रोपस्थितावपि प्रत्ययग्रहणपरिभाषया तदादिविशेष्यकतदन्तविधिना सुप्तिङन्तरूपार्थबोधेनेष्टसिद्धेरन्तग्रहणं व्यर्थमेवेति नाशङ्क्यमित्यर्थः ॥ ३२८ ॥

शङ्कापरिहारहेतुमाह पदसंज्ञाया इति । स्वादिष्वितिविषये = स्वादिष्वसर्वनामस्थान इत्येतत्सूत्रविषये । तदन्तदौर्लभ्यात् = पदशब्देन सुप्तिङन्तबोधासंभवादित्यर्थः ॥ ३२९ ॥

परमनवीनमतमाह—एतद्विषय इति । इमामङ्गीकृत्य तत्तद्दोषनिवारणार्थमेकत्रानेकक्लिष्टकल्पनाश्रयणापेक्षया, इमां परित्यज्य यत्र संज्ञाविधौ तदन्तग्रहणं नेष्यते तत्र प्रत्ययग्रहणपरिभाषालब्धतदादंशस्य पञ्चम्यन्तत्वकल्पनया प्रत्ययग्रहणे चापञ्चम्या इति निषेधेनैव तदन्तग्रहणाभावोपपादनं युक्तं लाघवादिति तदाशयः ॥ ३३० ॥

ननु नकुलस्थितशब्दो न क्तान्त-तदादिरित्यतः क्षेपे ।
अवतप्ते नकुलस्थितमिति न समासो भवेदतः प्राह ॥ ३३१ ॥

## कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणम् ॥ २८ ॥

कृत्प्रकृति-तदव्यवहितपुरःस्थ-गतिकारकान्यतरघटितः ।
कृच्चरमावयवः समुदायः कृद्वाचिपदलक्ष्यः ॥ ३३२ ॥
लिङ्गं च गतिरनन्तर इति सूत्रेऽनन्तरग्रहणमस्याः ।
अभ्युद्धृतमित्यादावभावतिव्याप्तिवारणाय हि तत् ॥ ३३३ ॥
किन्तूद्धृतशब्दो न क्तान्ततदादिस्ततश्च तत्राभेः ।
प्रकृतिस्वराप्रसङ्गात्तद्व्यर्थं सन्निवेदयत्येनाम् ॥ ३३४ ॥
पठिते त्वनन्तरपदे तत्सामर्थ्यादनन्तरत्वं हि ।
ग्राह्यं गत्यनुमितधात्वपेक्षमेवेति तत्सफलम् ॥ ३३५ ॥

---

प्रत्ययग्रहणप्रसङ्गादाह—नन्विति । 'क्षेपे' इति सूत्रे क्तेनाहोरात्रावयवा इति सूत्रात् क्तेनेत्यनुवर्तते । तस्य च प्रत्ययग्रहणपरिभाषया क्तान्ततदाद्यर्थकत्वान्नकुलस्थित-शब्दस्य च तथात्वाभावादुक्तसमासो न स्यादिति भावः ॥ ३३१ ॥

निष्कृष्टं परिभाषार्थमाह—कृत्प्रकृतीति । कृत्प्रत्ययस्य या प्रकृतिः कृत्प्रत्यय-निष्ठविधेयतानिरूपितोद्देश्यताश्रयरूपा सा च, तदव्यवहितपुरस्थः = कृत्प्रकृत्यव्यव-हितपूर्वगतिकारकान्यतरात्मकशब्दश्च ताभ्यां घटितः, कृत्प्रत्ययचरमावयवकः समुदायः कृद्वाचकपदेन लक्ष्यः लक्षणया बोध्यत इत्यर्थः । अत्र कृत्प्रकृति-तदव्यवहितपूर्व-गतिकारकान्यतर-कृत्प्रत्ययेत्येतत्त्रितयेतराघटित इत्यपि निवेश्यं तेनोदासीनशब्दान्तर-घटितस्य व्युदासः ॥ ३३२ ॥

लिङ्गं चेति । कर्मार्थकक्तान्ते उत्तरपदेऽनन्तरो गतिः प्रकृतिस्वरो भवतीत्यर्थके "गतिरनन्तरः" इति सूत्रेऽनन्तरग्रहणमस्या ज्ञापकम् । ज्ञापकत्वमुपपादयति—अभ्युद्धृतमित्यादिना । तत् = अनन्तरग्रहणं हि अभ्युद्धृतमित्यादौ, अभौ = अभ्युपसर्गे, अतिव्याप्तिवारणाय = प्रकृतिस्वरापत्तिवारणाय कृतमित्यर्थः ॥ ३३३ ॥

प्रकृतपरिभाषाऽभावे तद्वैयर्थ्यमाह—किन्त्विति । निवेदयति = ज्ञापयति ॥ ३३४ ॥

ननु परिभाषायां ज्ञापितायां गतिघटितस्योद्धृतशब्दस्य क्तपदेन ग्रहणे तदनन्तर-एवाभिरिति पुनरप्यनन्तरग्रहणं व्यर्थमेवेत्याशङ्कां परिहरति—पठिते त्विति ।

गतिकारकसान्निध्ये कृद्ग्रहणे तद्विशिष्टमेवेष्टम् ।
तदभावे केवलमिति न सर्वथा बाध्यते तदाद्यंशः ॥ ३३६ ॥
अत एव सुपः पूर्वं संकूटिन्निति कृता गतिसमासे ।
गतिघटितादेवास्मादणि नुण इत्यण् न गतिरहितात् ॥ ३३७ ॥
तेन च साङ्कूटिनमिति न तु संकौटिनमिति कदापि ।
इत्यर्थं पुंयोगादिति सूत्रे भाष्यमुपपन्नम् ॥ ३३८ ॥
गतिसमभिव्याहारेऽपि गतिरनन्तर इतीह सूत्रे तु ।
क्तान्ततदादिग्रहणं तत्र गतेः स्वरविधानसामर्थ्यात् ॥ ३३९ ॥

---

**गत्यनुमितेति** । गतिश्चेत्यनेन क्रियायोग एव प्रादीनां गतिसंज्ञाविधानाद् गतिपदश्रवणेन धातुसान्निध्यमनुमीयते । तेन धातुनिरूपितमेवानन्तर्यं ग्राह्यम् । अभिस्तु न धात्वनन्तर इति तद्व्यावृत्त्याऽनन्तरग्रहणं चरितार्थमिति भावः ॥ ३३५ ॥

तद्विशिष्टम् = गतिकारकविशिष्टम् । तदभावे = गतिकारकसान्निध्याभावे । केवलं = कृदन्ततदादिरूपम् । **न सर्वथेति** । अयं भावः—परिभाषायामपिशब्देन गतिकारकासमभिव्याहारे केवलकृदन्तस्यापि ग्रहणमिति सूचनात्प्रत्ययग्रहणपरिभाषोक्ततदादिनियमस्य सर्वथा बाधो न भवति । अन्यथाऽस्यास्तदपवादत्वादनया तद्बाध एव स्यात्ततश्च कृद्ग्रहणे सर्वत्र गतिकारकविशिष्टस्यैव ग्रहणापत्तिः स्यादिति ॥ ३३६ ॥

अत एव = गत्यादिसमभिव्याहारे तद्विशिष्टग्रहणादेव । **सुपः पूर्वमिति** । कूटधातोरभिविधौ भाव इनुण् इत्यनेन इन्प्रत्यये कूटिन्निति कृदन्तेन सह गतिसंज्ञकस्य सम् इत्यस्य कुगतिप्रादय इत्यनेन समासः । स च गतिकारकोपपदानां कृद्भिः सह समासवचनं प्राक्सुबुत्पत्तेरिति परिभाषया सुबुत्पत्तेः पूर्वमेव कृदन्तेन सह भवति, तस्मिन्कृते अणिनुण इति स्वार्थिकस्तद्धितोऽण् प्रत्ययः कृद्ग्रहणपरिभाषया गतिविशिष्टात् संकूटिन् इति समुदायादेव भवति, न तु केवलात्कूटिन्निति कृदन्तात् तेन सांकूटिनमित्येव रूपं भवति न तु कदापि संकौटिनमिति । एतदाशयकं पुंयोगादाख्यायाम् (४।१।४८) इति सूत्रस्थं भाष्यमत एवोपपन्नमिति संबन्धः । गतिकारकसमभिव्याहारेऽपि केवलकृदन्तग्रहणे केवलस्य कूटिन्नित्यस्यापीनुणन्तत्वेन ततोऽणि पक्षे संकौटिनमित्यस्याप्यापत्तिसंभवात्तदसंगतिः स्यादिति भावः ॥ ३३७, ३३८ ॥

ननु गतिसमभिव्याहारे केवलस्याग्रहणे उद्धृतं पुरोहितमित्यादौ गतिरनन्तर इति प्रकृतिस्वरो न स्यादत आह—**गतीति** । उक्तार्थे हेतुमाह—**तत्रेति** । तस्मिन्क्तान्ते

कृत्सामान्यस्य च तद्व्याप्यस्योक्तौ प्रवर्तनीयेयम् ।
न तु कृदकृद्ग्रहणेऽतष्टिड्ढेत्यत्राण्पदे नेयम् ॥ ३४० ॥

अत एव प्रातिपदिकविशेष्यकतदन्तविधिनैव ।
अपरेण साधितः खलु भाष्यकृता कौम्भकारेयः ॥ ३४१ ॥

## पदाङ्गाधिकारे तस्य च तदन्तस्य च ॥ २९ ॥

अधिकृतमङ्गं च पदं विशेष्यमन्यद्विशेषणमितीयम् ।
तात्पर्यं ग्राहयति हि तदन्तविधिरन्यतः सिद्धः ॥ ३४२ ॥

---

उत्तरपदे परे पूर्वपदस्य गतेः स्वरविधानसामर्थ्यात्, तत्र गतिविशिष्टस्य ग्रहणे सूत्रस्यैव वैयर्थ्यापत्तेः क्तपदेन केवलस्य क्तान्ततदादेरेव ग्रहणमिति भावः ॥ ३३९ ॥

कृत्सामान्यस्येति । कृत्सामान्यबोधके कृत्पदे, कृद्विशेषबोधके च क्तादिपदे इयं प्रवर्तते, न तु कृदकृत्साधारण-प्रत्ययबोधके इत्यर्थः । कृत्सामान्यग्रहणे यथा— 'कर्तृकरणे कृता बहुलम्' अत्रास्याः प्रवृत्त्या नखनिर्भिन्न इत्यादिसमासः सिध्यति । कृद्विशेषग्रहणे यथा—'क्षेपे' इत्यादावनुवृत्तक्तपदे, तेन, अवतप्ते न कुलस्थितमित्यादिसमाससिद्धिः । टिड्ढाणञिति सूत्रेऽण्पदस्य तु कृदकृत्साधारणत्वेन तत्रास्या न प्रवृत्तिः ॥ ३४० ॥

अत एव । उक्तहेतुना टिड्ढाणञिति सूत्रेऽस्या अप्रवृत्तेरेव । अनुपसर्जनात् ( ४।१।१४ ) इति सूत्रे भाष्येऽनुपसर्जनाधिकारप्रयोजननिरूपणे 'इदं तर्हि प्रयोजनम् । प्रधानेन तदन्तविधिर्यथा स्यात् । कुम्भकारी नगरकारी ।' इत्यादिना तदादिविशेष्यकतदन्तविधिलब्धस्याणन्ततदादेः प्रधानप्रातिपदिकविशेषणत्वेन द्वितीयतदन्तविधिना अणन्तान्तात्प्रातिपदिकान्ङीबित्यर्थेन कुम्भकारशब्दान्ङीपि ततो ढकि कुम्भकार्या अपत्यं कौम्भकारेय इति साधितम् । द्वितीयतदन्तविधेरभावे तु कारशब्दान्ङीपि कदाचित्ततोऽपि ढकि कुम्भकारेय इत्यनिष्टरूपापत्तिः प्रकृतपरिभाषायाः कृदकृद्ग्रहणेऽपि प्रवृत्तौ तु कुम्भेति कारकविशिष्टादेव ङीबुत्पत्त्योक्तभाष्यासङ्गतिरिति भावः । किञ्च तत्रैव भाष्ये—कृद्ग्रहणपरिभाषया संघातादेवोत्पत्तिर्भविष्यतीत्याशङ्क्य "कृद्ग्रहण इत्युच्यते, न चैतत्कृद्ग्रहणम् । कृदकृद्ग्रहणमेतत् । कृदप्ययमण् । तद्धितोऽपि" इति स्पष्टमुक्तम् ॥ ३४१ ॥

तदन्तविधिप्रसङ्गादाह—पदाङ्गाधिकार इति । अधिकृतमिति । पदाधिकारे वसुस्रंस्वित्यादावनुवृत्तं पदस्येति विशेष्यं, वस्वन्तादि च तद्विशेषणम् । अङ्गाधिकारे

पदशब्देनोत्तरपद इत्यधिकारस्तथा पदस्येति ।
उत्तरपदशब्देनाक्षिप्तं हि विशेष्यमत्र पूर्वपदम् ॥ ३४३ ॥
तस्येष्टकादिशब्दा विशेषणानीत्यतस्तदन्तविधिः ।
पादस्य पदाज्यातीत्यत्र तु लक्ष्यानुरोधतो नेयम् ॥ ३४४ ॥
नन्वत इञित्यदन्ताद्विहितो यः प्रातिपदिकादिञ् ।
न स्यात्सोऽस्यापत्यमिरित्यत्रादन्तताविरहात् ॥ ३४५ ॥
स्वावयवत्वे सति न स्वावयवात्पूर्व उच्यते सोऽन्तः ।
स्वावयवत्वे सति च स्वावयवान्नोत्तरः स्वादिः ॥ ३४६ ॥

---

सान्तमहतः संयोगस्येत्यादावनुवृत्तमङ्गस्येति विशेष्यं, महदादिशब्दाश्च तद्विशेषणान्येवेति पाणिनितात्पर्यग्राहिकैवेयं परिभाषा । विशेषणेन तदन्तविधिस्तु येन विधिरिति सूत्रेणैव सिद्धोऽनयाऽनूद्यतेऽतस्तस्यैवायं प्रपञ्च इति भावः ॥ ३४२ ॥

पदशब्देन द्वावधिकारौ विवक्षितावित्याह—**पदशब्देनेति** । अत्र = उत्तरपदाधिकारे ॥ ३४३ ॥

**तस्येति** । 'इष्टकेषीकामालानां चिततूलभारिषु' इत्यत्रोक्ता इष्टकादिशब्दास्तस्य पूर्वपदस्य विशेषणानि । अतस्तैस्तदन्तबोधनाद्, इष्टकाद्यन्तस्य पूर्वपदस्य चितादावुत्तरपदे ह्रस्व इत्यर्थेन पक्वेष्टकचितमित्यादौ ह्रस्वसिद्धिः । येन विधिस्तदन्तस्य चेत्यत्र चकारेण स्वरूपस्यापि ग्रहणाद्, व्यपदेशिवद्भावाद्वा इष्टकचितमित्यादेरपि सिद्धिः । अयमर्थः परिभाषायां तस्य चेत्यनेनानूद्यते । पदाधिकारे "वसु स्रंसु—" इत्यादौ तस्य तदन्तस्य च ग्रहणाद् विद्वद्भ्याम्, परमविद्वद्भ्यामित्यादौ दः । अङ्गाधिकारे "सान्तमहतः—" "जराया जरस—" इत्यादौ तदुभयग्रहणान्महान्, परममहानित्यादौ दीर्घः, जरसौ निर्जरसावित्यादौ जरसादेश इत्यादि ज्ञेयम् । तदुत्तरपदस्येति पाठे परमातिमहानिति न सिध्येदतः स पाठ उपेक्षित इति भाष्ये स्पष्टम् । **पादस्येति** । "पादस्य पदाज्यातिगोपहतेषु" इत्युत्तरपदाधिकारीये सूत्रे तु लक्ष्यानुरोधात्तदन्तविधिर्न भवति । तेन दिग्धपादेनोपहतं दिग्धपादोपहतमित्येव भवति, न तु पादस्य पदादेशः । एतत्सर्वं "येनविधिस्तदन्तस्य" ( १।१।७२ ) इति सूत्रे भाष्ये स्पष्टम् ॥ ३४४ ॥

पूर्वपरिभाषायां तस्येत्युक्तं, तदुपपादिकां व्यपदेशिवदिति परिभाषामवतारयति—**नन्विति** । अस्य = वासुदेवस्य अपत्यम् इः काम इत्यत्र अशब्दस्यादन्तत्वाभावादिञ् न स्यादित्यर्थः ॥ ३४५ ॥

उक्ताशङ्कासमर्थनायान्तादिमध्यशब्दानां मुख्यार्थानाह—**स्वावयवत्वे सती-**

यश्च स्वावयवः सन् स्वावयवात्पूर्व उत्तरश्चास्ति।
स हि मध्यमः स्वशब्दाद्विज्ञेयो वर्णसमुदायः॥ ३४७॥

स्वव्यापकभावे सति यः स्वाव्याप्यः स्वघटकः सः।
स्वव्याप्यत्वे सति च स्वाव्यापक उच्यते घटितः॥ ३४८॥

अद्घटितत्वे सत्यत्परवर्णाघटित उच्यतेऽदन्तः।
प्रकृते चाद्घटितत्वाभावान्नादन्ततेत्यतः प्राह॥ ३४९॥

---

त्यादिना पद्यद्वयेन। अवयवो घटकः। स्वघटकत्वे सति स्वघटकवर्णप्रागभावाधिकरणक्षणावृत्तित्वं स्वनिरूपितमन्तत्वम्। स्वघटकत्वे सति स्वघटकवर्णध्वंसाधिकरणक्षणावृत्तित्वमादित्वम् इत्यर्थः स्वस्यादिः स्वादिः॥ ३४६॥

यश्चेति। स्वघटकत्वस्वघटकवर्णप्रागभावाधिकरणक्षणवृत्तित्व-स्वघटकवर्णध्वंसाधिकरणक्षणवृत्तित्वैतत्त्रितयसम्बन्धेन यत्किञ्चिद्विशिष्टो मध्यम इत्यर्थः॥ ३४७॥

घटकपदार्थं घटितपदार्थं च निर्वक्ति—स्वव्यापकेत्यादिना। स्वव्यापकत्वे सति स्वव्याप्यत्वाभाववत्त्वं स्वनिरूपितं घटकत्वम्। स्वव्याप्यत्वे सति स्वव्यापकत्वाभाववत्त्वं च घटितत्वमित्यर्थः। व्यापकत्वं—स्वसमानाधिकरणात्यन्ताभावाप्रतियोगित्वम्। व्याप्यत्वं च—स्वाभाववदवृत्तित्वरूपं ज्ञेयम्। उभयत्राप्यधिकरणता वृत्तिता प्रतियोगिता च विषयितासंबन्धावच्छिन्ना ग्राह्या। ज्ञानरूपमधिकरणमादाय लक्षणसमन्वयः। यथा—विषयितासंबन्धेन दक्षशब्दाधिकरणे ज्ञाने इकारादेरत्यन्ताभावोऽस्त्यतस्तत्प्रतियोगित्वमिकारादौ, अप्रतियोगित्वमकारे तस्मादकारो दक्षशब्दव्यापकः। उक्तसंबन्धेन दक्षशब्दाभाववति रामादिशब्दविषयकज्ञानेऽकारस्य वृत्तित्वात्स्वाभाववदवृत्तित्वरूपं व्याप्यत्वं तत्र नास्तीति व्याप्यत्वाभावोऽप्युपपन्नः। तस्मादकारो दक्षशब्दघटकः। दक्षशब्दस्याकारव्याप्यत्वात्तद्व्यापकत्वाभावाच्चाकारघटितत्वमिति समन्वयः॥ ३४८॥

एवं सामान्यतोऽन्तादिशब्दार्थान्घटकघटितपदयोश्चार्थौ विविच्य प्रकृतोपयुक्तमदन्तत्वं परिष्करोति—अद्घटितत्व इति। अकारघटितत्वे सत्यकारध्वंसाधिकरणक्षणवृत्तिवर्णाघटितत्वम् अदन्तत्वम्। प्रकृते च केवलाकारे विशेष्यदलसत्त्वेऽपि उक्तलक्षणानुसारेणाकारघटितत्वरूपविशेषणदलस्याभावाददन्तत्वं नास्ति, अत उक्तस्थले कार्यसिद्ध्यर्थं परिभाषामाहेत्यर्थः॥ ३४९॥

## व्यपदेशिवदेकस्मिन् ॥ ३० ॥

व्यपदेशः खलु मुख्यव्यवहारस्तन्निमित्तसद्भावात् ।
तद्विषय इवैकस्मिन्नसहायेऽपि प्रवर्त्य एव विधिः ॥ ३५० ॥

अतिदिश्यमानधर्माश्रयसमभिव्याहृतो न यो भवति ।
न च तद्घटितो नैव च तद्घटकः सोऽसहायपदबोध्यः ॥ ३५१ ॥

तेन सभासन्नयनापेक्षं नादित्वमाकारे ।
भासन्नयनगतं च न वृद्धत्वं तद्विशिष्टसमुदाये ॥ ३५२ ॥

आसन्नयनेत्यस्य च न मन्यते प्रातिपदिकत्वम् ।
तेन सभासन्नयने भव इत्यर्थे न वृद्धाच्छः ॥ ३५३ ॥

एवमिकारे नैवान्तत्वमिवर्णान्तता च न दरिद्रः ।
दरिशब्दे धातुत्वं च नेत्यतो नैव तत एरच् ॥ ३५४ ॥

---

**व्यपदेश इति।** विशिष्टोऽपदेशो व्यपदेशः = मुख्यव्यवहारः, यथा दक्षादिशब्देऽदन्तत्वव्यवहारः । तस्य मुख्यत्वे हेतुमाह—तन्निमित्तसद्भावादिति । एवंविधो व्यपदेशोऽस्यास्तीति व्यपदेशी = मुख्यव्यवहारविषयोऽर्थः । तस्मिन्निव, एकस्मिन्नसहायेऽपि विधिः = शास्त्रं तद्विहितकार्यं वा प्रवर्त्यमेवेत्यर्थः ॥ ३५० ॥

असहायपदार्थं निरूपयति—**अतिदिश्यमानेत्यादिना** । न च तद्घटित इति । अत्र तत्पदेन, अतिदिश्यमानधर्माश्रयस्य परामर्शः । एवं तद्घटक इत्यत्रापि । अतिदिश्यमानधर्माश्रयासमभिव्याहृतत्वे सति, अतिदिश्यमानधर्माश्रयाघटितत्वे च सति, अतिदिश्यमानधर्माश्रयाघटकत्वमसहायत्वमित्यर्थः ॥ ३५१ ॥

क्रमेणोक्तनिवेशप्रयोजनान्याह—**तेनेत्यादिना** । अतिदिश्यमानधर्मः सभासन्नयनशब्दनिरूपितादित्वरूपस्तदाश्रयः सभ् इति, तत्समभिव्याहृतत्वेनासहायत्वाभावादाकारे सभासन्नयननिरूपितमादित्वं न । अतिदिश्यमानवृद्धत्वधर्मवद्भासन्नयनशब्दघटितत्वेनासहायत्वाभावात्सभासन्नयनेति समुदायस्य वृद्धत्वं न । अतिदिश्यमानप्रातिपदिकत्वधर्मं वत्सभासन्नयनशब्दघटकत्वादासन्नयनेत्यंशस्यासहायत्वाभावेन प्रातिपदिकत्वातिदेशो नेत्यर्थः । उक्तातिदेशाभावफलमाह—**तेनेति** ॥ ३५२, ३५३ ॥

निरुक्तासहायत्वाभावेन व्यपदेशिवद्भावाप्रवृत्तिं स्थलान्तरेऽपि दर्शयति—**एवमिति** । दरिद्राधातोरिकारे तन्निरूपितान्तत्वं न, धातोश्चेवर्णान्तत्वं न, दरि इति शब्दे

पदघटकत्वाच्च हरिष्विश्यादौ सोः पदत्वं न ।
तेनात्र सात्पदाद्योरिति न प्रतिषिध्यते षत्वम् ॥ ३५५ ॥
असहाये कर्तव्यस्तत्तद्धर्मातिदेश इति फलितम् ।
अद्घटितत्वमतश्चैकस्मिन्नतिदिश्यतेऽकारे ॥ ३५६ ॥
नन्वेवं सति रामेप्यतिदेश्यं स्याज्जरान्तत्वम् ।
इति तु न शंक्यं स्वमुखप्रविष्टधर्माश्रये तदतिदेशात् ॥ ३५७ ॥
अतिदिश्यमानधर्मान्तर्वर्तिन्यवयवविशेषार्थे ।
योऽस्ति प्रकारतावच्छेदक उक्तो मुखप्रविष्टः सः ॥ ३५८ ॥

---

च धातुत्वं नातिदिश्यते । अत्र हेतवः पूर्ववदनुसंधेयाः । तेन तस्मादेरच् इति भावार्थकोऽच् प्रत्ययो न भवतीत्यर्थः ॥ ३५४ ॥

एवमन्यत्राप्याह—पदघटकत्वाच्चेति । हरिष्वित्यादौ सुप्रत्ययेऽतिदिदिक्षितं यत्पदत्वं, तदाश्रयो हरिष्वित्यादिपदं तद्घटकत्वादित्यर्थः ॥ ३५५ ॥

फलितार्थमाह—असहाय इति । एवं परिभाषार्थं निरूप्य तेनावतरणोक्तशङ्कां समाधत्ते—अद्घटितत्वमिति ॥ ३५६ ॥

उक्तार्थाङ्गीकारे दोषमाशङ्क्य समाधत्ते—नन्वेवमिति । केवलजराशब्दे यथा जरान्तत्वातिदेशो भवति तथा रामशब्देऽपि स्यात्तस्याप्युक्तरीत्याऽसहायत्वादिति भावः । तदतिदेशात् = तत्तत्कार्यार्थमपेक्षितधर्मस्यातिदेशादित्यर्थः ॥ ३५७ ॥

मुखप्रविष्टधर्मस्वरूपं दर्शयति—अतिदिश्यमानेति । अतिदिश्यमानधर्मघटकपदार्थनिष्ठा याऽवयवत्वव्याप्यधर्मावच्छिन्ना विशेष्यता तन्निरूपितप्रकारताऽवच्छेदकत्वं मुखप्रविष्टत्वमित्यर्थः । प्रकृतेऽतिदिश्यमानधर्मो जरान्तत्वम् तद्घटकोऽवयवत्वव्याप्यान्तत्वरूपधर्मावच्छिन्नोऽन्तपदार्थस्तन्निष्ठोक्तधर्मावच्छिन्नविशेष्यतानिरूपिता प्रकारता जराशब्दे । जराशब्दोऽन्तो यस्येत्यर्थेन तस्यान्तपदार्थे विशेषणत्वात् तदवच्छेदकं जरात्वम् । अतस्तद्रूपो मुखप्रविष्टो धर्मः । रामशब्दस्य तदाश्रयत्वाभावात्तत्र जरान्तत्वातिदेशो नेति भावः । एकाच्पदस्य एकत्वविशिष्टोऽच्, अवयवो यस्येत्यर्थकत्वेन अवयवत्वस्याप्यवयवत्वव्याप्यत्वेन, इयायेत्यादाविकारस्यापि स्वमुखप्रविष्टधर्माश्रयत्वेन तत्रैकाच्त्वातिदेशः सुलभ इति दिक् ॥ ३५८ ॥

एकस्मिन्खलु तत्तद्धर्मारोपेण दृश्यते लोके ।
युगपज्ज्येष्ठत्वादेर्व्यवहारस्तद्वदिह तदन्तादेः ॥ ३५९ ॥

सत्सु तु बहुपुत्रेषु न तादृग्व्यवहार एकस्मिन् ।
एवं ससहायत्वे शास्त्रेऽप्युक्तातिदेशो न ॥ ३६० ॥

शास्त्रविहितसंकेतविषयतावच्छेदकातिरिक्तोऽपि ।
एकाच्त्वादिर्धर्मोऽतिदिश्यतेऽवश्यमेतेन ॥ ३६१ ॥

तेनैकाच्त्वप्रयुक्तं सिद्धमियायादिषु द्वित्वम् ।
भवतीत्यत्र तदादित्वधिया भ्वङ्गं पदं व्यतिस इह से ॥ ३६२ ॥

---

इयं परिभाषा लोकन्यायसिद्धेत्याह—**एकस्मिन्निति** । लोके यथा—एकपुत्रवतः पुरुषस्यैकस्मिन्नेव पुत्रे युगपज्ज्येष्ठत्वाद्यारोपेण, अयमेव मे ज्येष्ठोऽयमेव मे मध्यमोऽयमेव कनिष्ठ इति व्यवहारो दृश्यते, तद्वच्छास्त्रेऽप्येकस्मिन्नेव वर्णे समुदायरूपत्वारोपेणादन्तत्वादिव्यवहारो भवतीत्यर्थः ॥ ३५९ ॥

असहाय एव व्यपदेशिवद्भाव इत्यपि लोकसिद्धमेवेत्याह—**सत्स्विति** ॥ ३६० ॥

शास्त्रीय एव धर्मोऽनयाऽतिदिश्यत इति न निर्बन्धः किन्त्वस्या लोकन्यायसिद्धत्वादशास्त्रीयोऽपि धर्मोऽतिदिश्यत एवेति शास्त्रीयधर्मस्वरूपनिरूपणपूर्वकमाह—**शास्त्रेति** । शास्त्रकृतसंकेतविषयतावच्छेदको धर्मः शास्त्रीयः । 'येन विधिस्तदन्तस्य' 'यस्मिन्विधिस्तदादावल्ग्रहणे' इति शास्त्राभ्यां संकेतितौ यो तदन्ततदादिरूपावर्थौ तदवच्छेदकमन्तत्वमादित्वं च शास्त्रीयम् । तदतिरिक्त एकाच्त्वादिरूपोऽपि धर्मोऽनेन न्यायेनातिदिश्यत एवेत्यर्थः ॥ ३६१ ॥

**तेनेति** । अशास्त्रीयस्याप्येकाच्त्वादेरनयाऽतिदेशेन, इण्धातोर्लिटि इयायेत्यादौ साध्ये इकारे एकाज्घटितत्वरूपस्यैकाच्त्वस्य स्वतोऽभावाद्व्यपदेशिवद्भावेनैकाच्त्वमानीय लिटिधातोरिति द्वित्वं सिध्यति । भवतीत्यत्र च भू इत्यस्य शपमादायाङ्गत्वे कर्तव्येऽपेक्षितं यस्मात्प्रत्ययविधिस्तदादित्वं व्यपदेशिवद्भावेन लभ्यते, तेन भू इत्यस्याङ्गसंज्ञा सिध्यति । व्यतिसे इत्यत्र च व्यतिपूर्वकस्य असधातोः कर्मव्यतिहारे आत्मनेपदे से प्रत्यये श्नसोरल्लोप इत्यनेनाकारलोपे तासस्त्योरित्यनेन सकारलोपे च से इति प्रत्ययमात्रमवशिष्यते, तस्य सुप्तिङन्तमित्यनेन पदत्वे कार्येऽपेक्षितं यस्मात्तिङ्विहितस्तदादित्वं व्यपदेशिवद्भावेन लभ्यते तेन तस्य पदसंज्ञा सिध्यति । एतत्सर्वमशास्त्रीयस्यापि धर्मस्यातिदेशाङ्गीकारादेव भवतीति भावः ॥ ३६२ ॥

अर्थविशिष्ट इधातुर्ह्यन्यपदार्थोऽस्य चावयव एकोच् ।
अर्थरहितवर्णात्मेत्येकाच्त्वमनेन कैयटेनोक्तम् ॥ ३६३ ॥

तन्नैकपदा ऋगिति व्यपदेशोऽर्थेन युक्त इति ।
भाष्योक्त्याऽर्थाश्रयणे तद्व्यवहारस्य मुख्यत्वात् ॥ ३६४ ॥

---

इयायेत्यादौ इधातोरर्थस्य त्यागोपादानाभ्यां व्यपदेशिवद्भावेनैकाच्त्वसमर्थनं कैयटोक्तं निरसिष्यंस्तदाशयं तावद्दर्शयति— अर्थविशिष्ट इति । फलव्यापाररूपार्थविशिष्टः शब्दो धातुः । शब्दार्थोभयसमुदायरूप इधातुर्द्वित्वविधायकसूत्रस्थस्य एकाच इति बहुव्रीहेर्वाच्योऽन्यपदार्थः, तदवयवश्च केवल शब्दरूप इकार इति समासान्तर्वर्तिपदार्थविवक्षायामर्थस्य त्यागेन, अन्यपदार्थविवक्षायां चार्थस्योपादानेन व्यपदेशिवद्भावेनैकाच्त्वमुपपन्नमिति "आद्यन्तवदेकस्मिन्" ( १।१।२२ ) इति सूत्रे कैयटेन 'अर्थवतो धातोरयं वर्णरूप एकोऽजित्यर्थस्य त्यागोपादानाभ्यां भवति व्यपदेश एकाजिति' इति ग्रन्थेनोक्तम् । कारिकायामनेनेत्यस्य व्यपदेशिवद्भावेनेत्यर्थः ॥ ३६३ ॥

कैयटोक्तं निरस्यति—तन्नेति । एकपदा ऋगिति—। आद्यन्तवत् (१।१।२१) इति सूत्रे भाष्ये—तत्र व्यपदेशिवद्वचनम्* । व्यपदेशिवदेकस्मिन्कार्यं भवतीति वक्तव्यम् । इत्यपूर्ववचनं तत्प्रयोजनानि चोपन्यस्य, अवचनाल्लोकविज्ञानात्सिद्धम्* इत्यादिना तत्खण्डनावसरे 'यथा तर्हि वर्णसमुदायः पदं पदसमुदाय ऋक् ऋक्समुदायः सूक्तमित्युच्यते । भवति चैतदेकस्मिन्नप्येकवर्णं पदमेकपदा ऋक् एकर्चं सूक्तमिति' इति लोकसिद्धव्यपदेशिवद्भावोदाहरणमुक्त्वा, तत्र व्यपदेशिवद्वचनस्य नोपयोग इत्याशयेन— 'अत्राप्यर्थेन युक्तो व्यपदेशः । पदं नामार्थः ऋङ् नामार्थः, सूक्तं नामार्थ इति' इत्युक्तम् । ऋक्त्वादेरर्थशब्दोभयवृत्तित्वेन शब्दार्थोभयरूपाया ऋचः शब्दमात्ररूपं पदमेकोऽवयव इत्यतस्तत्र मुख्य एव व्यपदेश इति तदाशयः । पदं नामार्थ इत्याद्युक्तिः शब्दार्थयोरभेदोपचारेण ज्ञेया । एतद्भाष्येणार्थस्य त्यागोपादानाभ्यां क्रियमाणव्यवहारस्य मुख्यत्वलाभात्तदाश्रयणे व्यपदेशिवद्भावकथनं कैयटस्यायुक्तमिति भावः । यत्तु "तास्यनुदात्तेत्—" ( ६।१।१८६ ) इति सूत्रे भाष्ये "अर्थवता व्यपदेशिवद्भावः" इत्युक्तम्, तत्रार्थवत्पदमसहायस्योपलक्षकं ज्ञेयम् । प्रायेणासहायस्यैवार्थवत्त्वात् । अत एव एधते इत्यादौ तत्प्रत्ययावयवोऽकारोऽचामन्त्य इति व्यवहारे स आदिर्यस्येति व्यवहारे चासहाय एवेति तत्र व्यपदेशिवद्भावेन टिसंज्ञा, तया च "टित आत्मनेपदानां टेरे" इत्येत्वं सिध्यति । अर्थवत्पदस्य यथाश्रुतार्थाश्रयणे तु तत्राकारस्यार्थवत्त्वाभावात्तन्न सिध्येदिति बोध्यम् । अधीते इत्यादावधिविशिष्टस्यैवेङोऽर्थवत्त्वात्प्रायेणेति ॥ ३६४ ॥

तस्माद्यथा खलु शिलापुत्रस्य शरीरमित्यादौ ।
एकत्र बह्ववस्थाविशिष्टसमुदायतासमारोपात् ॥ ३६५ ॥

अंशांशित्वव्यवहृतिरुपपन्नेयं तथैकाच्त्वे ।
भवतीत्यत्र च शपमादायाङ्गत्वेऽसहायतैव भुवः ॥ ३६६ ॥

सत्यपि हि विजातीये कन्यादौ पुत्र एकस्मिन् ।
ज्येष्ठत्वकनिष्ठत्वप्रभृतिव्यवहारदर्शनाल्लोके ॥ ३६७ ॥

यत्तु निजौ चत्वारो भाष्यकृता दर्शिताः किलैकाचः ।
तत्त्वेकस्मिन्निति पदमविचिन्त्य प्रौढिवादेन ॥ ३६८ ॥

---

उपसंहरति—तस्मादिति । शिलायाः पुत्र इव शिलापुत्रः पेषणग्रावा । तस्याचेतनत्वेन प्राणिनिष्ठबाल्याद्यवस्थासंबन्धाभावेऽपि तादृशावस्थाविशिष्टशरीरसमुदायत्वारोपेण शिलापुत्रस्य शरीरमिति अवयवावयविभावसंबन्धव्यवहारो भवति । तथैव इयायेत्यादाविकारेऽच्समुदायरूपत्वमारोप्यावयवायविभावकल्पनयैकाच्त्वव्यवहार उपपादनीय इति भावः । ननु भवतीत्यत्र भू इत्यस्य ससहायत्वेन व्यपदेशिवद्भावाप्रवृत्त्याङ्गत्वं न स्यादत आह—भवतीत्यत्र चेति । अत्र हि शप्प्रत्ययप्रकृतिनिष्ठप्रथमावयवत्वनिरूपकसमुदायत्वमतिदेश्यम् । तद्धर्माक्रान्तस्यान्यस्याभावाद् भू इत्यस्यासहायत्वमेव ॥ ३६५, ३६६ ॥

उक्तमर्थं लोकदृष्टान्तेन सङ्गमयति—सत्यपि हीति । पुत्र एकस्मिन् = एकस्मिन्नेव पुत्रे सतीत्यर्थः ॥ ३६७ ॥

भाष्यविरोधमाशङ्क्य परिहरति—यत्त्विति । एकाचो द्वे प्रथमस्य ( ६।१।१ ) इति सूत्रे भाष्ये—'एकाचोऽवयवैकत्वादवयवानां द्विर्वचनप्रसङ्गः ।' इत्येकाजरूपाणामवयवानां समुदायस्य चेति सर्वेषां द्विर्वचनापत्तिप्रतिपादकवार्तिकव्याख्यायां भाष्यकृता 'नेनिजतीत्यत्र निज्शब्दोऽप्येकाच् । इज् शब्दोऽप्येकाच् । इकारोऽप्येकाच् निशब्दोऽपि' इत्युक्तम् । तत्र निज्, इज्, नि इत्येतेषामिकारघटितत्वेनैकाच्त्वं युक्तम्, इ इत्यस्य तु, स्वत एकाच्त्वाभावात् ससहायत्वेन व्यपदेशिवद्भावाप्रवृत्तेश्च न युक्तम् । अतोऽसहाय एव व्यपदेशिवद्भावप्रवृत्तौ तत्रैकाचतुष्टयोपवर्णनं भाष्यकृतोऽसङ्गतं स्यादिति तु नाशङ्क्यम्, तद्भाष्यस्य एकस्मिन्नित्यस्यासहायार्थकतामपर्यालोच्य प्रवृत्तेः प्रौढिवादरूपत्वादिति भावः ॥ ३६८ ॥

इति नागेशानुमतं व्याख्यानमथोच्यते नवीनमतम् ।
स्वस्मिन्स्वघटकता च स्वघटिततैवाऽतिदिश्यतेऽनेन ॥ ३६९ ॥

घटकनिरुक्तिगते ये व्यापकताऽव्याप्यते तयोर्मध्ये ।
एकस्मिन्नपि धर्मे व्यापकतारूप एव सति ॥ ३७० ॥

एवं घटितनिरुक्तौ यद् व्याप्यत्वं तदेकसत्त्वेऽपि ।
कर्तव्यं धर्मद्वयविशिष्टवत्कार्यमित्यर्थः ॥ ३७१ ॥

तेनैवान्तत्वादिव्यवहार उपपन्नः ।
उपपन्नं च निजौ चतुरेकाच्प्रतिपादनं भाष्ये ॥ ३७२ ॥

ज्येष्ठत्वकनिष्ठत्वव्यवहारोऽप्येकपुत्रेऽसौ ।
स्वघटितसंघत्वस्य च तद्धटकत्वस्य चातिदेशेन ॥ ३७३ ॥

---

एवं नागेशमतं निरूप्य तन्मत एकस्मिन्नित्यस्यासहायार्थत्वाश्रयणे उक्तरीत्याऽसहायत्वनिर्वचनक्लेशो निजूधातावेकाच्चतुष्टयदर्शकभाष्यस्वारस्यभङ्गश्चेत्यरुचेर्नवीनमतमाह—अथोच्यत इत्यादिना ॥ ३६९ ॥

घटकेति । स्वव्यापकत्वे सति स्वाव्याप्यत्वमिति घटकलक्षणं प्रागुक्तं तन्मध्ये व्यापकत्वरूप एकस्मिन्नेव धर्मे सति, एवं स्वव्याप्यत्वे सति स्वाव्यापकत्वमिति—घटितलक्षणस्थव्याप्यत्वमात्रे सति धर्मद्वयविशिष्टवत्कार्यं कर्तव्यमित्येष व्यपदेशिवदेकस्मिन्निति परिभाषार्थः । एकस्मिन्नित्यस्यैकस्मिन्नेव धर्मे सतीत्यर्थो न त्वसहाय इति भावः ॥ ३७०, ३७१ ॥

तेनैव = स्वस्मिन्स्वघटकत्वस्वघटितत्वातिदेशेनैव । आदित्वादीत्यत्रादिपदेन एकाच्त्वतदादित्वधात्ववयवत्वादिसंग्रहः ॥ ३७२ ॥

एतत्परिभाषामूलभूतलौकिकदृष्टान्ते ज्येष्ठत्वादिव्यवहारोऽप्येकस्मिन्नेव पुत्रे स्वघटितत्वस्वघटकत्वातिदेशेनैव निर्वहतीत्याह—ज्येष्ठत्वेति । स्वपुत्रनिष्ठं ज्येष्ठत्वं हि—स्वपुत्रसमुदायघटकत्वे सति स्वपुत्रसमुदायघटकोत्पत्त्युत्तरकालिकोत्पत्त्यभाववत्त्वम् । कनिष्ठत्वं च स्वपुत्रसमुदायघटकत्वे सति स्वपुत्रसमुदायघटकोत्पत्तिपूर्वकालिकोत्पत्त्यभाववत्त्वम् । मध्यमत्वं च स्वपुत्रसमुदायघटकत्वे सति ज्येष्ठकनिष्ठलक्षणानाक्रान्तत्वम् । मध्यमे स्वापेक्षया यः कनीयांस्तदुत्पत्त्युत्तरकालिकोत्पत्तिमत्त्वेन ज्येष्ठलक्षणस्थविशेष्यदलोक्तधर्माभावात् । स्वापेक्षया यो ज्यायांस्तदुत्पत्तिपूर्वकालिकोत्पत्तिमत्त्वेन च कनिष्ठलक्षणस्थविशेष्यदलोक्तधर्मस्याप्यभावात् । स्वपुत्रसमुदायत्वं च स्वपुत्रघटितत्वे सति

पुत्रान्तरजन्युत्तरकालानुत्पत्तिकत्वादि ।
ज्येष्ठादिलक्षणगतं सुलभं पुत्रान्तरस्य विरहेऽपि ॥ ३७४ ॥

ननु गर्गादिभ्य इति हि विशेषणं प्रातिपदिकस्य ।
तेन तदन्तविधौ स्याद् गर्गाद्यन्ताद्यञत आह ॥ ३७५ ॥

## ग्रहणवता प्रातिपदिकेन तदन्तविधिर्नास्ति ॥ ३१ ॥

वर्णविषयिकामपि च प्रत्ययविषयां धियं न जनयति यत् ।
प्रातिपदिकविषयां तां जनयदिह ग्रहणवत्पदाज्ज्ञेयम् ॥ ३७६ ॥

---

स्वपुत्रेतराघटितत्वरूपम् । एतत्सर्वं बहुपुत्रसत्त्वे स्वत एवोपपद्यते । एकपुत्रस्यैव सत्त्वे तु, एकस्मिन्नेव स्वपुत्रे स्वपुत्रघटितत्वातिदेशेन तादृशसमुदायत्वं लभ्यम् । एकस्य तद्घटकत्वमप्यतिदेशेनेति भावः ॥ ३७३ ॥

एवं विशेषणदलं व्यवस्थाप्य विशेष्यदलोक्तार्थोऽप्येकस्मिन्सुलभ इत्याह—**पुत्रान्तरेति** । विशेष्यदलस्य तत्तत्कालिकोत्पत्त्यभावघटितत्वेन, एकपुत्रस्यैव सत्त्वे पुत्रान्तरोत्पत्तेरेवाभावात्तत्सौलभ्यम् । जनिरुत्पत्तिः । नन्वेकपुत्रस्यैव सत्त्वे तत्रोक्तरीत्या ज्येष्ठकनिष्ठलक्षणसमन्वयेऽपि मध्यमत्वं दुर्वचम् । ज्येष्ठकनिष्ठलक्षणस्थविशेष्यदलोक्तधर्मयोरपि तत्र सत्त्वादिति चेत्सत्यम् । तदर्थं तल्लक्षणे वास्तविकघटकत्वे सतीत्येवं विशेषणनिवेशेन तत्राव्याप्तिपरिहारः कर्तव्यः । तथा च मध्यमत्वेन विवक्षित एकपुत्रे ज्येष्ठकनिष्ठलक्षणस्थविशेष्यदलोक्तधर्मसत्त्वेऽपि स्वपुत्रसमुदायनिरूपितवास्तविकघटकत्वसमानाधिकरणोक्तधर्माभावेन विशेषणाभावाद्विशिष्टाभाव इति सर्वं समञ्जसम् ॥ ३७४ ॥

तदन्तविधिप्रस्तावात्तदीयातिव्याप्तिनिवारकपरिभाषामवतारयति — **नन्विति** । ॥ ३७५ ॥

ग्रहणवता प्रातिपदिकेनेत्यस्य, आनुपूर्व्यवच्छिन्नविषयताप्रयोजकेन प्रातिपदिकबोधकपदेनेत्यर्थे गर्गादिपदानां तथात्वेन तत्र तदन्तविधिनिषेधसिद्धावपि वृद्धाच्छ इत्यत्र वृद्धपदस्य, नौ द्व्यच इत्यत्र द्व्यच्पदस्य च तथात्वाभावेन तत्रास्या अप्रवृत्त्यापत्तिः स्यात् । प्रातिपदिकत्वव्याप्यविषयताप्रयोजकत्वं ग्रहणवत्प्रातिपदिकत्वमित्यर्थाङ्गीकारे तु वृद्धाच्छ इत्यादौ प्रातिपदिकादित्यधिकारसत्त्वाद् वृद्धादिपदार्थस्याभेदसंबन्धेन प्रातिपदिकविशेषणत्वात्तन्निष्ठप्रकारताऽऽख्यविषयतायाः प्रातिपदिकत्वव्याप्यत्वेन तत्रैतत्परिभाषाप्रवृत्तिसिद्धावपि, 'अत इञ्' 'यञिञोश्च' इत्यादावत्पदार्थनिष्ठाया यञिञ्पदार्थनिष्ठायाश्च प्रकारताऽऽख्यविषयताया अपि प्रातिपदिकत्वव्याप्यत्वेन तत्राप्यनया तदन्तविधिनिषेधापत्तिरतो निष्कृष्टमर्थमाह—**वर्णविषयिकामिति** । ताम् = धियम् ।

तेनेयं वृद्धपदे द्व्यजिति पदेऽपि प्रवर्तते नियतम् ।
अत इञ् यञिञोश्चात्र तु वर्णप्रत्ययविबोधकपदेन ॥ ३७७ ॥

प्रत्ययविधौ तदन्तग्रहणप्रतिषेधवार्तिकस्येयम् ।
अनुवादोऽस्त्यत इयमपि वेद्या प्रत्ययविधावेव ॥ ३७८ ॥

अत एव च तद्भिन्नेऽप्यृन्नित्यादौ तदन्तविधिः ।
भाष्यकृता प्रणिगदितः स्वसा च परमस्वसेत्युदाहरता ॥ ३७९ ॥

सोऽपि तदन्तनिषेधोऽस्त्युक्तविधग्रहणवत्स्वेव ।
इदमसमासे निष्कादिभ्य इतीहास्ति सूचितं भाष्ये ॥ ३८० ॥

---

वर्णत्वव्याप्यधर्मावच्छिन्नविषयकबोधाजनकत्वे सति प्रत्ययत्वव्याप्यधर्मावच्छिन्नविषयक-बोधाजनकत्वे च सति प्रातिपदिकविषयकबोधजनकत्वं ग्रहणवत्प्रातिपदिकत्वमित्यर्थः ॥ ३७६ ॥

उक्तनिर्वचनफलान्याह—तेनेयमिति । "वृद्धाच्छ" इत्यत्र वृद्धपदस्य "नौद्व्यचष्ठन्" इत्यत्र द्व्यच्पदस्य चोक्तविधत्वेन ग्रहणवत्प्रातिपदिकत्वादनया तदन्तविधि-निषेधाद्, अतिमालशब्दाच्छैषिकश्छप्रत्ययो न । परमघटशब्दाच्च तेन तरतीत्यर्थे ठन्प्रत्ययो न । अत इञ् इत्यत्र तु अतपदस्य वर्णविशेषबोधकत्वात्, यञिञोश्चेत्यत्र यञ् इञ् इत्यनयोः प्रत्ययविशेषबोधकत्वाद् ग्रहणवत्प्रातिपदिकत्वं नेति तत्रास्या अप्रवृत्त्या तदन्तविधिर्भवत्येव । अस्मायामेधास्रजो विनिरित्यत्रासुपदस्योक्तरीत्या ग्रहणवत्प्रातिपदिकत्वेऽपि, "असमासे निष्कादिभ्य" इति सूत्रेऽसमासग्रहणेनास्या अनित्यत्व-ज्ञापनात्तदन्तविधिर्भवत्येव, तेन यशस्वी मनस्वीत्यादि सिध्यति । अत एव "रोणी" इति सूत्रे तदन्तविधिना आजकरौण इति भवतीति बोध्यम् ॥ ३७७ ॥

प्रत्ययविधाविति । येनविधिस्तदन्तस्येति सूत्रे भाष्ये पठितस्य समासप्रत्यय-विधौ प्रतिषेध इत्यस्य वार्तिकस्यानुवादरूपेयं परिभाषाऽस्ति, अत इयमपि प्रत्ययविधा-वेव प्रवर्तत इत्यर्थः ॥ ३७८ ॥

तद्भिन्ने = प्रत्ययविधिभिन्ने । इत्युदाहरतेति । येनविधिस्तदन्तस्य ( १।१।७२ ) इति सूत्रे पदाङ्गाधिकारे तस्य च तदुत्तरपदस्य चेति वार्तिकव्याख्याने, भाष्यकृताऽ-ङ्गाधिकारे महान् परममहान्, आपः स्वापः, स्वसा परमस्वसेत्युदाहरणान्युक्तानि । तत्र प्रत्ययविधिभिन्ने तदन्तविध्याश्रयणादियं प्रत्ययविधिमात्रविषयेति भावः ॥ ३७९ ॥

सोऽपीति । समासप्रत्ययविधौ प्रतिषेधोऽपि उक्तरूपग्रहणवत्प्रातिपदिकेष्वेव प्रवर्तते । तदिदम् "असमासे निष्कादिभ्यः" ( ५ । १ । २० ) इति सूत्रे भाष्ये

पूर्वादिनिरिति सूत्रे तदन्तविधिनैव पूर्वान्तात् ।
इनि संभवति सपूर्वाच्चेत्युक्तं ज्ञापयत्येनाम् ॥ ३८१ ॥
व्यपदेशिवदित्यनया सूत्रान्ताट्ठग् दशान्ताड्डः ।
इत्यादि केवलादपि सूत्रदशादेः कथं न तत्राह ॥ ३८२ ॥

## व्यपदेशिवद्भावोऽप्रातिपदिकेन ॥ ३२ ॥

प्रातिपदिकताव्याप्यार्थकेन चान्तादिना च घटितं यत् ।
उद्दिश्य तेन विहितं कार्यं प्रत्ययतदागमान्यतरत् ॥ ३८३ ॥

---

सूचितम् । तत्र हि—परमनिष्केण क्रीतं परमनैष्किकमित्यत्र ग्रहणवतेति परिभाषया तदन्तविधिनिषेधादसमासग्रहणवैयर्थ्यमाशङ्क्य "निष्कादिष्वसमासग्रहणं ज्ञापकं पूर्वत्र तदन्ताप्रतिषेधस्य" इति वचनेन समाधाय तत्प्रयोजननिरूपणे "किमेतस्य ज्ञापने प्रयोजनम् । प्राग्वतेष्ठञित्यत्र तदन्तविधिः सिद्धो भवति । नैतदस्ति प्रयोजनं ग्रहणवता प्रातिपदिकेन तदन्तविधिः प्रतिषिध्यते, न च ठञ्विधौ काचित्प्रकृतिर्गृह्यते" इत्याद्युक्तम् । यदि समासप्रत्ययविधाविति निषेधः सामान्यरूपेण ग्रहणवत्सु तद्भिन्नेषु च प्रवर्तेत तर्हि तेन तदन्तविधिनिषेधस्य दुर्वारतया तदप्रवृत्तिहेतुरपि वक्तव्यः स्यात् । तदवचनादुभयोस्तुल्यविषयता सूचितेति बोध्यम् ॥ ३८० ॥

**इनि सम्भवति**—कृतपूर्वीत्यादाविन्प्रत्ययविधानसम्भवेऽपीत्यर्थः ॥ ३८१ ॥

पूर्वोक्तव्यपदेशिवद्भावातिव्याप्तिनिवारणायाह—**व्यपदेशिवदिति** । क्रतूक्थादिसूत्रान्ताट्ठगिति सूत्रेण तदधीते तद्वेदेत्यर्थे सूत्रान्ताद्विधीयमानष्ठक्प्रत्ययो यथा सांग्रहसूत्रिक इत्यत्र सूत्रशब्दान्तात्संग्रहसूत्रशब्दाद्भवति तथा केवलसूत्रशब्दादपि व्यपदेशिवद्भावेन स्यात् । एवं तदस्मिन्नधिकमिति दशान्ताड्ड इति डप्रत्यय एकादश अधिका अस्मिन्नेकादशं शतं सहस्रं वेत्यत्र यथा दशशब्दान्तादेकादशशब्दाद्भवति तथा केवलादशशब्दादपि स्यादिति शङ्काशयः ॥ ३८२ ॥

**प्रातिपदिकतेति** । प्रातिपदिकत्वव्याप्यधर्मावच्छिन्नविषयताप्रयोजकपदेन, अन्तादिना = अन्तपदेनादिपदेन च घटितं यत्पदं, तेनोद्दिश्य विहितं = तत्प्रयोज्योद्देश्यतानिरूपितविधेयताश्रयीभूतं प्रत्ययतदागमैतदन्यतररूपं कार्यं, व्यपदेशिना = मुख्यव्यवहारविषयेण समं = तुल्यं न प्राप्यम् । प्रातिपदिकेन न लभ्यत इत्यर्थः । सूत्रान्ताट्ठगित्यादौ प्रातिपदिकत्वव्याप्यो धर्मः सूत्रशब्दत्वादिरूपस्तदवच्छिन्नबोधकसूत्रादिपदेनान्तशब्देन च घटितं सूत्रान्तादित्यादिपदं तद्बोध्यार्थोद्देश्यकठगादिप्रत्ययविधानसत्त्वादुक्तस्थले न व्यपदेशिवद्भावः । तत्र चेति । उक्तपरिष्कारे यानि विशेषणान्युक्तानि तत्प्रयोजनानि-

व्यपदेशिना समं न प्राप्यं तत्र च विशेषणफलानि।
भवती-रौणा-ग्रदतः, पञ्चम इत्यादिकानि वेद्यानि॥ ३८४॥

नैवोगित्त्वं नामैकवृत्ति रोणीति नान्तपदघटितम्।
अग्रान्तेति न प्रत्ययविधिरस्ति प्रत्ययागमः खलु मट्॥ ३८५॥

पूर्वान्तादिनिरिति खल्वेकस्मिन्नेव योग आरभ्ये।
पूर्वादिनिः सपूर्वाच्चेति द्वितयोक्तिरिह लिङ्गम्॥ ३८६॥

---

भवतीत्यादीनि ज्ञेयानीत्यर्थः। उक्तप्रयोगेष्वाद्यत्रयेऽतिव्याप्तिनिरासरूपम्, अन्त्ये चाव्याप्तिनिरासरूपं प्रयोजनं स्पष्टीकरोति—नैवोगित्त्वमिति। उगित्त्वस्य शत्रादिप्रत्ययेष्वपि वर्तमानत्वेन प्रातिपदिकत्वव्याप्यत्वाभावादुगितश्चेति सूत्रे उगित्-पदं नोक्तविधविषयताप्रयोजकम्, अतस्तत्र प्रकृतनिषेधाप्रवृत्त्या भवच्छब्दस्य व्यपदेशिवद्भावेनोगिद्भवच्छब्दान्तत्वात्ततो ङीब्भवति, तेन 'भवती' इति सिध्यति। अन्यथाऽतिभवतीत्यत्रैव स्यात्। उगित इत्यस्यान्तपदाघटितत्वादपि न तत्र निषेधप्रवृत्तिः। 'रोणी' इति सूत्रे रोणीति पदस्योक्तविधविषयताप्रयोजकत्वेऽप्यन्तपदघटितत्वाभावाद् रोणीशब्दे व्यपदेशिवद्भावेन रोण्यन्तत्वातिदेशाद्, रोण्या अदूरभवः कूप इत्यर्थेऽण्प्रत्ययेन रौण इति सिध्यति। अन्यथा आजकरौण इत्यादावेव स्यात्। "अग्रान्तशुद्धशुभ्रवृषवराहेभ्यश्च" इति दन्तशब्दस्य ददादेशविधायके सूत्रे, अग्रान्तेति अन्तपदघटितत्वेऽपि तदुद्देश्यककार्यस्य प्रत्ययतदागमान्यतररूपत्वाभावात्केवलादग्रपदात्परस्यापि दन्तशब्दस्य ददादेशो भवति, तेन 'अग्रदन्' इति सिध्यति। अन्यथा कुडमलाग्रदन्नित्यत्रैव तत्प्रवृत्तिः स्यात्। "नान्तादसंख्यादेर्मट्" इति मटः प्रत्ययत्वाभावेऽपि डट्प्रत्ययनिष्ठोद्देश्यतानिरूपितावयवत्वावच्छिन्नविधेयताश्रयत्वरूपतदागमत्वेन प्रकृतनिषेधप्रवृत्त्या पञ्चन्शब्दे, संख्यादित्वातिदेशाभावेन असंख्यादित्वाड्डटो मडागमो भवति, तेन पञ्चमः सप्तम इत्यादि सिध्यतीति भावः॥ ३८३, ३८४, ३८५॥

ज्ञापकमाह—पूर्वान्तादिति। पूर्वान्तादिनिरित्येकयोगकरणेनैव पूर्वशब्दान्तत्वेन कृतपूर्वेत्यस्मात्, व्यपदेशिवद्भावेन च पूर्वशब्दादिनिप्रत्ययविधानसिद्धौ, योगद्वयकरणं व्यर्थं सदस्या ज्ञापकमित्यर्थः। येन विधिरिति सूत्रे भाष्ये प्रकृतपरिभाषाज्ञापनावसरे "यत्तर्हि योगविभागं करोति इतरथा पूर्वात्सपूर्वादिनिरित्येव ब्रूयात्" इति भाष्यस्य, "पूर्वात्सपूर्वादिनिरित्येकयोग एव कर्तव्ये" इति परिभाषेन्दुशेखरोक्तेश्चात्रैवार्थे तात्पर्यम्।

इष्टादिभ्य इनिविधावनुवृत्त्यर्थं तु तन्न वक्तव्यम् ।
ज्ञापकपरभाष्येणानिष्ट्यादीनामनिष्टत्वात् ॥ ३८७ ॥

यदि चानिष्टीत्यादीष्यते तदा पूर्वशब्दमिष्टादौ ।
विनिवेश्येष्टाद्यन्तादिनिरित्युक्त्यैव तत्सिद्धेः ॥ ३८८ ॥

ननु वान्तो यीत्यादौ यीति प्रत्ययविशेषणत्वेन ।
यान्त इति हि युक्तोऽर्थो न तु यादावित्यतः पठति ॥ ३८९ ॥

## यस्मिन्विधिस्तदादावल्ग्रहणे ॥ ३३ ॥

अल्बोधके हि सप्तम्यन्तेऽभेदात्प्रकारवाचिपदे ।
पठिते विहितं कार्यं ज्ञेयं तद्बोधितालादौ ॥ ३९० ॥

---

यथाश्रुतार्थकत्वे स्वावधिकपूर्वत्वविशिष्टशब्दसाहित्यरूपस्य सपूर्वत्वस्य व्यपदेशिवद्भावालभ्यत्वात्तदसाङ्गत्यापत्तेरिति बोध्यम् ॥ ३८६ ॥

सपूर्वाच्चेति । पृथक्सूत्रकरणस्य इष्टादिभ्यश्चेत्यत्रानुवृत्त्यर्थत्वेन चारितार्थ्यान्न ज्ञापकत्वमित्याशङ्कां परिहरति इष्टादिभ्य इति । अनिष्ट्यादीनाम्— । अनिष्टीत्यादिप्रयोगाणामनिष्टत्वादनभिधानादित्यर्थः ॥ ३८७ ॥

तेषामभिधानाश्रयणेऽपि समाधत्ते—यदि चेति । इष्टादिगणे पूर्वशब्दं पठित्वा, इष्टाद्यन्तादिनिरिति न्यासेनैव अनिष्ट-कृतपूर्वेत्यादीनां स्वत इष्टाद्यन्तत्वाद्, इष्ट-पूर्वेत्यादीनां च व्यपदेशिवद्भावेन तथात्वात्तेभ्य इनिसिद्धौ सूत्रद्वयकरणं व्यर्थं सदस्या ज्ञापकमेवेति भावः ॥ ३८८ ॥

तदन्तविध्यपवादरूपां परिभाषामवतारयति—नन्विति । यान्तप्रत्यये परे वान्तादेश इत्यर्थे गोमयमततीति गोमयात् तमाचष्टे गोमययति इत्यादौ मय्प्रत्यये परे वान्तादेशः स्यात् । टिलोपस्याज्झलादेशत्वेन स्थानिवद्भावाप्रवृत्त्या, नाजानन्तर्य इति निषेधाद् बहिरङ्गासिद्धत्वाभावेन च यान्तत्वस्य सौलभ्यात् ॥ ३८९ ॥

परिभाषायां यस्मिन्नित्यनेन सप्तम्यन्तपदपरामर्शः । गृह्यन्तेऽनेनेति ग्रहणं बोधकम् । अलो ग्रहणमल्ग्रहणम्, अल्बोधकं पदम् । तस्मिन् सति विधिः कार्यम् । अस्याश्च येनविधिरितिसूत्रापवादत्वेन तत्समानविषयत्वाद्योऽर्थः पर्यवस्यति तमाह—अल्बोधक

एषा च तदन्तविधेरपवादतयोदिता भाष्ये ।
लिङ्गं च न ल्यपीतीत्वस्य हि नैवान्यथा प्राप्तिः ॥ ३९१ ॥

अस्याः स्वरूपसप्तम्येव निमित्तं न तु तदर्थः ।
तेन वशादेः कृत इति नेड्वशि सूत्रेऽपि लब्धोऽर्थः ॥ ३९२ ॥

क्विश्चेद्विधौ वलादेरित्यादिपदोक्तिसामर्थ्यात् ।
सप्तम्यन्तत्व इयं प्रवर्तते भेद्यभेदकयोः ॥३९३॥

तस्मादियं न डः सिधुडित्यत्र ततश्च धुट् सकारस्य ।
न तु सादिपदस्यातो लिट्स्त्विस्वत्यादावपि स सिद्धः ॥३९४॥

---

इति । अभेदसंबन्धावच्छिन्नप्रकारताप्रयोजकेऽलब्बोधके सप्तम्यन्तपदे उच्चारिते सति यत्कार्यं विधीयते तत्सप्तम्यन्तपदबोध्यालादौ ज्ञेयमित्यर्थः ॥ ३९० ॥

भाष्ये— । "येन विधिस्तदन्तस्य" ( १।१।७२ ) इति सूत्रे भाष्य इयं वचनरूपेण पठिता । तत्र ज्ञापकं नोक्तम् । ज्ञापकमप्यस्याः संभवतीत्याह—लिङ्गं चेति । न ल्यपीति सूत्रं हि प्रदाय प्रधायेत्यादौ घुमास्थेति सूत्रप्राप्तस्येत्वस्य प्रतिषेधार्थम् । अस्या अभावे तु तत्र हलन्त आर्धधातुक इत्यर्थे क्त्वास्थानिकस्य ल्यब्बोध्ययप्रत्ययस्य हलन्तत्वाभावेनेत्वाप्राप्त्या तद्वयर्थं सदस्या ज्ञापकमिति भावः ॥ ३९१ ॥

निमित्तं = प्रवृत्तिप्रयोजिका । तदर्थः = अधिकरणरूपः सप्तम्यर्थः । नेड्वशीति । नेड्वशिकृतीति सूत्रे वशिकृतीत्यनयोः सप्तम्या इड्निरूपितसंबन्धार्थकत्वेन षष्ठ्यर्थवृत्तित्वेऽपि स्वरूपसप्तमीसत्त्वाद्वशादेः कृत इत्यर्थो लभ्यत इति भावः ॥ ३९२ ॥

अन्यदपि प्रवृत्तिनियामकमाह—क्विश्चेति । आर्धधातुकस्येड्वलादेरित्यस्मिन्सूत्रे वलि इत्युक्त्यैव वलादेरित्यर्थलाभसंभवेऽप्यादिग्रहणसामर्थ्याद् भेद्यभेदकयोः = विशेष्यविशेषणयोरुभयोः सप्तम्यन्तत्व एवास्याः प्रवृत्तिर्भवतीति ज्ञाप्यते । तस्मात् "डः सि धुट्" इत्यत्र सीति विशेषणपदस्य सप्तम्यन्तत्वेऽपि तत्रानुवृत्तस्य पदस्येति विशेष्यस्य षष्ठ्यन्तत्वेनास्या अप्रवृत्त्या सादिपदस्य धुडिति नार्थः, किन्तु सकारस्य धुडित्येव । तेन लिट्स्विस्वत्यादावपि धुट्सिद्धः । उक्तनियमाभावे तु, सम्भवति सामानाधिकरण्ये

तीषसहेति च सेऽसिच्यनयोः प्रथमार्थ एव सप्तम्यौ ।
अनुवर्त्यं वलादेरिति वलि तदभेदान्वयः कार्यः ॥३९५॥

ननु वृक्षे शाखेतिवदाधेयेऽधिकरणत्वमारोप्य ।
यः प्रत्यये यकारः प्रत्ययघटकोऽस्ति तत्र वान्तः स्यात् ॥३९६॥

इत्यर्थेन स गव्ये सेत्स्यति गोमययतीह तदभावः ।
एवमपो भीत्यादौ प्रत्ययघटके भकार इत्यर्थः ॥३९७॥

---

वैयधिकरण्येनान्वयस्यान्याय्यत्वात् पदावयवस्य सस्य धुडित्यर्थासम्भवेन तदादिविधौ सादेः पदस्येत्यर्थेषट्त्सन्त इत्यादौ सूत्रस्य चारितार्थ्याल्लिट्त्सु षट्त्सु इत्यादौ धुडागमो न स्यादिति भावः ॥ ३९३, ३९४ ॥

नन्वेवं 'तीषसहलुभरुषरिषः' 'सेऽसिचि कृतचृतच्छृदतृदनृतः' इत्यत्रानुवृत्तस्यार्धधातुकस्येत्यस्य षष्ठ्यन्तत्वेन तदादिविधेरप्राप्त्या तादेरार्धधातुकस्येत्याद्यर्थो न लभ्येत, तत्राह—तीषसहेति । उक्तसूत्रयोः 'ति' 'से' इति सप्तम्यौ प्रथमाया अर्थे विवक्षिते । तत्र च वलादेरित्यस्याप्यनुवृत्तिः कर्तव्या । तद्घटकवल्पदार्थे तकारसकारयोरभेदान्वयेन तकाराभिन्नो यो वल् एवं सकाराभिन्नो यो वल् तदादेरार्धधातुकस्येत्यर्थेनैवेष्टसिद्धिरिति तीषसहेति सूत्रव्याख्यायां शब्देन्दुशेखरे स्पष्टम् ॥ ३९५ ॥

एतत्साध्यप्रयोजनानामन्यथासिद्धत्वेनेयं निष्फलेत्याशङ्कते—नन्वित्यादिना पद्यपञ्चकेन । वृक्षे शाखेतिवदिति । वस्तुतो वृक्षस्य स्वावयवेषु शाखादिषु समवेतत्वेन तदाधेयत्वेऽपि वृक्षे आधारतामारोप्य वृक्षे शाखेति व्यवहारो यथा भवति, तथा यकारादिवर्णसमुदायरूपप्रत्ययस्य वर्णाश्रितत्वेऽपि प्रत्यय आधारतामारोप्य प्रत्यये यो यकारः प्रत्ययावयव इति यावत् तस्मिन्परे ओदौतोर्वान्तादेश इति वान्तोयीत्यस्यार्थः, तेनैव गव्यशब्दे वान्तादेशः सेत्स्यति । या च गोमययतीत्यादौ मयू इति यान्तप्रत्यये वान्तादेशापत्तिराशङ्किता साप्यस्मिन्नर्थे नास्ति, तत्रौकारस्य प्रत्ययघटकयकाराव्यवहितपूर्वत्वाभावात् । एवमपो भीत्यादावपि प्रत्ययावयवे भकारे अपस्तकारादेश इत्यर्थे नैवेष्टसिद्धेर्भादौ प्रत्यय इत्यर्थाभावेऽपि न क्षतिः । आदिपदेन कोः कत्तत्पुरुषेऽचीत्यादिसंग्रहः । तत्राप्युत्तरपदावयवेऽचीत्यर्थेनैवेष्टसिद्धिः । आश्रितश्चैवमर्थोऽन्यत्र 'अमि पूर्वः' 'उपसर्गादृति धातौ' इत्यादौ । तत्र हि अमि योऽच्, अमवयोजिति यावत् तस्मिन्परे पूर्वरूपविधानान्न सर्वादेशापत्तिः । धात्ववयवे ऋकारे वृद्धिविधानाच्च न धातोः सर्वस्य वृद्ध्यादेशापत्तिः । तस्मादियं निष्प्रयोजनेति भावः ॥ ३९६, ३९७ ॥

न च शङ्क्य उष्ट्रगोयुगमित्यत्र प्रत्यये हि गोयुगचि ।
प्रत्ययघटकयकाराव्यवहितपूर्वस्य वान्त आदेशः ॥३९८॥
औकारसाहचर्याद्यकारवत्प्रत्ययानवयवस्य ।
ओकारस्य ग्रहणादित्थमियं निष्फलैव परिभाषा ॥३९९॥
अत एवैकहलादौ ह्रस्वाच्चादावितीह चादिपदम् ।
सूत्रकृतोक्तं हलि तीत्येव वदेल्लाघवादितरथा तु ॥४००॥
इति चेत् सत्यं किन्तूक्तविधबहुक्लिष्टकल्पनाश्रयणात् ।
स्वीकारोऽस्याः श्रेयान् सूत्रे स्पष्टार्थमादिपदम् ॥४०१॥
केचिच्छब्दा नियमेनोद्भूतावयवभेदसमुदायम् ।
प्रत्याययन्ति केचित्तिरोहितावयवभेदसमुदायम् ॥ ४०२ ॥

---

नन्वेवं "संप्रोदश्च कटच्" इति सूत्रस्थेन 'द्वित्वे गोयुगच्' इति वार्तिकेन गोयुगच-प्रत्यये द्वावुष्ट्रावुष्ट्रगोयुगमित्यादौ प्रत्ययान्तर्वर्तियकारे परे प्रत्ययघटकौकारस्यावादेशापत्तिरत आह—**न चेति** ॥ ३९८ ॥

उक्तापत्त्यभावे हेतुमाह—**औकारेति** । वान्तो यीत्यत्र वान्तादेशस्थानिनावोकारौकारौ, तत्र औकारः क्वापि यकारघटितप्रत्ययावयवो नास्ति, अतस्तत्साहचर्यादोकारोऽपि यकारघटितप्रत्ययानवयव एव गृह्यते, तेन नोक्तदोषः । एवं प्रयोजनानामन्यथासिद्धत्वादियं निष्फला । अतश्च न स्वीकर्तव्येति भावः ॥ ३९९ ॥

**अत एवेति** । उक्तरीत्याऽस्या निष्प्रयोजनत्वेनानादरादेव सूत्रकारेण 'एकहलादौ पूरयितव्येऽन्यतरस्या'मित्यत्र "ह्रस्वाच्चादौ तद्धिते" इत्यत्र च आदिग्रहणं कृतम् । इतरथा तु=अस्या आदरे तु प्रथमे एकहलि इति द्वितीये च ति इत्येव लाघवाद् वदेत् । तावतैव प्रकृतपरिभाषया एकहलादावित्याद्यर्थलाभसंभवादिति भावः ॥ ४०० ॥

उक्तरीत्या प्रकारान्तरेण निर्वाहसम्भवेऽपि बहुषु स्थलेष्वनेकक्लिष्टकल्पनाऽऽश्रयणापेक्षया परिभाषास्वीकार एव समुचित इत्याह—**इति चेत्सत्यमिति** । सूत्रे=एकहलादावित्यादिसूत्रे । स्पष्टार्थम्=स्पष्टप्रतिपत्त्यर्थम् ॥ ४०१ ॥

शास्त्रत्वसंपादकपरिभाषाप्रकरणनिरूपणानन्तरं तदन्तर्गतामतिदेशबोधिकां व्यपदेशिवदिति परिभाषामनुसन्धायातिदेशबोधकपरिभाषानिरूपणमारभते—**केचिदिति** । केचिच्छब्दा नियमेन=अव्यभिचारेण, उद्भूताः स्पष्टतया भासमाना अवयवभेदा

वृक्षा इति हि बहुत्वं वनमित्येकत्वमुच्यते नियतम् ।
तद्वद् द्वन्द्वेऽप्युचितं न घटपटं घटपटाविति द्वैधम् ॥ ४०३ ॥

अत आह—

## सर्वो द्वन्द्वो विभाषयैकवद्भवति ॥ ३४ ॥

उभयविधाऽपि विवक्षा न विरुद्धा शब्द एकस्मिन् ।
सर्वे लोकाः सर्वो लोक इति ह्युभयथा प्रयोगोऽस्ति ॥ ४०४ ॥
अविशेषादितरेतरयोगसमाहारयोरुभयोः ।
द्वन्द्वविधेरत्रापि द्विविधविवक्षा समुचितैव ॥ ४०५ ॥

---

अवयवविशेषा यस्यैवंभूतं समुदायं प्रत्याययन्ति = बोधयन्ति । केचित्तु तद्वैपरीत्येन तिरोहिता अप्रकाशमाना अवयवभेदा यस्यैवंभूतं समुदायं प्रत्याययन्ति । शब्दशक्तिस्वाभाव्यादेवोक्तविधिव्यवस्थितार्थबोधका इति भावः ॥ ४०२ ॥

उक्तमर्थमुदाहरणद्वयेन स्पष्टीकरोति—वृक्षा इति । वृक्षशब्दस्योद्भूतावयवभेदसमुदायबोधकत्वाद् बहुत्वमेवोच्यते = बहुत्वबोधकबहुवचनान्त एव वृक्षा इति प्रयोगो भवति । वनशब्दस्य तु तिरोहितावयवभेदसमुदायबोधकत्वाद् वनमित्येकवचनान्तः प्रयोगः । एवं च द्वन्द्वस्योद्भूतावयवभेदसमुदायात्मकेतरेतरयोगे, तिरोहितावयवभेदसमुदायात्मकसमाहारे चाविशेषेण विधानेऽपि द्वन्द्वीभूत एकस्मिन् शब्दे एकविधैव विवक्षा युक्ता न तु द्विविधा । अतो घटपटं घटपटाविति द्विविधविवक्षाप्रयुक्त एकवचनान्तद्विवचनान्तयोरुभयोः प्रयोगोऽनुपपन्नः । तदुपपादनाय परिभाषामाहेत्यर्थः ॥ ४०३ ॥

द्वन्द्वसमासानां बहुत्वेऽपि परिभाषायां द्वन्द्व इत्येकवचनं जात्येकत्वविवक्षयेति बोध्यम् । सर्वपदेन च द्वन्द्वश्चप्राणीत्याद्येकवद्भावनियमप्रकरणाविषयश्चार्थे द्वन्द्व इति सूत्रविहितो ग्राह्य इत्यग्रे स्पष्टीभविष्यति । न विरुद्धेति । वृक्षवनादिकतिपयशब्दानामेकविधसमुदायबोधकत्वेऽपि, नैष सार्वत्रिको नियमः, सर्वे लोकाः सर्वो लोक इति सर्वशब्दलोकशब्दयोरुभयविधप्रयोगदर्शनेनैकस्मिञ्छब्दे उभयविधसमुदायबोधकत्वस्याप्यवगमात् । तस्माद् द्वन्द्वीभूतशब्देऽप्येकस्मिन्नुभयविधविवक्षा न परस्परविरुद्धेति भावः ॥ ४०४ ॥

द्वन्द्वे द्विविधविवक्षा सूत्रादेव लब्धेत्याह—अविशेषादिति । द्वन्द्वविधेः = चार्थे द्वन्द्व इति सूत्रेण द्वन्द्वसमासविधानात् । एवं चानया परिभाषया सूत्रप्राप्तोभयविवक्षाप्रयुक्तवैकल्पिकैकवचनातिदेशः क्रियत इत्यतो न्यायसिद्धेयम् ॥ ४०५ ॥

द्वन्द्वश्च प्राणीति प्रकरणविषयातिरिक्त एवात्र ।
सर्वपदेन ग्राह्यो नियमार्थकशास्त्रसामर्थ्यात् ॥ ४०६ ॥
तिष्यपुनर्वस्वोरिति सूत्रमिह ज्ञापकं बोध्यम् ।
आद्याश्रये हि नियतं बहुवचनमतस्तदुक्तिवैयर्थ्यात् ॥ ४०७ ॥
अपराश्रये तु नियतैकवचनसत्त्वेन सूत्रवैयर्थ्यात् ।
तस्मादुभयविवक्षाज्ज्ञापकमिदमेनया सफलम् ॥ ४०८ ॥
अप्राणिजातिवाचकशब्दानां द्वन्द्व एकवत्त्वं वा ।
इत्यपि तेन ज्ञाप्यं तिष्याद्याः प्राणिनस्तु नैवैते ॥ ४०९ ॥

---

द्वन्द्वश्चेति । सर्वो द्वन्द्व इत्यविशेषेणोक्तत्वेऽप्यत्र सर्वपदेन द्वन्द्वश्च प्राणितूर्यसेनाङ्गानामित्येकवद्भावनियमप्रतिपादकप्रकरणविषयातिरिक्त एव द्वन्द्वो विवक्षितः । अन्यथोक्तनियमशास्त्राणां वैयर्थ्यापत्तेः । एवं च चार्थे द्वन्द्व इत्येतद्विहित एव द्वन्द्वोऽत्र ग्राह्य इति भावः ॥ ४०६ ॥

परिभाषायां ज्ञापकमप्याह—तिष्यपुनर्वस्वोरिति । 'तिष्यपुनर्वस्वोर्नक्षत्रद्वन्द्वे बहुवचनस्य द्विवचनं नित्यम्' अनेने तिष्यश्च पुनर्वसू चेति तिष्यपुनर्वसू इत्यत्र बहुवचने प्राप्ते द्विवचनं विधीयते । द्वन्द्वस्योद्भूतावयवभेदसमुदायबोधकत्वनियमाश्रयणे तत्र बहुवचनस्यैव सत्त्वेन, इदं तिष्यपुनर्वस्वित्येकवचनरूपव्यावर्त्याभावाद् बहुवचनग्रहणं व्यर्थं स्यात् ॥ ४०७ ॥

अपराश्रये तु = तिरोहितावयवभेदसमुदायबोधकत्वनियमाश्रयणे तु, उक्तस्थले नियमेनैकवचनसत्त्वात् बहुवचनस्य सर्वथाऽसंभवेन विषयाभावात्सूत्रमेव व्यर्थं स्यादतस्तदुभयविवक्षाज्ञापकम् । एनया = उभयविवक्षया तत्प्रयुक्तप्रकृतपरिभाषया चेदं सूत्रं सफलं चरितार्थमित्यर्थः ॥ ४०८ ॥

ननु परिभाषायां ज्ञापितायामपि तिष्यपुनर्वस्वोरिति सूत्रमचारितार्थमेव, जातिरप्राणिनामिति नित्यैकवद्भावविधानेन तद्विषये बहुवचनासंभवादत आह—अप्राणीति । द्वन्द्व एकवत्त्वं वा = द्वन्द्वे एकवद्भावो वैकल्पिक इत्यपि, तेन = तिष्यपुनर्वस्वोरिति सूत्रेण ज्ञाप्यते, यावता विनानुपपन्नं तावज्ज्ञाप्यमिति न्यायात् । तच्च वैकल्पिकत्वं व्यवस्थितं ज्ञेयम् । जातिप्राधान्यविवक्षायामेकवद्भावो व्यक्तिप्राधान्यविवक्षायां तु बहुवचनान्तत्वमिति । तेन बदरत्वादिजातिप्राधान्यविवक्षायां बदरामलकमिति, व्यक्ति-

प्राण्यङ्गप्रभृतीनामेव समाहार इत्येवम् ।
विपरीतनियममपि तद् बहुवचनपदं निवारयति ॥ ४१० ॥

**सर्वे विधयश्छन्दसि विकल्प्यन्ते ॥ ३५ ॥**

व्यत्यय इत्येतस्माद् बहुलमिति पदं पृथक्कृत्य ।
षष्ठीयुक्तश्छन्दसि वेत्यत्र च वेति लब्धेयम् ॥४११॥

---

प्राधान्यविवक्षायां बदरामलकानीति प्रयोग इति बोध्यम् । ननु तिष्यत्वादेरेकव्यक्तिवृत्तित्वाद् व्यक्त्यभेदस्य च जातिबाधकत्वात्कथं जातित्वमिति चेन्नैष दोषः । प्रतिमन्वन्तरं नक्षत्राणां भिन्नत्वेन तदाश्रितायास्तिष्यत्वादिजातेः संभवात् । जातिरप्राणिनामिति सूत्रप्रवृत्तियोग्यत्वप्रतिपादनाय तिष्यादीनां प्राणित्वाशङ्कां परिहरति—**प्राणिनस्तु नैवेति**। तथा हि—"तिष्यपुनर्वस्वोः—" ( १।२।६३ ) इति सूत्रे भाष्यम्—'अथवा नात्र भवन्तः प्राणिनः । प्राणा एवात्र भवन्तः' इति । न ह्येतेषु प्राणित्वव्यवहारो लोके प्रसिद्धोऽस्ति, अत एते न प्राणिनः किन्तु पूज्या एते तिष्यादयः प्राणा एव । प्राणिनां तदधीनस्थितिकत्वात्प्राणसदृशा इत्याशयः । अपि च, आपोमयः प्राण इति श्रुत्याऽद्भिर्विना ग्लायमानप्राणानां प्राणित्वावगमान्नक्षत्राणां च तथात्वाभावान्न प्राणित्वमिति बोध्यम् ॥ ४०९ ॥

**प्राण्यङ्गेति**। द्वन्द्वश्च पाणितूर्यसेनाङ्गानामित्यादौ, समाहारे द्वन्द्वश्चेद्भवति तर्हि प्राण्यङ्गादिवाचकानामेवेति विपरीतनियमवारणमपि तिष्येति सूत्रस्थेन बहुवचनस्येति पदेनैव क्रियते । तादृशविपरीतनियमाश्रयणे तिष्यपुनर्वसुशब्दयोः प्राण्यङ्गवाचकत्वाभावेन समाहारद्वन्द्वाप्राप्तावेकवचनासंभवेन तद्व्यावर्तकबहुवचनपदवैयर्थ्यापत्तेरिति भावः ॥ ४१० ॥

सर्वशब्दघटितत्वेन विकल्पप्रतिपादकत्वेन च पूर्वपरिभाषासाम्यादाह—**सर्वे इति**। परिभाषालाभोपायमाह—**व्यत्यय इति**। व्यत्ययो बहुलम् । ( ३।१।८५ ) विकरणानां बहुलं व्यत्ययो भवतिच्छन्दसि । आण्डा शुष्मस्य भेदति । भिनत्तीति प्राप्ते । जरसा मरते पतिः । म्रियत इति प्राप्ते । अत्र बहुलमिति योगो विभज्यते । तेनच्छन्दसि सर्वे विधयो बहुलं भवन्तीत्यर्थो लभ्यते । एतच्चास्मिन्सूत्रे भाष्ये स्पष्टम् । तत्र ह्युक्तयोगविभागेन 'सुपां व्यत्ययः । युक्ता माताऽऽसीद्धुरि दक्षिणायामिति प्राप्ते तिङां व्यत्ययः । चषालं ते अश्व यूपाय तक्षति । तक्षन्तीति प्राप्ते' इत्यादिव्यत्ययानुदाहृत्य 'सुप्तिङुपग्रहलिङ्गनराणां कालहलच्स्वरकर्तृयङां च । व्यत्ययमिच्छति शास्त्रकृदेषां सोऽपि च

नन्वियङाद्यादेशा धातुत्वनिबन्धनाः कथमधातौ ।
क्षिय इत्यादौ धात्वनुकरणेऽपि भवन्ति तत्राह ॥४१२॥

## प्रकृतिवदनुकरणं भवति ॥ ३६ ॥

अनुकरणं हि स्वगतानुपूर्व्यवच्छिन्नबोधकः शब्दः ।
तत्रानुकार्यधर्मातिदेशनाद्धातुताऽनुकरणेऽपि ॥४१३॥
क्षिय इत्येष इयङ्निर्देशोऽस्या ज्ञापकः पुनस्तत्र ।
प्रातिपदिकतां मत्वा विभक्तिकरणादनित्येयम् ॥४१४॥

---

सिध्यति बाहुलकेन ॥' इति कारिकया सर्वे व्यत्ययाः संगृहीताः । षष्ठीयुक्त इति । षष्ठीयुक्तश्छन्दसि वा । (१।४।९) षष्ठ्यन्तेन युक्तः पतिशब्दश्छन्दसि वा घिसंज्ञो भवति । क्षेत्रस्य पतिना वयम् । अत्र वेति पदं पृथक्कृत्य चेयं लब्धेत्यन्वयः । इदमप्यत्र सूत्रे भाष्ये स्पष्टम् ॥ ४११ ॥

अतिदेशप्रसङ्गादेवाह—नन्विति । क्षियो दीर्घादिति निष्ठानत्वविधायकसूत्रे क्षीत्यस्य क्षिधात्वनुकरणत्वेनानुकार्यशब्दबोधकत्वात् क्रियावाचकत्वाभावाद्धातुत्वं नास्त्यतस्तत्प्रयुक्त इयङादेशोऽनुपपन्नः । एवं भुवो वुग् लुङ्लिटोरित्यादौ भुव इत्युवङ्-निर्देशोऽप्यनुपपन्न इति भावः ॥ ४१२ ॥

अनुकरणमिति । स्ववृत्त्यानुपूर्व्यवच्छिन्नविषयताप्रयोजकं पदमनुकरणम् । प्रकृतिरनुकार्यशब्दस्वरूपम् । तत्र = अनुकरणशब्दे । अनुकार्यधर्मातिदेशनात् = अनुकार्य-शब्दवृत्तिधर्मातिदेशस्यानया परिभाषया बोधनात् ॥ ४१३ ॥

क्षिय इति । क्षियो दीर्घादिति सूत्रे क्षिय इतीयङ्निर्देशोऽस्या ज्ञापकः । इदं च कृतदीर्घस्य क्षीइत्यस्यानुकरणात्क्षीशब्दात्पञ्चम्यां रूपम् । अन्यथा विपराभ्यां जेरित्यादाविव परत्वाद्घिसंज्ञया गुणापत्तेः । दीर्घग्रहणं तु ह्रस्वानुकरणभ्रमनिरासार्थम् । अत्रानुकरणे धातुत्वातिदेशमन्तरा इयङादेशोऽनुपपन्नः । अतस्तन्निर्देशोऽस्या ज्ञापक इति भावः । नन्वेवं धातुत्वातिदेशे क्षीत्यस्य प्रातिपदिकसंज्ञा न स्यात्तद्विधावधातुरिति धातुपर्यु-दासात् । ततश्च तस्मात्सुबुत्पत्तिर्न युक्ताऽत आह—पुनस्तत्रेति । अनित्येयमिति । इदमनित्यत्वं कार्यभेदेन, न तु लक्ष्यभेदेन । तेन कस्मैचित्कार्यायातिदेशो भवति कस्मैचित्तु नेति बोध्यम् ॥ ४१४ ॥

ननु रामावित्यादौ वृद्धौ सत्यां सुपस्तदादेश्च ।
अपहारेण पदत्वं नैव स्यात्कार्यकालमते ॥४१५॥

यदि तु यथोद्देशमते प्राक्सिद्धपदत्वमादेशे ।
अतिदिश्यानुमितस्थान्यादेशत्वेन तत्सिद्धिः ॥४१६॥

तर्हि चकारेत्यादौ द्वित्वेऽभ्यासोरदत्वरपरत्वे ।
कर् क्रित्यत्र करिति हि द्विरुक्तधातोर्न पूर्व इति ॥४१७॥

---

अतिदेशप्रसङ्गादन्यमप्यतिदेशं निरूपयितुमाशङ्कते—**नन्विति**। सुपस्तदादेश्चेति। औप्रत्ययरूपस्य सुपः, यस्मात्स विहितस्तदादेः प्रकृतिभागस्य च वृद्धिरूपैकादेशेनापहारात्सुबन्ततदादित्वाभावेन पदसंज्ञा न स्यात्। तदभावे च ततः परयोर्युष्मदस्मदोर्वांनावाद्यादेशा न स्युस्तिङन्तामन्त्रितयोर्निघातश्च न सिध्येत्। तेषां पदादित्यधिकृत्य विहितत्वात्। यथोद्देशपक्षे वक्ष्यमाणरीत्या तत्र पदत्वसिद्धिसंभवादाह—**कार्यकालमत इति**। ननु तत्रौकारे परादिवद्भावेन सुप्त्वम्, एकादेशघटिते रामावित्यत्र च पूर्वान्तवद्भावेन तदादित्वं सुलभं शेखरकारमते उभयत आश्रयणेऽप्यन्तादिवद्भवस्येष्टत्वादिति चेन्न। अस्यावतरणस्य प्राचीनमतानुसारेण सत्त्वात्तन्मते चोभयत आश्रयणेऽन्तादिवद्भावानङ्गीकारात्। न च भपदसंज्ञाविषये तु यथोद्देशपक्ष एवेति प्रागुक्तत्वादत्र कार्यकालपक्षाश्रयणमनुचितमिति वाच्यम्। यत्र परस्परविरुद्धकार्यप्रयोजकसंज्ञाद्वयप्रसङ्गस्तत्रैवोक्तव्यवस्थाऽऽश्रयणात्। भसंज्ञासाहचर्येण स्वादिष्विति पदसंज्ञाया एव तत्र पदशब्देन ग्रहणाच्च ॥ ४१५ ॥

उक्तस्थले यथोद्देशपक्षेणैवेष्टसिद्धेः प्राचीनमतानुसार्यवतरणमयुक्तमित्याशयेनाह—**यदि त्विति**। यथोद्देशपक्षे राम औ इत्यवस्थायां सुबन्ततदादित्वेन जातायाः पदसंज्ञाया एकादेशोत्तरं, 'राम औ' इत्यस्य स्थाने 'रामौ' इत्यादेश इत्यानुमानिकस्थान्यादेशभावमाश्रित्य स्थानिवद्भावेन लाभसंभवात्तत्रैकदेशविकृतन्यायस्य नोपयोगः। व्यवस्थितयोः पक्षयोरेकतरण लक्ष्यसिद्धौ पक्षान्तरेण दोषदानं चानुचितमिति भावः ॥ ४१६ ॥

अभ्यासोरदत्वरपरत्वे = अभ्याससंज्ञायाम्, उरदित्यत्वे रपरत्वे चेति समाहारद्वन्द्वः। नपूर्व इति। कृ कृ इति द्विरुक्तधातुः, तदवयवः पूर्वभागः कृ इत्येव, न तु कर् इति भावः। इति = अतः ॥ ४१७ ॥

अभ्यासत्वाभावान्न हलादिः शेषचुत्वसिद्धिः स्यात् ।
अर्थविरहितेऽभ्यासेऽनुमितस्थान्यादिकल्पनाऽभावात् ॥४१८॥

अत आह—

एकदेशविकृतमनन्यवत् ॥ ३७ ॥

स्वावयवविकारघटितशब्दः स्वाभिन्न एव मन्तव्यः ।
तेन कृशब्दाभेदादभ्यासत्वं करित्यस्य ॥४१९॥

स्वाघटको यः स्वघटकमात्रोद्देश्यकविकारभिन्नश्च ।
तद्घटितः स्वावयवोद्देश्यकविकृतीतरांशघटितश्च ॥४२०॥

---

रामावित्यत्रेवानुमानिकस्थान्यादेशभावस्त्वत्र न वक्तुं शक्य इत्याह—अर्थविरहित इति । शब्दानित्यत्ववारणायाश्रीयमाण आनुमानिकस्थान्यादेशभावो ह्यर्थवत्येव स्वीक्रियते, सर्वे सर्वपदादेशा इत्यत्र पदशब्दस्यार्थवत्परत्वात् । अभ्यासस्त्वनर्थकः । अलोऽन्त्यस्येति सूत्रे भाष्ये पठितायां 'नानर्थकेऽलोऽन्त्यविधिरनभ्यासविकारे' इति परिभाषायामनभ्यासविकार इति पर्युदासात्, दयतेर्दिगि लिटीति सूत्रभाष्यानुसारेण द्विरुक्ताखुत्तरखण्डस्यैवार्थवत्त्वाङ्गीकाराच्चाभ्यासोऽनर्थकः । अतस्तत्र स्थानिवद्भावेनाभ्यासत्वातिदेशासंभवात्तदर्थमेकदेशविकृतन्याय आश्रयणीय इति भावः । न चार्धाधिकविकारसत्त्वेनैकदेशविकृतन्यायोऽत्र न प्रवर्ततेति वाच्यम् । भूयोऽवयवदर्शनं जातिव्यञ्जकमित्यस्याग्रे निराकरिष्यमाणत्वेन तन्मूलकस्य, अर्धविकारेऽर्धाधिकविकारे चैकदेशविकृतन्यायो न प्रवर्तत इति मतस्यानभ्युपगमात् ॥ ४१८ ॥

एकदेशो विकृतो विकारप्रतियोगी यस्मिन्, यन्निष्ठविकारप्रतियोगी एकदेशस्तदेकदेशविकृतम् । यथा राम् इति मान्तमेकदेशविकृतम् । तच्च अनन्यवत् = अन्यसदृशं न । अन्यसादृश्यनिषेधेऽन्यत्वाभावः सुतरां सिद्धस्ततश्चाभिन्नमित्यर्थः । अन्यत्वप्रतियोग्याकाङ्क्षायां च प्रत्यासत्त्या स्वनिष्ठविकारप्रतियोग्येकदेशघटितो रामादिशब्दो ज्ञेयः । तत्सर्वमभिप्रेत्याह—स्वावयवेत्यादि । तेनेति । कृशब्दावयव ऋकारः, तद्विकारः अर् इति तद्घटितत्वेन कर् इत्यस्य कृशब्दाभिन्नतया द्विरुक्तधातुपूर्वभागत्वेनाभ्यासंज्ञा तत्प्रयुक्तकार्याणि च भवन्तीत्यर्थः । एकदेशविकाराश्रयणे शब्दानित्यत्वं तु रेखागवयन्यायेन समाधेयम् ॥ ४१९ ॥

निष्कृष्टमेकदेशविकृतपदार्थं निरूपयति—स्वाघटक इत्यादिना । स्वाघटकत्वस्वघटकमात्रोद्देश्यकविकारेतरत्वैतदुभयसंबन्धेन स्वविशिष्टो यस्तदघटितत्वे सति

स्वावयवप्रतियोगिकविकृतिघटित एकदेशविकृत इति ।
स्वाघटकोक्त्या निर्युतनिर्जरशब्दे तथात्वपरिहारः ॥ ४२१ ॥

सर्वस्मिन्नपि लक्ष्येऽसम्भवविनिवृत्तये द्वितीयदलम् ।
तत्र च मात्रपदोक्त्या रामावित्येकदेशविकृतं न ॥ ४२२ ॥

जरघटकेऽरे तत्त्वं व्यावर्तयितुं विशेषणं ह्यपरम् ।
अन्त्यन्त्वविकृतशब्देऽतिव्याप्तिनिवारणायोक्तम् ॥ ४२३ ॥

श्वत्वव्यवहारः शुनि भवति यथा छिन्नपुच्छेऽपि ।
स्वाभिन्नधीस्तथैव स्वावयवविकारवति सिद्धा ॥ ४२४ ॥

---

स्वावयवोद्देश्यकविकारेतरयावद्घटितत्वे च सति स्वावयवप्रतियोगिकविकारघटितत्वमेकदेशविकृतत्वम् । स्वपदेनाविकृतावस्थो रामादिशब्दो ग्राह्यः । **एकदेशविकृत इति**—। उच्यत इति शेषः । क्रमेण तत्तन्निवेशफलान्यह—**स्वाघटकोक्त्येति** । निरित्युपसर्गघटितनिर्जरशब्दस्य जराशब्दाघटकनिःशब्दघटितत्वेन तथात्वपरिहारः = एकदेशविकृतत्वं नेत्यर्थः ॥ ४२०, ४२१ ॥

**सर्वस्मिन्निति** । वैशिष्ट्यनियामकसंबन्धत्वेन स्वाघटकत्वमात्रोक्तौ सर्वस्मिन्नप्येकदेशविकृतेऽविकृतावस्थजराऽऽदिशब्दाघटकह्रस्वाकारादिविकारघटितत्वस्यैव सत्त्वेन तदघटितत्वासंभवादसंभवाख्यदोषापत्तिरतस्तन्निवारणाय स्वघटकमात्रोद्देश्यकेत्यादि द्वितीयसंबन्धतात्पर्यकं दलम् । तस्मिन्नुक्ते तु विकारात्मक ह्रस्वाकारादेर्जरादिशब्दघटकदीर्घाकारादिमात्रोद्देश्यकत्वेन तदितरत्वाभावान्न दोष इति भावः । **तत्र चेति** । उक्तदले मात्रपदनिवेशाद् रामाविति समुदायस्यैकदेशविकृतत्वापत्तिर्न । औ इत्येकादेशस्य रामशब्दाकारमात्रोद्देश्यकत्वाभावात्, अ, औ इत्युभयोद्देश्यकत्वादिति भावः ॥ ४२२ ॥

**जरघटक इति** । 'जर' इत्येतद्घटकस्य 'अर' इत्यस्योक्तविधस्वविशिष्टाघटितत्वेन तत्रातिव्याप्तिवारणाय स्वावयवोद्देश्यकेत्यादि द्वितीयविशेषणम् । तस्मिन्नुक्ते तु तस्योक्तविधविकारेतरयावदन्तर्गतजकाराघटितत्वेन न दोष इति भावः । अन्यत्स्पष्टम् ॥ ४२३ ॥

अस्याः परिभाषाया लोकन्यायसिद्धत्वं दर्शयति—**श्वत्वव्यवहार इत्यादिना** ॥ ४२४ ॥

प्राग्दीव्यत इति सूत्रे दीव्यतिशब्दैकदेशात्मा ।
दीव्यच्छब्दो दीव्यतिशब्दानुकरणतया पठितः ॥ ४२५ ॥

तेनेयं ज्ञाप्यत इति भाष्याच्छास्त्रीय एव कार्य इयम् ।
शास्त्रीये च विकारे प्रवर्तनीयेति नियमो न ॥ ४२६ ॥

विकृतावयवनिबन्धनकार्ये तु न संचरत्ययं न्यायः ।
न हि पुच्छवानयमिति व्यवहारश्छिन्नपुच्छशुनि ॥४२७॥

तेनादन्तत्वकृतो न भवत्यैस् माभिरित्यादौ ।
अपि चास्य न प्रवृत्तिर्भवति गृहीतेऽक्तपरिमाणे ॥४२८॥

परिगणिताक्षरनिर्मितसमुदायव्यक्तिवृत्तयो धर्माः ।
तिङ्त्वजरात्वप्रभृतय उदीरिता अक्तपरिमाणाः ॥४२९॥

---

लोकसिद्धस्यैतन्न्यायस्य शास्त्रे आश्रयणे मानमाह—प्राग्दीव्यत इति । प्राग्दीव्यतोऽण् (४।१।८३) इत्यस्मिन्सूत्रे, 'तेन दीव्यति खनति जयति जितम्' इत्येतत्सूत्रघटकस्य दीव्यतीत्यस्यैकदेशरूपो दीव्यदिति शब्दो दीव्यतिशब्दानुकरणत्वेन पठितोऽस्ति। प्रकृतन्यायाभावे तस्य तदनुकरणत्वं न संभवति, अनुकरणस्यानुकार्यसमानानुपूर्वीकत्वनियमात् । स्वीकृते त्वस्मिन्नेकदेशविकृतन्याये दीव्यदित्यस्य दीव्यतिशब्दाभिन्नत्वात्तदनुकरणत्वमुपपन्नम्, अतस्तादृशपाठोऽस्य न्यायस्य शास्त्रेऽप्याश्रयणं ज्ञापयतीति भावः ॥ भाष्ये = प्राग्दीव्यतोऽगिति सूत्रे भाष्ये। ततश्चेति । भाष्योक्तज्ञापकस्थले दीव्यतिशब्दान्त्येकारलोपरूपविकारस्य, लुप्तेकारानुकरणनिर्देशात्मककार्यस्य चैच्छिकत्वाच्छास्त्रविहितत्वाभावादियं परिभाषा शास्त्रीय एव कार्ये शास्त्रीय एव च विकारे प्रवर्तत इति नियमो नेत्यर्थः ॥ ४२५-४२६ ॥

विकृतेति । विकृतो विकारप्रतियोगी योऽवयवस्तत्प्रयुक्तकार्ये त्वयं न्यायो न प्रवर्तत इत्यर्थः । इयमपि व्यवस्था लोकसिद्धैवेत्याह—नहीति ॥ ४२७ ॥

उक्तव्यवस्थाफलमाह—तेनेति । मासशब्दस्य 'पद्दन्नोमास्' इत्यनेन मास् इत्यादेशे कृतेऽदन्तत्वप्रयुक्तो भिस ऐसादेशो न भवति । एवं द्यौः पन्था इत्यादावल्विधित्वेन स्थानिवद्भावप्रतिषेधेऽप्यनेन न्यायेन हलन्तत्वमाश्रित्य सुलोपो नेति बोध्यम् । अन्यमप्यप्रवृत्तिस्थलानुगममाह—अपि चेति ॥ ४२८ ॥

अक्तपरिमाणस्वरूपमाह—परिगणितेति । परिगणितैर्नियतसंख्याकैरक्षरैर्निर्मिता आरब्धा ये समुदायास्तद्रूपव्यक्तिवृत्तयः—व्यक्तिषु वर्तमानास्तिङ्त्वोपसर्गत्वजरात्वादयोऽक्त-

केचित्तु वदन्त्येष प्रवर्त्य एवाक्तपरिमाणे।
तोस्तिङ्त्वं भाष्यकृताऽनेन ह्युक्तं पचत्वादौ ॥४३०॥

---

परिमाणा उच्यन्त इत्यर्थः। संख्यात्वपरिमाणत्वान्यतरव्याप्ययत्किञ्चिज्जातिव्यापकाभाव-प्रतियोगित्वमक्तपरिमाणत्वम्। व्यापकत्वघटकाधिकरणता च प्रकृते स्वाश्रयाश्रयत्व-संबन्धेन ग्राह्या। समन्वयो यथा—संख्यात्वव्याप्या जातिः पञ्चत्वत्वरूपा, स्वाश्रयाश्रयत्व-सम्बन्धेन तदधिकरणं पञ्चवर्णावयवकः समुदायो जगदित्यादिशब्दरूपः। तत्र जरात्वाभावस्यैव सत्त्वेन जरात्वाभाववत्वं पञ्चत्वत्वसमानाधिकरणात्यन्ताभावीयप्रतियोगिता-नवच्छेदकमतस्तदवच्छिन्नो जरात्वाभावः पञ्चत्वत्वव्यापकः। तत्प्रतियोगित्वेन जरात्व-मक्तपरिमाणधर्मरूपम्। एवं तिप् तस् इत्यादिनिष्ठं तिङ्त्वम्, प्र परेत्यादिनिष्ठमुपसर्गत्वं चाक्तपरिमाणम्। तिङ्त्वस्य तिबाद्यन्यतमघटकवर्णनिष्ठसंख्यातिरिक्तपञ्चत्वादिसंख्यागत-पञ्चत्वत्वादिजातिव्यापकाभावप्रतियोगित्वात्। एवमुपसर्गत्वेऽपि ज्ञेयम्। अङ्गत्व-पदत्वादीनां तु तथाविधत्वाभावान्नाक्तपरिमाणत्वम्। लोके हि पुच्छवन्निष्ठस्य सेटक-परिमितत्वादेश्छिन्नपुच्छे शुनि न व्यवहारः, मुद्राशतकात्किञ्चिद्व्यये शतत्वव्यवहारश्च न भवति तथा शास्त्रेऽपीति भावः। अक्तपरिमाणग्रहणेऽयं न्यायो न प्रवर्तत इति "येन विधिः—" (१।१।७२) इति सूत्रे भाष्ये ध्वनितम्। तत्र हि सर्वक उच्चकैरि-त्यादावकज्विशिष्टस्य सर्वनामाव्ययसंज्ञे न स्यातां भिनत्तीत्यादौ श्नम्विशिष्टस्य धातुसंज्ञा च न स्यात्। तत्त्वतदन्तत्वयोरभावादित्याशङ्क्य, गङ्गायमुनाग्रहणेन गङ्गायमुना-प्रविष्टानेकनदीग्रहणवद् देवदत्ताग्रहणेन देवदत्तास्थगर्भग्रहणवच्च तदेकदेशभूतस्तद्ग्रहणेन गृह्यत इति लौकिकदृष्टान्तेन समाधाय, पञ्चसप्तादिसंख्याशब्दवद् द्रोणादिपरिमाणशब्द-वच्च सर्वनामादिसंज्ञानामक्तपरिमाणार्थवाचकत्वान्न्यूनाधिकयोः प्रवृत्तिर्न स्यादित्युक्त-समाधानं निरस्य नेदमदसोरकोरिति सूत्रेऽकोरिति सककारयोः प्रतिषेधेन तदेकदेश-भूतं तद्ग्रहणेन गृह्यत इति तन्मध्यपतितन्यायं ज्ञापयित्वा समाहितम्। यद्येकदेशविकृत-न्याय ईदृशे विषये प्रवर्तेत तर्हि न्यूनत्वाधिकत्वयोरपि विकारत्वाविशेषात्तेनैवोपपत्तौ प्रयत्नान्तरानुसरणं विफलं स्यादतस्तेनेदं ध्वनितमिति नागेशभट्टाभिप्रायः॥ ४२९ ॥

मतान्तरमाह—केचित्त्विति। इदं च मतं वाक्यार्थचन्द्रिकाकारैरुल्लिखितम्। तन्मतं समर्थयति—तोरिति। स्थानिवत्सूत्रे भाष्ये हि पचतु पचन्त्वित्यादौ एकदेश-विकृतमनन्यवद्भवतीति न्यायेन तिङ्ग्रहणेन स्वादीनां ग्रहणं भविष्यतीत्युक्तम्। अक्त-परिमाणग्रहणेऽस्य न्यायस्याप्रवृत्तौ तु तिङ्त्वस्योक्तरीत्याऽक्तपरिमाणत्वेन तद्भाष्यासङ्गतिः स्पष्टा। येन विधिरिति सूत्रस्थं पूर्वोक्तभाष्यन्तु, अधिकोपजने एकदेशविकृतन्याया-प्रवृत्तिकल्पनेनैवोपपन्नमतस्तेनाक्तपरिमाणग्रहणेऽस्य न्यायस्याप्रवृत्तिध्वननं नोचितम्।

अर्धेऽर्धादधिके वा विकृते नायं प्रवर्तते न्यायः।
जातिव्यञ्जकभूयोऽवयवज्ञानस्य तादृशेऽभावात् ॥४३१॥
इतिशेखरकारमतं परे तु तादृङ् न नियम इत्याहुः।
इतराङ्गावरणेऽपि हि मुखमात्रेण श्वजातिविज्ञानात् ॥४३२॥
यत्र त्वर्धं तदधिकमथवा सर्वं भवति विकृतम्।
तत्रैतस्याविषये स्थानिवदिति सूत्रमुपयुक्तम् ॥ ४३३ ॥
विकृतोऽनल्रूपो योऽवयवस्तद्वत्त्वबुद्धयेऽपि च तत्।
बहुयज्वञ्छब्दाण्णिचि टेर्लोपे क्विपि च डाब्भवति तेन ॥ ४३४ ॥

---

दीव्यदिति विकृतनिर्देशेन प्रकृतन्यायज्ञापनपरं भाष्यमप्यत्रैवानुकूलम्। दीव्यतीत्यस्याप्यक्तपरिमाणत्वात्। अत एव च कौमुद्याम्—"एकदेशविकृतस्यानन्यत्वाजरशब्दस्य जरस्" इत्युक्तम्। अन्यथा जरात्वस्याक्तपरिमाणत्वेन तदसङ्गतिः स्यात्। यत्र त्वक्तपरिमाणग्रहणेऽस्य न्यायस्य प्रवृत्तिर्नेष्टा तत्र वक्ष्यमाणमनित्यत्वमेव शरणमिति तदाशयः॥ ४३० ॥

जातिव्यञ्जकेति। अत्र जातिपदेन विकृताविकृतयोरभेदप्रतिपत्तिसाधको धर्मो विवक्षितः। शब्दत्वकत्वादिजातेः प्रकृतेऽनुपयोगात्॥ ४३१ ॥

तादृगिति। भूयोऽवयवज्ञानं जातिव्यञ्जकमित्येष नियमो नेत्यर्थः। नियमाभावसाधकं व्यभिचारं दर्शयति—इतरेति। शुनो मुखव्यतिरिक्ताङ्गानां कुड्यादिनाऽऽवरणेनादर्शनेऽपि मुखमात्रदर्शनेन श्वत्वजातिविज्ञानं भवति अत उक्तनियमो न सार्वत्रिक इति भावः। भाष्ये पचत्वित्यादेरेकदेशविकृतन्यायोदाहरणत्वमप्यत एवोपपन्नम्। अन्यथा तत्र तेरिकारस्योकारादेशेऽर्धविकारसत्त्वेन तदसङ्गतिः स्पष्टेति बोध्यम्॥४३२॥

नन्वनेन न्यायेनैवेष्टसिद्धौ स्थानिवत्सूत्रं किमर्थं तत्राह—यत्र त्विति। अर्धे तदधिकमिति च नागेशमतेन, सर्वमिति सर्वमतेन। एतस्य = प्रकृतन्यायस्य। अर्धविकारो ज्वरत्वरेत्यूठि जूर्ण इत्यादौ। वर्णद्वयस्य विकाराद् वर्णद्वयस्य चाविकृतावस्थानात्। अर्धाधिकविकारो मपर्यन्तादेशेषु त्वदीय इत्यादौ। सर्वविकारो ङेर्ये इत्यादौ॥ ४३३ ॥

प्रकृतन्यायासाध्यमन्यदपि स्थानिवत्सूत्रप्रयोजनमाह = विकृत इति। विकृतं एकाधिकवर्णात्मको योऽवयवस्तद्वत्त्वबुद्धये तत्प्रयुक्तकार्यसिद्धयर्थं च तत् = स्थानिवत्सूत्रमित्यर्थः। तत्रैकदेशविकृतन्यायस्तु न प्रवर्तते विकृतावयवनिबन्धनकार्ये तदप्रवृत्ते प्रागुपपादितत्वात्। तादृशस्थलमुदाहरति—बहुयज्वन्निति। बहुयज्वानमाचष्टे

लक्ष्यानुरोधतश्च क्वचिदस्यानाश्रयादनित्योऽयम् ।
तेनाभीयादत्र हि पदत्वविरहान्न जश्त्वमिति सिद्धम् ॥ ४३५ ॥

इति श्रीपरिभाषेन्दुप्रभायां शास्त्रत्वसाधकं नाम प्रथमं प्रकरणम् ॥



स्त्रीत्यर्थे णिचि इष्ठवद्भावेन टिलोपे ततः कर्तृक्विपि णिलोपे "बहुयज्व्" इत्यत्र लुप्तस्यान् भागस्य स्थानिवद्भावेनान्नन्तबहुव्रीहित्वात् डाबुभाभ्यामिति डाप्प्रत्ययेन बहुयज्वेति सिध्यति ॥ ४३४ ॥

**अभीयादिति** । इण आशीर्लिङि ईयादिति तस्याभ्युपसर्गेण योगेऽकः सवर्णे इति दीर्घैकादेशे अभीयादिति रूपम् । अत्र, अक्तपरिमाणग्रहणे प्रकृतन्यायस्य न प्रवृत्तिरिति मते उपसर्गत्वस्याक्तपरिमाणत्वेन अभ् इति भान्ते उपसर्गत्वव्यवहाराभावाद् एतेर्लिङीति ह्रस्ववारणेऽपि पदत्वेन जश्त्वापत्तिर्दुर्वारा । न चाचः परस्मिन्निति स्थानिवद्भावेन भकारस्य पदान्तत्वाभावान्न जश्त्वमिति वाच्यम् । न पदान्तेति सूत्रेण पदचरमावयवकार्यप्रापकस्य प्रतिबन्धकस्य च स्थानिवत्त्वस्य निषेधात् । तस्मात् प्रकृतन्यायानित्यत्वेन तत्राप्रवृत्त्यैव जश्त्ववारणम् । ये चाक्तपरिमाणग्रहणेऽप्यस्य न्यायस्य प्रवृत्तिमभ्युपगच्छन्ति तन्मते ह्रस्ववारणमप्येतन्न्यायानित्यत्वेनेति बोध्यम् ॥ ४३५ ॥

इति श्रीपरिभाषेन्दुप्रभाव्याख्यायां भावप्रकाशिकायां
प्रथमं प्रकरणम् ॥



॥ ॐ ह्रीम् ॥

## अथ बाधबीजनिरूपणं नाम द्वितीयं प्रकरणम्

### पूर्वपरनित्यान्तरङ्गापवादानामुत्तरोत्तरं बलीयः ॥ ३८ ॥

पूर्वात्परं बलीयः परादपि च नित्यमन्तरङ्गमतः ।
तस्मादप्यपवादो बलवत्तर इति निरूप्यते क्रमतः ॥ १ ॥

विप्रतिषेधे परमिति सूत्रबलात्स्वोत्तरं स्वतो बलवत् ।
तस्मात्परेण पूर्वं बाध्यत इत्येष फलितोऽर्थः ॥ २ ॥

अन्योन्यस्याविषये चरितार्थे समबले च ये शास्त्रे ।
एकत्र तयोः प्राप्तिर्विप्रतिषेधोऽत्र परविधिर्भवति ॥ ३ ॥

---

शास्त्रत्वसंपादकपरिभाषाप्रकरणं व्याख्याय बाधबीजप्रकरणं व्याचिख्यासुस्तावद् बाधबीजानां परत्वादीनां संग्राहकं वाक्यमाह—पूर्वपरेति। उत्तरोत्तरमिति, 'आनुपूर्व्ये द्वे वाच्ये' इत्यनेन द्वित्वम्। परादपीत्यपिना पूर्वस्य संग्रहः। अतः = नित्यादपि। तस्मादपि = अन्तरङ्गादपि ॥ १ ॥

उक्तवाक्यात्पृथक्कृत्य पूर्वात्परं बलीय इत्येतद्व्याचष्टे—विप्रतिषेध इत्यादिना। स्वोत्तरं स्वतो बलवत् स्वोत्तरत्वात्। यन्नैवं तन्नैवं यथा स्वापेक्षया पूर्वशास्त्रमिति केवलव्यतिरेक्यनुमानमत्र विवक्षितम्। स्वोत्तरत्वस्य बलवत्त्वप्रयोजकता च विप्रतिषेधशास्त्रादवगम्यते। बलीयसा च दुर्बलस्य बाधः प्रसिद्धस्तत्फलितमाह—तस्मादिति ॥ २ ॥

विप्रतिषेधपदार्थमाह—अन्योऽन्यस्येति। अत्र समबले इत्युक्त्या पूर्वशास्त्रस्य परशास्त्रापेक्षया नित्यत्वेऽन्तरङ्गत्वेऽपवादत्वे वा द्वयोः समबलत्वाभावान्न विप्रतिषेधस्तेन तत्र पूर्वात्परं न बलीय इति सूच्यते। एवं चोक्तानुमाने स्वनिरूपितानित्यत्वाभाववत्त्व-स्वनिरूपितबहिरङ्गत्वाभाववत्त्व-स्वनिरूपितोत्सर्गत्वाभाववत्त्वानां पक्षे हेतौ च विशेषणत्वेन निवेशोऽनुसन्धेयः। तेन बाधाख्योऽनुमानदोषो न। अत्र = विप्रतिषेधे ॥ ३ ॥

वृक्षेभ्य इतीह यथा प्राक्पठितं सुपि च दीर्घमपबाध्य ।
बहुवचने झल्येदिति परपठितत्वाद्भवत्येत्वम् ॥ ४ ॥
ननु शिष्टादित्यादौ शाऽऽदीनपबाध्य परतया विहिते ।
तातङि शाऽऽद्यप्राप्त्या तत्प्रतिषेधार्थवार्तिकमयुक्तम् ॥ ५ ॥
त्रपुणी मधुनीत्यादौ शीं बाधित्वा कृते नुमि परत्वात् ।
पुनरौङः शी न स्यादिति चाशङ्क्याह परिभाषाम् ॥ ६ ॥

---

उदाहरणमाह—वृक्षेभ्य इति। सुपि च (७।३।१०२) इति सूत्रं बहुवचने-झल्येत् (७।३।१०३) इत्यस्याविषये वृक्षायेत्यादौ चरितार्थम्। बहुवचने झल्येदि-त्यपि, सुपिचेत्यस्याविषये वृक्षेष्वित्यादौ चरितार्थम्। परस्य पूर्वनिरूपितानि-त्यत्वाद्यभावादुभे तुल्यबले। अनयोर्वृक्ष + भ्यस् इत्यत्र युगपत्प्राप्तिः। एकस्य स्थानिनोऽकारस्य कार्यद्वयं च न संभवत्यतो विरोधः स एव विप्रतिषेधस्तत्र परस्य बलवत्त्वेन बहुवचने झल्येदिति सूत्रमेव दीर्घविधिं बाधित्वा प्रवर्तत इति भावः॥ ४॥

परेण पूर्वस्य बाध इत्युक्तं, तत्र बाधो द्विविधः—क्वचित्परशास्त्रेण स्वप्रवृत्ति-योग्यातिरिक्तत्वेन पूर्वशास्त्रीयोद्देश्ये संकोचकरणरूपः, क्वचित्तु स्वप्रवृत्तियोग्यातिरिक्तत्वेन, स्वविहितकार्याश्रयातिरिक्तत्वेन चेत्युभयविधसंकोचकरणरूपः। तत्राद्यबाधप्रतिपादिकां परिभाषामवतारयति— नन्विति। सर्वत्रोभयविधसंकोचात्मकबाधाङ्गीकारे, शिष्टात्, हतात् भिन्तादित्यादौ शा हौ हन्तेर्जः, हुझल्भ्यो हेर्धिरित्याद्यपेक्षया तातङ्विधायकस्य तुह्योस्तातङ् इत्यस्य परत्वेन शाभावादीन् बाधित्वा हेस्तातङादेशे कृते तदाश्रये शाभावादेः प्रसक्त्यभावेन स्थानिवदादेशः (१।१।५६) इति सूत्रे, तातङादेशस्य स्थानिवद्भावेन हिबुद्ध्या उक्तस्थलेषु शाभावाद्यापत्तिमाशङ्क्य तन्निवारणार्थं 'लोडादेशे शाभावजभावधित्वहिलोपैत्वप्रतिषेधः' इति वार्तिकमनुपपन्नं स्यादिति भावः। भिन्तादित्यत्र तातङा बाधितो धिर्न स्यादिति परिभाषेन्दुशेखरोक्तावतरणस्याप्यत्रैव तात्पर्यम्। अन्यथा तातङादेशस्य वैकल्पिकत्वेन तदभावे ध्यादेशप्रवृत्तेर्निर्बाधत्वेन तदसङ्गतिः स्यादिति बोध्यम्॥ ५॥

ननूक्तवार्तिकस्य सकृद्गतिन्यायाश्रयणेन भाष्यकृता प्रत्याख्यातत्वात्तदनुपपत्तिर्न दोषायेत्यतः प्रयोगासिद्धिरूपं दोषमाह—त्रपुणी इति। त्रपुणी मधुनी इत्यादौ नपुंसकाच्चेत्यौङः श्यादेशं परत्वाद्बाधित्वा इकोऽचि विभक्ताविति नुमि कृते पुनरौङः शी न स्यादतस्तदर्थं पुनः प्रसङ्गविज्ञानन्याय आवश्यक इति भावः। मधुनीत्यादावित्यत्र प्रकृतिवदनुकरणमित्यस्यानित्यत्वात्सन्धिः॥ ६॥

## पुनः प्रसङ्गविज्ञानात्सिद्धम् ॥ ३९ ॥

पुनरपि सत्यां प्राप्तौ प्रवर्तते शास्त्रमित्यर्थः ।
वार्तिकस्थुपपन्नमतस्त्रपुणीत्यादौ च नुम् सिद्धः ॥ ७ ॥
नन्वेवं तिसृणामिह तिस्रादेशे कृते परत्वेन ।
पुनरपि तत्स्थानिधिया स्यात् त्रेस्त्रय इत्यतः प्राह ॥ ८ ॥

## सकृद्गतौ विप्रतिषेधे यद्बाधितं तद्बाधितमेव ॥४०॥

विप्रतिषेधे सति यद् बाधितमादौ पुनश्च तत्प्राप्तौ ।
सत्यामपि तद् बाधितमेव भवति न प्रवर्त्यमित्यर्थः ॥ ९ ॥
अन्यत्र सावकाशे कार्ये युगपन्न यत्र संभवतः ।
तत्र तृजादिवदुभयोः पर्यायेण प्रयोग आपतिते ॥ १० ॥
विप्रतिषेधे कार्यं परमेव स्यान्न पूर्वमिति नियमः ।
एतन्नियमसमुत्थः सकृद्गतिन्याय उक्तोऽयम् ॥ ११ ॥

---

परिभाषायां प्रसङ्गशब्दो लुप्तसप्तम्यन्तः । पुनः प्रसङ्गे = पुनः प्राप्तौ सत्यां विज्ञानं = शास्त्रप्रवृत्तिर्भवतीत्यर्थस्तदाह—**पुनरपीति** ॥ ७ ॥

उभयविधसंकोचात्मकबाधप्रतिपादिकां परिभाषामवतारयति—**नन्वेवमिति** । एवम् = स्वप्रवृत्तियोग्यातिरिक्तत्वेनैव संकोचे तत्स्थानिधिया = तिस्रादेशस्य स्थानिवद्भावेन त्रिशब्दत्वबुद्ध्या ॥ ८ ॥

परिभाषायां सकृदिति बाधितमित्यनेनान्वेति । गतावित्यस्य प्राप्तावित्यर्थस्तदाह—**विप्रतिषेधे सतीति** । एवं च क्वचित् परशास्त्रेण पूर्वशास्त्रीयोद्देश्यतावच्छेदकावच्छिन्ने स्वप्रवृत्तियोग्यातिरिक्तत्वेन स्वविहितकार्याश्रयातिरिक्तत्वेन चेत्युभयरूपेण संकोच इति भावः ॥ ९ ॥

सकृद्गतिन्यायबीजमाह—**अन्यत्रेत्यादिना** । तृजादिवदिति । यथा ण्वुल्तृचाविति सूत्रविहितौ ण्वुल्तृचौ, पाचकः पक्तेति पर्यायेण भवतस्तथा पूर्वपरशास्त्रविहितकार्ययोः पर्यायेण प्रयोगे प्राप्ते तन्निवर्तनाय विप्रतिषेधे परं कार्यमिति सूत्रं नियमार्थम् । नियमाकारमाह—**विप्रतिषेधे इति** । पर्यायप्रसङ्गे परकार्यस्य पाक्षिकाप्राप्त्या नियमः पाक्षिके सतीति वचनानुसारेण नियमत्वोपपत्तिः ॥ १०, ११ ॥

समबलयोर्हि यथैको भृत्यः क्रमतः करोत्युभयकार्यम् ।
युगपत्तु भिन्नदिग्गतकार्यनिदेशे द्वयोश्च न करोति ॥ १२ ॥

एवं भृत्यसमानं लक्ष्यमपि स्वामितुल्यविधिवचसोः ।
युगपदसंभविकार्यद्वयमात्मनि नैव योजयति ॥ १३ ॥

इत्युभयोरप्राप्तौ विप्रतिषेधे परस्य विधिः ।
तत्र कृते प्राप्तौ स्यात् पूर्वमिति पुनः प्रसङ्गविज्ञानम् ॥ १४ ॥

यत्त्वाहुर्व्यक्तिमते प्रतिलक्ष्यं लक्षणव्याप्त्या ।
तत्तल्लक्ष्यविषययोरुभयोश्चरितार्थताविरहात् ॥ १५ ॥

पर्यायेण प्राप्तो नियमस्तेन च सकृद्गतिन्यायः ।
नियमबलात्परविषयेऽनुपप्लवः पूर्वशास्त्रस्य ॥ १६ ॥

---

एवं विप्रतिषेधे परं कार्यम् ( १।४।२ ) इति सूत्रस्थभाष्योक्तशास्त्रीयदृष्टान्ताश्रयेण सकृद्गतिन्यायं निरूप्य, तद्भाष्योक्तस्वामिभृत्यदृष्टान्तेन पुनःप्रसङ्गविज्ञानमुपपादयति—**समबलयोरित्यादिना**। क्रमतः = क्रमेण। उभयोः कार्यमुभयकार्यम्। **युगपत्त्विति**—द्वाभ्यां स्वामिभ्यां युगपत्कार्याज्ञापने कार्ययोश्च भिन्नदिग्गतत्वे उभयोरपि न करोति, युगपत्कार्यद्वयस्याशक्यत्वादिति भावः ॥ १२ ॥

उक्तदृष्टान्तं शास्त्रे योजयति—**एवमिति**। नैव योजयति = नैव संबन्धयतीत्यर्थः ॥ १३ ॥

**इतीति**। उक्तहेतोः, पूर्वपरयोरुभयोरप्राप्तौ विप्रतिषेधशास्त्रं परविध्यर्थम्। परकार्ये कृते पूर्वस्य प्राप्तौ सत्यां तदपि भवतीति लौकिकदृष्टान्ताश्रयेण पुनः प्रसङ्गविज्ञानसिद्धिरित्यर्थः ॥ १४ ॥

व्यक्तिपक्षाश्रयणेन सकृद्गतिन्यायो जातिपक्षाश्रयणेन च पुनः प्रसङ्गविज्ञानमित्येवं व्यवस्थापयतां कैयटादीनां मतं निराचिकीर्षुः सार्धपद्यत्रयेणानुवदति—**यत्त्वित्यादिना**। आहुरित्यस्य वक्ष्यमाणं कैयटप्रमुखा इति कर्तृपदम्। व्यक्तिमते = व्यक्तिः पदवाच्येति पक्षे। लक्षणं शास्त्रम्। व्याप्तिः संस्कारार्थं प्रवृत्तिः। उभयोः पूर्वपरशास्त्रयोः ॥ १५ ॥

नियमः = विप्रतिषेधशास्त्रं नियमार्थं, परमेव स्यादिति। **सकृद्गतिन्याय इति**। सिद्ध इति शेषः। परविषये = परशास्त्रप्रवृत्तियोग्ये परशास्त्रविहितकार्याश्रये च लक्ष्ये। अनुपप्लवः = अप्रवृत्तिः ॥ १६ ॥

जातिमते तूद्देश्यविशेषणजात्याश्रये क्वचिल्लक्ष्ये ।
चरितार्थयोर्विरोधे न प्राप्तिरतः परस्य विधिः ॥ १७ ॥
तन्मूलकं च वचनं पुनः प्रसङ्गेति कैयटप्रमुखाः ।
तन्न यतोऽखिललक्ष्यव्याप्त्यर्थकमेव जातिमतम् ॥ १८ ॥
आकृतिरथवा द्रव्यं पदार्थ इति पक्षयोरुभयोः ।
अनवयवेनाभिदधत्प्रत्येकं परिसमाप्यते शास्त्रम् ॥ १९ ॥
इति वचसा भाष्यकृता सरूपसूत्रे मतद्वये तुल्या ।
लक्ष्यव्याप्तिरभिहिताऽतस्तद्भेदाद्व्यवस्थितिरयुक्ता ॥ २० ॥

---

जातिमतेत्विति । जातिः पदवाच्येति पक्षे त्रेत्रय इत्यादौ आदिपदानां त्रित्वादिजात्यवच्छिन्ने शक्त्यङ्गीकारादुद्देश्यतावच्छेदकतत्तज्जात्याश्रये क्वचिल्लक्ष्ये पूर्वपरशास्त्रयोश्चरितार्थत्वात्, युगपदसंभवरूपविरोधस्थले तयोरनुपप्लवेन प्राप्त्यभावाद्विधिरत्यन्तमप्राप्ताविति वचनेन विप्रतिषेधशास्त्रं परविध्यर्थमिति भावः ॥ १७ ॥

पुनः प्रसङ्गेति । पुनः प्रसङ्गविज्ञानात्सिद्धमिति वचनं तन्मूलकमित्यन्वयः । उक्तमतं निरस्यति—तन्नेत्यादिना । अखिललक्ष्येति । ब्राह्मणो न हन्तव्यः, सुरा न पेयेत्यादेस्तत्तज्जात्याश्रयसकलव्यक्तिविषयत्वार्थमेव जातिपक्षस्य समाश्रयणाद् व्यक्तिपक्षे शास्त्रं सकललक्ष्याणि व्याप्नोति न तु जातिपक्षे इति कैयटोक्तिरयुक्तेति भावः ॥ १८ ॥

जातिशक्तिवादे व्यक्तिशक्तिवादे च शास्त्रस्य सकललक्ष्यविषयकत्वं समानमित्यर्थप्रतिपादकं भाष्यमर्थत उपनिबध्नाति— आकृतिरिति । सरूपाणामेकशेष एकविभक्तौ (१।२।६४) इति सूत्रे भाष्ये जातिशक्तिवादं चावलम्ब्य भूयान्विचारः कृतः । तत्र जातेः पदार्थत्वात्तस्याश्चैकत्वादेक एव शब्दो न्याय्य इत्यनेकशब्दप्रसङ्ग एव नास्तीति किमेकशेषेणेत्याशयेन 'आकृत्यभिधानाद्वैकं विभक्तौ वाजप्यायनः' इति वाजप्यायनाचार्यसम्मतं जातिशक्तिवादं प्रस्तुत्य 'अव्यपवर्गगतेश्च' नहि गौरित्युक्ते व्यपवर्गो गम्यते शुक्ला नीला कपिला कपोतिकेत्यादिना तन्मतं समर्थ्य "धर्मशास्त्रं च तथा, एवं च कृत्वा धर्मशास्त्रं प्रवृत्तं ब्राह्मणो न हन्तव्यः । सुरा न पेयेति ब्राह्मणमात्रं न हन्यते, सुरामात्रं च न पीयते । यदि द्रव्यं पदार्थः स्यात् एकं ब्राह्मणमहत्वा एकां च सुरामपीत्वाऽन्यत्र कामचारः स्यात्" इत्युक्तपक्षोपोद्बलकमुक्त्वाऽग्रे 'द्रव्याभिधानं व्याडिः' इति व्याड्याचार्यसम्मते द्रव्याभिधानपक्षे सर्वद्रव्यापरिज्ञानाद् गौरनुबन्ध्योऽजोऽग्नीषोमीय इति एकः शास्त्रोक्तं कुर्वीत अपरोऽशास्त्रोक्तमित्यादिना दोषं प्रदर्श्य, ननु च यस्याकृतिः पदार्थस्तस्यापि यद्यनवयवेन चोद्यते न चानुबध्यते विगुणं कर्म भवतीत्यादिना,

व्यक्तिमतेऽप्यन्यस्या व्यक्तेर्लाभात्कृतार्थयोरुभयोः ।
न विरोधस्थललक्ष्यं विषयीभवतीति शक्यते वक्तुम् ॥ २१ ॥
तस्माल्लक्ष्यानुसृतं शास्त्रीयं लौकिकं वाऽपि ।
दृष्टान्तमाश्रयेदिति भाष्योक्ता सरणिरेव रमणीया ॥ २२ ॥
युगपदसंभविकार्यद्वयार्पणं शास्त्रयोर्विरोधोऽत्र ।
न तु केवलमेकस्य स्थाने कार्यद्वयायोगः ॥ २३ ॥
यत्कार्यघटितरूपं साध्वित्येकेन बोधितं विधिना ।
तद्घटितस्यान्येनासाधुत्वनिवेदनं खलु विरोधः ॥ २४ ॥

---

आकृत्यभिधानपक्षेऽप्युक्तदोषप्रसक्तिस्तुल्येत्युक्त्वा 'एवं तर्ह्यनवयवेन चोद्यते प्रत्येकं च परिसमाप्यते। यथा आदित्यः। ननु च यस्यापि द्रव्यं पदार्थस्तस्याप्यनवयवेन चोद्यते प्रत्येकं च परिसमाप्यते' इति निरूपितम्। जातिः पदार्थ इति पक्षे यथाऽनवयवेन = साकल्येन चोद्यते = उच्यते, प्रत्येकं च परिसमाप्यते शास्त्रं, प्रत्येकं प्रत्याययति। तथा व्यक्तिः पदार्थ इति पक्षेऽपि जातेरनभिधेयाया उपलक्षणत्वेनाश्रयणात्तदुपलक्षितं परित्यक्तभेदं व्यक्तिमात्रं साकल्येनोच्यते प्रत्येकं च परिसमाप्यते शास्त्रमिति पक्षद्वयेऽपि साम्यमेवेत्याशयः। अनेन भाष्येण पक्षद्वयेऽपि शास्त्रस्य सकललक्ष्यव्याप्तिप्रतिपादनात्पक्षभेदेन परिभाषाद्वयव्यवस्थापनं कैयटोक्तमयुक्तमिति भावः ॥ १९, २० ॥

व्यक्तिपक्ष एव सकललक्ष्यव्याप्तिरित्यभ्युपगमेऽपि नोक्तव्यवस्थासिद्धिरित्याह—**व्यक्तिमतेऽपीति** ॥ २१ ॥

उपसंहरति—**तस्मादिति**। उक्तरीत्या कैयटमतस्यायुक्तत्वात्, लक्ष्यानुसृतम् = लक्ष्यानुसारिणं, शास्त्रीयं ण्वुल्तृजादिदृष्टान्तं लौकिकं च, यथा तुल्यबलयोरेकः प्रेष्य इत्यादिना पूर्वमुपवर्णितं दृष्टान्तमाश्रयेदिति भाष्योक्तव्यवस्थैव समीचीनेत्यर्थः ॥ २२ ॥

विप्रतिषेधशब्दवाच्यस्य विरोधस्यानुगतं स्वरूपं दर्शयति—**युगपदिति**। अर्पणमुपस्थापनम्। **नत्विति**। वृक्षेभ्य इत्यादावेकस्य स्थाने कार्यद्वयासंभवरूपविरोधस्य सत्त्वेऽपि शिष्टादित्यादौ तातङ्ङाभावयोर्भिन्नस्थानिकत्वेन द्वयोरपि संभवात्तादृशविरोधाभावात्सर्वानुगतो युगपदसंभविकार्यद्वयोपस्थापनरूप एव विरोधो मन्तव्यः। अत एव 'विप्रतिषेधे' (१।४।२) इति सूत्रे भाष्ये 'नावश्यं द्विकार्ययोग एव विप्रतिषेधः किन्त्वसंभवोऽपी'त्युक्तम् ॥ २३ ॥

उक्तमेव विरोधं स्पष्टीकरोति—**यत्कार्येत्यादिना**। अयं भावः—सुधी उपास्य इत्यादेः साधुत्वाभावाय अजव्यवहितपूर्वेग्घटितस्य प्रसङ्गे यणघटितः साधुस्तदघटितो-

तातङ्शाभावौ नुम् तृज्वत्त्वे तातङा च सह धित्वम् ।
इत्यादिविधानानामुक्तविधत्वाद्विरुद्धता ज्ञेया ॥ २५ ॥
उभयोः स्वस्वनिमित्तानन्तर्यासम्भवस्तु न विरोधः ।
उद्देश्ये हि निमित्तानन्तर्यविशेषणं न तु विधेये ॥ २६ ॥
क्वचिदिष्टसाधनार्थं स्वरितत्वं पूर्वशास्त्र आश्रित्य ।
स्वरितेनाधिककार्यं भवतीत्यर्थेन पूर्वविधिः ॥ २७ ॥

---

ऽसाधुरित्येवं शास्त्रव्यापार आवश्यकः । एवं च 'शाहौ' इत्यनेन शास् हीत्यस्य प्रसङ्गे शाघटितः शाहीति साधुस्तदघटितः शास् तादित्यसाधुरिति बोध्यते । 'तुह्योस्तातङ्' इति सूत्रेण च तातङ्घटितः शास् तादिति साधुः, तदघटितः शाहीत्यसाधुरिति बोध्यते । इत्थं परस्परविरुद्धार्थज्ञानजनकत्वमेव तयोर्विरोधः ॥ २४ ॥

उक्तविधविरोधस्थलान्युदाहरति—तातङ्शाभावावित्यादिना । शिष्टादित्यत्र तातङ्शाभावयोः, प्रियक्रोष्टूनीत्यत्र नुम्-तृज्वत्त्वयोः भिन्तादित्यत्र च तातङ्-धिभावयोर्विरोधो ज्ञेयः ॥ २५ ॥

परिभाषेन्दुशेखरोक्तं विरोधस्वरूपं तु न युक्तमित्याह—उभयोरिति । 'शा हौ' इत्यस्य, हिप्रत्ययाव्यवहितपूर्वस्य शासः प्रसङ्गे शा साधुरित्यर्थे, 'तुह्योस्तातङ्' इत्यस्य चाज्ञाव्यहितोत्तरस्य हेः प्रसङ्गे तातङ् साधुरित्यर्थे शास् हीति स्थितौ शासो हिप्रत्ययाव्यवहितपूर्वत्वात्, हेश्चाज्ञाव्यवहितोत्तरत्वाच्छादेशस्य तातङश्च युगपत्प्रवृत्तौ विरोधो न स्यात् । अपि चैवमर्थे शास् हीत्यनयोः स्थाने शामात्रस्य तातङ्मात्रस्य च साधुत्वापत्तिः स्यात् । अतो निमित्तवाचकपदानामावृत्त्या विधेयेऽपि निमित्तानन्तर्यं विशेषणमङ्गीकर्तव्यम् । ततश्च हिनिरूपिताव्यवहितपूर्वत्वविशिष्टः शाऽऽदेशः स्यादित्यादिसूत्रार्थादुभयोर्युगपत्प्रवृत्तौ विधेये स्वनिमित्तानन्तर्यासम्भवाद्विरोध उपपन्नः । उक्तापत्तिश्च नेति नागेशभट्टाभिप्रायः । तन्मतस्यायुक्तत्वे हेतुमाह—उद्देश्ये हीति । हिशब्दाव्यवहितपूर्वस्य शासः प्रसङ्गे शा साधुरित्याद्यर्थेऽपि शाऽऽदेशमात्रे शास्त्रतात्पर्यं, तद्भितरभागस्य तु प्रसक्तस्यैव श्रवणं न न्यूनाधिकस्य मानाभावात् । एवं च विधेये निमित्तानन्तर्यविशेषणस्य निष्फलत्वान्निष्प्रमाणत्वाच्च तन्मतं न युक्तमिति भावः ॥ २६ ॥

क्वचित्तु परात्पूर्वं बलवद्भवतीत्याह—क्वचिदिति । इदं स्वरितेनाधिकारः (१।३।११) इति सूत्रे भाष्ये निरूपितम् । तत्र हि व्याख्यानादेव निवृत्तिवदनुवृत्तिरपि भविष्यतीति तत्सूत्रवैयर्थ्यमाशङ्क्य, अधिकः कारोऽधिकारः, अधिकं कार्यम् । स्वरितेनाधिकं कार्यं भवति । वृद्धयौत्वतृज्वद्भावेभ्यो नुम् पूर्वविप्रतिषेधेन, नुमचिरतृज्वद्भावेभ्यो नुट् पूर्वविप्रतिषेधेनेत्यादिवचनानि न कर्तव्यानि । नुम्नुडादिपदानि स्वरितत्व-

अपि चेष्टवाचकत्वं परशब्दस्योररीकृत्य ।
सर्वेऽपि पूर्वविप्रतिषेधा उपपादिता भाष्ये ॥ २८ ॥
नन्वेधत इत्यादौ परपठितत्वाच्छबादिषु कृतेषु ।
तद्व्यवधानान्नियमोऽनुदात्तङित इत्ययं न स्यात् ॥ २९ ॥

अत आह—

## विकरणेभ्यो नियमो बलीयान् ॥ ४१ ॥

वृद्भ्य इति स्ये वैकल्पिकं परस्मैपदविधानम् ।
ज्ञापकमिह तद्व्यवधौ नियमाप्राप्त्यैव तत्सिद्धेः ॥ ३० ॥
तेन प्रथमं नियमः प्रवर्तते विकरणाः पश्चात् ।
अस्यां च बोधितायां स्य इति विषयसप्तमी ज्ञेया ॥ ३१ ॥

---

विशिष्टानीति प्रतिज्ञेयम् । तेन नुमादिविधयः प्राक्पठिता अप्युत्तरविधीनां बाधका भविष्यन्ति । अधिकारशब्दादीदृशार्थलाभश्च लोकसिद्धः । लोके हि यो दुर्बलः सन् बलवद्भिः सह भारं वहति सोऽधिकमयं कारं करोतीत्युच्यते । एवमिहापि अधिकमयं कारं करोतीत्युच्यते योऽयं पूर्वः सन्परं बाधत इत्यर्थकमुक्तम् ॥ २७ ॥

प्रकारान्तरेणापि पूर्वविप्रतिषेधानां संग्रहं भाष्योक्तं दर्शयति—अपि चेति । उररीकृत्य = स्वीकृत्य । भाष्ये = "विप्रतिषेधे—" ( १।४।२ ) इति सूत्रे भाष्ये ॥ २८ ॥

अपवादसंगत्याऽऽह—नन्विति । शबादिविकरणानां खश्चानशादौ चारितार्थ्या-दनुदात्तङित इत्यादिनियमशास्त्राणां च विकरणाविषये लिङादौ चारितार्थ्यात्, एधत इत्यादावुभयोः प्राप्तौ परत्वाच्छबादिषु कृतेषु तद्व्यवधानान्नियमशास्त्रप्रवृत्तिर्न स्यादिति भावः । परपठितत्वादिति नित्यत्वस्याप्युपलक्षणम् । नित्यत्वेऽपि नियमानुपपत्तेर्दुर्वारत्वा-दापाद्यमानेऽर्थे न्यायानादराच्च परत्वमवलम्ब्यैव शङ्का कृतेति बोध्यम् ॥ २९ ॥

वृद्भ्य इति । वृद्भ्यः स्यसनोरिति सूत्रेण । तद्व्यवधौ = स्यव्यवधाने ॥ ३० ॥

नन्वेवं नियमस्य पूर्वप्रवृत्तिज्ञापने वृत् लृट् इत्यवस्थायां स्यपरत्वाभावाद् वृद्भ्य इत्यस्याप्रवृत्त्या, उक्तविधानवैयर्थ्यमेवेत्यत आह—अस्यां चेति । स्य इति विषयसप्तमी एवं च स्यप्रत्ययविषयेऽर्थात्तस्मिंश्चिकीर्षित इत्यर्थेन तदुत्पत्तेः प्रागप्युक्तसूत्रप्रवृत्तिर्निर्बा-धेति भावः ॥ ३१ ॥

व्यवधानेऽपि विकरणैर्नियमो भवतीति वा ज्ञाप्यम् ।
परसप्तम्येव स्येऽत्र च विप्रतिषेधशास्त्रबाधो न ॥ ३२ ॥
वस्तुत उक्ताल्लिङ्गात्तिबादिविध्येकवाक्यतया ।
विधिपरमेव प्रकरणमनुदात्तेत्यादिकं ज्ञेयम् ॥ ३३ ॥
तिप्तस्झीति च सूत्रे धातोरिति विहितपञ्चमी ज्ञेया ।
अनुदात्तङितो धातोर्विहितस्य ल आत्मनेपदं तङिति ॥३४॥
अत एव च स्यतासी लृलुटोरिति प्रतिपदोक्तयोर्बलिनोः ।
लावस्थायां कृतयोस्तद्व्यवधानेऽपि तङ्सिद्धिः ॥३५॥
ननु जातस्य हि संज्ञा तया च विधिरिति परस्पराश्रयणम् ।
इति चेन्न भाविसंज्ञाश्रयणादिह संप्रसारणवत् ॥३६॥

---

लाघवात् पक्षान्तरमाह—व्यवधानेऽपीति । विकरणव्यवधानेऽप्यनुदात्तङित इत्यादिनियमशास्त्रं प्रवर्तत इत्येव ज्ञाप्यम् । अस्मिन्पक्षे लाघवमाह—परेति । स्ये इति परसप्तम्येव । एवं चात्र शास्त्रे प्रायः परसप्तम्या दर्शनात्तस्याः सपदि स्फूर्तेर्लाघवम् । अपरं च विकरणविधायकस्य परशास्त्रस्य पूर्वप्रवृत्त्या विप्रतिषेधशास्त्रस्य बाधो नेत्यपि लाघवम् ॥ ३२ ॥

सिद्धान्तभूतं तृतीयपक्षमाह—वस्तुत इति । अनुदात्तेत्यादिकम् = 'अनुदात्तङित आत्मनेपदं', 'स्वरितञितः कर्त्रभिप्राये क्रियाफले' इत्याद्यात्मनेपदप्रकरणम् । विधिपरमेव = विधायकमेवेत्यर्थः । विधायकत्वपक्षे स्यादिव्यवधानेऽप्यात्मनेपदसिद्ध्यर्थमाह—तिप्तस्झीति । अस्मिन्सूत्रेऽनुवृत्तं धातोरिति विहितविशेषणपञ्चम्यन्तमित्यर्थः । ततश्चैकवाक्यतालब्धमर्थमाह—अनुदात्तङित इत्यादिना । लः = लकारस्य स्थाने । आत्मनेपदं तङ् = आत्मनेपदाभिन्नास्तङ्-प्रत्याहारबोध्याः प्रत्ययाः स्युरित्यर्थः ॥ ३३, ३४ ॥

अत एवेति । विहितविशेषणपञ्चम्याश्रयणादेवेत्यर्थः । स्यतासी इति । लादेशानां स्यतास्यपेक्षया नित्यत्वेपि लृलुटोरिति प्रतिपदविहितत्वेन स्यतास्योर्लादेशापेक्षया बलवत्त्वात्पूर्वं प्रवृत्त्या लावस्थायामेव स्यतास्योः कृतयोस्ताभ्यां व्यवधानेऽपि धातोर्विहितत्वेन लकारस्य स्थाने तङ्सिद्धिरित्यर्थः ॥ ३५ ॥

एकवाक्यतया विधानेऽन्योऽन्याश्रयदोषमाशङ्क्य परिहरति—नन्वित्यादिना । जातस्येति— । लस्य स्थाने तिबाद्युत्पत्त्यनन्तरं तेषामात्मनेपदादिसंज्ञया भवितव्यम् । संज्ञया च तिबादयो विधीयन्त इत्येतत्परस्पराश्रयं भवति । समाधत्ते—इति चेन्नेति ।

विहितानां तु नियमने जातिनिवृत्तिर्लुकेव मन्तव्या ।
न्यायस्तु भुक्तवन्तं प्रतीति नेष्टोऽत्र नियमसामर्थ्यात् ॥३७॥
नन्वेकस्माद्धातोर्लस्याष्टादश कथं तिबाद्याः स्युः ।
इति तु न शङ्क्यं मुख्यानुरोधतः कल्प्यते हि गुण-भेदः ॥३८॥
यावन्तो हि तिबाद्यास्तावत्यः प्रकृतयः कल्प्याः ।
नियमेन च सप्रकृतिकतदपगमः किन्तु गौरवमिहेदम् ॥३९॥

---

यथा वसोः संप्रसारणमित्यादौ सूत्रशाटकन्यायेन भाविसंज्ञाश्रयणं तद्वदत्रापि लस्य स्थाने स कर्तव्यो यस्याभिनिर्वृत्तस्यात्मनेपदसंज्ञा भविष्यतीति भाविसंज्ञाश्रयणान्नान्योन्योश्रय इति भावः ॥ ३६ ॥

भिन्नवाक्यतया सामान्यशास्त्रेण विहितानां नियम इति प्रथमपक्षे व्यवस्थामाह— **विहितानां त्वित्यादिना** । तुशब्देनात्रारुचिः सूचिता । तद्बीजं त्वस्य पक्षस्य वक्ष्यमाणरीत्या गौरवग्रस्तत्वम् । **लुकेवेति** । षड्भ्यो लुगित्यादिसूत्रविहितलुका यथा जातस्य तत्तत्प्रत्ययस्य निवृत्तिः क्रियते, तथाऽत्रापि सामान्यशास्त्रेण जातानां नियमशास्त्रैर्निवृत्तिर्ज्ञेयेत्यर्थः । ननु भुक्तवन्तं प्रति ब्रूयान्मा भुक्था इति किं तेन कृतं स्यादिति न्यायेन जातनिवृत्तिर्न संभवत्यत आह—**न्यायस्त्विति** । स न्यायोऽत्र शास्त्रे नाश्रयितुं योग्यस्तदाश्रयणे नियमशास्त्राणां वैयर्थ्यापत्तेः । अतस्तत्सामर्थ्यात्प्रकृतिप्रत्यापत्तिवचनसामर्थ्याच्च जातस्यापि निवृत्तिरङ्गीक्रियत इति भावः ॥ ३७ ॥

सामान्यशास्त्रेण विहितानां तिबादीनां नियमेन निवृत्तिरिति पक्षेऽनुपपत्तिमाशङ्क्य परिहरति—**नन्वित्यादिना** । एकस्माद्धातोः परस्यैकस्य लकारस्य स्थानेऽष्टादशादेशाः कथं स्युः, तत्समुदायस्य स्थान्यर्थाभिधानासमर्थत्वात्, स्थान्यर्थाभिधानसमर्थस्यैवादेशत्वमिति सिद्धान्तात्, एकस्याः प्रकृतेरनेकेषामव्यवहितपरत्वासंभवाच्चेति—भावः । **मुख्यानुरोधत इति** । प्रधानीभूतप्रत्ययानुरोधेन तं प्रति गुणीभूतानां धातुरूपप्रकृतीनामपि भेदः कल्प्यते इत्यर्थः । प्रत्ययस्य प्राधान्यं च, न प्रधानार्थप्रतिपादकत्वप्रयुक्तं, वैयाकरणमते भावप्रधानमाख्यातमिति यास्कोक्तरीत्या धात्वर्थस्यैव प्राधान्यात्, किन्तु विधायकशास्त्रजन्यशाब्दबोधीयविशेष्यताऽऽश्रयत्वप्रयुक्तम् । धातूद्देशेन लकारादिविधानाद्धातोस्तत्र विशेषणत्वेन गुणत्वं प्रत्ययस्य च तं प्रति विशेष्यत्वेन प्राधान्यमिति बोध्यम् ॥ ३८ ॥

**यावन्त इति** । उक्तरीत्या प्रधानप्रत्ययानुरोधेन प्रकृतिभेदकल्पनया, एध् ल एध् ल् इत्यादिक्रमेण स्थानिनो भिन्नाः, एध् ति, एध् तस् इत्यादिक्रमेण तदादेशा अपि

परशास्त्रादपि नित्यं बलशालि कृताकृतप्रसङ्गित्वात् ।
नियतस्य विधेस्त्यागाद्युक्तस्त्यागो ह्यनियतस्य ॥ ४० ॥

तदाह—

**कृताकृतप्रसङ्गि नित्यं तद्विपरीतमनित्यम् ॥४२॥**

तुदतीत्यादौ शे सति न गुणः स्याच्छस्तु सत्यपि गुणे स्यात् ।
तस्मान्नित्यतया शो भवति गुणं परमपि विबाध्य ॥ ४१ ॥

---

भिन्ना इत्यतो नोक्तदोषः । नियमशास्त्रेण च तिन्नादिनवप्रत्ययनिवृत्तौ तैः सह तत्प्रकृतीनामपि निवृत्तिरितीष्टसिद्धिः । किन्त्वस्मिन्पक्षे कल्पनागौरवं दोषः । अतो निर्दोषत्वादन्तिमपक्ष एव श्रेयानिति भावः । लुकाऽनुत्पत्तेरिव नियमेनापि सामान्यशास्त्रविहितानामनिष्टानामनुत्पत्तेरेवान्वाख्यानमिति मनने त्वाद्यपक्षद्वयमपि निर्दोषमिति बोध्यम् ॥ ३९ ॥

पूर्वपरेतिसंग्रहवाक्यघटकं क्रमप्राप्तं [१]परान्नित्यं बलवदित्यंशं व्याचष्टे—**परशास्त्रादपीति** । अपिना पूर्वशास्त्रान्नित्यस्य बलवत्त्वं कैमुतिकन्यायलब्धं सूच्यते । एवं च परिभाषायां परशब्दोऽनित्यतात्पर्यकः । अनित्यान्नित्यं बलवदित्यर्थः । नित्यस्य बलवत्त्वे हेतुमाह—**कृताकृतप्रसङ्गित्वादिति** । शास्त्रान्तरविहिते कार्ये कृतेऽपि प्रसज्यते अकृतेऽपि तस्मिन् प्रसज्यते, इति कृताकृतप्रसङ्गि, एवंभूतत्वान्नित्यं बलवत् । नित्यमनित्यापेक्षया बलवत् कृताकृतप्रसङ्गित्वादित्यनुमानप्रयोगः । अत्र स्वनिरूपितान्तरङ्गत्वावच्छिन्नत्वं स्वनिरूपितापवादत्वावच्छिन्नत्वं चानित्ये विशेषणमनुसन्धेयम् । तेनान्तरङ्गापवादयोरनित्यत्वे तदपेक्षया नित्यस्य बलवत्त्वाभावेऽपि न व्यभिचारः । कृताकृतप्रसङ्गित्वस्य बलवत्त्वव्याप्यत्वेऽनुकूलतर्कमाह—**नियतस्येति** । अक्लृप्ताभावकस्याभावकल्पनापेक्षया क्लृप्ताभावकस्यैवाभावकल्पनं युक्तमिति भावः ॥ ४० ॥

**तदाहेति**—। नित्यस्य बलवत्त्वे बीजं कृताकृतप्रसङ्गित्वमाहेत्यर्थः । **तुदतीत्यादाविति** । अत्र बाधकाबाधितस्यैव कृताकृतप्रसङ्गित्वेन ग्रहणात्, प्राप्तिमात्रेण गुणस्यापि

---

(१) टिप्पणी—मुद्रितेषु परिभाषेन्दुशेखरपुस्तकेषु 'परान्नित्यं बलवत्' इति स्थूलाक्षरैर्मुद्रितं स्वतन्त्रं परिभाषान्तरमिति प्रतीयते । किन्तु तत्पूर्वपरेति संग्राहकवाक्यादुद्धृतं नित्यादप्यन्तरङ्गं बलीय इतिवद् व्याख्येयवाक्यमेव । अत एव तत्र कृताकृतप्रसङ्गित्वं नित्यस्य बलवत्वे बीजमित्युक्त्वा, तदाह—'कृताकृतप्रसङ्गि नित्यं

यद्व्यक्त्या संबद्धं पूर्वं प्राप्तं तयैव चेद्व्यक्त्या ।
सम्बद्धं पश्चादपि तर्हि कृताकृतप्रसङ्गितेत्याह ।। ४२ ।।

**शब्दान्तरस्य प्राप्नुवन्विधिरनित्यो भवति ।।४३।।**

उपसर्गपूर्वनियमेऽड्व्यवाय इति वार्तिकं विवेचयता ।
भाष्यकृता पठितेयं शदेः शित इतीह परिभाषा ।। ४३ ।।
अकृते हि विकरणे स्याद्धातोरड् न्यविशतेत्यादौ ।
तत्र कृते तु विकरणान्तस्येत्यडनित्य एव मतः ।। ४४ ।।

---

तथात्वं नाशङ्क्यम् । तस्य क्ङिति चेति निषेधेन बाधितत्वात् । आदिपदेन रुणद्धीत्यादेः संग्रहः । तत्र श्नमो गुणापेक्षया नित्यत्वं बोध्यम् ।। ४१ ।।

कृताकृतप्रसङ्गि नित्यं तद्विपरीतमनित्यमिति परिभाषायाः प्रथमांशं नित्यत्वं निरूप्य, अनित्यत्वस्यानेकप्रकारान्विवक्षुराद्यप्रकारमाह—**यद्व्यक्त्येत्यादिना** । यद्व्यक्तिसंबन्धितया पूर्वं प्राप्तिस्तद्व्यक्तिसंबन्धितयैव पुनः प्राप्तौ कृताकृतप्रसङ्गित्वं, व्यक्त्यन्तरसंबन्धितया पुनः प्राप्तौ तु न तथात्वं; ततश्चैवंविधो विधिरनित्य इति भावः ।। ४२ ।।

**उपसर्गपूर्वेति**—। शदेः शितः ( १।३।६० ) इत्यात्मनेपदविधायकसूत्रे 'उपसर्गपूर्वनियमेऽड्व्यवाय उपसंख्यानम् ।' इति वार्तिकं व्याचक्षाणेन भाष्यकृतेयं परिभाषा पठिताऽतः प्रामाणिकीति भावः । उपसर्गपूर्वकत्वप्रयुक्ते आत्मनेपदादिनियमे 'नेर्विशः' इत्यादावड्व्यवधानेऽपि तत्प्रवृत्तिरिति वक्तव्यमिति वार्तिकार्थः । एतद्वार्तिकसमर्थनायेयं परिभाषा तत्र भाष्य उपन्यस्ता ।। ४३ ।।

भाष्योक्तं प्रकृतपरिभाषया तद्वार्तिकसमर्थनप्रकारमाह—**अकृते हीत्यादिना** । उक्तसूत्रे भाष्ये हि—न्यविशत-व्यक्रीणीतेत्यादावटा व्यवहितत्वान्नेर्विशः, परिव्यवेभ्यः क्रिय इत्यादिसूत्राप्राप्त्याऽऽत्मनेपदं न सिध्येदतस्तदर्थमुक्तवार्तिकमारब्धव्यमित्युक्त्वा, 'ननु चायमड् धातुभक्तो धातुग्रहणेन ग्रहीष्यते । न सिध्यति । अङ्गस्य ह्यडुच्यते विकरणान्तं चाङ्गं सोऽसौ संघातभक्तो न शक्यो धातुग्रहणेन ग्रहीतुम् । एवं तर्हीदमिह संप्रधार्यम् । अट् क्रियतां विकरण इति किमत्र कर्तव्यम् । परत्वादडागमः । नित्या विकरणाः । कृतेऽप्यटि प्राप्नुवन्त्यकृतेऽपि । अडपि नित्यः । कृतेष्वपि विकरणेषु

---

तद्विपरीतमनित्यम्' इत्येवापूर्वपरिभाषास्वरूपमुल्लिखितम् । अतोऽत्र तदेवापूर्वपरिभाषात्वेनोपन्यस्तम् ।।

तेन विकरणोत्तरमड् भवन्विकरणान्तभक्तः सः ।
न तु धातुभक्त इति तद्व्यत्रधौ तङ्सिद्धये तदित्युक्तम् ॥ ४५ ॥
अत एव चैपिषिषतीत्यत्र ह्यन्यस्य कृत इटि द्वित्वम् ।
अन्यस्य चाकृत इटीत्यनित्यमेतद्विबाध्य भवतीट् प्राक् ॥ ४६ ॥
उद्देश्यवन्निमित्तव्यक्तेरप्यैक्य एव सति ।
तुल्यन्यायेन कृताकृतप्रसङ्गित्वमित्याह ॥ ४७ ॥

## शब्दान्तरात्प्राप्नुवतः शब्दान्तरे प्राप्नुवतश्चा-नित्यत्वम् ॥ ४४ ॥

शब्दान्तरात्प्रसक्तस्यानित्यत्वं शदेः शितः सूत्रे ।
भाष्ये ध्वनितं तत्र च विस्पष्टं कैयटेनोक्तम् ॥ ४८ ॥

---

प्राप्नोत्यकृतेष्वपि प्राप्नोति । अनित्योऽट् । अन्यस्य कृतेषु विकरणेषु प्राप्नोत्यन्यस्याकृतेषु । शब्दान्तरस्य च प्राप्नुवन्विधिरनित्यो भवति' इत्युक्तम् । तद्व्यवधौ = अड्व्यवधाने न्यविशतेत्यादौ तङ्सिद्धये = आत्मनेपदनियमसिद्धये तद् = उपसर्गपूर्वनियम इति वार्तिकम् । इति = उक्तप्रकारेण भाष्यकृतोक्तमित्यर्थः ॥ ४४, ४५ ॥

अत एवेति । शब्दान्तरस्य प्राप्नुवतो विधेरनित्यत्वादेवेत्यर्थः । एषिषिषतीति । इष् धातोः सनि 'इष् स' इत्यवस्थायां सन्यङोरिति द्वित्वे, सन इडागमे च प्राप्ते उभयोः कृताकृतप्रसङ्गित्वसाम्येऽपि, इडागमोत्तरं षिस् इत्यस्य द्वित्वं प्राप्नोति, इडागमात्पूर्वं तु ष्सेत्यस्येति शब्दान्तरस्य प्राप्नुवद् द्वित्वमनित्यम् । अतस्तद् बाधित्वा तत्र नित्यत्वादिडागम एव पूर्वं प्रवर्तते तेनेष्टरूपसिद्धिर्भवति । इट् तु द्वित्वे कृतेऽकृतेऽपि च सन एव प्राप्नोत्यतो नित्य इति भावः । न चैतत्परिभाषाऽभावेऽपि कृताकृतप्रसङ्गित्वेनेड्द्वित्वयोः साम्यात्परत्वेन द्वित्वं बाधित्वा इडेव पूर्वं भविष्यतीति नैतदस्याः फलमिति वाच्यम् । अस्या अभावेऽनन्तरवक्ष्यमाणपरिभाषया शब्दान्तरात्प्राप्नुवतो विधेरनित्यत्वबोधनादिट एवानित्यतया परस्यापि तस्य नित्येन द्वित्वेन बाधापत्तेः । आश्रितायां त्वस्यां तयेटोऽनित्यत्वबोधनेऽनया द्वित्वस्याप्यनित्यत्वबोधनादुभयोः साम्येन परत्वादिडेव द्वित्वात्पूर्वमिति व्यवस्था सिद्ध्यतीति बोध्यम् ॥ ४६ ॥

उद्देश्यवदिति । उद्देश्यव्यक्तेरिवेत्यर्थः ॥ ४७ ॥

भाष्ये ध्वनितमिति शदेः शित इति सूत्रे भाष्ये, उपसर्गपूर्वनियम इति पूर्वोक्तवार्तिकसमर्थनाय, तरतस्तरन्तीत्यादौ विकरणाच्छपः प्रागाङ्गकार्यस्य ऋत इद्धातोरितीत्वस्य

अत उक्तवार्तिकस्यानारम्भेऽपि न्यविशतादौ ।
अटि सति शब्दान्तरतः प्राप्तत्वाद्विकरणोऽप्यनित्य इति ॥४९॥
अड्विकरणयोः साम्ये परपठितत्वादडेव भवति प्राक् ।
तत्संयुतश्च धातुग्रहणग्राह्यस्ततश्च सिध्यति तङ् ॥ ५० ॥
शब्दान्तरे प्रसक्तस्यानित्यत्वं च सूचितं भाष्ये ।
वस्वेकाजितिसूत्रस्थैकाज्ग्रहणप्रयोजनविचारे ॥ ५१ ॥

---

प्रवृत्त्यापत्तिवारणार्थम्, 'आङ्गात्पूर्वे विकरणा एषितव्यास्तरतस्तरन्तीत्येवमर्थ'मित्युक्त्वा 'भवेत्सिद्धं यत्र विकरणा नित्या आङ्गमनित्यं तत्राङ्गात्पूर्वं विकरणाः स्युः । यत्र तु खल्भयं नित्यं परत्वात्तत्राङ्गं तावद्भवति' इत्युक्तम् । तस्यायं भावः—यथा तरतीत्यादावाङ्गकार्यस्य गुणस्य विकरणस्य च कृताकृतप्रसङ्गित्वेन नित्यत्वसाम्यात्परत्वेन गुण एवादौ भवति तथा न्यविशतेत्यादावपि कृताकृतप्रसङ्गित्वेनाड्विकरणयोरुभयोर्नित्यत्वसाम्यात्परत्वेनाडागम एव पूर्वं भविष्यति । यदि च विकरणे कृते शब्दान्तरस्य प्राप्नुवन्नडागमोऽनित्य इति मन्यते तर्हि अडागमे कृते विकरणस्यापि शब्दान्तरात्प्राप्त्याऽनित्यत्वं तुल्यमिति परत्वेनैव व्यवस्थेत्यडागमस्य पूर्वं प्रवृत्त्या तस्य धातुभक्तत्वेन नेर्विश इत्यादौ धातुग्रहणेन तद्विशिष्टग्रहणाद्दोषाभावेनोपसर्गपूर्वनियम इति वार्तिकस्य नास्त्युपयोग इति । इत्थमनेन भाष्येणेयं ध्वनिता । तत्र कैयटे च 'न चायं नियमः । शब्दान्तरस्य प्राप्नुवन्विधिरनित्यो भवति न तु शब्दान्तरादिति' इति स्पष्टमुक्तम् ॥ ४८ ॥

उक्तवार्तिकस्य = उपसर्गपूर्वनियमेऽड्व्यवाय उपसंख्यानमिति वार्तिकस्य ॥ ४९ ॥

तत्संयुतः = अड्विशिष्टः समुदायः । **धातुग्रहणेति** ।'नेर्विश इत्यादौ विशादिपदेन यदागमपरिभाषयाऽऽगमविशिष्टस्य ग्रहणात्तद्व्यवधानाभावेनात्मनेपदं सेत्स्यति । एवं चोक्तवार्तिकस्य नोपयोग इति भावः । मा भवानुजिहदित्यत्र ऊहधातोर्णिचि लुङि णौ चङीति ह्रस्वे कृते द्वित्वस्य शब्दान्तरात्प्राप्त्याऽनित्यत्वेन परत्वाद्ध्रस्व एव पूर्वं प्रवर्तेत इति रति फलं तु ओणेॠदित्करणाल्लिङ्गाद् द्विर्वचनाद्ध्रस्वत्वं बलीय इति णौ चङीति सूत्रे भाष्ये ज्ञापनादन्यथासिद्धम् । एवं च्यवन्ते प्लवन्ते इत्यादौ च्यु अ अन्ते इति स्थिते अतो गुण इति पररूपैकादेशस्य पूर्वं प्रवृत्तौ क्ङिति चेति गुणनिषेधापत्तिः । तत्र गुणे कृते शब्दान्तरात्प्राप्नुवतः पररूपैकादेशस्यानित्यत्वात्पूर्वं गुणः सिध्यतीत्यपि न फलम् । अचः परस्मिन्नित्यनेनैकादेशस्य स्थानिवद्भावेन निषेधाप्रवृत्तेरिति बोध्यम् ॥ ५० ॥

प्रसक्तस्य = प्राप्नुवतः । **वस्वेकाजिति** । वस्वेकाजाद्घसाम् ( ७।२।६७ ) इति सूत्रे भाष्ये एकाज्ग्रहणस्य प्रयोजनं बिभिद्वान् चिच्छिद्वान् अत्र वसोरिड्भाव, इत्युक्ते,

## लक्षणान्तरेण प्राप्नुवन्विधिरनित्यः ॥ ४५ ॥

कार्यविधायकशास्त्रव्यक्तेरप्यैक्य एव नित्यत्वम् ।
एतच्चासिद्धवदिति सूत्रस्थे कैयटे स्पष्टम् ॥ ५२ ॥
अत एव च भाष्यकृताऽतिजरांसीत्यस्य सिद्धयर्थम् ।
नुमि जरसि च संप्राप्ते नुमः परत्वाज्जरस् प्रोक्तः ॥ ५३ ॥
पूर्वंसजन्तस्य हि नुम् जरसि झलन्तस्य लक्षणेनेति ।
लक्षणभेदेन नुमोऽनित्यत्वात्परविधानमुपपन्नम् ॥ ५४ ॥

---

अस्यापि धातोरेकाच्त्वेन कृतेऽप्येकाज्ग्रहणेऽनेट् प्राप्नोतीत्याशङ्क्य कृते द्विर्वचने य एकाच् इत्येकाज्ग्रहणसामर्थ्येन गम्यत इत्युक्तम् । तच्च द्वित्वे कृते शब्दान्तरात्प्राप्नुवत इडागमस्येव इटि कृते शब्दान्तरे प्राप्नुवतो द्विर्वचनस्याप्यनित्यत्वेन परत्वादिडागमप्राप्त्यङ्गीकार एव सङ्गच्छते । अन्यथा द्विर्वचनस्यैव नित्यत्वेन पूर्वप्रवृत्तावङ्गस्यैकाच्त्वाभावादुक्तभाष्यासङ्गतिरिति भावः । एतद्भाष्योपपत्तिरेवास्य फलम् । प्रयोगसिद्धिरूपं त्वस्यानन्यथासिद्धं न किञ्चित्फलम् । यत्तु करिष्यते हरिष्यत इत्यादौ लादेशे सति शब्दान्तरे प्राप्नुवतः स्यप्रत्ययस्यानित्यत्वात्परत्वेन पूर्वं लादेशे स्वरितञित इत्यस्य प्रवृत्तिरस्य फलमित्याहुः, तत्तु विकरणेभ्यो नियमो बलीयानित्यनेनैव गतार्थम् ॥ ५१ ॥

**कार्येति** । नित्यत्वेन विवक्षितं यत्कार्यं तद्विधायकशास्त्रव्यक्तेरप्यैक्य एव नित्यत्वमित्यर्थः । **असिद्धवदिति** । असिद्धवदत्राभात् ( ६।४।२२ ) इति सूत्रे भाष्ये तत्सूत्राभावे कुर्वः कुर्म इत्यादौ 'नित्यं करोतेः' इत्यनेन उलोपे 'अत उत्सार्वधातुके' इति सार्वधातुकपरक उकारे विधीयमानः कृञोऽकारस्योकारादेशो न सिध्येदित्याशयकम् 'उत्तु कृञः कथमोर्विनिवृत्तौ' इति श्लोकवार्तिकमस्ति, तद्व्याख्याने कैयटेन—उलोपस्य स्थानिवद्भावेनैवात उदिति भविष्यतीत्याशङ्क्य, उलोपोत्तरं गुणस्य प्रत्ययलक्षणसूत्रेण प्राप्त्या लक्षणान्तरेण प्राप्नुवन्विधिरनित्य इत्यनित्यत्वादुलोप एव प्रथमं भविष्यति पश्चाद्गुणः, ततश्च कृञोऽकारस्य स्थानिभूतादचः पूर्वत्वाभावेन न स्थानिवद्भावप्रवृत्तिरिति समाहितम् । अत्रैतद्वचनं स्पष्टमुक्तम् । भाष्यसंगत्यर्थकत्वेन च प्रामाणिकमिति भावः ॥ ५२ ॥

**अत एवेति** । लक्षणान्तरेण प्राप्नुवतो विधेरनित्यत्वादेव, जराया जरसन्यतरस्याम् ( ७।२।१०१ ) इति सूत्रे भाष्ये 'नुमोऽनङ्जरसौ भवतो विप्रतिषेधेन ।' इति वार्तिकेन अतिजरांसीत्यत्र नुमः परत्वाज्जरसादेशः साधितः । तत्र नुमः कृताकृतप्रसङ्गित्वेऽपि, अकृते जरसादेशे नपुंसकस्य झलच इत्येतद्घटकेनाजन्ताङ्गोद्देश्यकनुम्विधायकवाक्येनेति

नाश्रीयते क्वचित्तु व्यक्त्यैक्यं लक्षणैक्यं वा ।
स्वीक्रियते च कृताकृतप्रसङ्गमात्रेण नित्यत्वम् ॥ ५५ ॥
इत्याह—

## क्वचित्कृताकृतप्रसङ्गमात्रेणापि नित्यता ॥ ४६ ॥

तेन गुणे सति शब्दान्तरात्प्रसक्तोऽपि शस्तुदत्यादौ ।
स्थानिवदिति सूत्रेण च तथाप्यसौ मन्यते नित्यः ॥ ५६ ॥
क्वचिदन्यस्मिन्विहिते स्वस्य पुनः प्राप्तिमात्रेण ।
न तु बाधकाविबाधितसफलप्राप्त्यैव नित्यतेत्याह ॥ ५७ ॥

## यस्य च लक्षणान्तरेण निमित्तं विहन्यते न तदनित्यम् ॥ ४७ ॥

इदमेवाश्रित्यातोऽनुपसर्ग इतीह भाष्यकृता ।
आह्वप्रह्वादिषु संप्रसारणाकारलोपयोः प्राप्तौ ॥ ५८ ॥

---

नुम् प्राप्नोति, जरसादेशे कृते तु झलन्ताङ्गोद्देश्यकनुम्विधायकवाक्येनेति लक्षणान्तरेण प्राप्तिमत्त्वादनित्यत्वम् । अतस्तयोस्तुल्यबलत्वाद्विप्रतिषेधेन जरस् इति भाष्यमुपपन्नम् । तेनेयं भाष्यसम्मतेति भावः ॥ ५३, ५४ ॥

**नाश्रीयत इति** । लक्ष्यानुरोधादिति भावः ॥ ५५ ॥

तेनेति । तुदतीत्यादौ गुणे कृते शब्दान्तरात्प्राप्त्या निमित्तव्यक्तिभेदेऽपि, स्थानिवत्सूत्रेण धातुत्वातिदेशे सत्येव प्राप्त्या लक्षणभेदेऽपि च शप्रत्ययः कृताकृतप्रसङ्गित्वमात्रेण नित्यो मन्यते । गुणस्तु शप्रत्यये कृते क्ङिति चेत्यनेन बाधितत्वादनित्यः । अतः परमपि गुणं बाधित्वा विकरणः श एव भवति ततश्च न गुण इत्यभीष्टरूपसिद्धिरिति भावः ॥ ५६ ॥

अस्य वचनस्य भाष्योक्तत्वेन प्रामाणिकत्वं दर्शयितुं भाष्यसन्दर्भमाह— **इदमेवेत्यादिना** । "आतोऽनुपसर्गे कः" ( ३।२।३ ) इति सूत्रे भाष्ये कविधौ सर्वत्र प्रसारणिभ्यो डः इति वार्तिकमुपन्यस्य तदुदाहरणं ब्रह्मज्य इत्युक्त्वा, सर्वत्र ग्रहणम्, आह्वः प्रह्व इत्यादावातश्चोपसर्गे इति कप्रत्ययविषयेऽपि डविधानार्थम् । अन्यथा कप्रत्यये सति परमप्याल्लोपं बाधित्वा नित्यत्वात्संप्रसारणे पूर्वरूपे चोवङादेशेन आहुवः प्रहुव इत्यनिष्टरूपापत्तिरित्यर्थकमुक्त्वा, स तर्हि वक्तव्यः । न वक्तव्यः । इत्युपक्रम्य, तत्र यथा

अपि पूर्वरूपबाध्यः पुनः प्रसक्त्यैव नित्य आलोपः ।
तेनोभयोः समत्वादालोपे परतया विहिते ॥ ५९ ॥
तस्यासिद्धत्वात्केऽप्युवङापत्तेरभावेन ।
क्विधौ प्रसारणिभ्यो ड इति न वक्तव्यमित्युक्तम् ॥ ६० ॥
क्वचिदुक्तवैपरीत्याद्बाधकशास्त्राविबाधितस्यैव ।
कार्यस्य पुनः प्राप्तौ नित्यत्वं नान्यथेत्याह ॥ ६१ ॥

## यस्य च लक्षणान्तरेण निमित्तं विहन्यते तदप्यनित्यम् ॥ ४८ ॥

अत एव च भाष्यकृता तद् ब्राह्मणकुलमिह त्यदाद्यत्वे ।
लुकि च प्राप्तेऽत्वे सत्यथ्विधिना बाधनादनित्यो लुक् ॥ ६२ ॥
इति निगदितं त्यदादिभ्यश्चेति लुगर्थमादृतं च वचः ।
तेन च तुदतीत्यादौ शे ङिति बाधाद्गुणोऽनित्यः ॥ ६३ ॥

---

संप्रसारणं नित्यं तथा संप्रसारणोत्तरमन्तरङ्गेण पूर्वरूपेण बाध्योऽप्याकारलोपो यस्य लक्षणान्तरेण निमित्तं विहन्यते न तदनित्यमित्याश्रयणात्कृताकृतप्रसङ्गित्वमात्रेण नित्य इत्युभयोः साम्येन परत्वादातो लोपे ततः संप्रसारणे आल्लोपस्याभीयत्वेनासिद्धत्वात्संप्रसारणोत्तरमुवङ् न भविष्यति, किन्तु यणेवेति वार्तिकारम्भमन्तराऽपीष्टसिद्धिं प्रदर्श्य तत्प्रत्याख्यातम् ॥ ५७, ५८, ५९, ६० ॥

पुनः प्राप्तौ = कार्यान्तरे कृते प्राप्तौ ॥ ६१ ॥

अस्या अपि भाष्यसम्मतत्वं दर्शयति—अत एवेति । स्वमोर्नपुंसकात् (७।१।२३) इति सूत्रे भाष्ये—'स्वमोर्लुक् त्यदादिभ्यश्चेति वक्तव्यम् । इहापि यथा स्यात् । तद् ब्राह्मणकुलमिति । किं पुनः कारणं न सिध्यति । कृते ह्यत्वे न लुग्भवेत् । अत्वे कृते लुङ् न प्राप्नोति । इदमिह संप्रधार्यमत्वं क्रियतां लुगिति । किमत्र कर्तव्यम् । परत्वादत्वम् । नित्यो लुक् । कृतेऽप्यत्वे प्राप्नोत्यकृतेऽपि । अनित्यो लुक् । न हि कृते अत्वे प्राप्नोति । अतोऽमित्यम्भावेन भवितव्यम् । तस्मात्त्यदादिभ्यश्चेति वक्तव्यम्' इत्युक्तम् । नित्यो लुगिति । अत्वं तु लुकि कृते न लुमताङ्गस्येति प्रत्ययलक्षणनिषेधाद्विभक्त्यभावान्न प्राप्नोतीत्यनित्यमिति भावः । तत्रान्तेऽनित्यो लुगित्युक्तिः प्रकृतपरिभाषाश्रयणेन । एवं चोभयोरनित्यत्वात्परत्वेन व्यवस्थेति परत्वादत्वमेव भविष्यति । अतस्तत्र लुक्सिद्ध्यर्थमुक्तवचनमारब्धव्यमित्युपसंहारादियं भाष्यसम्मतेति भावः ।

एतत्परिभाषाद्वयसमर्थनाय स्वमोर्लुकः सूत्रे ।
लोकव्यवहारद्वयमुदीरितं कैयटेनेत्थम् ॥ ६४ ॥

भगवत्साहाय्यकृते विजये सुग्रीवपाण्डवादीनाम् ।
तुल्येऽपि न कथयन्ति प्रबलत्वं वाल्यपेक्षयाऽऽद्यस्य ॥ ६५ ॥

कथयन्ति कौरवेभ्यः प्रबलत्वं पाण्डवानां तु ।
एवमितरकृतबाधे तुल्येऽपि च किञ्चिदिह नित्यम् ॥ ६६ ॥

## स्वरभिन्नस्य प्राप्नुवन्विधिरनित्यो भवति ॥ ४६ ॥

स्वरभेदाद्भिन्नस्य प्राप्तो यो विधिरनित्य एवासौ ।
तेन यणोऽनित्यत्वाद्दध्युदके सिध्यति स्वरोऽभीष्टः ॥ ६७ ॥

---

अत्र कैयटेन केचित्तु—'अन्तरङ्गानपि विधीन् बहिरङ्गो लुग्बाधते इत्यत्रापिग्रहणान्नित्यानां च परेषां च लुका बाधनमिच्छन्तस्त्यदाद्यत्वं लुका बाध्यत इत्याहुः' इत्युक्तम् । किन्त्वत्र यदि पूर्वं लुग्न स्यात्तर्हि त्यदाद्यत्वे सति अतोऽमिति प्रवर्तेतेति संभावनायाः सत्त्वादुपसंजनिष्यमाणन्यायेन लुक्प्रवृत्तेरसंभवाद्भाष्योक्तवार्तिकमावश्यकमेवेति बोध्यम् । फलमाह—तेनेति । शो इति । शप्रत्यये कृते तस्य ङित्त्वात् क्ङिति चेति निषेधेन गुणस्य बाधाद्गुणोऽनित्यस्तेन तत्र नित्यत्वाच्छ एवादौ प्रवर्तत इति भावः ॥ ६२, ६३ ॥

स्वमोर्लुकः सूत्रे = स्वमोर्नपुंसकादिति सूत्रे ॥ ६४ ॥

आद्यस्य = प्रथमोक्तस्य सुग्रीवस्य ॥ ६५ ॥

इतरकृतबाधे = लक्षणान्तरेण निमित्तविघाते तुल्येऽपि किञ्चिदिह नित्यम् = अत्र शास्त्रे किञ्चिन्नित्यं किंचित्त्वनित्यमिति व्यवह्रियत इत्यर्थः ॥ ६६ ॥

दध्युदक इति । दधिमिश्रमुदकं दध्युदकम् । अत्र उदकेऽकेवले = अकेवलं मिश्रं तद्वाचिनि समासे उदकशब्दे उत्तरपदे पूर्वपदमन्तोदात्तम्, अनेन दधिशब्देकारस्योदात्तत्वं प्राप्नोति । इको यणचीत्यनेन च यणादेशः प्राप्नोति । तत्र पूर्वं नब्विषयस्यानिसन्तस्येति फिट्सूत्रेण दधिशब्दस्याद्युदात्तत्वाच्छेषनिघातेनानुदात्तेकारस्य यण् प्राप्नोति, उक्तसूत्रेणोदात्ते कृते तूदात्तस्येति स्वरभेदेन भिन्नस्येकारस्य स्थाने प्राप्नुवन्यणादेशोऽनित्यः । तस्मात्तं बाधित्वा पूर्वमुदात्ते कृते तत्स्थानिकाद्यण उत्तरस्योकारस्य, उदात्तस्वरितयोर्यणः स्वरितोऽनुदात्तस्येति सूत्रेण स्वरितत्वं सिध्यतीति भावः ॥ ६७ ॥

एकस्यैव परत्वं नित्यत्वं चापि यत्रास्ति ।
तत्रेच्छयैकमथवा द्वयं प्रबलताप्रयोजकं वाच्यम् ॥ ६८ ॥
अत एव परत्वादिति नित्यत्वाच्चेत्युदीर्यते भाष्ये ।
परमार्थतः परत्वादिति तत्रास्त्येकदेश्युक्तिः ॥ ६९ ॥
नित्येनानित्यस्य हि विप्रतिषेधो न तुल्यबलविरहात् ।
नित्यान्तरङ्गयोरपि बलवत्त्वं सति विरोध इति बोध्यम् ॥ ७० ॥
नित्यादपि च बलीयोऽन्तरङ्गमस्त्यन्तरङ्गदृष्ट्या हि ।
बहिरङ्गशास्त्रमसदित्यनुमितिहेतुं प्रदर्शयति ॥ ७१ ॥

---

वाच्यम् = उल्लेख्यम् ॥ ६८ ॥

वस्तुतस्तु परत्वान्नित्यत्वाच्चेत्युभयोल्लेखो न युक्त इत्याह—**परमार्थत** इति ॥ ६९ ॥

विप्रतिषेधो न = विप्रतिषेधशास्त्रोपयोगी विरोधी नेत्यर्थः । तुल्यबलविरहात् = नित्यानित्ययोस्तुल्यबलत्वाभावादित्यर्थः । एवं च तादृशस्थले नित्यत्वादित्येव वक्तुमुचितम् । **नित्यान्तरङ्गयोरपीति** । अनित्यान्नित्यस्य, परनित्याभ्यामन्तरङ्गस्य बलवत्त्वमपि यौगपद्यासंभवरूपविरोधे सत्येव ज्ञेयम् । विरोधे सत्येव बलीयसा दुर्बलस्य बाधदर्शनादिति भावः ॥ ७० ॥

क्रमप्राप्तमन्तरङ्गस्य बलवत्त्वं तत्र बीजं च निरूपयति **नित्यादपीति** । अपिशब्देन परादपि बलवत्त्वेनान्तरङ्गस्येतरबाधपूर्विका प्रवृत्तिः । सा चान्तरङ्गबहिरङ्गयोः समकालप्राप्तत्व एव सम्भवति । अतस्तद्विषय एवेदं बलवत्त्वप्रतिपादनमुपयुज्यते । जातबहिरङ्गस्य तु पूर्वमेव प्रवृत्तत्वेन तदपेक्षयाऽन्तरङ्गस्य बलवत्त्वप्रतिपादने न फलम् । तत्र तु बहिरंगे प्रवृत्तेऽपि तस्मिन्नविद्यमान इवान्तरङ्गकार्यप्रवृत्तिः परिभाषया संपाद्यत इति बोध्यम् । बलवत्त्वे हेतुमाह **अन्तरङ्गदृष्ट्येत्यादिना** । हि = यतः परिभाषायामसिद्धमित्यस्य अनिष्पन्नम्—अभावप्रतियोगीत्यर्थस्तदाह—**बहिरङ्गशास्त्रमसदिति** । अनुमतिहेतुम् । स्वविशिष्टं स्वापेक्षया बलवत् स्वविषयकज्ञानाभावादित्यनुमाने हेतुमिमं परिभाषा प्रतिपादयतीत्यर्थः । स्वविशिष्टमित्यत्र वैशिष्ट्यं च स्वनिष्ठापवादत्वानिरूपकत्वस्वनिरूपितान्तरङ्गत्वोभयसंबन्धेन । तेनापवादापेक्षयोत्सर्गस्यान्तरङ्गत्वेऽपि न बलत्त्वमिति बोध्यम् ॥ ७१ ॥

# असिद्धं बहिरङ्गमन्तरङ्गे ॥ ५० ॥

जातस्य च समकालप्राप्तस्य वहिर्निमित्तकस्य विधेः ।
ज्ञानाभावाल्लक्ष्येऽन्तरङ्गशास्त्रप्रवृत्तिरपशङ्कम् ॥ ७२ ॥

यदपेक्षयाऽन्तरङ्गं विवक्षितं तन्निमित्तसमुदाये ।
अन्तर्भूतनिमित्तं शास्त्रं विज्ञेयमन्तरङ्गमिति ॥ ७३ ॥

यदपेक्षया त्वभिमतं बहिरङ्गं तन्निमित्तसमुदायात् ।
बहिरस्ति यन्निमित्तं तद्विज्ञेयं च बहिरङ्गम् ॥ ७४ ॥

स्वीयनिमित्तसमूहावयवविषयबोधजनकेन ।
सप्तम्यन्तेन घटितमुक्तं स्वापेक्षयाऽन्तरङ्गमिति ॥ ७५ ॥

स्वघटकसप्तम्यन्तावबोध्यघटितश्च समुदायः ।
यस्य निमित्तं तत्खलु बहिरङ्गमितीह निष्कर्षः ॥ ७६ ॥

---

जातं, समकालप्राप्तिकं चेति द्विविधं बहिरङ्गं वक्ष्यते; उभयत्रानयेष्टसिद्धिरित्याह—**जातस्येति** । अपशङ्कम् = निःशङ्कतया ॥ ७२ ॥

अन्तरंगबहिरंगशब्दार्थमाह **यदपेक्षयेत्यादिना पद्यद्वयेन** । अन्तरंगत्वबहिरंगत्वयोः सनिरूपकपदार्थत्वादुक्तं यदपेक्षयेति । अन्तरंगमिति भावप्रधानो निर्देशः, तथाच यन्निरूपितमन्तरंगत्वं विवक्षितमित्यर्थः । अन्तरंगपदार्थनिरूपणे बहिरंगशास्त्रीयनिमित्तसमुदाय मध्य इत्याद्युक्तौ, बहिरंगपदार्थनिरूपणे चान्तरंगशास्त्रीयनिमित्तसमुदायादित्याद्युक्तावन्योन्याश्रयदोषापत्तिः । तन्निवारणाय यदपेक्षयेत्यादि सामान्याकारेणोक्तम् । आत्माश्रयवारणाय च विवक्षितमित्युक्तम् ॥ ७३, ७४ ॥

वक्ष्यमाणज्ञापकानुरोधेन भाष्य-प्रामाण्येन च पर्यवसितं निष्कृष्टलक्षणमाह—**स्वीयनिमित्तेत्यादिना** । अत्र निमित्तपदेन प्रवृत्तिप्रयोजकस्योद्देश्यसाधारणस्य ग्रहणम् । समन्वयो यथा—ण्विप्रत्ययान्तविश्ववाहशब्दाच्छसि विश्वौह इत्यत्र वाह ऊठिति शास्त्रीयनिमित्तसमुदायो विश्ववाह इति भसंज्ञकाङ्गरूपः । तदवयवो ण्विः । तद्विषयकबोधजनकं सप्तम्यन्तमार्धधातुकपदम् । तद्घटितं पुगन्तलघूपधस्य चेति गुणविधायकशास्त्रम् । अतस्तद् वाह ऊठित्येतदपेक्षयाऽन्तरङ्गमिति ॥ ७५ ॥

**स्वघटकेति** । स्वं पूर्वोक्तमन्तरङ्गं गुणशास्त्रं, तद्घटकं सप्तम्यन्तमार्धधातुकपदं, तद्बोध्यः = तत्प्रयोज्यविषयताऽऽश्रयो ण्विः, तद्घटितसमुदायो विश्ववाह इति तन्निमित्तकं

अङ्गपदोक्तनिमित्तं शब्दात्मकमिष्यतेऽत्र मुख्यत्वात् ।
तेनार्थादिकृतं बहिरङ्गत्वं नैव मन्तव्यम् ॥ ७७ ॥

भाष्ये क्वचिदर्थकृतं बहिरङ्गं त्वेकदेशिनैवोक्तम् ।
अपि च तदुभयोरर्थाश्रणे न त्वेकतरकार्ये ॥ ७८ ॥

अत एव न तिस्रिति खलु दीर्घनिषेधस्य सार्थक्यम् ।
स्त्र्यर्थाश्रिततिस्रादेर्बहिरङ्गत्वाभ्युपगमे तु ॥ ७९ ॥

पूर्वं त्रयेऽन्तरङ्गे नामि च दीर्घे ततस्तिसरि ।
लक्ष्ये लक्षणनियमाद्दीर्घाप्राप्त्यैव सिद्धत्वात् ॥ ८० ॥

---

'वाह ऊठ्' इति शास्त्रमतस्तद् गुणशास्त्रापेक्षया बहिरङ्गमिति समन्वयः । अत्रापि स्वापेक्षयेत्यनुषञ्जनीयम् ॥ ७६ ॥

अत्र कैयटादयः प्राचीना बहिरङ्गान्तरङ्गपदघटकेनाङ्गपदेन, अर्थरूपं, संज्ञारूपं, शब्दरूपं चेति सर्वविधं निमित्तं ग्राह्यमिति मन्यन्ते, बह्वपेक्षं बहिरङ्गम्, अल्पापेक्षमन्तरङ्गमिति च वदन्ति । तन्मतं निराकरोति—अङ्गपदोक्तनिमित्तमित्यादिना । अत्र मुख्यत्वात् = अस्मिञ्छब्दशास्त्रे शब्दस्यैव प्राधान्यादित्यर्थः ॥ ७७ ॥

ननु वर्णो वर्णेन ( २।१।६९ ) इति सूत्रे भाष्ये—'समानाधिकरणसमासाद् बहुव्रीहिः* ।' इति वार्तिकमुपन्यस्य समानाधिकरणसमासस्यावकाशः । वीरः पुरुषो वीरपुरुषः । बहुव्रीहेरवकाशः । कण्ठे कालः । इहोभयं प्राप्नोति—वीरपुरुषको ग्रामः । बहुव्रीहिर्भवति विप्रतिषेधेन'इत्याद्युक्त्वा नैष युक्तो विप्रतिषेधः । अन्तरङ्गः कर्मधारयः । काऽन्तरङ्गता । स्वपदार्थे कर्मधारयः । अन्यपदार्थे बहुव्रीहिः' इत्युक्तम् । तेनार्थनिमित्तकस्यापि बहिरङ्गत्वं भाष्यसम्मतं, तत्राह—भाष्ये इति । एकदेशिनैवेति । कण्ठे काल इत्यादौ सप्तमीविशेषणे बहुव्रीहाविति ज्ञापकादेव बहुव्रीहेरास्थेयत्वात्, पञ्चभिर्भुक्तमस्येत्यर्थे बहुव्रीहिवारणाय समानाधिकरणानामेव बहुव्रीहिरित्यस्यावश्याश्रयणीयत्वात्, वीरपुरुष इत्यादावन्यपदार्थविवक्षायां निरवकाशत्वादेव बहुव्रीहिसिद्धेस्तत्र विप्रतिषेधप्रतिपादकवार्तिकस्यानुपयोगात्, तत्खण्डनपरभाष्यस्य चैकदेश्युक्तित्वौचित्यादर्थनिमित्तकान्तरङ्गबहिरङ्गभावस्य सिद्धान्तिसम्मतत्वं वेति भावः । अपि चेति । उक्तमपि तदर्थकृतबहिरङ्गत्वमन्तरङ्गबहिरङ्गयोरुभयोरर्थनिमित्तकत्वे सत्येवाश्रयितुं युक्तं तत्र तथैव सत्त्वात्, न त्वेकतरस्यार्थनिमित्तकत्वेऽन्यस्य च शब्दनिमित्तकत्वे इत्यर्थः ॥ ७८ ॥

अत एवेति । 'अर्थकृतबहिरङ्गत्वस्यानाश्रयणादेव 'न तिसृ चतसृ' इति तिसृ-

सङ्गतमत एव वचः स्नन्तप्रतिषेधकं त्रयादेशे ।
तस्य च भाष्यकृदुक्तं सकृद्गतिन्यायतो निराकरणम् ॥ ८१ ॥
एयादयोऽङ्गसंज्ञासापेक्षतया हि बहिरङ्गाः ।
तेन न वलिलोपः स्याद् गौधेरपचेत्प्रभृतिकेषु ॥ ८२ ॥
इति शङ्काऽपि निरस्ताऽनेन यतस्तादृशं न बहिरङ्गम् ।
एयादीनां चापरनिमित्तकतयाऽन्तरङ्गत्वात् ॥ ८३ ॥
तत्र च मानमतोऽमिति दीर्घव्यावृत्तये तपरकरणम् ।
तदितरथा हि व्यर्थं नपुंसके ह्रस्वताध्रौव्यात् ॥ ८४ ॥

---

शब्दस्य नामि दीर्घनिषेधश्चरितार्थः । तदाश्रयणे तु तिसृ इत्यादेशस्य स्त्रीत्वरूपाधि-कार्थापेक्षत्वेन बहिरङ्गत्वात्ततः पूर्वमन्तरङ्गे त्रेस्त्रयादेशे नामीति दीर्घे तदुत्तरं तिस्रादेशे लक्ष्ये लक्षणं सकृदेव प्रवर्तत इति न्यायेन पुनर्दीर्घाप्रवृत्त्या तिसृणामिति रूपसिद्धेः स निषेधो व्यर्थः स्यादिति भावः ॥ ७९, ८० ॥

**सङ्गतमिति** । स्थानिवत्सूत्रे 'त्रयादेशे स्नन्तप्रतिषेधः' इति वार्तिकं, सकृद्गति-न्यायाश्रयणेन भाष्यकृता कृतं तत्प्रत्याख्यानं चार्थकृतबहिरङ्गत्वानाश्रयणादेव सङ्गतम् । अन्यथा तत्राप्युक्तरीत्याऽन्तरङ्गत्वात्पूर्वं त्रयादेशे तदुत्तरं तिस्रादेशे तस्य स्थानिवद्भावेन त्रिशब्दत्वबुद्ध्या प्राप्तस्त्रयादेशो लक्ष्ये लक्षणमिति न्यायेन पुनर्न प्रवर्तेतेति तन्नि-वारणार्थस्तयोः प्रयासो निष्फलः स्यादिति भावः ॥ ८१ ॥

संज्ञाकृतबहिरङ्गत्वानाश्रयणादेव प्राचीनोक्तशङ्काऽप्यपास्तेत्याह—**एयादय इति** । गौधेर इत्यत्र गोधाया ढ्रगिति ढ्रक्प्रत्यये ढकारस्य एयादेशे रेफनिमित्तको लोपो व्योर्वलीति यलोपः, पचेदित्यत्र च यास इयादेशे तकारनिमित्तको यलोपोऽन्तरङ्गस्त-स्मिन्कर्तव्ये एयादीनामङ्गसंज्ञासापेक्षत्वेन बहिरङ्गत्वान्न सिध्येदिति शङ्कापि संज्ञाकृत-बहिरङ्गत्वानाश्रयणेन निरस्तेत्यर्थः । उक्तशङ्कानिरासेऽन्यमपि हेतुमाह—**एयादीनां चेति** । अन्तरङ्गत्वं ह्यनेकविधं, तन्मध्येऽपरनिमित्तकत्वरूपान्तरङ्गत्वसत्त्वेन बहि-रङ्गत्वाभावादेयादीनां यकारलोपे कर्तव्ये नासिद्धत्वमिति भावः ॥ ८३ ॥

अपरनिमित्तकस्यान्तरङ्गत्वे प्रमाणमाह—**तत्र च मानमित्यादिना** । इतरथा = अपरनिमित्तकस्यान्तरङ्गत्वाभावे । ह्रस्वताध्रौव्यात्—। ह्रस्वो नपुंसके प्रातिपदिकस्ये-त्यनेन सर्वत्र ह्रस्वस्यैव सत्त्वादित्यर्थः ॥ ८४ ॥

अश्वाश्वेति समाहारार्थे द्वन्द्वे नपुंसकैकत्वे ।
दीर्घं बाधित्वाऽपरनिमित्तकतया कृते ह्रस्वे ॥ ८५ ॥

पश्चात्सवर्णदीर्घे न पुनर्ह्रस्वः सकृत्प्रवृत्तत्वात् ।
तत आ इति रूपं तद्व्यावृत्त्यर्थं तपरकरणम् ॥ ८६ ॥

ऊकालोऽजित्यत्राप्यू इति दीर्घोऽत उपपन्नः ।
इयमन्तरङ्गताऽपरनिमित्तकादेश एवेष्टा ॥ ८७ ॥

तेन नुटस्तदभावादामीति न्यासदूषणपरेण ।
नित्यत्वाद्दीर्घः प्राक् स्यादिति भाष्येण न विरोधः ॥ ८८ ॥

दिवु धातोः सनि दुद्यूषतीह च प्राग्द्विरुक्तेरूठ् ।
द्वित्वे ह्यादेशत्वं नास्त्यपरनिमित्तकत्वसत्त्वेऽपि ॥ ८९ ॥

---

उक्तार्थे ज्ञापिते तपरकरणस्य चारितार्थ्यं दर्शयति—अश्वेति । अश्व आश्वेत्यनयोः समाहारद्वन्द्वे सुपो लुकि अ आ इति स्थिते सवर्णदीर्घस्य परनिमित्तकत्वेन बहिरङ्गत्वात्तं बाधित्वाऽपरनिमित्तकत्वेनान्तरङ्गे नपुंसकह्रस्वे कृते पश्चात्सवर्णदीर्घे लक्ष्ये लक्षणमिति न्यायेन पुनर्ह्रस्वाप्रवृत्त्या आ इति रूपम् । ततः परयोः स्वमोरमादेशो मा भूदित्यर्थमत इति तपरकरणं चरितार्थमित्यर्थः ॥ ८५, ८६ ॥

उक्तविधान्तरङ्गत्वसूचकमन्यदप्याह—ऊकाल इति । अपरनिमित्तिकत्वरूपान्तरङ्गत्वाभावेऽत्र लाघवाय समाहारद्वन्द्वेन उकाल इत्येव वदेत् । सति तूक्तरूपान्तरङ्गत्वे उक्तरीत्या ह्रस्वस्य पुनः प्रवृत्त्यभावाद्दीर्घनिर्देश उपपन्नः । वक्ष्यमाणभाष्यविरोधपरिहारार्थं व्यवस्थामाह—इयमिति ॥ ८७ ॥

तेनेति । आदेशविषय एवापरनिमित्तकत्वरूपान्तरङ्गत्वाङ्गीकारेण, "नामि" इत्यस्य स्थाने "आमि" इति न्यासे नुटि कृतेऽकृतेऽपि च प्राप्त्या दीर्घस्य नित्यत्वात्, नुटस्तु दीर्घे कृते प्राप्त्यभावेनानित्यत्वात्पूर्वं दीर्घे ह्रस्वात्परत्वाभावान्नुड् न स्यादित्यर्थकेन "नामि" ( ६।४।३ ) इति सूत्रस्थेन "नामि दीर्घ आमि चेत्स्यात्कृते दीर्घे न नुड् भवेत्" इति वचनेन सह विरोधो नेत्यर्थः । नुटोऽपरनिमित्तकत्वेऽप्यादेशत्वाभावेन तस्यान्तरङ्गत्वानङ्गीकारात्तेन नित्यस्य दीर्घस्य बाधासंभवात्तदुपपत्तेरिति भावः ॥ ८८ ॥

उक्तव्यवस्थाया लक्ष्यसिद्धिरूपमपि फलमाह—दिवुधातोरिति । अत्र द्वित्वस्यापरनिमित्तकत्वेऽपि द्विः प्रयोगो द्विर्वचनं षाष्ठमिति सिद्धान्तादादेशरूपत्वाभावेनान्तरङ्गत्वा-

एतन्नागेशमतं तथाविधं नान्तरङ्गमित्यन्ये ।
तपरकरणमास्यसुखायामित्येवेष्यते रूपम् ॥ ९० ॥

ऊ इति ह्रस्वाकरणं त्वेवंविधलाघवादराभावात् ।
षट् चतुर इति हि वाच्येऽप्युक्तं खलु षट् चतुर्भ्यं इति ॥ ९१ ॥

अन्तर्भूतनिमित्तकतयाऽन्तरङ्गेऽपि वलि लोपे ।
एयाद्यसिद्धता तु न वलि लोपेऽस्या अनाश्रयणात् ॥ ९२ ॥

---

नङ्गीकारात् परत्वेन च्छ्वोः शूडित्यूडादेश एव पूर्वं प्रवर्तते तेनाभ्यासे उकारश्रवणं सिध्यतीति भावः ॥ ८९ ॥

एवं परिभाषेन्दुशेखरोक्तमपरनिमित्तकस्यान्तरङ्गत्वं निरूप्य मतान्तरमाह—तथाविधं नेत्यादिना । अन्ये इति आहुरिति शेषः । अत्र मतेऽतोऽमित्यत्र तपरकरणस्य वैयर्थ्यं परिहरति—तपरकरणमिति । मुखसुखार्थमेव तत्, नोक्तार्थज्ञापकमिति भावः । यत्तु सुमनःशब्दात्कर्तुः क्यङ् इत्यनेनाचारार्थे क्यङि सुमनायेत्यस्मात्कर्तरि क्विपि अल्लोपयलोपयोः सुमना इति तस्मान्नपुंसके स्वमोरमादेशो मा भूदित्यर्थं तपरकरणम् । ह्रस्वो नपुंसक इत्यस्य तु नात्र प्रवृत्तिरल्लोपयलोपयोः स्थानिवद्भावादिति कश्चित्तन्न । तयोः स्थानिवद्भावेऽपि सुमना इत्यस्य स्वतोऽजन्तत्वात्प्रातिपदिकत्वान्नपुंसकवृत्तित्वाच्च ह्रस्वप्रवृत्तेर्दुर्वारत्वात् । अमित्येवेति । पूर्वोक्तस्य आद्यब्दस्य नपुंसके स्वमोः, अम् इत्येव रूपमिष्यतेऽतस्तस्य व्यावर्त्यत्वाभावात्तपरकरणं न ज्ञापकमिति भावः ॥९०॥

ऊकालोऽजित्यत्र दीर्घोच्चारणमुक्तरूपान्तरङ्गत्वसूचकमिति यदुक्तं तन्निरस्यति—ऊ इति । तादृशलाघवानादरमुदाहरति—षट् चतुर इति । एवमस्थिदधिसक्थ्यक्ष्ण इति वक्तव्ये अस्थिदधिसक्थ्यक्ष्णामित्युक्तिरपि तादृशलाघवानादरं गमयतीति बोध्यम् ॥ ९१ ॥

ननु गौधेरादिष्वेयादीनां संज्ञापेक्षत्वप्रयुक्तबहिरङ्गत्वाभावेऽपि वलिलोपस्यान्तर्भूतनिमित्तकत्वेनान्तरंगत्वादेयादीनां च तदपेक्षया बहिर्भूतनिमित्तकत्वेन बहिरङ्गत्वाद् यलोपे कर्तव्ये तेषामसिद्धत्वं स्यादेव ततश्च यलोपो न सिध्येदत आह—अन्तर्भूतेति । वलि लोपेऽन्तरङ्गपरिभाषा न प्रवर्तत इति कल्पनान्नोक्तदोष इति भावः ॥ ९२ ॥

तत्र च मानं चेले क्नोपेरित्येष निर्देशः ।
णिजपेक्षपुकस्तत्र ह्यसिद्धता नाश्रिता वलि यलोपे ॥ ९३ ॥

जातासिद्धे चैषा वलि लोपेऽभावकल्पना ज्ञेया ।
तस्माद्वृश्चत्यादिषु वलि लोपे सम्प्रसारणमसिद्धम् ॥ ९४ ॥

इत्येतत्प्रतिपादकभाष्यविरोधो न तत्र हि वलोपे ।
पदसंस्काराश्रयणात्समकालप्राप्तिरस्त्युभयोः ॥ ९५ ॥

ननु येनविधिः सूत्रे विधिसम्बद्धैस्तदन्तविधिरखिलैः ।
इति पक्ष इको यणचीत्यादौ तस्यापवादेन ॥ ९६ ॥

---

तत्र चेति । वलि लोपेऽन्तरङ्गपरिभाषा न प्रवर्तत इत्यत्र प्रमाणं, चेले क्नोपेरिति सूत्रे क्नोपेरिति निर्देशः । क्नूय् धातोर्णिचि पुकि यलोपे पुगन्तेति गुणे च क्नोपीति णिजन्तो धातुस्तस्माद्धातुनिर्देशे इक्प्रत्यये णिलोपे क्नोपि-शब्दः । अत्र णिज्निमित्तकपुगपेक्षया यलोपस्यान्तरङ्गत्वेऽपि तस्मिन्कर्तव्ये पुकोऽसिद्धत्वानाश्रयणादेव यलोपः सिध्यति । तेनायं निर्देश उक्तार्थज्ञापक इति भावः । ९३ ॥

उक्तकल्पनायां भाष्यविरोधं परिहरति—जातासिद्धे चेत्यादिना । वलि लोपेऽन्तरङ्गपरिभाषाया अप्रवृत्तिकल्पना च जातबहिरङ्गासिद्धत्वस्थल एव ज्ञेया, तेन लोपोव्योर्वलि (६।१।६६) इति सूत्रस्थभाष्यविरोधो न, यत्र हि व्रश्चनादिषु वलोपातिप्रसङ्गमाशंक्योपदेशसामर्थ्यात्तत्र वलोपो नेति समाधाय, वृक्णः, वृश्चतीत्यादौ संप्रसारणे वल्परत्वाभावेन लोपाप्राप्त्या वकारोपदेशस्य चारितार्थ्यान्न सामर्थ्यमित्याशङ्क्यैवे संप्रसारणादीनां बहिरङ्गत्वेनासिद्धत्वाल्लोपप्राप्त्याऽस्त्येव सामर्थ्यमित्युपपादितम् । वलि लोपे सर्वथाऽन्तरङ्गपरिभाषाया अप्रवृत्तावेतद्भाष्यविरोधः स्पष्टः । स च जातबहिरङ्गस्थल एव वलिल्लोपे तदप्रवृत्तिकल्पनेन परिह्रियते । उक्तस्थले च पदसंस्कारपक्षाश्रयणेन वलोपसंप्रसारणयोः समकालप्राप्त्याऽन्तरङ्गपरिभाषाप्रवर्तनं भाष्योक्तं युक्तमेवेति भावः । एतेन जातस्य समकालप्राप्तस्य चेति द्विविधस्यैव बहिरङ्गस्यासिद्धत्वाङ्गीकारे वृश्चत्यादिषु भविष्यत्प्राप्तिकसंप्रसारणासिद्धत्वप्रतिपादकभाष्यमसङ्गतं स्यादिति शङ्काऽप्यपास्ता वेदितव्या ॥ ९४, ९५ ॥

अङ्गपदेन शब्दात्मकमेव निमित्तं गृह्यते न तु संज्ञादिरूपमिति यदुक्तं तत्राशङ्कते—नन्विति । तस्य = तदन्तविधेः ॥ ९६ ॥

यस्मिन्विधिरिति वचसाऽजादावित्यच्पदस्यार्थे ।
स्योने यणूनशब्दाश्रितो नशब्दाश्रितश्च गुणः ॥ ९७ ॥

इत्यन्तरङ्गताया विरहाद् गुणबाधनं यणा न स्यात् ।
इति भाष्यकृतादोषे प्रदर्शिते कैयटेन विवृतमिदम् ॥ ९८ ॥

स्योन इतीह सिवेर्नै विहिते प्राप्तेषु गुणवलोपोट्सु ।
अपवादतया लोपं गुणमूट् खलु बाधतेऽन्तरङ्गतया ॥ ९९ ॥

आश्रयति गुणः संज्ञापञ्चकमूठ् तच्चतुष्कमेवेति ।
तेनोठि सति सि ऊनेत्यवस्थिते गुणयणोः प्रसङ्ग इति ॥१००॥

अत्राल्पसंख्यसंज्ञासापेक्षस्यान्तरङ्गत्वम् ।
बहुसंज्ञाऽपेक्षस्य च बहिरङ्गत्वं विशदमुक्तम् ॥१०१॥

---

**यस्मिन्विधिरिति** । यस्मिन्विधिस्तदादावल्ग्रहण इति परिभाषया इको यणचीत्यादावचीत्यस्याजादावित्यर्थे स्योन इत्यत्र सि ऊन इत्यवस्थायाम् ऊनशब्दमाश्रित्य यणादेशो नशब्दमाश्रित्य गुण इत्यतो यणादेशस्य गुणापेक्षयाऽन्तरङ्गत्वाभावेन, तस्यान्तरङ्गत्वेन गुणबाधकत्वमिष्टं न सिध्येदिति तत्पक्षे भाष्यकृता दोषे प्रदर्शिते स्योन इति प्रतीकमादाय कैयटेनेत्थं तद् व्याख्यातमित्यर्थः ॥ ९७, ९८ ॥

कैयटोक्तिमर्थत उपनिबध्नाति—**स्योन इति** । "सिवेर्बाहुलकादौणादिके नप्रत्यये गुणो वलोप ऊडिति कार्यत्रयप्रसङ्गः । तत्रापवादत्वादूठा वलोपो बाध्यते, गुणस्त्वन्तरङ्गत्वाद्बाध्यते । गुणो ह्यङ्गसम्बन्धिनीमिग्लक्षणां लघ्वीमुपधामार्धधातुकं चाश्रयति । ऊठ् तु वकारान्तमङ्गमनुनासिकादिं च प्रत्ययमित्यल्पापेक्षत्वादन्तरङ्गः । तत्र कृते गुणश्च प्राप्नोति यणादेशश्चेति" इति कैयटग्रन्थः । ऊठोऽन्तरङ्गत्वे हेतुमाह—**आश्रयतीति** । गुणो हि, अङ्गसंज्ञाम्, इक्संज्ञाम्, लघुसंज्ञाम्, उपधासंज्ञामार्धधातुकसंज्ञां चेति संज्ञापञ्चकमपेक्षते । ऊठ् तु वकारान्तबोधकवकाररूपसंज्ञाम्, अङ्गसंज्ञाम्, अनुनासिकसंज्ञां, प्रत्ययसंज्ञामिति संज्ञाचतुष्कमपेक्षते । एवञ्च न्यूनसंज्ञापेक्षत्वादूडन्तरङ्गः, गुणश्च तदपेक्षयाऽधिकसंज्ञापेक्षत्वाद् बहिरङ्ग इति भावः ॥ ९९, १०० ॥

विशदं = स्पष्टम् ॥ १०१ ॥

इति चेन्न तथा सति तद्भाष्योदितदोषसङ्गतिर्न स्यात् ।
बहुसंज्ञाऽपेक्षतया गुणस्य बहिरङ्गतासत्त्वात् ॥१०२॥

न च शब्दशक्तिलभ्यं बहिरङ्गपदेन बह्वपेक्षत्वम् ।
अल्पापेक्षत्वं चेतरेण न च लक्षणाऽपि निर्बीजा ॥१०३॥

अत एव च भाष्यकृता स्योन इह गुणाद्यणन्तरङ्गत्वात् ।
इत्युक्तं न गुणादूडिति पूर्वं तत्प्रसङ्गेऽपि ॥१०४॥

सिद्धान्ते च गुणादूड् नित्यत्वादेव भवति प्राक् ।
ऊठि सति यणा बाधाद्गुणस्त्वनित्योऽत्र विज्ञेयः ॥ १०५ ॥

---

'कैयटमतं निरस्यति—इति चेन्नेत्यादिना । तद्भाष्येति । सर्वत्र तदन्तविध्याश्रयणपक्षे "अन्तरङ्गलक्षणस्य यणादेशस्य बहिरङ्गलक्षणो गुणो बाधकः प्रसज्येत" इति भाष्योक्तदोषस्य सङ्गतिर्न स्यादित्यर्थः । तत्र हेतुमाह—बहुसंज्ञेति । इको यणचीत्यादावचीत्यस्याजादावित्यर्थेऽपि कैयटरीत्या गुणस्य बहुसंज्ञाऽपेक्षत्वेन बहिरङ्गत्वाद्यणस्तु तदपेक्षयाऽल्पसंज्ञाऽपेक्षत्वेनान्तरङ्गत्वाद्यणेव भविष्यतीत्यतो दोषोक्तिरसङ्गता स्यादिति भावः ॥ १०२ ॥'

न चेति । बहिःशब्दस्य बहुत्वविशिष्टवाचकत्वाभावादन्तःशब्दस्य चाल्पत्वविशिष्टवाचकत्वाभावादिति भावः । न नु शक्त्या तदलाभेऽपि लक्षणया तल्लाभो भविष्यति अत आह—न च लक्षणाऽपीति । तात्पर्यानुपपत्तिर्हि लक्षणाबीजं, तस्य चात्राभावाल्लक्षणा न युक्तेत्यर्थः । किंचैवं सति प्रतिपत्तिलाघवाय असिद्धं बह्वपेक्षमल्पापेक्षे इत्येव वदेत् ॥ १०३ ॥'

'अत एवेति । संज्ञाकृतबहिरंगत्वस्यानाश्रयणादेव 'विप्रतिषेधे' (१।४।२) इति सूत्रे भाष्ये अन्तरंगं बलीयो भवतीत्यस्योदाहरणं 'गुणाद्यणादेशः, स्योनः, स्योना' इत्युक्तम् । ऊठः प्रथमप्राप्तत्वेऽपि गुणादूडिति नोक्तम् । कैयटरीत्या तु प्राथम्यात्तदेव वक्तुमुचितमिति भावः ॥ १०४ ॥

स्वमतेऽप्यनन्तरोक्तभाष्योपपत्तये स्योन इत्यत्र गुणात्पूर्वमूठ्प्रवृत्तेरावश्यकत्वाचामुपपादयति सिद्धान्त इति । विधेयसंबन्धिनः सर्वस्य तदन्तबोधकत्वमिति पूर्वपक्षिमतस्योक्तरीत्या भाष्ये दूषितत्वात्समानाधिकरणविशेषणैरेव तदन्तविधिरिति सिद्धान्ते इको यणचीत्यादौ विशेष्यासन्निधानादचीत्यस्य तादृशविशेषणत्वाभावादजादावित्यर्था-

क्विश्वोनशब्दमाश्रित्य यणादेशो नशब्दमाश्रित्य ।
गुण इति भाष्यादस्यामुभयत्राप्यङ्गशब्देन ॥ १०६ ॥

शब्दात्मकं निमित्तं सप्तम्याद्यन्तपदबोध्यम् ।
उभयोर्युगपत्प्राप्तौ ग्राह्यमिति ज्ञायते स्पष्टम् ॥ १०७ ॥

नन्वेवं सति पञ्चेत्यत्र नलोपः पदत्वसापेक्षः ।
षट्त्वविधौ कर्तव्ये नासिद्धः स्यात्ततश्च षडभावे ॥ १०८ ॥

न षडिति निषेधविरहाट्टाप् स्यादिति चेन्न दोषोऽयम् ।
लुक्सिद्धये कृतस्य हि षट्त्वस्य स्थानिवत्त्वतो लाभात् ॥ १०९ ॥

अनयैव चान्तरङ्गं बहिरङ्गविधेर्बलीय इत्यर्थः ।
संगृह्यते तदर्थं परिभाषाऽन्या न मन्तव्या ॥ ११० ॥

---

भावेन गुणस्यान्तरंगत्वाभावादुत्तरं यण एव प्रवृत्त्या तेन बाधितत्वाद्बाधकाबाधित-प्रसंगाभावाद्गुणोऽनित्यः । उट् तु नित्य इति तस्यैव पूर्वं प्रवृत्त्या गुणाद्यणादेशोऽन्तरङ्गत्वाद् बलीयानिति भाष्यमुपपन्नमिति भावः ॥ १०५ ॥

प्राचीनमतस्यायुक्तत्वं सूचयन् भाष्यानुसारिणीं व्यवस्थामाह क्विश्चेति । भाष्यादिति । उक्तभाष्योदाहृते अन्तरङ्गबहिरङ्गयोर्युगपत्प्राप्तिस्थले निमित्तस्य सप्तम्यन्तपदबोध्यत्वादूनशब्दमाश्रित्येत्याद्युक्तं श्चेति भावः । उभयत्रापि । अन्तरङ्गबहिरङ्गपदघटकेनाङ्गशब्देनेत्यर्थः । शब्दात्मकमिति । शब्दात्मकमेव निमित्तं ग्राह्यं न तु संज्ञाद्यात्मकमिति-भावः । युगपत्प्राप्ताविति । जातबहिरङ्गस्यासिद्धत्वस्थले तु वाह ऊडिति ज्ञापकसाजात्यादन्तरङ्गपदघटके नैवाङ्गशब्देनोक्तविधं निमित्तं ग्राह्यमिति बोध्यम् ॥ १०६, १०७ ॥

एवं सति । संज्ञाकृतबहिरङ्गत्वानभ्युपगमे इत्यर्थः । पदत्वसापेक्ष इति । प्राचीनमते नलोपस्य पदसंज्ञासापेक्षत्वेन षटत्वे कर्तव्ये तस्य बहिरङ्गत्वेनासिद्धत्वान्न दोष इत्याशयेनेदम् । षडभावे = षट्संज्ञाया अभावे ॥ १०८ ॥

न षडिति । न षट्स्वस्रादिभ्य इति निषेधाप्राप्त्याऽदन्तत्वाट्टाप् स्यादित्यर्थः । लुक्सिद्धय इति । पञ्चेत्यत्र षड्भ्यो लुगिति जश्शसोर्लुगर्थपूर्वं विहितं यत् षट्त्वं तस्य नलोपोत्तरमानुमानिकादेशस्थानिवद्भावेनानयनादुक्तनिषेधसिद्धेः संज्ञाकृतबहिरङ्गत्वानाश्रयणेऽपि लक्ष्यसिद्धिर्निर्बाधेति भावः ॥ १०९ ॥

अन्तरङ्गं बहिरङ्गाद्बलीयः' इति परिभाषान्तरमिति प्राचीनमतं निरस्यति—

अस्याश्च वाह ऊडिति षष्ठाध्यायस्थमूट्पदं लिङ्गम् ।
तस्मादियमपि षाष्ठीत्यतस्त्रिपाद्यां न संचरति ॥१११॥
सिद्धे हि संप्रसारणमात्रविधानेन तस्य च गुणेन ।
वृद्ध्येकादेशेन च रूपे विश्वौह इत्यादौ ॥११२॥
तद्व्यर्थं सज्ज्ञापकमनया च गुणेऽन्तरङ्गविधौ ।
बहिरङ्गसंप्रसारणमसिद्धमिति तस्य सार्थक्यम् ॥११३॥
ऊडिदमिति स्वरस्तूभयत्र ह्रस्वस्य पाठतः सिध्येत् ।
अत इह दीर्घविधानं ज्ञापकमेत्येधतीति सूत्रे तु ॥११४॥

---

अनयैवेति। अनयाऽन्तरङ्गदृष्ट्या बहिरङ्गस्यासिद्धत्वप्रतिपादनात् तस्य दुर्बलत्वमर्थसिद्ध-मतस्तद्बोधनाय स्वतन्त्रं परिभाषान्तरमनावश्यकमिति भावः । किंचैनामाश्रित्य सा भाष्ये प्रत्याख्याता । अतः साऽतिरिक्तपरिभाषा न मन्तव्या ॥ ११० ॥

षाष्ठी = षष्ठाध्यायस्था । ज्ञाप्यस्य ज्ञापकदेशस्थत्वौचित्यात् । त्रिपाद्यां न संचरति त्रिपाद्या असिद्धत्वेन तत्रेयं न प्रवर्तत इत्यर्थः ॥ १११ ॥

ऊड्ग्रहणस्य ज्ञापकत्वमुपपादयति—सिद्ध इति । अन्तरङ्गपरिभाषाया अभावे 'वाहः' इत्येतावत्युक्तेऽपि वसोः संप्रसारणमिति सूत्रात्संप्रसारणपदानुवृत्त्या संप्रसारण-विधानेनैव विश्ववाह् अस् इत्यत्र वकारस्योकारादेशे पूर्वरूपे प्रत्ययलक्षणेन ण्विप्रत्यय-निमित्तके लघूपधगुणे वृद्धिरेचीत्यनेन वृद्धौ च विश्वौह इत्यादिरूपसिद्धिसंभवादूड्ग्रहणं व्यर्थं सदेनां ज्ञापयति। ज्ञापितायां चास्यामूड्ग्रहणस्य चारितार्थ्यं दर्शयति—अनया चेति। गुणेऽन्तरङ्गविधौ = अन्तरङ्गगुणशास्त्रदृष्ट्या, बहिरङ्गत्वेन संप्रसारणशास्त्रमसिद्धम्, अतो लघूपधगुणाप्रवृत्त्या इष्टरूपं न सिद्ध्येदतस्तदर्थमूड्ग्रहणमावश्यकमित्यर्थः ॥ ११२, ११३ ॥

नन्वूड्ग्रहणं न ज्ञापकं तस्य प्रष्ठौह इत्यादौ 'ऊडिदं पदाद्यप्पुरैद्युभ्य इति विभक्त्युदात्त-त्वार्थत्वात् संप्रसारणमात्रविधाने तदसिद्धेः। न च 'ऊठ्युपधाग्रहणं कर्तव्यमि'ति वार्तिकेन लक्षणप्रतिपदोक्तपरिभाषासहकारेण, उपधापदमुच्चार्य विहितादूठः परस्यैव स स्वर इति प्रष्ठौह इत्यादौ न तत्प्रवृत्तिः, किन्तु जूरा तूरेत्यादावेव तत्र ज्वरत्वरेति सूत्रेणोपधापदमुच्चार्योड्-विधानादिति वाच्यम्। 'उपधाग्रहणमन्त्यप्रतिषेधार्थम् अन्त्यस्य मा भूत् अक्षद्यूवे' इति भाष्येणान्त्यव्यावृत्तेरेवोपधाग्रहणप्रयोजनत्वावगमात् प्रष्ठौह इत्यादौ तत्प्रवृत्तेर्निर्बाधत्वात्। अत आह—ऊडिदमिति। उभयत्र = वाह ऊडित्यत्र ऊडिदं पदादीत्यत्र च। नन्वेत्येध-

ह्रस्वस्योठः पाठेऽवः क्विप्यूरिह जनौरिति न सिध्येत् ।
ज्ञापकपरभाष्याच्चानभिधानं प्रौह इत्यादेः ॥ ११५ ॥

वार्यूहेत्यादीनां सिद्धिस्तूहेः क्विपि ज्ञेया ।
वाच्यार्थसङ्गतिश्चानेकार्थतयैव धातूनाम् ॥ ११६ ॥

एतत्परिभाषोपस्थितिलिङ्गं चान्तरङ्गशास्त्रत्वम् ।
तच्छास्त्रं प्रत्येषा वहिरङ्गविधेरसत्त्वमाचष्टे ॥ ११७ ॥

त्रैपादिकान्तरङ्गं त्वसिद्धमस्यामतो न तत्रेयम् ।
यस्मै बोधयितव्यं तदभावे बोधनायोगात् ॥ ११८ ॥

सापादिकेऽन्तरङ्गे बहिरङ्गे च त्रिपादीस्थे ।
अस्याः प्रवृत्तिरव्याहताऽन्तरङ्गस्य सिद्धत्वात् ॥ ११९ ॥

---

स्यूठ्सु, इत्यत्रापि ह्रस्व एवोकारः पठ्यतां ततश्च दीर्घग्रहणं ज्ञापितेप्यचरितार्थमित्याशङ्कायामाह—एत्येधतीत्यादि । तत्र ह्रस्वपाठे अवतीति ऊः, जनस्य ऊः जनौः अत्र वृद्धिर्न सिध्येत् । अतो दीर्घपाठ आवश्यकः । ननु पुगन्तेति सूत्रे निमित्तमिको विशेषणम्, अत एव भिनत्तीत्यादाविकः सार्वधातुकाव्यवहितपूर्वत्वाभावान्न गुणः । एवं च नाजानन्तर्यं इति निषेधाद्, विश्वौह इत्यत्रान्तरङ्गपरिभाषाप्रवृत्तिर्न स्यादिति चेन्न । पुक्यन्तो लघ्वी उपधेति समासाश्रयणेन निमित्तस्य चाङ्गविशेषणत्वेन प्रत्ययपराङ्गावयवलघूपधारूपेको गुणविधानेन भिनत्तीत्यादौ दोषाभावान्निमित्तस्येग्विशेषणत्वानङ्गीकारान्नाजानन्तर्यंपरिभाषाया अप्रवृत्तेः । ननूड्ग्रहणाभावे संप्रसारणमात्रविधाने, अकारान्तोपसर्गात्परस्य ण्व्यन्तस्य विजन्तस्य वा वाहो वकारस्य संप्रसारणे लघूपधगुणे च, एङि पररूपमिति पररूपापत्त्या प्रौह इत्यादि न सिध्येत् । अनकारान्तोपपदे वार्यूह इत्यादावूकारश्रवणं च न स्यादतस्तदर्थमूड्ग्रहणमावश्यकमतो न परिभाषाज्ञापकमित्याशङ्कायामाह—ज्ञापकेत्यादि ॥ ११४, ११५, ११६ ॥

तच्छास्त्रं प्रतीति । अन्तरङ्गशास्त्र उपस्थितेयं, तच्छास्त्रं प्रति, बहिरङ्गशास्त्रं नास्तीति जानीहि, इति बोधयतीत्यर्थः ॥ ११७ ॥

अन्तरङ्गशास्त्रत्वस्यैतदुपस्थितिलिङ्गत्वादन्तरङ्गशास्त्रस्य त्रैपादिकत्व इयं न प्रवर्तेत इत्याह—त्रैपादिकेति । बोधनायोगात् = बोधनासम्भवात् ॥ ११८, ११९ ॥

तेनागच्छ पयोऽडित्यादौ कार्ये हि रोरुत्वे ।
त्रैपादिकः प्लुतो बहिरङ्गासिद्धस्ततो भवत्युत्वम् ॥ १२० ॥
अपि कार्यकालपक्षे नेयं त्रैपादिकान्तरङ्गेषु ।
पूर्वत्रासिद्धतया तदपेक्षं नेतरस्य हि बहिष्ट्वम् ॥ १२१ ॥
नन्वनया बहिरङ्गं पूर्वमसिद्धं ततश्च तदभावात् ।
पूर्वत्रेति न शक्या परशास्त्रासिद्धता वक्तुम् ॥ १२२ ॥
मैवं विनिगमनाया विरहात्कस्यापि न प्रवृत्तिः स्यात् ।
युक्तः प्रत्यक्षेण च सूत्रेण निरोध आनुमानिक्याः ॥ १२३ ॥

---

सापादिकान्तरङ्गं प्रति त्रैपादिकस्य बहिरङ्गत्वप्रयुक्तासिद्धत्वोदाहरणमाह—**तेनेति**। पयस्यटतीति पयोऽट् । आगच्छ हे पयोऽट्, अत्र पयर् अट् इत्यवस्थायां दूराद्धूते चेत्यनेन विहितस्त्रैपादिको वाक्यस्य टेः प्लुतः संबोधनार्थकवाक्यनिमित्तकत्वेन बहिरङ्गो वाक्यान्तर्गतनिमित्तकेऽन्तरङ्गे, अतो रोरप्लुतादप्लुत इति रोरुत्वे कर्तव्येऽसिद्धस्तेनोत्वं सिध्यति । एवमागच्छ हे पयोद इत्यत्र पयर् द इति स्थिते संयोगात्पूर्वस्याकारस्य गुरोरनृत इति यः प्लुतस्तस्यासिद्धत्वाद्धशि चेत्युत्वं सिध्यति । पूर्वत्रासिद्धमित्यनेन तु प्लुतस्य नासिद्धत्वम् । अप्लुतादप्लुत इत्युक्तिसामर्थ्येन तस्यात्राप्रवृत्तेः ॥ १२० ॥

यथोद्देशपक्षे षाष्ठीमन्तरङ्गपरिभाषां प्रति त्रिपाद्या असिद्धत्वात्तत्रास्या अप्रवृत्तावपि, कार्यकालपक्षे परिभाषाणां विधिदेशस्थतया पूर्वत्वाभावेन पूर्वत्रासिद्धमित्यस्याप्रवृत्त्या तां प्रति त्रैपादिकशास्त्राणां सिद्धत्वात्त्रिपाद्यामपि प्रवृत्तिं भवत्येवेति प्राचीनमतमपाकरोति—**अपि कार्यकालपक्ष इति**। तत्पक्षे त्रैपादिकस्यान्तरङ्गस्य परिभाषां प्रत्यसिद्धत्वाभावेऽपि सापादिकबहिरङ्गशास्त्रं प्रति त्रैपादिकस्यान्तरङ्गशास्त्रस्य पूर्वत्रासिद्धमित्यनेनासिद्धत्वादन्तरङ्गाभावेन तन्निरूपितबहिरङ्गत्वमपि सापादिकेन भवति । खरवसानयोरिति सूत्रे भाष्ये—'अन्तरङ्गं बहिरङ्गमिति प्रतिद्वन्द्वभाविनावेतौ पक्षौ, सत्यन्तरङ्गे बहिरङ्गं सति च बहिरङ्गे अन्तरङ्गं भवति' इति प्रतिपादनात् अतः कार्यकालपक्षेऽप्यस्यास्त्रिपाद्यां न प्रवृत्तिरिति भावः ॥ १२१ ॥

प्राचीनमतवाद्याशङ्कते—**नन्विति**। पूर्वत्रासिद्धमित्यस्य प्रवृत्तेः प्रागेवान्तरङ्गपरिभाषया त्रैपादिकान्तरङ्गदृष्ट्या सापादिकस्य बहिरङ्गस्यासिद्धत्वं प्रतिपाद्यतां, तदानीमन्तरङ्गस्यासिद्धत्वाभावात् । न च पश्चात्प्रवृत्तेन पूर्वत्रासिद्धमित्यनेन परिभाषाबोधितार्थस्याप्रामाण्यं भविष्यतीति शङ्क्यम् । अन्तरङ्गत्रैपादिकैकवाक्यताऽऽपन्नस्य पूर्वत्रासिद्धमित्यस्याप्यन्तरङ्गत्वेन परिभाषया तद्दृष्ट्याऽपि पूर्वस्यासिद्धत्वबोधनात्पूर्वाभावेन तदप्रवृत्तेरिति भावः । **पूर्वत्रेति** = पूर्वत्रासिद्धमित्यनेन ॥ १२२ ॥

उक्ताशङ्कां निराकरोति—**मैवमिति**। विनिगमनाया विरहात् = असिद्धं बहिरङ्ग-

अत एव नार्कुटादिषु विसर्गमाशङ्क्य कार्यकालेऽपि ।
बहिरङ्गलक्षणत्वादिति परिहारो निराकृतो भाष्ये ॥ १२४ ॥

अत एव च काक्यर्थं निगाल्यते चैत्रमादिसिद्ध्यर्थम् ।
वार्तिककारेण वचनमारब्धं तस्य दोष इत्यादि ॥ १२५ ॥

समकालप्राप्तिकमपि बहिरङ्गमसिद्धमित्यंशे ।
ओमाङोश्चेत्यस्मिन्नाङ्ग्रहणं लिङ्गमन्यथा ह्यफलम् ॥ १२६ ॥

---

मन्तरङ्गे, पूर्वत्रासिद्ध मित्यनयोर्मध्ये कतरस्य पूर्वप्रवृत्तिरित्यत्र नियामकाभावादित्यर्थः । वस्तुतोऽस्त्येव नियामकमित्याह—युक्त इति । प्रत्यक्षश्रुतेन पूर्वत्रासिद्धमित्यनेनैव आनुमानिक्या = अनुमानसिद्धाया अन्तरङ्गपरिभाषाया निरोधो बाधः, तदपेक्षया स्वस्य पूर्वप्रवृत्तिरूपो युक्त इत्यर्थः ॥ १२३ ॥

अत एव = कार्यकालपक्षेऽपि त्रिपाद्यामस्या अप्रवृत्तेरेव । नार्कुटादिष्विति । नृकुट्यां भवो नार्कुटः । नृपत्येरपत्यं नार्पत्यः । अत्र रेफस्य पदान्तत्वेन विसर्जनीयापत्तिस्तद्वारणाय "खरवसानयो र्विसर्जनीयः" (८।३।१५) इति सूत्रे भाष्ये विसर्जनीयोऽनुत्तरपद इति वार्तिकमुपन्यस्य, न वा बहिरङ्गलक्षणत्वादिति तस्यावक्तव्यत्वं प्रतिपाद्य, 'नैष युक्तः परिहारः अन्तरङ्गं बहिरङ्गमिति प्रतिद्वन्द्वभाविनावेतौ पक्षौ सत्यन्तरङ्गे बहिरङ्गं सति च बहिरङ्गे अन्तरङ्गम्' इत्यादिना यथोद्देशपक्षावलम्बनेनोक्तपरिहारस्यायुक्ततां प्रतिपाद्य, अन्ते कार्यकालपक्षेऽप्युपदर्शितयुक्त्याश्रयेण, अतोऽयुक्तः परिहारो न वा बहिरङ्गलक्षणत्वादित्युपसंहृतम् । तेनायमेव भाष्यसिद्धान्त इति भावः ॥ १२४ ॥

अत एव चेति—। त्रिपाद्यामस्याः सर्वथाऽप्रवृत्तेरेव, "न पदान्त" (१।१।५७) इति सूत्रे भाष्ये वार्तिककृता पूर्वत्रासिद्धेन स्थानिवदिति प्रतिसिद्धस्य स्थानिवद्भावस्य प्रतिप्रसवार्थं "तस्य दोषः संयोगादिलोपलत्वणत्वेषु" इति वार्तिकमारब्धं, तच्च भाष्यकृता न प्रत्याख्यातम् । तेन काक्यर्थं वास्यर्थमित्यादौ यणादेशस्य, निगार्यते निगाल्यत इत्यादौ णिलोपस्य, माषवपनी व्रीहिवपनीत्यादौ यस्येतिचेत्यकारलोपस्य च स्थानिवद्भावेनोक्तरूपेषु यथाक्रमं स्कोरिति संयोगादिलोपाभावः अचिविभाषेति वैकल्पिकलत्वं, प्रातिपदिकान्तनुम्विभक्तिषु चेति णत्वाभावश्चेति सिद्धानि । कार्यकालपक्षे त्रिपाद्यां प्रकृतपरिभाषाप्रवृत्तौ त्वनयैवोक्तकार्यसिद्धेस्तद्वैयर्थ्यं स्पष्टमिति भावः ॥ १२५ ॥

वाह ऊडित्यूड्ग्रहणरूपज्ञापकसाजात्यादियं जातबहिरङ्गस्यैवासिद्धत्वबोधिका न तु समकालप्राप्तबहिरङ्गस्येति भ्रममपाकर्तुं तदंशेऽपि मानमाह—समकालेत्यादिना ॥ १२६ ॥

पूर्वं सवर्णदीर्घेऽथ गुणे सिद्धेः शिवेह्यादेः ।
अनयाऽन्तरङ्गभावाद् गुण एव प्रागतश्च तत् सफलम् ॥ १२७ ॥
एहीत्यनुकरणस्य तु शिवादियोगे न पररूपम् ।
ज्ञापकपरभाष्यबलात्तेनाङ्ग्रहणं न हि तदर्थम् ॥ १२८ ॥
साधनकार्ये जाते ह्युपसर्गेणैव युज्यते धातुः ।
पश्चात्पदान्तरेण तु तेन गुणस्यान्तरङ्गत्वम् ॥ १२९ ॥

---

वैयर्थ्यमेवोपपादयति—पूर्वमिति । शिव आ इहीत्यत्र—गुणापेक्षया परत्वात्पूर्वं सवर्णदीर्घे तदुत्तरं गुणेन शिवेहीत्यादिसिद्धेराङ्ग्रहणं व्यर्थं स्यादतस्तदुक्तार्थज्ञापकमित्यर्थः । ज्ञापिते चारितार्थ्यमाह—अनयेति । वक्ष्यमाणरीत्या गुणस्यान्तरङ्गत्वेन बहिरङ्गं सवर्णदीर्घं बाधित्वा तस्मिन्प्रवृत्ते तत्र परे वृद्धिरेचीत्यनेन वृद्धौ प्राप्तायां तदपवादपररूपसाधनेनाङ्ग्रहणं चरितार्थमिति भावः । सवर्णदीर्घस्य गुणापवादत्वेऽपि, अन्तरङ्गबहिरङ्गभावाविषये दैत्यारिरित्यादौ चरितार्थत्वात्, 'अपवादो यद्यन्यत्र चरितार्थस्तर्ह्यन्तरङ्गेण बाध्यते' इति परिभाषया प्रकृतेऽन्तरङ्गेण गुणेन तद्बाधो भवत्येवेति बोध्यम् ॥ १२७ ॥

समकालप्राप्तबहिरङ्गाभावस्थले पररूपविधानेनाङ्ग्रहणस्य चारितार्थ्यान्न ज्ञापकत्वमित्याशङ्कामपाकरोति—एहीत्यादिना । एहीत्यनुकार्यघटक एकारे पूर्वान्तवद्भावेनानीतमाङ्त्वं तदनुकरणघटक एकारे प्रकृतिवदनुकरणमित्यनेनातिदिश्य तस्य शिवादिशब्दयोगे ओमाङोश्चेत्यस्य प्रवृत्तिर्नैव भवति आङ्ग्रहणस्योक्तार्थज्ञापकताप्रतिपादकभाष्यप्रामाण्यात् । अतस्तत्राङ्ग्रहणं न चरितार्थम् ॥ १२८ ॥

ननु शिवेहीत्यत्र पदद्वयसंबन्धिवर्णद्वयापेक्षत्वं दीर्घगुणयोस्तुल्यं पूर्वोपस्थितनिमित्तकत्वं प्रत्युत दीर्घस्यैवेति गुणस्य दीर्घापेक्षयाऽन्तरङ्गत्वं कथं तत्राह—साधनेत्यादि । कर्त्रादिकारकबोधकप्रत्ययोत्पत्त्यनन्तरं पूर्वं धातुरुपसर्गेणैव युज्यते, पश्चादुपसर्गविशिष्टस्य तस्य पदान्तरेण योगो भवति । एवं च शिवेहीत्यादौ गुणस्यैवान्तरङ्गत्वं तन्निमित्तस्य बुद्धौ प्रथमोपस्थितत्वात् । न चाचः परस्मिन्निति सूत्रं भाष्योदाहृते पट्व्येत्यादौ पूर्वयण्निमित्तस्य ईकारस्येव प्रकृते सवर्णदीर्घनिमित्तस्याकारस्य पूर्वोच्चारितत्वेन दीर्घस्याप्यन्तरङ्गत्वमतो नोक्तव्यवस्थासिद्धिरिति चेन्न । तत्रापि स्वार्थद्रव्यादिपदार्थोपस्थितिक्रमानुसारेण तद्बोधकशब्दप्रादुर्भावस्य तत्क्रमेणैव च तत्तत्कार्यप्रवृत्तेर्भाष्ये प्रतिपादितत्वेनोपस्थितिक्रमस्यैव ग्राह्यत्वात् आङ्ग्रहणस्य परिभाषाज्ञापकतां प्रतिपादयतो भाष्यस्य प्रामाण्येन निमित्तानामेकपदघटकत्व एव पूर्वोच्चारितनिमित्तकत्वस्यान्तरङ्गताप्रयोजकत्वाभ्युपगमाच्च । प्रकृते दीर्घगुणयोर्निमित्तानां भिन्नपदघटकत्वेन दीर्घस्यान्तरङ्गत्वं नेति बोध्यम् ॥ १२९ ॥

यत्तु वदन्ति प्रागुपसर्गेण सहैव युज्यते धातुः ।
पश्चात्कर्त्राद्यात्मकसाधनसम्बन्धिकार्येण ॥ १३० ॥

अनुभूयत इत्यादौ सिध्यत्यत एव कर्मणि लकारः ।
तन्न क्रिया हि साधनसाकाङ्क्षा कारकात्क्रियोत्पत्तेः ॥ १३१ ॥

तेन च पूर्वं साधनकार्ये सति निश्चितक्रियाबोधे ।
पश्चात्क्रियान्वयकृतोपसर्गयोगस्य योग्यत्वात् ॥ १३२ ॥

उपसर्गद्योत्यार्थोऽपि धातुनैवाभिधीयते तेन ।
अनुभूयत इत्यादिषु सिद्धाः कर्मणि लकाराद्याः ॥ १३३ ॥

---

उक्तस्थले धातूपसर्गनिमित्तककार्यस्यान्तरङ्गत्वप्रतिपादनात्, 'पूर्वं धातुरुपसर्गेण युज्यते पश्चात्साधनेन, धातूपसर्गयोः कार्यमन्तरङ्गमिति' प्राचीनमतं नागेशादिनवीनैरप्यङ्गीक्रियत इति भ्रान्तिनिरासाय प्राचीनमतमनूद्य दूषयति—यत्त्वित्यादिना । उपसर्गेण = उपसर्गसंज्ञकशब्देन । साधनेनेत्यस्यार्थमाह—कर्त्रादीति । कर्त्रादिकारकप्रयुक्तकार्येण लकारादिनेत्यर्थः ॥ १३० ॥

पूर्वं धातुरुपसर्गेण युज्यत इत्यस्य प्राचीनाभिमतं फलमाह—अनुभूयत इति । भूधातोरकर्मकत्वादनूपसर्गयोगे सत्येव ज्ञानार्थकत्वेन सकर्मकत्वं तस्मिन्सत्येव च कर्मणि लकारादिसिद्धिरिति तदभिप्रायः । उक्तमतं निराकरोति—तन्नेति । साधनसाकाङ्क्षेति । साध्यत्वमेव हि क्रियायाः स्वरूपं साध्यस्य च साधनाकाङ्क्षा नियता, कारकादेव क्रियोत्पत्तेरिति भावः ॥ १३१ ॥

तेन चेति—क्रियायाः साधनाकाङ्क्षत्वेन साधनसंबन्धोत्तरमेव निश्चितक्रियाबोधसंभवात् पूर्वं कर्त्रादिकारकप्रयुक्ततत्तत्प्रत्ययरूपे कार्ये सत्येव निश्चितक्रियाबोधस्तदुत्तरम्, उपसर्गाः क्रियायोग इति सूत्रानुसारेण क्रियायामन्वयेन कृता उपसर्गसंज्ञा यस्य एवंभूतोपसर्गसंज्ञकशब्दसंबन्धस्यौचित्यात् पूर्वं धातुः साधनेन युज्यत इत्येव मन्तव्यमिति भावः ॥ १३२ ॥

पूर्वं धातुः साधनेन युज्यत इत्यङ्गीकारेऽप्यनुभूयत इत्यादौ कर्मणि लकारसिद्धिरव्याहतैवेत्याह—उपसर्गेति । उपसर्गद्योत्यार्थेऽपि धातोः शक्तिरस्ति । तेनानुभूयत इत्यादावनुयोगात्प्रागपि भूधातोरनुभवार्थवाचकत्वेन ततः कर्मणि लकाराणां कृत्यादिप्रत्ययानां च सिद्धिर्निर्बाधेत्यर्थः ॥ १३३ ॥

ज्ञानार्थं तात्पर्यं ग्राहयितुमनुः प्रयुज्यते पश्चात् ।
उपसर्गार्थश्चैवं धात्वर्थान्तर्गतोऽन्तरङ्गतरः ॥ १३४ ॥

एवं च तत्प्रयुक्तं कार्यं साधनप्रयुक्तकार्यात्प्राक् ।
अत एव भूषणे सुट् द्वित्वात्प्राक् संकृतीत्यवस्थायाम् ॥ १३५ ॥

उपसर्गसंज्ञशब्दाश्रितात्तु साधननिमित्तकं पूर्वम् ।
अत एव प्रत्येति प्रत्यय इत्यादिसंसिद्धिः ॥ १३६ ॥

णेरध्ययन इति च निर्देशः सौत्रोऽत उपपन्नः ।
प्रेद्ध इतीह गुणो बहिरङ्ग इति च भाष्यमुपपन्नम् ॥ १३७ ॥

जातासिद्धत्वस्य च फलं पचावेदमित्यत्र ।
एकारः पदयुग्माश्रयादसिद्धोऽत एत ऐ नेति ॥ १३८ ॥

---

उपसर्गप्रयोगस्य प्रयोजनमाह—ज्ञानार्थं इति । प्रयोक्तुर्ज्ञानार्थे तात्पर्यमिति श्रोतारं बोधयितुमनुः पश्चात्प्रयुज्यत इत्यर्थः ॥ उपसर्गार्थश्चेति— । उक्तरीत्योपसर्गार्थो धातुवाच्यत्वेन शीघ्रोपस्थितिकतयाऽन्तरङ्गतरः । अत उपसर्गार्थनिमित्तकं कार्यं कर्त्रादि-साधनबोधकलकारादिनिमित्तककार्यात्प्रागेव भवति । तेन संचस्कारेत्यादौ संपरिभ्यां करोतौ भूषण इति भूषणरूपार्थनिमित्तकः सुट् संकृति इत्यवस्थायां कर्तृबोधकलिण्निमि-त्तकद्वित्वात्प्रागेव भवतीत्यर्थः ॥ १३४, १३५ ॥

प्रत्येति प्रत्यय इति । अत्र पूर्वमुपसर्गयोगे द्वयोरिकारयोर्दीर्घैकादेशे तदुत्तरं गुणे प्रतयेति, प्रतय इत्याद्यनिष्टरूपापत्तिः । साधनबोधकप्रत्ययनिमित्तकगुणोत्तरमुपसर्ग-कारस्य सन्धिकार्येणैवेष्टसिद्धिरिति भावः ॥ १३६ ॥

णेरिति । णेरध्ययने वृत्तमिति सूत्रेऽध्ययन इति निर्देशोऽत एवोपपन्न इत्यर्थः । प्रेद्ध इति । "न धातुलोप आर्धधातुके" ( १।१।४ ) इति सूत्रे भाष्ये आर्धधातुक-निमित्ते धातुलोपे सति ये गुणवृद्धी प्राप्नुतस्ते न भवत इत्यर्थे प्रेद्ध उपेद्ध इत्यादौ गुणो न स्यादित्याशंक्य "बहिरङ्गो गुणोऽन्तरङ्गः प्रतिषेधः । असिद्धं बहिरङ्गमन्तरङ्गे" इति समाहितं तदपि पूर्वं धातुः साधनेन युज्यते पश्चादुपसर्गेणेत्यङ्गीकार एवोपपद्यत इति भावः ॥ १३७ ॥

एवमुभयविधबहिरङ्गासिद्धत्वे प्रमाणं निरूप्येदानीं तत्फलं निरूपयति —जातेत्या-दिना । पचावेदमिति । पचाव इदम् अत्र गुणैकादेशे तस्य पूर्वान्तवद्भावेन लोडुत्त-

इत ऐ इति पठनेनात्मनेपदपदानुवृत्त्या वा।
तद्वारणे तु तत्राम् न भवत्यामेत इत्यमुष्य फलम् ॥ १३९ ॥

प्रतिपदविहितैद्ग्रहणादनुवृत्त्या चात्मनेपदपदस्य।
तन्नेति चेत् स्वयंभ्वित्याचारक्व्यन्ततो घञर्थे के ॥ १४० ॥

रूपं स्वयंभुव इहच्छ्वोरित्यूड् नेति तस्य फलम्।
नावेति समासात् क्विपि णिचि नावयतीह नोडिति च बोध्यम् ॥१४१॥

---

मसंबन्धित्वात्, "एत ऐ" इत्यैकारादेशः प्राप्नोति। स चान्तरङ्गे तस्मिन्कर्तव्ये पदद्वयसंबन्धिवर्णद्वयापेक्षत्वेन बहिरङ्गस्य गुणस्यासिद्धत्वान्न भवतीति जातबहिरङ्गासिद्धत्वस्य भाष्योदाहृतं फलम् ॥ १३८ ॥

यथास्थितन्यासे उक्तफलसम्भवेऽपि न्यासान्तराश्रयणादिना तत्र दोषनिवारणसंभवादाह—इत ऐ इत्यादि। पठनेन = न्यासेन। एवं न्यासे भवानीत्यादावैकारादेशापत्तिस्तु नाशङ्क्या। एरुरित्युत्वस्येव ऐत्वस्यापि मेर्निरित्यनेन तक्रकौण्डिन्यन्यायेन बाधादिति बोध्यम्। तत्र = पचावेदमित्यत्र। अमुष्य = जातबहिरङ्गासिद्धत्वस्य ॥१३९॥

प्रतिपदेति। आमेत इत्यत्रैकारस्य लक्षणप्रतिपदोक्तपरिभाषया प्रतिपदोक्तस्यैव ग्रहणात्तत्रात्मनेपदानामित्यस्यानुवृत्त्या च पचावेदमित्यत्रामादेशस्याप्राप्त्या तन्न फलम्। एवम् एधस्व पचस्वेति सततं यत्राभिधीयत इत्यर्थे आख्यातमाख्यातेनेति समासे ततश्चतुर्थीबहुवचने बहुवचने झल्येदित्येत्वे एधस्वपचस्वेभ्य इत्यत्रैकारस्य प्रतिपदोक्तत्वेऽप्यात्मनेपदमुच्चार्य विहितस्य लोट एकारस्याम् इत्यर्थेनामादेशवारणसंभवात्तदपि न फलमिति बोध्यम्। एवमितरफलानामप्यन्यथा सिद्धत्वं भूतिविजययोः प्रपञ्चितं तत्तत एवावधार्यम्। **स्वयंभ्विति**। स्वयंभूशब्दादाचारक्विबन्ताद् घञर्थे कप्रत्यये स्वयं भुव इत्यत्र वकारस्य च्छ्वोरित्यूडादेशः प्राप्नोति। स च तद्दृष्ट्या उवङो बहिरङ्गत्वेनासिद्धत्वान्न भवति। स्वयंभुवावित्यादौ विभक्तिनिमित्तकोवङ्वकारस्योड्वारणं तु नास्य फलम्। च्छ्वोरित्यत्र छकारसाहचर्याद् विभक्त्यनिमित्तकस्यैव वकारस्य ग्रहणेन तत्र तदप्राप्तेः। न चच्छकारसाहचर्यात्प्रत्ययानिमित्तकस्य वकारस्य ग्रहणेन स्वयंभुव इत्यत्राप्यूठोऽप्राप्त्या तदपि न फलमिति वाच्यम्। इषधातोः कर्तृक्विबन्तप्रकृतिकाचारक्विबन्ताल्लटि तिपि शपि इषगमीतिशब्निमित्तकच्छत्वे इच्छतीत्यत्र प्रत्ययलक्षणेन क्विपमादाय शत्वप्रवृत्तिसंभवात्तादृशसाहचर्यस्य वक्तुमशक्यत्वात्। उक्तस्थले इच्छतीत्यत्र छत्वस्यासिद्धत्वेन शत्वं नेत्यपि जातबहिरङ्गासिद्धत्वस्य फलं ज्ञेयम्। **नावेति**। नौश्चासावश्चेति नावः संसारसागरतारको भगवान् वासुदेवः। नावशब्दा-

समकालप्राप्तस्यासिद्धत्वाद्रियति पियतीति ।
एवमसुस्रुवदयजे इन्द्रं पट्व्या तथा मृद्व्या ॥ १४२ ॥
एष्वाद्यत्रितये खलु लघूपधगुणादियङुवङोः ।
तुर्ये गुणस्य दीर्घादन्त्यद्वितये पराद्यणः प्राचः ॥ १४३ ॥
अस्त्यन्तरङ्गताऽतोऽन्तरङ्गशास्त्रं प्रवर्तते पूर्वम् ।
तेनेष्टरूपसिद्धिर्भवतीत्युपदर्शितं भाष्ये ॥ १४४ ॥

---

दाचारक्विपि ततो हेतुमण्णिचि अल्लोपे नावयतीति रूपम् । तत्रान्तर्वर्तिक्विपमादाय प्राप्त-ऊङ्, जातस्य बहिरङ्गस्यावादेशस्यासिद्धत्वान्न भवतीत्यपि फलं बोध्यमित्यर्थः । ऊठि कर्तव्येऽल्लोपस्य स्थानिवत्त्वं तु नाशंक्यम् । नपदान्तेति क्वौ विधिं प्रतीति वा तन्निषेधात् । इदमुपलक्षणम् । दीङो घञर्थे के दियशब्दादाचारक्विबन्ताण्णौ दिययती-त्यादौ क्विब्वकारमादाय प्राप्तस्य लोपो व्योर्वलीति यलोपस्याभाव इत्याद्यपि फलं ज्ञेयम् ॥ १४०, १४१ ॥

समकालप्राप्तबहिरङ्गासिद्धत्वस्य भाष्योक्तानि फलान्युपनिबध्नाति—**समकाले-त्यादिना** ॥ १४२ ॥

**आद्यत्रितय इति** । तौदादिकाभ्यां रिपि इत्याभ्यां लटि तिपि शविकरणे 'रि अति', इति स्थितौ 'अचिश्नु—' इतीयङ्, लघूपधगुणश्च प्राप्नोति । स्रुधातोर्लुङि णिश्रिद्रुस्रुभ्य इति चङि असुस्रु अत् इत्यत्रोवङ्, लघूपधगुणश्च प्राप्नोति । तत्रेयङुवङोः पूर्वोपस्थित-निमित्तकत्वेनान्तरङ्गत्वाद्गुणं बाधित्वा तावेव भवतः । न च येन नाव्यवधानमिति न्यायेन युगन्तसाहचर्येण चार्धमात्रिकहल्वर्णव्यवधानस्यैव सहनेन मात्रिकाकारव्यवधाने लघूपधगुणाप्राप्त्या नैतानि फलानि युक्तानीति वाच्यम् । एतदुदाहरणपरभाष्यप्रामाण्येन तादृशसाहचर्याश्रयणस्यायुक्तत्वादेकमात्रिकवर्णव्यवधानेऽपि गुणप्रवृत्तेः स्वीकर्तव्यत्वात् । अत एव भीधातोर्घञर्थे के भियशब्दाचारक्विबन्तात् कर्तरि क्विप्यल्लोपयलोपयोर्भीशब्दा-त्पुनराचारक्विबन्ताल्लटि तिपि शपि भयतीत्यादि सिध्यति । तत्राल्लोपस्य स्थानिवद्भावेना-कारव्यवधानात्सार्वधातुकार्धधातुकयोरिति गुणस्य न प्राप्तिः । उक्तस्थानिवत्त्वे लघूपधत्वे-नैव गुणसिद्धिः । न च रियतीत्यादौ सत्यपि गुणे तस्य जातबहिरङ्गत्वेनासिद्धत्वादिकारा-दिबुद्ध्या इयङादेशसौलभ्यात्तेषां नैतत्फलत्वं युक्तमिति वाच्यम् । नाजानन्तर्य इति निषेधात् । **तुर्य इति** । अयज इ इन्द्रमिति स्थिते सवर्णदीर्घापेक्षया आद्गुणस्य पूर्वो-पस्थितनिमित्तकत्वेनान्तरङ्गत्वाद्गुण एव भवति । **अन्त्येति** । पट्व्या मृद्व्येत्यनयोः परयणादेशापेक्षया पूर्वयणादेशस्य पूर्वोपस्थितनिमित्तकत्वेनान्तरङ्गत्वात्पूर्वयणादेश एवादौ

तुर्ये पदसंस्काराश्रयणाच्च गुणस्य नित्यत्वात् ।
संभवति सिद्धिरेवं क्रमिकान्वाख्यानतोऽन्तिमद्वितये ॥ १४५ ॥
कश्चाश्चेशश्चेति त्रिपदद्वन्द्वे गुणं हि नित्यमपि ।
हित्वाऽन्तरङ्गभावाद्दीर्घेऽथ गुणे च केशपदसिद्धिः ॥ १४६ ॥
उच्छत्यादौ च गुणात्पूर्वं तुक्यन्तरङ्गभावेन ।
जाते लघूपधत्वाभावात्खलु न गुण इत्यादि ॥ १४७ ॥

---

भवति । अन्यथा पट्वयेत्याद्यापत्तिः स्यात् । भाष्ये—। विप्रतिषेधसूत्रे अचः परस्मिन्निति सूत्रे च भाष्ये ॥ १४३, १४४ ॥

अयजे इन्द्रमित्यादिफलानामन्यथासिद्धत्वं दर्शयति—तुर्ये इति । अयजे इन्द्रमित्यत्र वाक्यसंस्कारपक्षाश्रयण एव गुणदीर्घयोर्युगपत्प्राप्त्याऽन्तरङ्गबहिरङ्गभावविचारापेक्षा जायते । परन्तु तत्र लक्ष्यानुरोधात्पदसंस्कारपक्ष एवाश्रयणीयः। ततश्च गुणप्रवृत्तिसमये दीर्घस्याप्राप्त्या गुणप्रवृत्तिर्निष्प्रत्यूहा । किञ्च तत्र गुणस्य कृताकृतप्रसङ्गित्वेन नित्यत्वादेव तत्सिद्धिः । अतस्तन्न फलम् । पट्व्या मृद्व्येत्यनयोः पदावधिकान्वाख्यान एव शब्द परविप्रतिषेधेन परयणादेशस्य पूर्वप्रवृत्तौ दोषः प्रसज्यते । परन्तु तत्र क्रमिकान्वाख्याने प्रथमं ङ्यन्तं पट्वीत्यादि साधयित्वा ततस्तृतीया क्रियतेऽतश्च द्वयोः समकालप्राप्तिर्नास्ति । पदावधिकान्वाख्यानेऽपि च परयणादेशोत्तरं तस्य स्थानिवद्भावेन पूर्वयणप्रवृत्तिः संभवत्यतस्तदपि न फलमिति भावः ॥ १४५ ॥

फलान्तरमाह—कश्चेति । कश्च अश्च ईशश्चेति पदत्रयस्य द्वन्द्वे "क अ ईश" इति स्थिते नित्यमपि गुणं बाधित्वाऽन्तरङ्गत्वेन पूर्वं सवर्णदीर्घे ततो गुणे केशा इति सिध्यति । पूर्वं गुणे तु वृद्धया केशा इत्यनिष्टरूपमापद्येत । यत्त्वत्रापवादत्वेन गुणं बाधित्वा सवर्णदीर्घसिद्धेर्नेदं समकालप्राप्तिकबहिरङ्गासिद्धत्वस्य फलमित्याहुस्तन्न । अकारद्वयनिमित्तकगुणं प्रति सवर्णदीर्घस्यापवादत्वेऽप्यकारेकारनिमित्तकगुणं प्रति तस्य तथात्वाभावात् ॥ १४६ ॥

अन्यदपि फलमाह—उच्छत्यादाविति । उछी विवास इति भौवादिकस्य उच्छतीति रूपम् । वार्णादाङ्गं बलीय इत्यस्यास्तु नात्र प्रवृत्तिः । आङ्गवार्णयोः समानस्थानिकतायामेव तत्प्रवृत्तेः । एवम् अनिभयमित्यादौ अभी अम् इति स्थिते परमपि गुणं बाधित्वा श्लुनिमित्तकं द्वित्वमेवान्तरङ्गत्वात्पूर्वं प्रवर्तते । तेनाभ्यासे इकारश्रवणं भवति । जक्षति बप्सतीत्यादौ च परमप्युपधालोपं बाधित्वाऽन्तरङ्गत्वात् श्लाविति द्वित्वं भवति । पूर्वमुपधालोपे त्वनच्कत्वाद् द्वित्वं न सिध्येदिति दिक् ॥ १४७ ॥

ननु रियतीत्यत्र तथाऽसुस्नुवदत्रेयङादिकनिमित्तम् ।
श्चङोरः स न गुणविधिगतसप्तम्यन्तबोध्यघटकोऽस्ति ॥ १४८॥
नाप्यपरनिमित्तकृता कार्यस्यातोऽन्तरङ्गताऽत्र कथम् ।
इति चेत्पूर्वोपस्थितनिमित्तकृत्वेन तत्त्वमिह ॥ १४९ ॥
उत्थाय प्रातरयं पुरुषः प्रथमं शरीरकार्याणि ।
कुरुते ततश्च सुहृदां ततश्च संबन्धिकार्याणि ॥ १५० ॥
एवं जातिव्यक्त्योर्लिङ्गवचनकारकाणां च ।
बोधक्रमोऽस्ति शास्त्रप्रकल्पितस्तत्क्रमेण शब्दजनिः ॥ १५१ ॥

---

अन्तर्भूतनिमित्तकत्वमपरनिमित्तकत्वं चेति द्वावन्तरङ्गप्रकारावुक्तौ, संप्रति पूर्वोपस्थितनिमित्तकत्वेनाप्यन्तरङ्गत्वं विवक्षुः रियतीत्यादावुक्तप्रकारद्वयाभावमाह—नन्विति । गुणविधीति । श्चङोरकारो बहिरङ्गत्वाभिमतपुगन्तेति गुणशास्त्रघटकसप्तम्यन्तसार्वधातुकादिपदप्रयोज्यविषयताश्रयतिप्रत्ययघटको नास्ति यस्य च स घटकस्तस्य रि अ इति समुदायस्य सप्तम्यन्तपदप्रयोज्यविषयताश्रयत्वं नास्ति । समकालप्राप्तबहिरङ्गस्थले चान्तरङ्गबहिरङ्गोभयपदघटकाङ्गपदेन सप्तम्यन्तबोध्यमेव निमित्तं ग्राह्यमित्युक्तं प्राक् । अत इयङुवङोरन्तरङ्गत्वं न संभवतीति भावः । समाधत्ते—इति । चेदित्यादिना ॥ १४८, १४९ ॥

इदमन्तरङ्गत्वं लोकन्यायसिद्धमित्याह—उत्थायेति । इदम् "अचः परस्मिन्—" (१।१।५७) इति सूत्रे भाष्ये स्पष्टम् ॥ १५० ॥

दृष्टान्तोक्तमर्थं दार्ष्टान्तिके योजयति एवमित्यादिना । उक्तसूत्रे भाष्ये हि पट्व्येत्यादेरन्तरङ्गपरिभाषया सिद्धिं प्रदर्श्य "बहुप्रयोजनैषा परिभाषा । अवश्यमेवैषा कर्तव्या । सा चाप्येषा लोकतः सिद्धा । कथम् । प्रत्यङ्गवर्ती लोको लक्ष्यते । तद्यथा । पुरुषोऽयं प्रातरुत्थाय यान्यस्य प्रतिशरीरं कार्याणि तानि तावत्करोति, ततः सुहृदां ततः सम्बन्धिनाम् । प्रातिपदिकं चाप्युपदिष्टं सामान्यभूतेऽर्थे वर्तते । सामान्ये वर्तमानस्य व्यक्तिरुपजायते, व्यक्तस्य सतो लिङ्गसंख्याभ्यामन्वितस्य बाह्येनार्थेन योगो भवति । यथैव चानुपूर्व्याऽर्थानां प्रादुर्भावस्तथैव शब्दानामपि । तद्वत्कार्यैरपि भवितव्यम्" इत्युक्तम् । प्रत्यङ्गवर्तीत्यस्य प्रत्यासन्नवर्ती त्यर्थः । सामान्यभूत इत्यादि भाष्यं कैयटेनेत्थं व्याख्यातम्—"नित्येऽपि शब्दार्थसम्बन्धे अक्रमेऽप्यर्थप्रतिपादने उपायभावेनासत्यमपि क्रमं प्रकृत्याद्यर्थं चाश्रित्योपेयव्यवस्थापनात् । तत्र नागृहीतविशेषणाविशेष्ये बुद्धिरुत्पद्यत इति आदौ सामान्यमभिधीयते, ततस्तदनुरक्त-

तेनैव च क्रमेणोत्पद्यन्ते शब्दकार्याणि ।
तत्र च पूर्वोपस्थितनिमित्तकं ह्यन्तरङ्गमिति ॥ १५२ ॥

पट्व्येत्यादौ पूर्वं पूर्वयणादेश उत्तरा—सिद्धेः ।
इत्येवं प्रतिपादितमचः परस्मिन्नितीह भाष्यकृता ॥ १५३ ॥

युगपत्प्राप्तौ पूर्वप्रवृत्तिनियमं करोत्येतत् ।
लोकन्यायानुगमाज्जातस्यासिद्धता तु नानेन ॥ १५४ ॥

वाय्वोरत्र यलोपो जातयणः स्थानिवत्त्वमाश्रित्य ।
भाष्यकृता हि परिहृतो न तु यणसिद्धत्वमाश्रित्य ॥ १५५ ॥

पट्व्येत्यादौ च पदावधिकान्वाख्यान एव बोध्यमिदम् ।
क्रमिकान्वाख्याने तु स्वत एव प्राक्प्रवृत्तिराद्यस्य ॥ १५६ ॥

---

द्रव्यप्रतीतिः । लिङ्गसंख्याशक्तीनां चाश्रयो द्रव्यमिति तत्पूर्वमभिधातव्यम् । ततः संख्यापेक्षया लिङ्गं समासन्नमिति तदभिधीयते । द्व्यादिसंख्या हि वस्त्वन्तरापेक्षोपजायते । एकत्वसंख्याऽपि वस्त्वन्तरापेक्षद्वित्वादिव्यवच्छेदं करोतीति बहिरङ्गा । साऽपि सजातीयपदार्थापेक्षत्वादन्तरङ्गा । कर्मादीनि तु विजातीयक्रियापेक्षणाद्बहिरङ्गाणीति न्यायप्राप्तक्रमः ।" शब्दजनिः शब्दप्रादुर्भावः ॥ १५१ ॥

इति = इत्यतो हेतोः । इदमुत्तरवाक्यार्थेऽन्वेति ॥ १५२ ॥

**उत्तरासिद्धेः**—उत्तरयणादेशस्य बहिरङ्गत्वेनासिद्धत्वादित्यर्थः ॥ १५३ ॥

एतच्चान्तरङ्गत्वं द्वयोर्युगपत्प्राप्तावन्तरङ्गस्य पूर्वप्रवृत्तिनियामकं न तु जातबहिरङ्गस्यासिद्धत्वनियामकमित्याह—**युगपत्प्राप्ताविति** । लोकन्यायानुगमात् = लोकन्यायानुसारात् । जातस्य = जातबहिरङ्गस्य ॥ १५४ ॥

उक्तार्थे भाष्यं प्रमाणयति—**वाय्वोरिति** । "अचः परस्मिन्—" ( १।१।५७ ) इति सूत्रे भाष्ये वाय्वोरित्यत्रोकारस्य वकारादेशोत्तरं लोपे व्योर्वलीति सूत्रेण प्राप्तो यलोपो यणः स्थानिवद्भावेनैव वारितो न तु बहिरङ्गासिद्धत्वेन, तेनोक्तार्थो निश्चीयत इति भावः ॥ १५५ ॥

**पट्व्येति**—भाष्ये पट्व्या मृद्व्येत्याद्युदाहरणेषु यत् पूर्वोपस्थितनिमित्तकत्वरूपमन्तरङ्गत्वमाश्रितं, तत्पदावधिकान्वाख्याने = पदस्य विभज्यान्वाख्यानाश्रयणपक्ष एव ज्ञेयम् । क्रमिकान्वाख्याने तु ङीषन्तस्य पट्वीत्यस्यैव प्रथममन्वाख्यानात् कार्यद्वयस्य

यत्तु विशेषापेक्षात्सामान्यापेक्षिणोऽन्तरङ्गत्वम् ।
तत्र हि विशेषधर्मात्मकमधिकमपेक्ष्यते निमित्तमिति ॥ १५७ ॥
रुद्यादित्यत्राडीड् विधौ विशेषात्मकं रुदादित्वम् ।
तदनुमितं चापेक्ष्यं धातुत्वं तस्य सामान्यम् ॥ १५८ ॥
अपि सार्वधातुकत्वं तदनुमितं प्रत्ययत्वसामान्यम् ।
यासुटि नैवमतः सोऽन्तरङ्ग उक्तं च कैयटेनापि ॥ १५९ ॥
तिप्प्रभृतयो लमात्रापेक्षा इत्यन्तरङ्गास्ते ।
लविशेषापेक्षत्वात्स्यादिविकरणास्तु बहिरङ्गाः ॥ १६० ॥
इत्याहुस्तदयुक्तं व्याप्येन व्यापकानुमानेऽपि ।
शाब्दविषयताविरहादधिकनिमित्तत्वकल्पनाऽयोगात् ॥ १६१ ॥

---

समकालप्राप्त्यभावात्परिभाषाया नोपयोगः। तत्र प्रथमकार्यस्य परिभाषानैरपेक्ष्येण स्वत एव पूर्वप्रवृत्तिः। अपरस्य तु निमित्ताभावादप्राप्तिरेवेति भावः ॥ १५६ ॥

दीक्षिताद्यभिमतं विशेषापेक्षात्सामान्यापेक्षस्यान्तरङ्गत्वं निरसिष्यंस्तावदनुवदति—**यत्त्वित्यादिना इत्याहुरित्यन्तेन**। तत्र = विशेषापेक्षे ॥ १५७ ॥

उदाहरणमाह—**रुद्यादिति**। अडीड्विधौ—अड् गार्ग्यगालवयोरित्यड्विधौ, रुदश्च पञ्चभ्य इतीड्विधौ च प्रकृते रुदादित्वं प्रत्ययस्य च सार्वधातुकत्वं विशेषधर्मरूपं निमित्तत्वेनाश्रीयते तेन, धूमेन वह्नेरिव व्याप्येन विशेषधर्मेण व्यापकस्य सामान्यधर्मस्यानुमानाद् विशेषज्ञानस्य सामान्यज्ञानाधीनत्वेन तदर्थं तस्यापेक्षणाद्वा धातुत्वरूपस्य च सामान्यधर्मस्य निमित्तत्वेनापेक्षणादीडादिविधयो बहिरङ्गाः। यासुड्विधौ त्वेवंविधाधिकधर्मापेक्षाऽभावाद्यासुडन्तरङ्गः। तेनेडादीन्बाधित्वा तत्र यासुडेव प्रवर्तते इति दीक्षितादीनामभिप्रायः। प्रत्ययत्वसामान्यमिति। अपेक्ष्यमित्यभिसंबन्धः। उक्तार्थे कैयटस्यापि सम्मतिमाह—**उक्तं चेति** ॥ १५८, १५९ ॥

**तिप्प्रभृतय इति**। अनुदात्तङित आत्मनेपदम् (१।३।१२) इति सूत्रेऽनुदात्तङित-इत्यादीनां तिबादिविध्येकवाक्यतया विधायकत्वमिति पक्षाश्रयणेन विकरणव्यवधाने नियमाप्राप्तिरूपदोषोद्धारेऽपि 'स्यादिषु कथम्। ते हि लावस्थायामेव विधीयन्ते इति तैर्व्यवधानान्नियमो न प्राप्नोति' इत्याशङ्क्य 'उच्यते। लमात्रापेक्षत्वादन्तरङ्गत्वाल्लादेशेषु कृतेषु लकारविशेषापेक्षया बहिरङ्गाः स्यादयो भविष्यन्ति' इति कैयटेनोक्तम्। अत्र विशेषापेक्षस्य बहिरङ्गत्वं सामान्यापेक्षस्य चान्तरङ्गत्वं स्पष्टमिति भावः ॥ १६० ॥

उक्तमतं निरस्यति—**तदयुक्तमिति**। अयुक्तत्वे हेतुमाह—**व्याप्येनेति**। कल्पनाऽयोगात् = कल्पनाया असम्भवात् ॥ १६१ ॥

न च भाष्यकृतोल्लिखितं क्वचिदप्येतादृशान्तरङ्गत्वम् ।
रुद्यादत्र तु यासुडनित्यत्वाद्बाधतेऽडीटौ ॥ १६२ ॥
यत्तु मतुब्विधिभाष्ये पञ्चगुरिह बाधको बहुव्रीहेः ।
द्विगुरपवादतयाऽतः स्यान्मतुबिति पूर्वपक्षिणा कथिते ॥ १६३ ॥
अधिकास्त्यर्थनिमित्तकमतुन्निमित्तो द्विगुर्हि बहिरङ्गः ।
तेन बहुव्रीहिरिहेत्येतत्तु ज्ञेयमेकदेशिवचः ॥ १६४ ॥
अपवादस्य हि बाधोऽन्तरङ्गविधिना न शक्यत इति ।
किञ्चाधिकसापेक्ष्यादुक्तं तन्न तु विशेषसापेक्ष्यात् ॥ १६५ ॥

---

ननु क्वचिदर्थापत्त्याऽनुमानेन वोपस्थितस्यापि भानमङ्गीक्रियते । तथाहि—गतिरनन्तर इति सूत्रेऽनन्तरग्रहणसामर्थ्याद्गत्याक्षिप्तधातुनिरूपितमेवानन्तर्यं गृह्यते । एवमुपसर्गादृति धाताविसत्रोपसर्गेणैव धातोराक्षेपे सिद्धे धाताविति योगविभागेन पुनर्वृद्धिविधानार्थमित्याशयकं भाष्यमपि तदङ्गीकार एवोपपद्यतेऽत आह—**न चेति** । रुद्यादित्यत्र यासुट्सिद्धिस्तु प्रकारान्तरेणेत्याह—**रुद्यादिति** ॥ १६२ ॥

ननु तदस्यास्त्यस्मिन्निति मतुप् ( ५।२।९४ ) इति सूत्रे भाष्ये उक्तविधान्तरङ्ग-बहिरङ्गभावोल्लेखोऽस्त्येवेत्याशङ्कां तद्भाष्यस्यैकदेश्युक्तित्वप्रदर्शनेन दूरीकरोति—**यत्त्वित्यादिना**—तत्र हि पञ्च गावः सन्त्यस्येति पञ्चगुरित्यत्र मतुप्प्राप्तिशङ्कायाः "प्रत्येकसामर्थ्यात्, समुदायादप्रातिपदिकत्वात्समासात्समासेनोक्तत्वान्न मतुबिति सिद्धान्तिना समाधाने कृते 'नैतत्सारम् । उक्तेऽपि हि प्रत्ययार्थे उत्पद्यते द्विगोस्तद्धितः । तद्यथा द्वैमातुरः षाण्मातुरः याञ्चनामितिः' इति पूर्वपक्षिणोक्ते उक्तस्थले द्विगोः सावकाशत्वादत्र परत्वाद्बहुव्रीहिरित्याशयेन 'नैष द्विगुः । कस्तर्हि बहुव्रीहिः' इति सिद्धान्तिनोक्ते तमवकाशमजानता पूर्वपक्षिणा 'अपवादत्वाद्द्विगुः प्राप्नोति' इत्युक्ते सिद्धान्त्येकदेशिना अन्तरङ्गत्वाद्बहुव्रीहिरित्युक्तम् । काऽन्तरङ्गतेति पृष्टेन च तेन 'अन्यपदार्थे बहुव्रीहि-र्विशिष्टेऽन्यपदार्थे द्विगुस्तस्मिंश्चास्य तद्धितेऽस्तिग्रहणं क्रियते' इत्युक्तम् । 'अधिका-स्त्यर्थापेक्षमत्वर्थनिमित्तकत्वेन द्विगुर्बहिरङ्ग इति तस्याभिप्रायः । एषा च न सिद्धान्त्युक्तिः । अधिकापेक्षत्वेऽपि द्विगोरपवादत्वाहानेः । अच्सामान्यापेक्षयणो विशिष्टसवर्णाजपेक्षदीर्घेण बाधदर्शनात् । एवं चापवादत्वेन द्विगोः प्राप्तावुद्भाविताया-मन्तरङ्गत्वाद्बहुव्रीहिरित्युत्तरस्यायुक्तत्वादुक्तवचनमेकदेशिन एव । अतस्तन्नाभिमतार्थ-साधकमिति भावः । प्राचीनमतस्यायुक्तत्वेऽन्यमपि हेतुमाह—**किञ्चेति** । ततः = बहिरङ्गत्वम् ॥ १६३, १६४, १६५ ॥

उत्तरपदाधिकारे नेयमिति तु पूर्वपक्षिवचः ।
नासिद्धत्वं तु मुमः परन्तपादावनुस्वारे ॥ १६६ ॥
एवं द्विषन्तपेऽपि न संयोगान्तस्यलोपविधौ ।
त्रैपादिकेऽन्तरङ्गे कर्तव्येऽस्याः प्रवर्तनाभावात् ॥ १६७ ॥
एषा च वाह ऊडिति सूत्रस्था तेन चाभीया ।
अत आभीयमिमां प्रत्यसिद्धमिति तत्र नैवेयम् ॥ १६८ ॥
तेन पपुष इत्यादावातो लोपेऽन्तरङ्गविधौ ।
कर्तव्ये प्राग्जातं न भवति वसुसंप्रसारणमसिद्धम् ॥ १६९ ॥

---

उत्तरपदाधिकार इति । इच एकाचोऽम्प्रत्ययवच्च ( ६।३।६८ ) इति सूत्रे भाष्ये—श्रियमात्मानं मन्यते ब्राह्मणकुलं श्रियंमन्यमित्यत्र इच एकाच इत्युत्तरपदनिमित्त-कस्यक्षमो बहिरङ्गासिद्धत्वात्स्वमोर्नपुंसकादिति लुग् नेति सिद्धान्तिनोक्ते "नैषा परिभाषे-होत्तरपदाधिकारे शक्या विज्ञातुम् । इह हि दोषः स्यात् द्विषन्तपः । परन्तप इति । संयोगान्तलोपो न स्यात् । तस्माच्छ्रिमन्यमित्येव भवितव्यम्" इत्युक्तम् । इयं परिभाषा उत्तरपदाधिकारस्थबहिरङ्गस्य नासिद्धत्वबोधिकेति तदाशयः । तत्तु पूर्वपक्षिवचनम् । तत्फलस्यान्यथासिद्धत्वात् । अन्यथासिद्धिमेव दर्शयति—**नासिद्धत्वमित्यादिना** । परन्तप इत्यत्रानुस्वारे कर्तव्ये द्विषन्तप इत्यत्र संयोगान्तस्य लोप इत्यनेन तकारलोपे च कर्तव्ये मुमो बहिरङ्गासिद्धत्वं तु न । त्रैपादिकेऽन्तरङ्गे प्रकृतपरिभाषायाः प्रवृत्त्यभावस्य प्रागुपपादितत्वात् । श्रियं मन्यमित्यत्र तु बाध्यसामान्यचिन्तया सुपोधात्विति लुक इव स्वमोर्नपुंसकादिति लुकोऽप्यम्विधानेन बाधात् बहिरङ्गत्वेनासिद्धत्वाद्वा तदप्रवृत्तेः श्रियंमन्यमित्येव सिद्धान्तितं रूपमिति इच एकाचोऽमित्यत्र शब्देन्दुशेखरे स्पष्टम् ॥ १६६, १६७ ॥

आभीया = असिद्धवदत्राभादित्यधिकारस्था । एवं चाभीयस्यान्तरङ्गशास्त्रस्य समाना-श्रयामाभीयामिमां परिभाषां प्रत्यसिद्धत्वेन यस्मै बोधयितव्यं तदभावे बोधना-सम्भवादनयाऽऽभीयमन्तरङ्गशास्त्रं प्रति बहिरङ्गस्यासिद्धत्वबोधनं न क्रियत इति भावः ॥ १६८ ॥

आभीयेऽस्या अप्रवृत्तेः फलमाह—**तेनेति** । आतो लोप इटि चेत्यनेनाकारलोपे कर्तव्ये जातस्य वसुसंप्रसारणस्यासिद्धत्वाभावादाल्लोपप्रवृत्त्या पपुष इत्यादिरूपसिद्धिर्भवती-त्यर्थः ॥ १६९ ॥

भाष्यस्थं नापूर्वं वचो न सिच्यन्तरङ्गमस्तीति ।
गुणमन्तरङ्गमप्यपवादतया बाधते हि सिचि वृद्धिः ॥ १७० ॥
नन्वक्षद्यूप्रभृतावूड् बहिरङ्गोऽन्तरङ्गयणि कार्ये ।
तेनाच्परत्वविरहाद्यण् न स्यादिति विशंक्याह ॥ १७१ ॥

## नाजानन्तर्ये बहिष्ट्वप्रक्लृप्तिः ॥ ५१ ॥

अज्निष्ठान्यावधिकानन्तर्यनिमित्तकेऽन्तरङ्गविधौ ।
कर्तव्ये जातं बहिरङ्गं नासिद्धमित्यर्थः ॥ १७२ ॥
षत्वतुकोरिति सूत्रे तुग्ग्रहणं ज्ञापकं चास्याः ।
तद्धि पदान्तपदाद्योरेकादेशे कृतेऽपि तुक्सिद्ध्यै ॥ १७३ ॥

---

**भाष्यस्थमिति** । इको गुणवृद्धी ( १।१।३ ) इति सूत्रे भाष्ये ण्यन्तस्य श्वयतोश्च गुणेऽयादेशे च कृते यान्तत्वादेव वृद्धिनिषेधसिद्धेर्ह्म्यन्तक्षणेति सूत्रे णिश्विग्रहणं व्यर्थं सञ्ज्ञापयति न **सिच्यन्तरङ्गमस्तीति** इति यदुक्तं तद्वचनं नापूर्वम् सिचि वृद्धेर्गुणापवादत्वेनान्तरङ्गमपि गुणं बाधित्वा प्रवृत्तेः । अतो येन नाप्राप्त इति न्यायमूलकमेव तदिति भावः ॥ १७० ॥

अपवादत्वसङ्गत्या नाजानन्तर्यपरिभाषामवतारयति—**नन्विति** । अक्षैर्दीव्यतीत्यक्षद्यूः । अक्षशब्द उपपदे दिवुधातोः क्विपि च्छ्वोः शूडित्यूठि रूपम् । अत्रान्तरङ्गपरिभाषाप्रवृत्तावन्तरङ्गे यणादेशे कर्तव्ये बहिरङ्गस्योठोऽसिद्धत्वेनाच्परकत्वाभावाद्यण् न सिध्येत् । अत्र बहिरङ्गत्वेन विवक्षितं शास्त्रं च्छ्वोः शूडिति तन्निमित्तसमुदायोऽक्षदिव् इत्यङ्गरूपः । अन्तरङ्गत्वेन विवक्षितमिकोयणचीति तद्घटकसप्तम्यन्तपदबोध्य ऊकारस्तस्योट्शास्त्रीयनिमित्तसमुदायघटकत्वं स्वस्थानिवकारद्वारेति बोध्यम् ॥ १७१ ॥

**अज्निष्ठेति** । अज्निष्ठं यदन्यावधिकमानन्तर्यमव्यहितपूर्वत्वादिरूपं तन्निमित्तकेऽन्तरङ्गकार्ये कर्तव्ये जातस्य बहिरङ्गस्य बहिष्ट्वप्रक्लृप्तिरसिद्धत्वं नेत्यर्थः । परिभाषायां बहिष्पदेन बहिरङ्गमुच्यते तस्य भावो बहिष्ट्वम् = बहिरङ्गत्वं लक्षणया बहिरङ्गत्वप्रयुक्तमसिद्धत्वं तस्य प्रक्लृप्तिः प्रकल्पनं नेत्यर्थः ॥ १७२ ॥

तुक्सिद्ध्यै = अधीत्येत्यादौ 'अधि इ त्वा' इति स्थिते समासे, तत्र संहितायां नित्यत्वाल्ल्यबुत्पत्तिपर्यन्तमसंहितयाऽवस्थानासंभवेन, दीर्घैकादेशे ल्यपि च युगपज्जाते तुकि कर्तव्ये एकादेशस्यासिद्धत्वबोधनेन तुक्सिद्ध्यर्थं षत्वतुकोरित्यत्र तुग्ग्रहणमित्यर्थः ॥ १७३ ॥

एतदनाश्रयणे तद्व्यर्थमधीत्येति रूपे हि ।
पदयुग्माश्रितदीर्घो बहिरङ्गासिद्ध एव तुक्ि कार्ये ॥ १७४ ॥
यत्त्विह षत्ववचोऽपि ज्ञापकमाहुर्यतोऽस्ति बहिरङ्गः ।
एकादेशः कोऽसिचदित्यादौ पदयुगाश्रितत्वेन ॥ १७५ ॥
तदसिद्धतयेणः परसस्याभावात्तदप्राप्तेः ।
तदनुचितं षविधेरपि पदद्वयाश्रिततया द्वयोः साम्यात् ॥ १७६ ॥

---

**एतदनाश्रयण** इति। नाजानन्तर्यपरिभाषानङ्गीकारे तस्या असत्त्व इति यावत् । तत् तुग्ग्रहणं व्यर्थं स्यात् । हि यतः । अधीत्येति रूपे साध्ये पदद्वयसंबन्धिवर्णद्वयापेक्षत्वेन सवर्णदीर्घस्य एकपदाश्रिततुगपेक्षया बहिरङ्गत्वेनासिद्धतयैव ह्रस्वस्य पिति कृति तुक् इति तुक्सिद्धिसंभवात् । अतस्तुग्ग्रहणमस्या ज्ञापिकमित्यर्थः ॥ न चान्तरङ्गपरिभाषाया अविषये वृक्षे छत्रमित्यादौ पदान्ताद्वेति तुग्विकल्पे कर्तव्ये गुणैकादेशस्यासिद्धत्वबोधनद्वारा छे चेति नित्यतुक्संपादनेन तुग्ग्रहणं चरितार्थमिति वाच्यम् । "षत्वतुकोरसिद्धः" (६।१।८६) इति सूत्रे 'पदान्तपदाद्योरेकादेशस्यासिद्धवचनात्' इति वार्तिकेन पदान्तपदाद्योरेकादेशस्यैवासिद्धत्वप्रतिपादनात्, वृक्षे इत्यत्र गुणैकादेशस्य तथात्वाभावात् । नन्वेवमपि वेः पक्षिण इः वी तस्य छत्रं वीच्छत्रमित्यादौ तुग्दीर्घयोरुभयोः पदद्वयनिमित्तकत्वेनान्तरङ्गपरिभाषाया अविषये पदान्ताद्वेति वैकल्पिकतुक्प्राप्तौ नित्यतुक्संपादनेन तस्य चारितार्थ्यान्नपरिभाषाज्ञापकत्वमिति चेन्न । षत्वसाहचर्यान्नित्यतुग्विषय एवैकादेशस्यासिद्धत्वविधानात्तुग्ग्रहणस्य प्रकृतपरिभाषाज्ञापकत्वप्रतिपादकभाष्यप्रामाण्याच्च तत्र षत्वतुकोरित्यस्याप्रवृत्तेः ॥ १७४ ॥

तुग्ग्रहणवत् षत्वग्रहणमपि परिभाषाज्ञापकमितिवादिनां मतमाशङ्क्य निरस्यति—**यत्त्विति। कोऽसिचदिति** । अत्र, एङः पदान्तादतीति पूर्वरूपैकादेशस्य पदद्वयसंबन्धिवर्णद्वयापेक्षत्वेन बहिरङ्गतयाऽसिद्धत्वादिणः परत्वाभावेन सकारस्य षत्वाप्राप्त्या तत्र षत्वप्रवृत्तिवारणार्थस्य षत्वग्रहणस्य प्रकृतपरिभाषाऽभावे वैयर्थ्यापत्तेस्तदप्यस्या ज्ञापकमिति तेषामभिप्रायः । उक्तमतं निराकरोति—**तदनुचितमिति** । कोऽसिचदित्यत्रैकादेशस्य पूर्वान्तवद्भावेन को इति प्रथमं पदम् । नागेशभट्टमते उभयत आश्रयणेऽप्यन्तादिवद्भावाङ्गीकारात्परादिवद्भावेन ओसिचदिति द्वितीयं पदम् । सिचदित्येतावन्मात्रं वा एकादेशविकृतन्यायेन द्वितीयं पदम् । तत्रेणः प्रथमपदसंबन्धित्वात्सकारस्य च द्वितीयपदसंबन्धित्वात्षत्वस्यापि पदद्वयसंबन्धिवर्णद्वयापेक्षतया द्वयोः साम्यान्नान्तरङ्गबहिरङ्गभाव इति भावः ॥ १७५, १७६ ॥

ओकारोऽत्र परादिवदोसिचदिति पदमतोऽस्य नादिः सः ।
तेनात्र सात्पदाद्योरिति न निषेधोऽस्त्यतश्च तत्सफलम् ॥१७७॥

त्रैपादिकेऽन्तरङ्गे तदप्रवृत्त्या च षत्वदृशा ।
बहिरङ्गासिद्धत्वं नैकादेशस्य सम्भवति ॥१७८॥

अत्र च विशेषणमजानन्तर्य इतीदमन्तरङ्गस्य ।
तेन पचावेदमिहेदृशोऽप्यसिद्धो गुणो हि बहिरङ्गः ॥१७९॥

जातं यद् बहिरङ्गं तदसिद्धं नेति कथनाच्च ।
रियतीत्यादिषु युगपत्प्राप्तस्यासिद्धता भवत्येव ॥१८०॥

उपपन्नमिण्ङिशीनामाद्गुण इति वार्तिकादिकं चातः ।
ओमाङोश्चेत्यस्मिन्सूत्रे चरितार्थमाङ्ग्रहणम् ॥१८१॥

---

प्रसङ्गात्षत्वग्रहणस्य कोऽसिचदित्यत्र चारितार्थ्यप्रदर्शनाय तत्र सात्पदाद्योरिति निषेधाप्रवृत्तिमुपपादयति—**ओकारोऽत्रेति** । अत्रौकारस्य परादिवद्भावेन ओसिचदित्यस्य पदत्वात्सकारस्य न पदादित्वं, तेन सात्पदाद्योरिति निषेधो न प्रवर्तते । अतः षत्वग्रहणं चरितार्थमित्यर्थः ॥ १७७ ॥

षत्वग्रहणस्य ज्ञापकत्वाभावेऽन्यमपि हेतुमाह—**त्रैपादिक इति** । तदप्रवृत्त्या = अन्तरङ्गपरिभाषाया अप्रवृत्त्या । षत्वदृशा = षत्वदृष्ट्या एकादेशस्य बहिरङ्गत्वप्रयुक्तासिद्धत्वं न संभवति । अतः षत्वग्रहणस्यावश्यकत्वेन न परिभाषाज्ञापकत्वमिति भावः ॥ १७८ ॥

**अत्र चेति** । नाजानन्तर्ये इत्यत्र अजानन्तर्य इत्यन्तरङ्गस्य विशेषणम् । विप्रतिषेधसूत्रे भाष्ये 'असिद्धं बहिरङ्गलक्षणमन्तरङ्गलक्षण इत्युक्त्वा ततो वक्ष्यामि नाजानन्तर्ये बहिष्ट्वप्रक्लृप्तिरिति' इत्युक्त्या प्रथमवाक्यादन्तरङ्गलक्षण इत्यस्य नाजानन्तर्ये इत्यत्रानुवृत्तिसूचनात् । तेनाजिनष्ठान्यानन्तर्यनिमित्तकेऽन्तरङ्गे कर्तव्ये बहिरङ्गस्यासिद्धत्वं नेत्यर्थलाभात् पचावेदमित्यादौ बहिरङ्गस्य गुणस्याजानन्तर्यनिमित्तकत्वेऽप्यन्तरङ्गस्यैत्वस्य तथात्वाभावाद्गुणस्यासिद्धत्वं भवत्येवेति भावः । ईदृशोऽपि = अजानन्तर्यनिमित्तकोऽपि ॥ १७९ ॥

ज्ञापकसाजात्याज्जातबहिरङ्गस्यैवासिद्धताया अनया निषेधात्समकालप्राप्तस्थले बहिरङ्गस्यासिद्धत्वं भवत्येवेत्याह—**जातं यदिति** ॥ १८० ॥

**उपपन्नमिति** । विप्रतिषेधसूत्रे, अयजे इन्द्रम्, वृक्षे इन्द्रम्, त इन्द्रमित्यादिषु सवर्णदीर्घापेक्षयाऽऽद्गुणस्यान्तरङ्गत्वेन सिद्धिरित्यर्थकम् 'इण्ङिशीनामाद्गुणः सवर्णदीर्घ-

ननु यणि जातेऽक्षद्यूरत्र विधेये वलि यलोपे ।
ऊठोऽसिद्धतया स्याद्यलोप इति चेन्न दोषोऽयम् ॥ १८२ ॥
कार्येऽजानन्तर्याश्रितेऽन्तरङ्गे कृते च तत्र विधौ ।
यत्प्राप्नोत्यस्मिन्नपि कार्ये नासिद्धतेत्यर्थात् ॥ १८३ ॥
अनयैव सार्थकं कृति तुगिति नलोपः सुवित्यत्र ।
बहिरङ्गनलोपस्यासिद्धतयैवान्यथा सिद्धेः ॥ १८४ ॥
ह्रस्वस्य पितीत्यत्र तु भाष्य इको ह्रस्व इत्यमुष्य विधेः ।
बहिरङ्गासिद्धतया ग्रामणिपुत्रे परिहृतस्तुक् ॥ १८५ ॥

---

त्वात्' इति वार्तिकं, क्ङिति च ( १।१।५ ) इति सूत्रे 'शचङन्तस्यान्तरङ्गलक्षणत्वा'-दिति भाष्यम्, एवम् अचः परस्मिन् ( १।१।५७ ) इति सूत्रे पट्व्या मृद्व्येत्याद्यर्थे 'बहिरङ्गेण सिध्यती'ति भाष्यं च, अतः = जातबहिरङ्गस्यैवासिद्धत्वनिषेधादुपपन्नमि-त्यर्थः । द्वन्द्वस्याप्युपपत्तिमाह—ओमाङोश्चेति ॥ १८१ ॥

अक्षद्यूरित्यत्रान्तरङ्गे यणि कर्तव्ये ऊडादेशस्यासिद्धत्वनिषेधेन यण्साधनेऽपि कृते यणि तस्यासिद्धत्वेन वकारबुद्ध्या लोपो व्योर्वलीति यलोपापत्तिः स्यादेवेत्याशङ्कते—नन्विति । परिहरति—न दोषोऽयमित्यादिना ॥ १८२ ॥

कार्य इति । अज्निष्ठान्यानन्तर्यनिमित्तकेऽन्तरङ्गे कर्तव्ये, कृते च तस्मिन् यदन्तरङ्गं प्राप्नोति तस्मिन्नपि कर्तव्ये बहिरङ्गस्यासिद्धत्वं नेति परिभाषार्थाङ्गीकारान्नोक्तदोष इत्यर्थः ॥ १८३ ॥

अनयैवेति । प्रकृतपरिभाषयैव नलोपः सुप्स्वरेति सूत्रे कृति तुग्ग्रहणं चरितार्थम् । एतदभावे तु वृत्रहभ्यामित्यादौ पदनिमित्तकनलोपस्य पदान्तर्भूतकिन्निमित्तकेऽन्तरङ्गे तुकि कर्तव्ये बहिरङ्गत्वेनासिद्धत्वात्तुगभावसिद्धेस्तद्वैयर्थ्यं स्पष्टम् । प्रकृतपरिभाषास्वीकारे तु तुकोऽज्निष्ठान्यानन्तर्यनिमित्तकत्वेन बहिरङ्गासिद्धत्वनिषेधात्तत्सार्थकमिति भावः ॥ १८४ ॥

नागेशभट्टाभिमतमस्या अनावश्यकत्वं तावदुपपादयति—ह्रस्वस्येत्यादिना । ह्रस्वस्य पिति कृति तुक् ( ६।१।७१ ) इति सूत्रे भाष्ये तु ग्रामणीशब्दस्य पुत्रशब्दे उत्तरपदे इको ह्रस्वोऽङ्यो गालवस्येत्यनेन ह्रस्वे कृते ग्रामणिपुत्र इत्यत्र किन्निमित्तक-तुगाशङ्का भाष्यकृता अन्तरङ्गे तुकि कर्तव्ये ह्रस्वस्य बहिरङ्गासिद्धत्वमाश्रित्य निवारिता । नाजानन्तर्य इत्यस्या आश्रयणे तदसङ्गतिः स्पष्टेति भावः ॥ १८५ ॥

तेनानावश्यकता निवेदिताऽस्याः प्रयोजनानां तु ।
पूर्वोदितपरिभाषाऽनित्यतया सम्भवति सिद्धिः ॥ १८६ ॥
षत्वतुकोरिति सूत्रे तुका त्वनित्याऽन्तरङ्गपरिभाषा ।
इत्येव ज्ञाप्यमिति च कथितं नागेशभट्टेन ॥ १८७ ॥
वस्तुत एषा मान्या यत्र हि नेष्टाऽन्तरङ्गपरिभाषा ।
तादृक्कतिपयलक्ष्यानुगमार्थं भाष्य उक्तत्वात् ॥ १८८ ॥
ग्रामणिपुत्र इह तु सन्निपातपरिभाषयैव तुकः ।
वारयितुं शक्यत्वात्प्रागुक्तं भाष्यमेकदेश्युक्तिः ॥ १८९ ॥
यातिर्यायावर इत्याद्यर्थमनित्यताऽस्तु पूर्वस्याः ।
तदपीयं स्वीकार्या कार्याऽनुगमे हि नासूया ॥ १९० ॥

---

तेनेति । उक्तभाष्येणास्या अनावश्यकता सूचिता । यानि चास्याः प्रयोजनानि, अक्षद्यूरित्यत्र यण्, वलि लोपाभावश्च, रामयोरित्यादावयादेशे कर्तव्ये ओसिचेत्येत्वस्यासिद्धत्वाभावः, रामेणेत्यादौ च गुणे कर्तव्ये इनादेशस्यासिद्धत्वाभाव इत्यादीनि, तेषामन्तरङ्गपरिभाषाया अनित्यत्वेनैव सिद्धिरित्यर्थः ॥ १८६ ॥

यच्चास्या ज्ञापकमुक्तं षत्वतुकोरिति सूत्रे तुग्ग्रहणं तेनान्तरङ्गपरिभाषाया अनित्यत्वमेव ज्ञाप्यमित्याह—षत्वतुकोरिति । तुका = तुग्ग्रहणेन । तुकानाजानन्तर्यपरिभाषाज्ञापने त्वक्षद्यूरित्यादौ दोषवारणेऽपि, अयजे इन्द्रमित्यादौ तस्या अप्रवृत्तये जातबहिरङ्गविषयत्वं कल्पनीयम्, अक्षद्यूरित्यादौ वलि लोपवारणाय कृते चान्तरङ्गे यदन्यत्प्राप्नोति तत्र कर्तव्येऽप्यसिद्धत्वं नेत्यर्थान्तराश्रयणं चेति गौरवम् । तदसाध्ये च यातिः, यायावरः, इत्यादौ यङन्तात् क्तिचि वरच्प्रत्यये चान्तरङ्गे यलोपे कर्तव्ये बहिरङ्गस्याकारलोपस्यासिद्धत्वेन यलोपाभावापत्तेर्वारणायान्तरङ्गपरिभाषाया अनित्यत्वमपि वक्तव्यमेवेत्यवश्याश्रयणीयेन तेनैव सर्वत्र निर्वाहात्तदेव तुग्ग्रहणेन ज्ञाप्यमिति भावः ॥ १८७ ॥

परमनवीनमतमाह—वस्तुत इति । अननुगतानित्यत्वेन व्यवस्थाकरणापेक्षयाऽनुगतवचनेन व्यवस्थाकरणे लाघवादिति भावः ॥ १८८ ॥

यदुक्तं ह्रस्वस्य पितीति सूत्रे भाष्ये ग्रामणिपुत्र इत्यत्र नाजानन्तर्यपरिभाषाया विषयेऽप्यन्तरङ्गपरिभाषाया भाष्यकृता प्रवर्तितत्वान्नाजानन्तर्यपरिभाषाऽनावश्यकीति तत्राह—ग्रामणिपुत्र इति ॥ १८९ ॥

पूर्वस्याः = अन्तरङ्गपरिभाषायाः । तदपि = तथापि । कार्येति । अनुगमे-क्रियमाणे हि असूया न कार्या न कर्तव्या । 'नासूया कर्तव्या यत्रानुगमः क्रियते' इति भाष्योक्तेरिति भावः ॥ १९० ॥

नन्वेवं गोमत् + सु प्रिय + स्विह समासकरणात्प्राक् ।
हल्ङ्याब्भ्य इति सुलोपे कृतेऽन्तरङ्गे नुमादि स्यात् ॥ १९१ ॥

अत आह—

**अन्तरङ्गानपि विधीन्बहिरङ्गो लुग्बाधते ॥ ५२ ॥**

लुक्साधकं समासाद्युपलक्षयतीह लुगिति पदम् ।
अपिना परनित्यावपि लुग्बाधत इति विबोध्योऽर्थः ॥ १९२ ॥
तेनात्वसन्तदीर्घं ह्यःप्रभृतौ बाधते परं सुब्लुक् ।
स्वप् कुलमिह स्वमोर्लुक् प्रतिपदविहितान्तरङ्गदीर्घञ्च ॥ १९३ ॥

---

अन्तरङ्गपरिभाषाऽपवादरूपामन्यां परिभाषामवतारयति—नन्वेवमिति । गोमत् स्विति । गोमान् प्रियो यस्येत्यर्थे गोमत् + सु प्रिय + सु इत्यलौकिकविग्रहवाक्ये पदद्वयात्मकसमुदायसापेक्षत्वेन बहिरङ्गां समाससंज्ञां बाधित्वाऽन्तर्भूतनिमित्तकत्वेनान्तरङ्गो हल्ङ्याब्भ्य इति सुलोपः स्यात् । ततश्च प्रत्ययलक्षणेन नुम्दीर्घौ स्यातामित्यनिष्टरूपापत्तिः । परिभाषेन्दुशेखरे लुकं बाधित्वेत्युक्तेरप्यत्रैव तात्पर्यम् । लुकः समाससंज्ञोत्तरं प्रवृत्तेः सुलोपस्य लुक्समकालप्राप्तत्वाभावात् । ननु गोमानित्यादौ पूर्वं नुमि, अच उपधात्वाभावेन, दीर्घप्रवृत्त्यसम्भवादत्वसन्तस्य चेत्यत्रातुग्रहणवैयर्थ्यापत्त्या तत्सामर्थ्यात्पूर्वं दीर्घ एव प्रवर्तयितुमुचितः । ततश्च दीर्घादीति वक्तुमुचितं न तु नुमादीति चेन्न, तत्रानुवृत्तस्योपधापदस्य पूर्वमात्रोपलक्षकत्वान्नित्यत्वेन नुम एवादौ प्रवृत्त्यौचित्यात् । आपाद्यमानेऽर्थे न्यायानादराच्चैवमुक्तेः ॥ १९१ ॥

गोमत्प्रिय इत्यादौ समाससंज्ञयैव सुलोपबाधस्य वक्तव्यतया परिभाषायां लुक्पदं समासादेरुपलक्षणमित्याह—लुक्साधकमिति । लुक्पदं लुक्प्रयोजकस्य समासत्वस्य प्रातिपदिकत्वस्य चोपलक्षणमित्यर्थः ॥ १९२ ॥

परादिसंग्रहफलमाह—तेनेति । ह्यः श्वः इत्यादौ परमपि अत्वसन्तस्य चाधातोरिति सुनिमित्तकं दीर्घम्, अव्ययादाप्सुप इति सुपो लुग्बाधत इत्यर्थः । लुकोऽन्तरङ्गबाधकत्वमुदाहरति—स्वब्विति । स्वप् कुलमित्यत्र अप्तृन्निति प्रतिपदोक्तत्वेन शीघ्रोपस्थितिकतयाऽन्तरङ्गमपि दीर्घं स्वमोर्नपुंसकादिति लुग्बाधत इत्यर्थः ॥ १९३ ॥

सिद्धे विभक्त्यपेक्षे त्वत्कृतमित्यादिषु त्वमविधाने ।
व्यर्थं सत्सूत्रमिमां ज्ञापयति प्रत्ययोत्तरेत्येतत् ॥ १९४ ॥

ननु तत् त्वत्पुत्रस्त्वद्धितमित्यादौ हि ङसि ङयि च ।
तव तुभ्याद्यादेशान्बाधितुमुक्तं न लिङ्गमेतस्याः ॥ १९५ ॥

तर्हि त्वपवादानामुत्सर्गसमानदेशतानियमात् ।
सिद्धेऽत्र मपर्यन्तस्येत्यनुवृत्तिर्निवेदयत्येनाम् ॥ १९६ ॥

---

ज्ञापकमाह—सिद्धे इत्यादिना । त्वया कृतं त्वत्कृतमित्यादौ समासापेक्षलुग-पेक्षयाऽन्तरङ्गेण त्वमावेकवचन इति विभक्त्यपेक्षत्वमादेशविधानेन सिद्धे प्रत्ययोत्तर-पदयोश्चेति सूत्रं व्यर्थं सदस्या ज्ञापकमित्यर्थः ॥ १९४ ॥

नन्विति । तव पुत्रस्त्वत्पुत्रः, मम पुत्रो मत्पुत्र इत्यादौ तवममादेशौ, तुभ्यं हितं त्वद्धितं मह्यं हितं मद्धितमित्यादौ च तुभ्यमह्यादेशौ, इत्येते निरवकाशत्वेन त्वमावेकवचन इत्यस्य बाधकाः प्राप्नुवन्ति । तेषां बाधनाय प्रत्ययोत्तरपदयोश्चेति सूत्रमावश्यकमतो नैतत्परिभाषाज्ञापकमित्यर्थः । ननु त्वदीयः, त्वपुत्र इत्यादौ युष्मद् अस् ईय्, युष्मद् अस् पुत्र इति स्थितौ विभक्तिव्यवधानेन प्रत्ययोत्तरपदयोश्चेत्यस्य प्रवृत्तिर्न संभवति । तत्रत्यप्रत्ययपदेनोत्तरपदसाहचर्येण वृत्तिचरमावयवस्यैव ग्रहणाद्वि-भक्तिमादायापि न तत्प्रवृत्तिः । अतस्तवाद्यादेशप्रवृत्तिस्तत्र दुर्वारैवेति चेन्न । यदि तवममादिशास्त्रं न प्रवर्तेत तर्हि सामासिकलुकि सति प्रत्ययोत्तरपदयोश्चेति सूत्रं प्रवर्तेतेति सम्भावनायाः सत्त्वेन, उपसंजनिष्यमाणनिमित्तन्यायेन प्रत्ययोत्तरपदयोश्चेत्यस्य तवममादिबाधकत्वसंभवात् ॥ १९५ ॥

उक्तरीत्या प्रत्ययोत्तरपदयोश्चेति सूत्रस्य न ज्ञापकत्वमित्युपपाद्य भाष्यकृता तत्सूत्रे मपर्यन्तानुवृत्तेरेव ज्ञापकत्वं निर्णीतमतस्तदेवाह—तर्हीति । अन्तरङ्गानपीति न्यायाभावे प्रत्ययोत्तरपदयोश्चेति सूत्रं तवममौङसीत्यादेरपवादरूपमेव । ततश्च उत्सर्गसमानदेशा अपवादा इति न्यायेन मपर्यन्तस्यैव स्थाने त्वमादेशौ भविष्यत इति प्रत्ययोत्तर-पदयोश्चेति सूत्रे मपर्यन्तस्येत्यस्यानुवृत्तिर्व्यर्था सती प्रकृतपरिभाषां ज्ञापयतीत्यर्थः । ज्ञापितायां त्वस्यां पूर्वं सुपो धातुप्रातिपदिकयोरिति लुक एव प्रवृत्त्या तवादीनामप्राप्त्या तदपवादत्वाभावेन सर्वादेशे प्राप्ते मपर्यन्तस्यैवादेश इति बोधनेन सा चरितार्थेति बोध्यम् ॥ १९६ ॥

नन्वाचारे क्विपि चाचक्षाणे णिचि च युष्मदस्मद्भ्याम् ।
नास्ति विभक्तिपरत्वं तदर्थकं प्रत्ययग्रहणम् ॥ १९७ ॥
नत्वपवादस्तेन त्वदति त्वादयति चेत्यादौ ।
सर्वादेशनिवृत्त्या चरितार्था साऽनुवृत्तिरिति चेन्न ॥ १९८ ॥
अनुवृत्तेर्ज्ञापकतां वदतो भाष्याद्धि नास्ति ताभ्यां क्विप् ।
अपि च हलन्तेभ्यो नास्त्याचारे क्विबिति नुड्विधौ ध्वनितम् ॥ १९९ ॥
एकत्वे ताभ्यां णिज् नेति च नागेशभट्टमतम् ।
किन्त्विह न दृढं मानं तेनात्र परे समादधत इत्थम् ॥ २०० ॥

---

प्रकृतपरिभाषाऽभावेऽपि मपर्यन्तानुवृत्तेश्चारितार्थ्यान्न ज्ञापकत्वमित्याशङ्कते—नन्वित्यादिना । आचारे=आचाररूपेऽर्थे । एवमाचक्षाणे इत्यस्याचक्षाणरूपेऽर्थे इत्यर्थः । नास्तीति । तयोः प्रातिपदिकादेवविधानादिति भावः । तदर्थकमिति । तत्र त्वमावेकवचन इत्यस्याप्राप्त्या तद्विधानार्थं प्रत्ययोत्तरपदयोश्चेति सूत्रे प्रत्ययपदम् । अतस्तस्य तवममाद्यपवादरूपत्वाभावादुत्सर्गसमानदेशा अपवादा इति न्यायस्याप्रवृत्त्या त्वमिवाचरति त्वदति, त्वामाचष्टे त्वादयतीत्यादौ सर्वादेशो मा भून्मपर्यन्तस्यैवादेशोऽस्त्वित्यर्थं साऽनुवृत्तिश्चरितार्थाऽतश्च न ज्ञापिकेति भावः ॥ १९७, १९८ ॥

उक्ताशङ्कां प्रथमं नागेशमतेन समाधत्ते—अनुवृत्तेरित्यादिना । अनुवृत्तेः=मपर्यन्तस्येत्यनुवृत्तेः ताभ्याम्=युष्मदस्मद्भ्याम् । न केवलं ताभ्यामेव किन्तु सर्वेभ्यो हलन्तेभ्य आचारक्विब् नेति ह्रस्वनद्यापो नुट् (७।१।५४) इतिसूत्रस्थभाष्यात्प्रतीयत इत्याह—अपि चेति । तत्र हि—कास्प्रत्ययादाममन्त्रे लिटीत्येतद्विहितस्यामो मकारस्येत्संज्ञापरित्राणार्थोऽकारानुबन्धोऽवश्यं कर्तव्यस्तेन ह्रस्वनद्याप इति नुडागमोऽपि तस्य न भविष्यतीत्युक्त्वा "नार्थ इत्संज्ञापरित्राणार्थेन । इत्कार्याभावादत्रेत्संज्ञा न भविष्यति । इदमस्तीत्कार्यं मिदचोऽन्त्यात्पर इति । अचामन्त्यात् परो यथा स्यात् । प्रत्ययान्तादयं विधीयते । तत्र नास्ति विशेषः, मिदचोऽन्त्यात्पर इति वा परत्वे प्रत्ययः पर इति वा परत्वे" इत्युक्तम् । हलन्तेभ्य आचारक्विप्सत्त्वे तु तत्र विशेषसत्त्वेन नास्ति विशेष इति कथनमसङ्गतं स्यात् । अतो हलन्तेभ्य आचारक्विब् नेति ध्वन्यत इति बोध्यम् ॥ १९९ ॥

णिज्विषयेऽप्याह—एकत्व इति । एकत्वविशिष्टार्थाभिधायकाभ्यां युष्मदस्मच्छब्दाभ्यां णिज् न भवति । अतस्तत्रापि मपर्यन्तानुवृत्तेर्न चारितार्थ्यमिति भावः ।

अनुवर्तते विभक्ताविति हि पदं प्रत्ययोत्तरेत्यस्मिन् ।
वाक्यविभेदकृतिबलात्त्वमाविति प्रत्ययोत्तरेत्यपि च ॥२०१॥
तेन विभक्तेरव्यवहितपूर्वौ प्रत्ययादितश्चापि ।
यौ युष्मदस्मदौ स्तस्तयोस्त्वमाविति हि सूत्रार्थः ॥२०२॥
सामर्थ्येन न लुमतेत्यनिषेधाल्लुकि विभक्तिपूर्वत्वम् ।
तस्मात् क्विणिचोर्नैतावतो न तत्रानुवृत्तिफलम् ॥२०३॥

---

मपर्यन्तस्य (७।२।९१) इति सूत्रे भाष्ये "अवधिद्योतनार्थं तर्हि परिग्रहणं कर्तव्यम् । मान्तस्येत्युच्यमाने यत्रैव मान्ते युष्मदस्मदी तत्रैवादेशाः स्युः । क्व च मान्ते युष्मदस्मदी, युष्मानाचष्टे अस्मानाचष्टे इति णिचि युष्मयतेरस्मयतेश्चाप्रत्यये" इति भाष्योक्त्या बहुत्वे तयोर्णिचः प्रामाणिकत्वेऽपि एकत्वे णिज् नेत्याशयेनैकत्र इत्युक्तम् । एतन्नागेशभट्टमतम् । तत्रारुचिकारणमाह—किन्त्विति । नागेशोक्तानभिधाने दृढं मानं नास्ति, यतस्तत्रैव सूत्रे भाष्येऽग्रे "अथापि कथंचिदित्कार्यं स्यात् । एवमपि न दोषः । क्रियते न्यास एव । आममन्त्रे इति" इत्युक्तम् । मकारस्येत्संज्ञापरित्राणार्थोऽकारानुबन्धः सूत्रे कृत एव, आम अमन्त्रे इत्यत्र शकन्ध्वादित्वात्पररूपमिति भावः । तद्व्याख्यायां च कैयटेन "व्यञ्जनान्तेषु चाचारक्विबन्तेषु इत्कार्यसंभवादित्संज्ञा प्राप्नोति । न हि व्यञ्जनान्तेभ्य आचारक्विब्नभवतीत्यत्र किञ्चित्प्रमाणमस्ति" इत्युक्तम् । एवं युष्मदस्मद्भ्यामेकत्वे णिचोऽनभिधानेऽपि न मानम् । भाष्ये युष्मयतेरस्मयतेश्चाप्रत्यय इति प्रयुक्तत्वात् । सामान्येन प्रवृत्तस्य तस्य बहुत्वार्थकमात्रविषयकत्वकल्पनाया अयुक्तत्वादिति बोध्यम् ॥ २०० ॥

अत्र परे इत्थं समादधत इत्युपक्रान्तं समाधानं निरूपयति—**अनुवर्तत इति** । तत्र विभक्तावित्यस्यानुवृत्तौ मानमाह—**वाक्येत्यादिना** । प्रत्ययोत्तरपदयोश्चेति सूत्रे विभक्तावित्यस्यासम्बन्धे प्रत्ययपदेन यावत्प्रत्ययग्रहणात् 'त्वमावेकवचने प्रत्ययोत्तरपदयोः' इत्येकवाक्य एव करणीये वाक्यभेदकरणं व्यर्थं सत्तत्र विभक्तिपदसम्बन्धं सूचयतीत्यर्थः । कृते तु तत्र विभक्तिपदसंबन्धे वक्ष्यमाणरीत्या द्वयोर्निमित्तभेदाद्वाक्यभेद उपपन्नः । न च तयोरेकवाक्यतैवास्तु मास्तु च तत्र विभक्तावित्यस्यानुवृत्तिरिति वाच्यम् । तथा सति क्विबादावपि त्वमाद्यादेशापत्तेः । न च तत्रेष्टावेव त्वमाविति वाच्यम् । एवं सति मपर्यन्तानुवृत्तेरन्तरङ्गानपीति न्यायज्ञापकतापरभाष्यविरोधापत्तेः । तत्र चारितार्थ्येन प्रत्ययोत्तरपदयोश्चेत्यस्य तवममाद्यपवादत्वासंभवात् ॥ २०१ ॥

प्रत्ययोत्तरपदयोश्चेत्यत्र विभक्तावित्यस्यानुवृत्तौ यादृशोऽर्थो विवक्षितस्तमाह—**तेनेत्यादिना** । प्रत्ययोत्तरपदयोः परयोर्या विभक्तिस्तदव्यवहितपूर्वयोर्युष्मदस्मदोरित्यर्थे,

श्नमि मित्त्वादकचि प्राक्टेरिति साक्षात्तदीयदेशोक्तेः ।
बहुचि पुरस्ताद्ग्रहणादुत्सर्गसमानदेशतात्यागः ॥२०४॥
प्रकृते तु न तत्त्यागे मानमतोऽसौ प्रवर्तते न्यायः ।
युष्माकादिविधानं तस्मिन्नणि चेति तल्लिङ्गम् ॥२०५॥
आकञमेवेतरथा वदेत् सति न्याय आकञपवादौ ।
तवकादी अपि मा स्तामन्त्यस्येत्यर्थकं खलु तत् ॥२०६॥

---

तव पुत्र इत्यादौ समासे षष्ठ्या आक्रोशे इत्यलुकि तस्य चारितार्थ्येन सामर्थ्यस्य वक्तुमशक्यत्वात् त्वत्पुत्र इत्यादौ पूर्वं लुकि न लुमताङ्गस्येति निषेधेन प्रत्यलक्षणाप्रवृत्तौ विभक्ति.परत्वाभावेन त्वाद्यादेशप्रवृत्तिर्न स्यात् । अत एकत्र द्वयमिति रीत्या विभक्ताविति प्रत्ययेत्यादि च युष्मदस्मदोरेव विशेषणम् । तेन विभक्त्यव्यवहितपूर्वयोः सतोः प्रत्ययोत्तरपदैतदन्यतराव्यवहितपूर्वयोर्युष्मदस्मदोस्त्वमौ भवत इत्यर्थादलुकि, विभक्त्या व्यवधानादुत्तरपदाव्यवहितपूर्वत्वाभावात्तदप्रवृत्त्या लुग्विषये त्वत्पुत्र इत्यादौ सुपो लुकि विधानसामर्थ्यान्न लुमतेति निषेधस्याप्रवृत्त्या प्रत्ययलक्षणेन विभक्त्यव्यवहितपूर्वत्वं सुलमिति त्वाद्यादेशप्रवृत्तिर्भवति । एवं च क्विन्णिज्विषये विभक्तिपरत्वाभावान्न तत्प्रवृत्तिरतश्च तत्र मपर्यन्तानुवृत्तेश्चारितार्थ्यं नेति भावः ॥ २०२, २०३ ॥

उत्सर्गसमानदेशा अपवादा इति न्यायस्य श्नमादिषु व्यभिचरितत्वात्तमाश्रित्य केवलाया मपर्यन्तानुवृत्तेर्ज्ञापकत्वं भाष्योक्तं न सङ्गच्छते । अतस्त्वाद्यदेशानुवृत्तिसहिता मपर्यन्तानुवृत्तिर्ज्ञापिकेति प्रत्ययोत्तरपदयोश्च ( ७।२।९८ ) इति सूत्रे कैयटेनोक्तं तदयुक्तमित्याशयेनाह—**श्नमि मित्त्वादित्यादि** । उक्तन्यायज्ञापकमाह **युष्माकादिति**— "तस्मिन्नणि च युष्माकास्माकौ" इत्यनेन सूत्रेण युष्मदस्मदोः खञ्यणि च युष्माकास्माकादेशविधानं तल्लिङ्गम् = उत्सर्गसमानदेशा अपवादा इत्यस्य न्यायस्य लिङ्गं = ज्ञापकमित्यर्थः ॥ २०४, २०५ ॥

ज्ञापकत्वमुपपादयति—**आकञमित्यादिना** । इतरथा = उक्तन्यायाभावे तस्मिन्नणिचेत्यत्र, आकञमेव वदेत् लाघवार्थमाकञादेशमेव विदध्यात् । ञिचेत्यनेनान्तादेशो यौष्माकीणो यौष्माक इत्यादिसिद्धेरिति भावः । एवं सिद्धे गुरुभूतयोर्युष्माकास्माकयोर्विधानं व्यर्थं सदुक्तन्यायं ज्ञापयति । । ज्ञापिते तु तस्मिन्न्याये आकञोऽपवादौ तवकममकावप्यन्त्यस्यैव स्यातामिति तावकीनस्तावक इत्यादि न सिध्येत् । एतदापत्तिवारणार्थं युष्माकादिविधानं चरितार्थमित्यर्थः ॥ २०६ ॥

एकोद्देश्यककार्यद्वययोगविरोध एव बाधकता ।
वार्तिककारमतेऽतस्तत्रैव समानदेशता न्यायः ॥२०७॥

भाष्यमते तु विरोधं विनाऽपि सति सम्भवेऽस्ति बाधकता ।
तदपि स्वीक्रियतेऽयं न्यायोऽत्र ज्ञापकत्वपरभाष्यात् ॥२०८॥

सामान्यापेक्षमिदं ज्ञापकमित्याकरे स्पष्टम् ।
तेन सुपो धात्विति लुग्भिन्नेष्वपि संचरत्येषा ॥२०९॥

एङ्ह्रस्वादिति सूत्रे तत्कुलमित्यादिकेषु भाष्यकृता ।
लोपं बाधित्वा लुक्प्रतिपादनमेनयैव कृतम् ॥२१०॥

---

एकेति । एकस्य कार्यिणः कार्यद्वयप्राप्तिरूपविरोधे सत्येव बाधकत्वमिति वार्तिकमत एवोत्सर्गसमानदेशा अपवादा इति न्यायः फलितो भवतीत्यर्थः ॥ २०७ ॥

भाष्येति । भाष्यकारस्तु सत्यपि संभवे बाधनं भवतीति प्रतिपादयन् विरोधं विनाऽपि बाधकत्वं मन्यते । अत एवाशिशिषतीत्यादौ प्रथमैकाज्द्विर्वचनोत्तरं सावकाशेनापि द्वितीयैकाज्द्विर्वचनेन प्रथमैकाज्द्विर्वचनं बाध्यते । अतस्तन्मतेऽयं न्यायो न फलति, तथापि मपर्यन्तानुवृत्तेरन्तरङ्गानपीति न्यायज्ञापकताप्रतिपादकभाष्यप्रामाण्यात्स्वीक्रियत एव । तमन्तरा तस्यास्तज्ज्ञापकत्वासंभवादिति भावः ॥ २०८ ॥

ज्ञापकसाजात्यादियं परिभाषा सुपो धात्विति लुक्येव प्रवर्तत इति केषांचिन्मतमाकरविरुद्धमिति दर्शयति—सामान्येत्यादिना । भिन्नेष्वपीति । लुक्ष्विति शेषः ॥ २०९ ॥

उक्तमर्थं भाष्यकैयटोक्त्युल्लेखेन दृढीकरोति—एङिति । एङ्ह्रस्वात्संबुद्धेः ( ६।१।६९ ) इति । सूत्रे भाष्ये तद् ब्राह्मणकुलमित्यादौ हल्ङ्याब्भ्य इत्यपृक्तसुलोपस्य हे त्रपु इत्यादौ च एङ्ह्रस्वादिति संबुद्धिलोपस्य प्राप्तौ विप्रतिषेधे परत्वेन स्वमोर्नपुंसकादिति लुग्भवतीति व्याख्येयमित्याशयकस्य 'अपृक्तसंबुद्धिलोपाभ्यां लुक् ङ्कैः' इत्यस्य वार्तिकस्य प्रत्याख्यानाय 'न वा लोपलुकोर्लुगवधारणाद्यथानडुह्यत इति' इत्याद्युक्तम् । अन्तरङ्गानपीति न्यायेन बलवान् लुक् अतुल्यबलेन लोपेन सह स्पर्धां नार्हति, अतो विप्रतिषेधोपन्यासो न युक्त इति तदाशयः । अत्र सुपोधात्विति लुग्व्यतिरिक्ते स्वमोर्नपुंसकादिति लुक्यपि प्रकृतन्यायप्रवृत्तिः कृता । अतः सर्वेषु लुक्ष्वस्य प्रवृत्तिरितिभावः ॥ २१० ॥

अपि कैयटेन कथिता सर्वस्य लुकोऽन्तरङ्गबाधकता ।
तेन न लोपात्पूर्वं यङ् लुक् सिध्यति ततः सनीस्रंसः ॥२११॥

तद्वट्टापो लुगपि प्राग्दीर्घात् पञ्चखट्व इत्यादौ ।
दीर्घोत्तरं तु लुकि न श्रूयेताकार इति चोक्तम् ॥२१२॥

एतेन न्यायेनान्तरङ्गकारणविनाशकस्य लुकः ।
अपि तत्प्रयोजकस्य प्रबलत्वं बोध्यते समासादेः ॥२१३॥

नन्वेवं सौमेन्द्रेऽन्तरङ्गभावेन पूर्वमेव गुणे ।
सोमेति पूर्वपदतः परमिन्द्रपदं हि नास्तीति ॥२१४॥

---

अपि कैयटनेति । न यासयोः (७।३।४९) इति सूत्रे कैयटेन—"अन्तरङ्गांश्च विधीन् बहिरङ्गो लुग् बाधते, न सुब्लुगेव । तथाच सनीस्रंस इत्यादौ नलोपो भवति । पञ्चभिःखट्वाभिः क्रीतः पञ्चखट्व इत्यादौ टापा सहैकादेशो न भवति" इत्युक्तम् । स्रंसुधातोर्यङ्लुगन्तादच्प्रत्यये सनीस्रंस इति रूपम् । अत्रान्तरङ्गोऽपि यङ्निमित्तोऽनिदितामिति नलोपः पूर्वं न भवति किन्तु यङ्लुगेव । लुकि कृते च न लुमताङ्गस्येति प्रत्ययलक्षणनिषेधान्नलोपो न पञ्चखट्व इत्यादौ क्रीतार्थकठकोऽध्यर्धे पूर्वद्विगोरित्यनेन लुकि लुक्तद्धितलुकीति टापोलुकः प्राक्स दीर्घैकादेशो न भवति । किन्तु लुगेव पूर्वं प्रवर्तते । यदि तु पूर्वं सवर्णदीर्घः प्रवर्तेत तर्हि एकादेशस्य परादिवद्भावेनाब्ग्रहणेन ग्रहणात्तस्य लुकि, अकारश्रवणं न सिध्येदिति भावः ॥ २११, २१२ ॥

अतिव्याप्तिमव्याप्तिं च परिहर्तुमाह—एतेनेति । अनेन न्यायेनान्तरङ्गनिमित्तविनाशकस्यैव लुको बलवत्त्वं बोध्यते न तु तदविनाशकस्य । तेन तानादिकाद् ऋणुधातोर्लोटि लोट्स्थानिकसेर्ह्यादेशे विकरण उप्रत्यये ऋण् उ हि इत्यवस्थायाम् उप्रत्ययनिमित्तकगुणात्प्राग् उतश्च प्रत्ययादसंयोगपूर्वादिति हेर्लुगनेन न्यायेन न प्रवर्तते । हेर्लुकोऽन्तरङ्गगुणनिमित्तोप्रत्ययविनाशकत्वाभावात् । ततश्चान्तरङ्गत्वात्पूर्वं गुणे कृते, असंयोगपूर्वत्वाभावाभावाद्धेर्लुग्न भवति । लुक इव लुक्प्रयोजकसमासप्रातिपदिकसंज्ञयोरपि बलवत्त्वबोधनाच्च गोमत्प्रिय इत्यादौ पूर्वं हल्ङ्यादिलोपो नेति नुमाद्यापत्तिपरिहारः सिद्धः ॥ २१३ ॥

अन्यामप्यन्तरङ्गपरिभाषाऽपवादरूपां परिभाषामवतारयति—नन्वेवमिति । एवं = समकालप्राप्तबहिरङ्गासिद्धत्वाङ्गीकारे । सौमेन्द्र इति । सोमेन्द्रौ देवते अस्ये-

उभयत आश्रयणेऽपि हि पौर्वापर्यं न शक्यमतिदेष्टुम् ।
नेन्द्रस्य परस्येत्युत्तरपदवृद्धेर्निषेधकं व्यर्थम् ॥ २१५ ॥
सोमे इति पूर्वपदं गुणस्य पूर्वान्तवद्भावात् ।
न्द्रश्चैकदेशविकृतन्यायेनोत्तरमिति प्रकथनेऽपि ॥ २१६ ॥
एकादेशेनाद्योऽजपरो यस्येति चेति लोपेन ।
अपहृत इत्युत्तरपदमनच्कमिति न प्रसक्तिरिह वृद्धेः ॥ २१७ ॥
नन्वेन्द्रेत्युत्तरपदमङ्गीक्रियतां परादिवद्भावात् ।
मान्तं चोक्तन्यायात्पूर्वपदमतश्च संभवति वृद्धिः ॥ २१८ ॥
मैवं न ह्यतिदेष्टुं शक्यमशास्त्रीयमुत्तरपदत्वम् ।
ताद्रूप्यानतिदेशादलभ्यमुत्तरपदाद्यच्त्वम् ॥ २१९ ॥

---

स्यर्थे साऽस्य देवतेत्यनेनाण्प्रत्यये देवताद्वन्द्वे चेत्युभयपदवृद्धौ प्राप्तायां नेन्द्रस्य परस्येत्युत्तरपदवृद्धिनिषेधात्पूर्वपदाद्यच एव वृद्ध्या सौमेन्द्र इति रूपम् । तत्रान्तरङ्गत्वात्पूर्वमाद्गुणे पूर्वपदात्परस्येन्द्रपदस्याभावात्स निषेधो न प्रवर्तेतेति तस्य वैयर्थ्यापत्तिरित्यर्थः ॥ २१४ ॥

**उभयत आश्रयणेऽपीति** । प्राचीनमते उभयत आश्रयणेऽन्तादिवद्भावानङ्गीकारात्तत एव निषेधाप्राप्तिः । नागेशमते उभयत आश्रयणेऽप्यन्तादिवद्भावाङ्गीकारादेकारान्ते पूर्वान्तवद्भावेन पूर्वपदत्वस्य तदेकारादावेव परादिवद्भावेनेन्द्रशब्दत्वस्य च लाभेऽपि पूर्वपदात्परेन्द्रपदत्वं दुर्लभम् । पौर्वापर्यलक्षणस्य व्यपवर्गस्याशास्त्रीयत्वेनान्तादिवच्चेत्यनेनातिदेष्टुमशक्यत्वात् । एवं च तन्मतेऽपि निषेधवैयर्थ्यमेवेति भावः ॥२१५॥

प्रकारान्तरेणापि निषेधवैयर्थ्यमेवोपपादयति—**सोमे इत्यादिना** । उत्तरम् = उत्तरपदम् ॥ २१६ ॥

**एकादेशेनेति** । सोमेन्द्रशब्दे इन्द्रेति यदुत्तरपदं तस्याद्योऽच्, इकारो गुणैकादेशेनापहृतः । अपरश्चान्त्योऽकारो यस्येति चेति लोपेनापहृतः । एवमुत्तरपदम्, अनच्कम् = अज्-रहितं सञ्जातं तेन देवताद्वन्द्वे चेति वृद्धेः प्राप्तिरेव नास्तीति वृद्धिनिषेधो व्यर्थं इति भावः ॥ २१७ ॥

प्रकारान्तरेण वृद्धिप्राप्तिमाशङ्कते—**नन्विति** । उक्तन्यायात् = एकदेशविकृतन्यायात् ॥ २१८ ॥

उक्ताशङ्कां परिहरति—**मैवमिति** । शास्त्रसंकेतितस्य पदत्वप्रत्ययत्वादिधर्मस्यैवान्तादिवच्चेत्यनेनातिदेशः क्रियते, उत्तरपदत्वस्य तु तथात्वाभावान्नातिदेश इति

**एकादेशस्थानिनि यः खलु वर्णैकवृत्तिधर्मोऽस्ति।**
**नास्ति च तस्यादेशे तद्घटितत्वं हि ताद्रूप्यम् ॥ २२० ॥**
**मरुदादिभिरिन्द्रस्य द्वन्द्वे तु प्राक्प्रयोग इन्द्रस्य।**
**अभ्यर्हितभावाच्चाजादित्वादेश्च तत्राह ॥ २२१ ॥**

---

भावः। ननु केवलस्योत्तरपदत्वस्याशास्त्रीयत्वेनातिदेशानर्हत्वेऽप्युत्तरपदाद्यच्त्वस्य शास्त्रीयाच्त्वघटितत्वेनातिदेशः स्यादेवेत्यत आह—**ताद्रूप्यानतिदेशादिति** ॥२१९॥

ननु किन्नाम ताद्रूप्यम्। न तावद्वर्णमात्रवृत्तिधर्मत्वं तत्। अदन्तत्वस्य तथात्वाभावेन खट्वाभिरित्यत्र टाबकारयोरेकादेशस्य पूर्वान्तवद्भावेनादन्तत्वातिदेशे ततः परस्य भिस ऐसादेशापत्तेः। तद्वारणाय वर्णमात्रवृत्तिधर्मघटितत्वं तदित्युक्तौ तु क्षीरपेणेत्यादौ पेशब्दे एकाजुत्तरपदत्वातिदेशो न स्यात्। तस्य वर्णमात्रवृत्त्यच्त्वघटितत्वात्। ततश्च तत्र णत्वं न सिध्येदतस्तत्स्वरूपं निर्वक्ति—**एकादेशेत्यादिना**। स्ववृत्तित्वस्वस्थानिकादेशावृत्तित्वोभयसंबन्धेनैकादेशस्थानिविशिष्टो यो वर्णमात्रवृत्तिधर्मस्तद्घटितत्वं ताद्रूप्यत्वमिति भावः। अत्त्वस्योक्तविधधर्मत्वाददन्तत्वं ताद्रूप्यम्। अच्त्वस्य इकारस्थानिकादेश एकारेऽपि वृत्तित्वेन द्वितीयसंबन्धाभावात्तद्घटितमेकाजुत्तरपदत्वं न ताद्रूप्यम्। नन्वेवं सौमेन्द्र इत्यत्राप्यच्त्वस्य द्वितीयसंबन्धाभावेनैकादेशस्थानिविशिष्टधर्मत्वाभावात्तद्घटितस्योत्तरपदाद्यच्त्वस्य ताद्रूप्यत्वं न स्यादिति चेत्। सत्यम्। तत्राच्त्वमादाय ताद्रूप्यासंभवेऽप्युत्तरपदाद्यच्त्वस्योक्तरीत्यैकादेशरूपैकारवृत्तित्वाभावेन विशिष्टधर्मत्वाद्व्यपदेशिवद्भावेन स्वस्य स्वघटितत्वाच्च तदेव ताद्रूप्यमिति बोध्यम्। ताद्रूप्यानतिदेशे प्रमाणं च, अन्तादिवच्च (६।१।८५) इति सूत्रे "वर्णाश्रयविधौ च" इत्यन्तादिवद्भावनिषेधवार्तिकस्य प्रत्याख्यानाय भाष्यकृतोक्तं न वाऽताद्रूप्यातिदेशादिति वचनम्। षत्वतुकोरिति तुग्ग्रहणं चात्र ज्ञापकम्। अन्यथाऽधीत्येत्यादौ पूर्वान्तवद्भावेन ह्रस्वत्वादेव तुक्सिद्धौ किं तेन। न च सोम् इति मान्तस्य पूर्वपदत्वमिव एन्द्रेत्यस्योत्तरपदत्वमप्येकदेशविकृतन्यायेनास्तु ततश्च वृद्धिप्राप्तिरस्त्येवेति वाच्यम्। तदेकदेशमात्रविकारविशिष्टं तदन्यवन्नेति तस्य न्यायस्यार्थात्। अत्रार्थे मानं च अन्तादिवच्च (६।२।८५) इति सूत्रे प्रकृतपरिभाषाज्ञापनावसरे 'इन्द्रे द्वावचौ तत्रैको यस्येति लोपेन ह्रियतेऽपर एकादेशेन। अनच्क इन्द्रः संपन्नः। तत्र को वृद्धिप्रसङ्गः' इति भाष्यमेव। उक्तरीत्यैकदेशविकृतन्यायेन वृद्धिप्रसङ्गसम्भवे तदसङ्गतिः स्पष्टेति बोध्यम् ॥ २२० ॥

नेन्द्रस्य परस्येति निषेधस्यान्यत्र चारितार्थ्याशङ्कां परिहरति—**मरुदादिभिरिति**। प्राक्प्रयोगः पूर्वनिपातः। तत्र हेतुमाह—**अभ्यर्हितभावाच्चेति**। मरुदपेक्षयेन्द्रस्या-

## पूर्वोत्तरपदनिमित्तकार्यात्पूर्वमन्तरङ्गोऽप्येकादेशो न॥५३॥

नेन्द्रस्य परस्येति प्रतिषेधो ज्ञापयत्येनाम् ।
पूर्वपदादिनिमित्तं वस्तुसदेवोपयुक्तमिह ॥ २२२ ॥
न तु पूर्वपदत्वादिकरूपेण निमित्तताऽऽग्रहः कार्यः ।
अत एवाहादेशः परमाहमिहान्तरङ्गदीर्घात्प्राक् ॥ २२३ ॥
एकादेशपदं चोपलक्षणं सकलसन्धिकार्याणाम् ।
तेन मुमः प्राङ् न भवति यणन्तरङ्गोऽपि रात्रिमटे ॥ २२४ ॥
नन्वेवमपि समासापेक्षल्यबपेक्षयाऽन्तरङ्गत्वात् ।
हित्वादयः प्रधायेत्यादौ पूर्वं स्युरत आह ॥ २२५ ॥

---

भ्यर्हिततरत्वात् अजादित्वादेश्च = अजाद्यदन्तत्वाच्चेन्द्रपदस्य पूर्वनिपातः । तेन तत्र न तस्य चारितार्थ्यमिति भावः ॥ २२१ ॥

उक्तनिषेध एवास्या ज्ञापक इत्याह—नेन्द्रस्येति ॥ २२२ ॥

**परमाहमिति** । परमश्चासौ अहं चेति परमाहम् । अत्र—परम + अस्मद् + सु इति स्थितेऽन्तरङ्गमपि दीर्घादेशं बाधित्वा त्वाहौ सावित्यनेन अहादशे एव पूर्वं भवति । अन्तरङ्गदीर्घोत्तरमहादेशे तु परादिवद्भावेन आस्मदित्यस्यास्मच्छब्दत्वेन तस्याहादेशेऽनिष्टरूपापत्तिः स्यात् । अत्र सवर्णदीर्घरूपकार्यं प्रति पूर्वोत्तरपदयोः पूर्वपदत्वादिना रूपेण निमित्तत्वाभावेऽपि तद्घटकवर्णयोर्निमित्तत्वात्पूर्वोत्तरपदनिमित्तकत्वव्यवहारस्तावतैव च परिभाषाप्रवृत्तिरिति भावः ॥ २२३ ॥

**मुमः प्रागिति** । रात्रावटतीति रात्रिमट इत्यत्र रात्रेः कृति विभाषेति मुमागमात्प्रागन्तरङ्गोऽपि यणादेशो न प्रवर्तत इत्यर्थः ॥ २२४ ॥

**एवमपि** = उक्तरीत्याऽन्तरङ्गपरिभाषाप्रयुक्तदोषवारणेऽपि । **हित्वादय इति** । प्रधाय प्रस्थायेत्यादौ 'दधातेर्हिः' 'द्यति स्यति मास्थामित्तिकिति' इत्यादिशास्त्रविहिता आदेशा ल्यबपेक्षयाऽन्तरङ्गत्वात्पूर्वं स्युस्तदुत्तरं ल्यप् स्यात्ततश्चोक्तरूपासिद्ध्यापत्तिरिति भावः ॥ २२५ ॥

## अन्तरङ्गानपि विधीन् बहिरङ्गो ल्यब्बाधते ॥ ५४ ॥

ज्ञापकमस्या ल्यबुपादानमदो जग्धिरिति सूत्रे ।
एतदभावे तिकितीत्येव हि सिध्येत्प्रजग्ध्येति ॥ २२६ ॥

ननु वृद्ध्यादेः पूर्वं सवर्णदीर्घेऽन्तरङ्गत्वात् ।
सिद्धिरियायेत्यादेर्न स्यादत आह परिभाषाम् ॥ २२७ ॥

## वार्णादाङ्गं बलीयो भवति ॥ ५५ ॥

अभ्यासस्येत्यस्मिन्नसवर्णग्रहणमिह लिङ्गम् ।
तद्धीषतुरित्यादावियङादिनिवारणाय कृतम् ॥ २२८ ॥

इयङादिबाधके त्वन्तरङ्गदीर्घेऽत्र तद्व्यर्थम् ।
दीर्घापवादभावात्प्राप्त इयङि तस्य वारकं तु न तत् ॥ २२९ ॥

---

अन्तरङ्गानपीति । अत्राप्यन्तरङ्गनिमित्तविनाशकस्यैव ल्यपो बलवत्त्वं ज्ञेयम् । तेन प्रपूर्वादिषधातोर्णिचि ततः क्त्वाप्रत्यये समासे क्त्वो ल्यपि प्रेष्य गत इत्यादौ गुणैकादेशात्पूर्वं ल्यब् न भवति, ल्यपस्तद्विनाशकत्वाभावात् । पूर्वं ल्यपः प्रवृत्तौ तु, ल्यपि लघुपूर्वादिति णेरयादेशापत्तिरिति बोध्यम् ॥ २२६ ॥

अन्यत्राप्यन्तरङ्गपरिभाषाप्रयुक्तदोषापनोदायाह—नन्विति । इण्धातोर्लिटि इयायेत्यादिरूपे साध्ये, द्वित्वे कृते इ इ अ इति स्थिते बहिरङ्गत्वेन विवक्षितं यद् वृद्धिविधायकशास्त्रमचो ञ्णितीति, तन्निमित्तसमुदायोऽङ्गपदबोध्यः, इ इ इति, तद्घटकेकारबोधकसप्तम्यन्ताच्पदघटितत्वेन, अकः सवर्णे दीर्घ इति दीर्घैकादेशविधायकशास्त्रस्यान्तरङ्गत्वाद् वृद्धिं बाधित्वा सवर्णदीर्घ एव भविष्यति । ततश्च इयायेत्यादिरूपासिद्ध्योपत्तिरिति भावः । दीर्घे कर्तव्ये जातस्य द्वित्वस्य बहिरङ्गत्वेनासिद्धत्वं तु न । नाजानन्तर्ये इति निषेधादिति बोध्यम् ॥ २२७ ॥

अभ्यासस्येत्यस्मिन् । 'अभ्यासस्यासवर्णे" इति सूत्रे । ज्ञापकत्वमुपपादयति—तद्धीत्यादिना ॥ २२८ ॥

प्रकृतपरिभाषाऽभावे, असवर्णग्रहणस्य वैयर्थ्यं दर्शयति—इयङादीति । दीर्घस्यान्तरङ्गता पूर्वोक्तरीत्या ज्ञेया । नचेयङादिविधायकशास्त्रस्यापि दीर्घशास्त्रीयनिमित्त-

इयङ इयर्त्यादिसकलनिजलक्ष्यप्राप्तयणपवादत्वात् ।
इत्याहुः प्राचीनाः सूत्रमखिलमेव लिङ्गमिति नव्याः ॥ २३० ॥

प्राक्कृतयोर्गुणवृद्धयोर्द्विर्वचनेऽचीत्यनेन हि निवृत्तौ ।
दीर्घापत्तिरियायेत्यादिष्वपि वर्ततेऽन्तरङ्गत्वात् ॥ २३१ ॥

---

भूतो यः पूर्वपरयोरिति पदबोधितः समुदायः, इ इ इति तद्घटकपरेकारबोधकसप्तम्यन्ताद्पदघटितत्वेनान्तरङ्गत्वसाम्यादुक्तव्यवस्थाऽनुपपन्नेति वाच्यम् । द्वित्वप्रयोज्यसंज्ञानिमित्तककार्याणां द्वित्वनिमित्तप्रत्ययनिमित्तकत्वाङ्गीकारेणाभ्याससंज्ञानिमित्तकस्येयङादेरप्युतुसादिनिमित्तकत्वेन प्रकृतिप्रत्ययोभयापेक्षतया बहिरङ्गत्वात् । दीर्घस्य तु तदन्तर्भूतप्रकृतिमात्रनिमित्तकत्वेनान्तरङ्गत्वात् । उक्तकल्पनायां मानं, ह्वः संप्रसारणमिति सूत्रारम्भ एव । अन्यथाऽजूहवदित्यादावभ्यस्तस्य चेत्यनेनैव संप्रारणसिद्धेस्तद्वैयर्थ्यापत्तेः । उक्तार्थाङ्गीकारे तु अभ्यस्तस्य चेत्यस्य द्वित्वप्रयोज्याभ्यस्तसंज्ञानिमित्तकत्वेन द्वित्वनिमित्तचङ्प्रत्ययनिमित्तकत्वात्, चङश्च णिचा व्यवधानात्तेन सूत्रेण संप्रसारणं न स्यादतो ह्वः संप्रसारणमिति सूत्रारम्भ आवश्यक इति बोध्यम् । नन्वीषतुरित्यादौ दीर्घस्येयङपेक्षयाऽन्तरङ्गत्वेऽपि, इयङो दीर्घापवादत्वात्तस्यैव प्रवृत्तिर्भविष्यत्यतस्तत्रेयङाद्यादेशवारणार्थत्वेनासवर्णग्रहणं न परिभाषाज्ञापकमित्यत आह— दीर्घापवादेति ॥ २२९ ॥

तत्र हेतुमाह - इयङ इति । यथा कुप्वोः ≍ क ≍ पौ चेति सूत्रं येन नाप्राप्तन्यायेन स्वविषयसकललक्ष्यप्राप्तस्य विसर्जनीयस्य स इत्यस्यैवापवादः, न तु शर्परे विसर्जनीय इत्यस्य, तथा अभ्यासस्यासवर्णे इतीयङ्विधिरपि इयर्त्यादिसकललक्ष्यसाधारणप्राप्तिमतो यणादेशस्यैवापवादो न तु कतिपयलक्ष्यप्राप्तस्य दीर्घस्येति भावः । इयर्तीत्यादौ ऋ ऋ ति इति स्थिते यणं बाधित्वाऽपवादत्वात्सवर्णदीर्घः प्राप्तस्तं बाधित्वा अर्तिपिपर्त्योश्चेतीत्वं प्रतिपदविधित्वात्प्राप्तम् । किन्त्वभ्यासविकारेषु बाध्याः पूर्वं प्रवर्तन्त इति न्यायेन उरदित्यत्वं पूर्वं भवति । तदुत्तरमित्वे यण्प्राप्तिर्बोध्या । नन्विकारांशे यणः सकललक्ष्यप्राप्तत्वेऽपि ऊखतुरित्यादावुकारांशे दीर्घस्यैव तथात्वेन तदपवाद उवङि प्राप्ते तद्वारणार्थमसवर्णग्रहणमतो न ज्ञापकमिति चेन्न । तावन्मात्रार्थत्वे हि 'अभ्यासस्यानौ' इति न्यासेनैव सिद्धेरसवर्णग्रहणवैयर्थ्यात्तज्ज्ञापकमेवेत्याशयात् । अखिलमेव = अभ्यासस्यासवर्णे इति संपूर्णमेव सूत्रं वार्णपरिभाषाज्ञापकमित्यर्थः ॥ २३० ॥

संपूर्णसूत्रस्य, इयेष इयायेत्यादौ चारितार्थ्यमाशङ्क्य निराकरोति—प्राक्कृतयोरिति । निवृत्तौ = स्थानिरूपातिदेशेनापहारे सतीत्यर्थः ॥ २३१ ॥

न च तदियर्त्याद्यर्थं तथा सति वदेदुरित्येव।
एरनुवृत्त्या व्याख्याऽऽश्रयणेन च दोषविनिवृत्तेः ॥ २३२ ॥
ए ऐ इत्यादिभ्यस्त्वाचारे क्विपि लिटीयङाद्यर्थम्।
ओणकशब्दात्क्यचि सन्युवोणकीयिषति सिद्धये च न तत् ॥२३३॥
अस्या ज्ञापनकाले भाष्येऽर्त्यर्थं हि केवलं योगः।
नैवारब्धुमुचित इति कथनेनैषामनभिधानात् ॥ २३४ ॥
अन्त्योदाहरणे च द्वित्वमजादेर्द्वितीयस्य।
न त्वाद्यस्योचितमिति तद्रूपं नैव सम्भवति ॥ २३५ ॥

---

तत् = अभ्यासस्यासवर्णे इति सूत्रम्। तथा सति = तावन्मात्रार्थकत्वे सति, 'उः' इत्येव वदेत्। ननु उरिति न्यासे तत्राङ्गस्येत्यस्याचोत्यस्य च संबन्धे, ऋवर्णान्तस्याङ्गस्याचि पर इयङ् इत्यर्थे कर्त्रा, इत्यादावियङापत्तिः स्यादत आह—एरनुवृत्त्येति। अचिश्नुधातुभ्रुवामिति सूत्रात्, उकारानुवृत्तेरनुपयोगादेकदेशे स्वरितत्वप्रतिज्ञानादय्वोरित्येतद्घटकेकारस्यानुवृत्त्या वैयधिकरण्यान्वयेन, अङ्गावयवऋवर्णस्थानिकस्येवर्णस्येयङ् स्यादचि पर इत्यर्थाश्रयणान्नोक्तदोष इति भावः। नन्वेवमपि ऋधातोर्यङ्लुकि ऋतश्चेत्यनेनाभ्यासस्य रिग्रीगागमयोः, अरियर्तीत्यत्रेयङ् न सिध्येत्, तत्रेकारस्य ऋस्थानिकत्वाभावादत आह—व्याख्याश्रयणेनेति। भाष्ये असवर्णग्रहणमर्त्यर्थं स्यादित्युक्त्वा नैकमुदाहरणमसवर्णग्रहणं प्रयोजयतीत्युक्तं तन्मूलकात्, अचिश्नुधात्विति सूत्राद्धातुग्रहणानुवृत्तिमूलकाद्वा व्याख्यानाद् ऋधातुसंबन्धिन इवर्णस्येयङ् इत्यर्थाश्रयणान्न दोष इति भावः ॥ २३२ ॥

अन्यत्रापि चारितार्थ्यं नेत्याह—ए ऐ इत्यादिना। आदिपदेन ओ औ इत्यनयोरपि संग्रहः ॥ २३३ ॥

उक्तप्रयोगेष्वचारितार्थ्यप्रदर्शनाय तेषां सप्रमाणमनभिधानमाह—अस्या इति। दाश्वान् साह्वान्० (६।१।१२) इति सूत्रे भाष्ये प्रकृतपरिभाषाज्ञापनावसरे असवर्णग्रहणमर्त्यर्थं स्यादित्याशङ्क्य नैकमुदाहरणमसवर्णग्रहणं प्रयोजयतीत्युक्त्या उक्तप्रयोगाणामनभिधानं ध्वन्यतेऽतस्तत्र न चारितार्थ्यम् ॥ २३४ ॥

उवोणकीयिषतीति तु प्रयोग एव न संभवतीत्याह—अन्त्येति। नन्द्राः संयोगादयः (६।१।३) इति सूत्रे यथेष्टं वा नामधातूनामिति वार्तिकेन नामधातुषु यथेष्टं कस्यचिदेकाचो द्वित्वबोधनेऽपि, अजादेस्त्वाद्येतरस्येत्येव कौमुद्यां व्यवस्थापितत्वात्तत्राद्यस्यैकाचो द्वित्वमयुक्तमतः स प्रयोगोऽनिष्ट इति भावः ॥ २३' ॥

यद्यपि भाष्ये ज्ञापकमसवर्णग्रहणमित्युक्तम् ।
तदपि तदुपपादनपरभाष्यात्पूर्णस्य लभ्यते तत्त्वम् ॥ २३६ ॥
अकृतव्यूहा इत्येतयाऽत्र दीर्घाप्रसक्तिरिति चेन्न ।
तदसत्त्वात्सत्त्वे वा तस्या अत्र प्रवृत्त्ययोग्यत्वात् ॥ २३७ ॥
यत्रान्तरङ्गकार्यप्रसक्तिकालोत्तरं हि बहिरङ्गम् ।
प्राप्नोति तन्निमित्तापहारि तत्रैव तत्प्रवृत्तिरिति ॥ २३८ ॥
दीर्घे कृतेऽपि पूर्वान्तवदित्यभ्याससंज्ञायाम् ।
णल्यसवर्णे इयङ्स्यादित्यर्थं सूत्रमित्यपि न ॥ २३९ ॥

---

यद्यपीति । दाश्वान्साह्वान्० (६।१।२२) इति सूत्रे भाष्ये,—आचार्यप्रवृत्तिर्ज्ञापयति वार्णादाङ्गं बलीयो भवतीति यदयमभ्यासस्यासवर्णे इत्यसवर्णग्रहणं करोति" इत्यसवर्णग्रहणस्य ज्ञापकत्वं यद्यप्युक्तम्, तथापि तदुपपादनग्रन्थे 'कथं कृत्वा ज्ञापकम् ? नह्यन्तरेण गुणवृद्धी असवर्णपरोऽभ्यासो भवती'त्युक्त्या संपूर्णसूत्रस्यैव ज्ञापकतायां भाष्यतात्पर्यमित्यवगम्यत इति भावः ॥ २३६ ॥

अकृतव्यूहपरिभाषया ज्ञापकत्वविघटनमाशङ्क्य निराकरोति—अकृतेत्यादिना । इयायेत्यादौ यदि पूर्वं दीर्घो न प्रवर्तेत तर्हि वृद्धिः स्यादिति बहिरङ्गेणान्तरङ्गनिमित्तविनाशसंभावनायाः सत्त्वादकृतव्यूहपरिभाषया दीर्घस्याप्रवृत्तेः संपूर्णसूत्रस्य ज्ञापकत्वमनुपपन्नमिति शङ्कितुराशयः । तन्निराकरोति—नेति । तदसत्त्वात् = तस्या अकृतव्यूहपरिभाषाया असत्त्वात् प्राचीनसम्मताया अपि तस्या भाष्येऽदर्शनेनानङ्गीकारादित्यर्थः । सत्त्वेवेति । प्राचीनसम्मतायास्तस्याः परमनवीनैरङ्गीकारेऽपि प्रकृते प्रवृत्त्ययोग्यत्वादित्यर्थः ॥ २३७ ॥

तस्याः प्रवृत्तिविषयमाह—यत्रेति । प्रसक्तिकालः प्रवृत्तियोग्यः कालः । प्रकृते तु न तथा । बहिरङ्गवृद्ध्यादेरन्तरङ्गद्वित्वप्रयोजकद्वित्वादपि प्राक् प्राप्तिमत्त्वात् । अस्यां कल्पनायां मानं ज्ञापकपरभाष्यमेवेति बोध्यम् ॥ २३८ ॥

प्रकारान्तरेण सूत्रस्य चारितार्थ्यमाशङ्क्य निराकरोति—दीर्घे इत्यादिना । इ इ अ इति स्थिते पूर्वं दीर्घे कृतेऽपि, अन्तादिवच्चेत्यनेन पूर्वान्तवद्भावात्तस्याभ्याससंज्ञायामसवर्णे णलकारे वृद्धिं बाधित्वा इयङ्सिद्ध्यर्थमभ्यासस्यासवर्णे इति सूत्रमित्यपि न वाच्यमित्यर्थः ॥ २३९ ॥

तत्रासवर्णशब्दादभ्यासोत्तरदलस्थितस्यैव ।
असवर्णाचः प्रत्यासत्त्या ग्रहणात्तदप्राप्तेः ॥२४०॥
ज्ञापकसाजात्याच्चाङ्गवार्णयोः कार्ययोरुभयोः ।
एकस्थानिकतायामेवैतस्याः प्रवृत्तिरिति बोध्यम् ॥२४१॥
अत एवातो ङित इति गाते इत्यत्र कार्यमाङ्गमपि ।
भिन्नस्थानितया ऽपि सवर्णदीर्घो हि बाधते वार्णः ॥२४२॥
यत्तु समाननिमित्तकतायामेवेयमिति तन्न ।
एवं सति हि ज्ञप्तेऽप्यत्र न सिध्येदियायादि ॥२४३॥

---

इत्यपि नेत्युक्तं तत्र हेतुमाह—तत्रेति। उत्तरखण्डस्याभ्यासप्रत्यासन्नत्वात्तदीयासवर्णाच्येवेयङ्प्रवृत्तिर्न तु णलकारे इति भावः॥ २४०॥

ज्ञापकसाजात्यादिति। ज्ञापकस्य अभ्यासस्यासवर्णे इत्यस्य विषये इयायेत्यादौ तथैव सत्त्वादिति भावः। **एकस्थानिकतायामिति**। आङ्गशास्त्रस्य वार्णशास्त्रीयस्थानितावच्छेदकपरत्वपर्याप्त्यधिकरणपर्याप्तस्थानिताकत्व इत्यर्थः। इयायेत्यादौ वार्णशास्त्रमकः सवर्णे दीर्घ इति, तदीयस्थानितावच्छेदकं यत्परत्वं तत्पर्याप्त्यधिकरणं पर इकारः, तत्रैवाङ्गशास्त्रस्याचो ञ्णितीत्यस्य स्थानिता पर्याप्ताऽस्तीत्यतस्तयोरेकस्थानिकत्वम्। पर्याप्तिनिवेशात्, त्वं स्त्रीत्यादौ त्व अद् अम् इति स्थिते शेषे लोप ष्टिलोप इति पक्षे टिलोपः परोऽप्यन्तरङ्गे अतो गुणे कृते प्रवर्तते। तेनादन्ताभावान्नटाविति कौमुदीग्रन्थ उपपद्यते। पररूपीयस्थानितावच्छेदकपरत्वपर्याप्त्यधिकरणे परस्मिन्नकारे टिलोपीयस्थानितायाः पर्याप्तत्वाभावेन समानस्थानिकत्वाभावाद्वार्णपरिभाषाया अप्रवृत्त्या वार्णकार्यस्यातो गुण इति पररूपस्यैवान्तरङ्गत्वेन पूर्वं प्रवृत्तेः। परिभाषेन्दुशेखरे समानकार्यित्व इत्युक्तेरप्यत्रैव तात्पर्यम्। अत एव, उच्छति युच्छतीत्यादौ तुग्गुणयोः समानकार्यिकत्वेऽपि समानस्थानिकत्वाभावाद्वार्णपरिभाषाया अप्रवृत्त्याऽन्तरङ्गत्वात्पूर्वं तुकि लघूपधत्वाभावान्न गुणः। एवमन्यत्रापि ज्ञेयम्॥ २४१॥

**अत एवेति**। आङ्गवार्णयोः समानस्थानिकत्व एवास्याः प्रवृत्त्यङ्गीकाराद् गाते इत्यत्र गा अ आते इति स्थिते आतो ङित इतीयादेशरूपस्याङ्गकार्यस्य अकः सवर्णे दीर्घ इति वार्णकार्यस्य च भिन्नस्थानिकत्वेनास्या अप्रवृत्त्या पूर्वोपस्थितनिमित्तकत्वेनान्तरङ्गत्वाद्धात्वाकारशबकारयोर्दीर्घैकादेश एव पूर्वं प्रवर्तते। ततश्चातः परत्वाभावात्प्रत्ययाकारस्य नेयादेशः॥ २४२॥

प्राचीनमतं निरस्यति—यत्त्विति। ज्ञप्तेऽपीति। वार्णादाङ्गं बलीय इति ज्ञापितेऽपि, इयाय इयेषेत्यादौ वार्णकार्यस्य सवर्णदीर्घस्याङ्गकार्यस्य वृद्ध्यादेश्च भिन्ननिमित्त-

न च शङ्क्यमियायादावायादेः स्थानिवद्भावात् ।
असवर्णवर्णविरहादियङादेर्दुर्लभत्वमेवेति ॥२४४॥

इयङादिविधानबलान्न हि तत्र स्थानिवद्भावः ।
तत् सामान्यापेक्षं ज्ञापकमभ्यासकार्ये हि ॥२४५॥

अभ्यासोत्तरखण्डाजादेशः स्थानिवन्न भवतीति ।
तत्कार्यप्रतिबन्धक एवासौ नेति कल्पना त्वफला ॥२४६॥

प्रतिबन्धकानिवेशेऽप्यरिरियियादिति भवति सिद्धम् ।
प्रागेव रिङादेशाद्भवति हि तत्रान्तरङ्ग इयङ् ॥२४७॥

---

कत्वेन तत्रास्या अप्रवृत्तौ तदसिद्ध्यापत्तेरित्यर्थः । अभ्यासस्यासवर्ण इति सूत्रस्य वैयर्थ्यापत्तेश्चेत्यपि बोध्यम् ॥ २४३ ॥

ज्ञापितेऽपि सूत्रस्याचारितार्थ्यमाशङ्क्य परिहरति—न चेत्यादिना । इ इ अ इति स्थिते पूर्वं वृद्धौ इ ऐ अ इति जातेऽन्तरङ्गत्वादायादेशप्रवृत्तेरुत्तरमेवेङ्प्रवृत्तिर्वक्तव्या । तत्रायादेशस्य स्थानिवत्त्वेन इकारबुद्ध्या सवर्णपरकत्वस्यैव सत्त्वादियङ् दुर्लभः । नन्वायादेशस्य स्थानिवत्त्वेन ऐबुद्धिः स्यात्, इबुद्धिः कुतः ? न च प्रथममैकारे स्थानिवद्भावेनेकारनिष्ठं सवर्णाच्त्वमानीय तदादेशे पुनः स्थानिवद्भावेन तदानयनमिति वाच्यम् । लक्ष्ये लक्षणमिति न्यायेन पुनः स्थानिवद्भावप्रवृत्तेरयुक्तत्वादिति चेन्मैवम् । स्थानिवदादेश इत्यत्र स्थानिपदेन स्थानिस्थानिनोऽपि ग्रहणादायादेशे स्वस्थान्यैकारस्थानीकारवृत्तिसवर्णाच्त्वस्यैकेनैव स्थानिवद्भावेन लाभात् । अत एव सुनयिकेत्यादौ नय् रूपानुमानिकादेशे स्वस्थानि-ने-शब्दस्थानि-नी-शब्दनिष्ठधातुत्वस्य स्थानिवत्त्वेन लाभाद्धात्वन्तयकोऽस्तु नित्यमिति नित्येत्वसिद्धिः ॥ २४४ ॥

इयङादिविधानबलादिति । इयङादिविधायकस्याभ्यासस्यासवर्ण इति सूत्रस्यारम्भसामर्थ्यादित्यर्थः । तदिति । तच्च सूत्रं वक्ष्यमाणरीत्या सामान्यविषयकं ज्ञापकं न त्वियङुवङ्मात्रविषयकमित्यर्थः । ज्ञाप्यमाह—अभ्यासकार्ये हीत्यादि । अभ्यासकार्ये कर्तव्ये तदुत्तरखण्डाजादेशस्य स्थानिवत्त्वं न भवतीति सामान्यापेक्षं तज्ज्ञापकमिति सम्बन्धः । परिभाषेन्दुशेखरे तु तत्प्रतिबन्धकीभूतं स्थानिवत्त्वं नेत्यधिकमुक्तं तस्य तु न किंचिदनन्यथासिद्धं फलमित्याह—तत्कार्येति । अभ्यासकार्यप्रतिबन्धक एवासौ स्थानिवद्भावो न भवतीति कल्पना तु निष्फलैवेत्यर्थः ॥ २४५, २४६ ॥

निष्फलत्वमेव दर्शयति—प्रतिबन्धकानिवेशेऽपीत्यादिना । ऋधातोर्यङ्लुङन्ताल्लिङि द्वित्वेऽभ्यासस्य उरदित्यत्वे रिगागमे अरि ऋ यात् इति स्थिते इयङादेशात्परत्वेनो-

तस्यानिवेश एव च सिध्यत्यचकाणदित्यादि ।
तत्रोत्तरदलावृद्धिर्न स्थानिवदित्यतो न सन्वदिति ॥ २४८ ॥
वचनफलमचीकमतेत्यादौ सन्वत्त्वदीर्घयोः सिद्धिः ।
उत्तरदल उपधाया ह्रस्वस्य स्थानिवत्त्वपरिहारात् ॥ २४९ ॥
दीर्घस्त्वारत्यादौ ढ्रलोप इति नास्य फलमुचितम् ।
स्थान्यृधियामप्यस्ति हि रेफविलोपि त्वधीस्तत्र ॥ २५० ॥

त्तरखण्डऋकारस्य रिङादेशे कृते तस्य स्थानिवद्भावेनासवर्णाच्परकत्वादभ्यासस्येयङि अरिन्यियादिति रूपं सिध्यति । तत्र स्थानिवद्भावस्याभ्यासकार्यप्रतिबन्धकत्वाभावात्प्रत्युत तत्साधकत्वात्स्थानिवद्भावनिषेधो नेति प्रतिबन्धकत्वनिवेशफलं परिभाषेन्दुशेखरे उक्तम् । किन्तु तत्र पूर्वोपस्थितनिमित्तकत्वेनान्तरङ्गत्वादियङादेशो रिङादेशात्प्रागेव प्रवर्तनीयः । अतस्तत्र स्थानिवद्भावस्य नोपयोगः । इयङादेशस्य पूर्वप्रवृत्तेरेव तत्र यकारस्य स्थानिभूतादचः पूर्वत्वेन रिङादेशोत्तरं लोपो व्योरिति प्राप्तो यलोपो रिङादेशस्य स्थानिवत्त्वेन वारयितुं शक्यते । तस्य पूर्वमप्रवृत्तौ तु यकारस्य स्थानिभूतादच ऋकारात्पूर्वत्वाभावेन तदीयकार्ये कर्तव्येऽचः परस्मिन्निति स्थानिवत्त्वाभावे यलोपापत्तिः स्यादिति बोध्यम् ॥ २४७ ॥

प्रतिबन्धकत्वनिवेशे न केवलं फलाभावः, इष्टरूपासिद्ध्यापत्तिरपीत्याह—तस्यानिवेश इति । प्रतिबन्धकत्वस्यानिवेशादेवाचकाणदित्यादि सिध्यति । तन्निवेशे तु तदसिध्यापत्तिरिति भावः । अचकाणदित्यत्र काण्यादीनां वेति णौचङ्युपधाह्रस्वस्य विकल्पाद्ध्रस्वाभावपक्षे उत्तरखण्डस्थस्य णिञिनिमित्तकवृद्ध्यादेशस्य स्थानिवद्भावे लघुपरत्वेन सन्वद्भावः स्यात्ततश्चेत्वदीर्घयोरापत्तिः । सा चाभ्यासकार्ये कर्तव्ये उत्तरखण्डाजादेशो न स्थानिवदित्येतावन्मात्रोक्तौ तत्र स्थानिवत्त्वाप्रवृत्त्या वारयितुं शक्या । प्रतिबन्धकत्वविशेषणे तु तत्र स्थानिवद्भावस्याभ्यासकार्यप्रतिबन्धकत्वाभावान्निषेधाप्रवृत्तौ दोषः स्पष्टः ॥ २४८ ॥

वचनफलमिति । अभ्यसाकार्ये तदुत्तरखण्डाजादेशो न स्थानिवद्भवतीति वचनस्य फलम्, अचीकमतेत्यादावुपधाह्रस्वोत्तरं तस्य स्थानिवत्त्वनिषेधाल्लघुपरत्वेनाभ्यासस्य सन्वद्भावे न सन्यत इतीत्वस्य दीर्घो लघोरिति दीर्घस्य च सिद्धिरित्यर्थः ॥ २४९ ॥

उक्तवचनस्य परिभाषेन्दुशेखरोक्तम्, आरतीत्यादौ ढ्रलोप इति दीर्घसिद्धिरूपं फलं तु न युक्तमित्याह—दीर्घस्त्विति । ऋधातोर्यङ्लुकि द्वित्वे लटि तस्य झौ झस्यादादेशे अभ्यासस्योरदित्यत्वे रुगागमे च अर् ऋ अति इति स्थिते ऋकारस्य रेफस्य यणादेशे

अङ्गाधिकारविहितं कार्यमिह ग्राह्यमाङ्गशब्देन ।
तत्पुनरङ्गोद्देश्यकमेवेति तु नाग्रहः कार्यः ॥ २५१ ॥
तेन कुले दधिनी इह वृद्धिमपि च दीर्घमन्तरङ्गविधी ।
बाधत औङः शीत्ययमङ्गानुद्देश्यकोऽप्यनया ॥ २५२ ॥
एषा चानित्येति ज्ञेयं च्छ्वोरिति सतुक्छनिर्देशात् ।
आङ्गत्वात्पूर्वं शे तुकोऽप्रसक्त्या हि स व्यर्थः ॥ २५३ ॥

---

रोरीत्यनेन पूर्वरेफस्य लोपोत्तरमकारस्य ढ्रलोप इत्यनेन दीर्घे कर्तव्ये यदि ऋकारस्थानिकरेफस्य स्थानिवद्भावः स्यात्तर्हि रेफलोपनिमित्तरेफस्य परत्वाभावेन दीर्घो न सिध्येत् । उक्तवचनेन स्थानिवद्भावनिषेधात् तत्सिद्धिरिति नागेशभट्टाभिप्रायः । परन्तु तत्र स्थानिवद्भावेन ऋबुद्धौ सत्यामपि ढ्रलोप इति दीर्घसिद्धिरव्याहतैव । तद्विधौ हि रेफस्य रेफत्वेन रूपेण न निमित्तत्वं किन्तु रेफलोपनिमित्तत्वेन रूपेण, ढरेफौ लोपयतीति ढ्रलोप इत्यर्थात् । ढकाररेफात्मके इति कौमुद्यामुक्तोऽर्थस्त्वार्थिकः । एवं च रेफस्य स्थानिवद्भावेन ऋबुद्धावपि तत्र परे लोपदर्शनात्तस्यैव लोपनिमित्तत्वज्ञानाद्दीर्घप्रवृत्त्युपपत्तेरिति भावः ॥ २५० ॥

परिभाषेन्दुशेखरे—'इयं चाङ्गसंबन्धिन्याङ्ग एवेति स्वरितो वेति सूत्रे भाष्ये । तत्र हि कुमार्यै इत्यादौ यणुत्तरमाडुक्तः' इत्युक्तं, तत्राङ्गसंबन्धिनीत्यस्याङ्गोद्देश्यक इत्यर्थः । आङ्ग इत्यस्य चाङ्गाधिकारस्थ इति । तत्राङ्गोद्देश्यक इत्ययुक्तम् । इष्टप्रयोगासिद्धेः । कुमार्यै इदमित्यत्र स्वरविचारे भाष्ये यणुत्तरमाड्वचनं त्वस्या वक्ष्यमाणज्ञापकेनानित्यत्वेनैवोपपन्नमित्याशयेनाह—अङ्गेति ॥ २५१ ॥

**तेनेति** । आङ्गपदेनाङ्गोद्देश्यकमेव ग्राह्यमिति नियमाभावेन, कुले इत्यत्रान्तरङ्गामपि वृद्धिं, दधिनी इत्यत्र चान्तरङ्गमपि प्रथमयोरिति पूर्वसवर्णदीर्घं बाधित्वाऽङ्गोद्देश्यकत्वरहितोऽप्यङ्गाधिकारस्थत्वेनाङ्गो नपुंसकाच्चेति, औङः श्यादेशोऽनया परिभाषया सिध्यतीत्यर्थः ॥ २५२ ॥

**च्छ्वोरितीति** । च्छ्वोः शूडनुनासिके चेत्यत्र च्छ्वोरिति सतुङ्निर्देशो हि प्रष्टेत्यादौ छस्य शकारे तुकः श्रवणाभावाय कृतः, वर्णपरिभाषाया नित्यत्वे तु आङ्गकार्यस्य च्छ्वोरिति शत्वस्य पूर्वं प्रवृत्तौ छकाराभावेन तुगागमस्याप्राप्त्या सतुङ्निर्देशो व्यर्थं स्यादतः सोऽस्या अनित्यत्वज्ञापक इत्यर्थः । न चाङ्गवर्णयोः समानस्थानिकत्वे एवास्याः प्रवृत्तिरिति प्रागुक्तं, तुगागमशकारादेशयोश्च तथात्वाभावात्तत्रास्या अप्रवृत्त्या सतुङ्निर्देशस्यावश्यकत्वान्न ज्ञापकत्वमिति वाच्यम् । समानस्थानिकत्व एवास्याः प्रवृत्तिरिति कल्पनाया अप्यनित्यत्वमूलकत्वात् । अनित्यत्वं विहाय तदेव

तेन स्योन इतीहाङ्गोऽपि गुणो नैव किन्तु यण् भवति ।
उपपन्नं च कुमार्यां इत्यत्र यणुत्तराड्वचो भाष्ये ॥ २५४ ॥
ननु सेदुष इत्यादौ पूर्वमिटि कृतेऽन्तरङ्गत्वात् ।
वसु संप्रसारण इटो यण् स्यादत आह परिभाषाम् ॥ २५५ ॥

## अकृतव्यूहाः पाणिनीयाः ॥ ५६ ॥

भाविनि निमित्तनाशे बहिरङ्गेणान्तरङ्गशास्त्रस्य ।
संभाविते प्रवृत्तिं न कुर्वते पाणिनीयशास्त्रज्ञाः ॥ २५६ ॥

---

सतुङ्निर्देशेन ज्ञाप्यतामिति तु नाशङ्क्यम् । स्योन इत्यादौ गुणं बाधित्वा यण्प्रवृत्ते-रस्या अनित्यतां विना साधयितुमशक्यत्वात् । तयोः समानस्थानिकत्वेनान्तरङ्गमपि वार्णकार्यं यणं बाधित्वानयाऽऽऽङ्गकार्यस्य गुणस्यापत्तेरिति बोध्यम् ॥ २५३ ॥

अनित्यत्वज्ञापनफलमाह—तेनेति । कुमार्या इति । स्वरितो वाऽनुदात्ते पदादौ (८।२।६) इति सूत्रे भाष्ये कुमार्यां इदम्, किशोर्यां इदम् इत्यत्र स्वरविचारे 'एवं तर्हि इदमिह संप्रधार्यमाट् क्रियतामुदात्तत्वमिति' इत्युक्त्या, उदात्तयणो हल्पूर्वादिति विभक्त्युदात्तत्वप्राप्तेर्यणुत्तरमेव संभवाद् यण उत्तरमाटः प्रवृत्तिरभिप्रेतेति गम्यते । तच्चास्या अनित्यत्वे सत्येवोपपद्यत इति भावः ॥ २५४ ॥

नन्विति—सद् धातोर्भाषायां सद्वसश्रुव इत्यनेन लिटः क्वसौ द्वित्वेऽभ्यासकार्ये सेद्वस् इत्यवस्थायामेव वस्वेकाजाद्घसामिति इट्प्राप्त्या, वसोः संप्रसारणमिति संप्रसार-णस्य तु शस्प्रत्ययोत्तरं भसंज्ञायां सत्यां प्राप्त्या, पूर्वोपस्थितनिमित्तकत्वेनान्तरङ्ग-त्वात्पूर्वमिटि तदुत्तरं वसोः संप्रसारणे इकारस्य यण् स्यादित्यनिष्टरूपापत्तिरिति भावः ॥ २५५ ॥

अकृतव्यूहा इत्यस्य न कृतो विशिष्ट ऊहो निश्चयः शास्त्रप्रवृत्तिविषयो यैरिति दीक्षितादिमतेऽर्थः । तत्र सर्वथा शास्त्रप्रवर्तनाभावे शास्त्रवैयर्थ्यापत्तिः स्यात्, अतो भाविनि निमित्तविनाशे इत्यध्याहारो विवक्षितस्ततः पर्यवसितमर्थमाह—भाविनीति । बहिरङ्गेणान्तरङ्गशास्त्रीयनिमित्तविनाशे उत्तरकाले संभाविते‍ऽन्तरङ्गशास्त्रप्रवृत्तिं पाणिनीया न कुर्वत इत्यर्थः । बहिरङ्गेणेत्यादि फलितार्थकथनं, न तु बहिरङ्गत्वान्तरङ्गत्वे परिभाषा-प्रवृत्तिप्रयोजके इति बोध्यम् ॥ २५६ ॥

लिङ्गमिह समर्थपदं कृतसन्धेस्तद्धितोद्भवायोक्तम् ।
सिद्धोऽन्यथाऽन्तरङ्गे सन्धौ सत्येव सुत्थितादेः सः ॥ २५७ ॥
दीर्घेणैव सवर्णाज् रूपनिमित्तस्य नांशेऽपि ।
दीर्घविनाशद्वारा वृद्धिस्तन्नाशकृज्ज्ञेया ॥ २५८ ॥
ननु वृद्धेर्बहिरङ्गासिद्धतया न हि निमित्तनाशोऽस्ति ।
मैवं समर्थवचनात्सा परिभाषा हि नास्त्यत्र ॥ २५९ ॥
तस्याः परिभाषाया अनित्यताज्ञापकं तु नैवेदम् ।
तत्साध्यत्वाभावाद्दीर्घस्य प्राक्प्रवृत्तत्वात् ॥ २६० ॥

---

लिङ्गमिति । 'समर्थानां प्रथमाद्वा' इति सूत्रे समर्थानामित्येतत्पदमस्या ज्ञापकम् । तत्र हि समर्थपदेन परिनिष्ठितं कृतसन्धिकार्यं शब्दरूपमुच्यते एवं च कृतदीर्घेभ्यः सुत्थितादिभ्यस्तद्धितोत्पत्तिरिति बोधनार्थं तत् । प्रकृतपरिभाषाऽभावे त्वन्तरङ्गत्वाद्दीर्घे कृत एव सुत्थितादेस्तद्धितप्राप्त्या तद्वयर्थं सदस्या ज्ञापकम् । ज्ञापितायान्त्वस्यां भाविन्याऽऽदिवृद्धया दीर्घनिमित्तसवर्णाज्विनाशस्य संभावितत्वाद्दीर्घस्याप्रवृत्तौ सावुत्थितिरिति माभूत्; सौत्थितिरिति यथा स्यादित्यर्थं तच्चरितार्थमिति भावः ॥ २५७ ॥

ननु सौत्थितिरित्यादौ दीर्घैकादेशोत्तरमेव वृद्धिप्राप्त्या एकादेशनिमित्तस्य सवर्णाचस्तेनैव विनाशाद् वृद्धया तद्विनाशाभावान्नायमकृतव्यूहपरिभाषाया विषय इत्याशङ्कायामाह—दीर्घेणैवेत्यादि । तत्र वृद्धया दीर्घैकादेशस्य विनाशात्तद्वारैव दीर्घनिमित्तस्य सवर्णाचोऽपि नाशो ज्ञेय इत्यर्थः । निमित्तस्थानिकादेशविनाशोऽपि निमित्तविनाशपदेन ग्राह्य इति भावः ॥ २५८ ॥

अन्तरङ्गपरिभाषाऽवलम्बनेनोक्तस्थलस्य प्रकृतपभिाषाविषयत्वाभावमाशङ्कते—नन्विति । न चान्तरङ्गपरिभाषया जातस्य समकालप्राप्तस्यैव च बहिरङ्गस्यासिद्धत्वबोधनाद् वृद्धेश्च भविष्यत्प्राप्तिकत्वादियमाशङ्का न युक्तेति वाच्यम् । अकृतव्यूहपरिभाषाप्रवृत्तिप्रयोजकस्यान्तरङ्गनिमित्तविनाशस्य हेतुभूताया वृद्धेः, परिभाषाद्वाराऽन्तरङ्गदीर्घप्रवृत्तिकाले तत्प्रतिबन्धकतयोपस्थितिसत्त्वेनान्तरङ्गपरिभाषाप्रवृत्तिसंभवात् । उपस्थितस्यैवासिद्धत्वं बोधयितुं शक्यं नानुपस्थितस्येत्येतन्मूलकत्वादुक्तनियमस्य । यद्वाऽन्तरङ्गनिमित्तविनाशनिमित्तकत्वेनाकृतव्यूहपरिभाषाऽप्यन्तरङ्गा । अतस्तद्दृष्टया स्वसमकालप्राप्ताया वृद्धेर्बहिरङ्गत्वेनासिद्धत्वान्निमित्तविनाशज्ञानाभावात्सा न प्रवर्तेतेत्यभिप्रायेण शङ्का ज्ञेया । समाधत्ते—मैवमिति । समर्थग्रहणेनाकृतव्यूहपरिभाषाविषयेऽन्तरङ्गपरिभाषाया अप्रवृत्तेरपि ज्ञापनादिति भावः ॥ २५९ ॥

तस्याः = असिद्धं बहिरङ्गमन्तरङ्ग इत्यस्याः । इदम् = समर्थग्रहणम् । तत्साध्यत्वाभावादिति । अन्तरङ्गपरिभाषया हि अन्तरङ्गे कर्तव्ये जातस्य समकालप्राप्तस्य च

पूर्वोक्ते लुग्ल्यब्विधिबलवत्ताबोधिके च परिभाषे ।
अस्यामन्तर्भूते तत्साध्यस्यानयैव निर्वाहात् ॥ २६१ ॥
संभाविते निमित्तापगमेऽप्येषा प्रवर्तते तेन ।
सुब्लुक्संभावनया गोमद्दण्डीह न सुलोपः ॥ २६२ ॥
अल्लोपोऽन इति तपरकरणं त्वस्या अनित्यतालिङ्गम् ।
तद्धि व्यर्थमितरथा दीर्घप्राप्त्याऽऽन इत्यादौ ॥ २६३ ॥
अत एवानुपसर्जनभावविनाशेऽपि भाविनि समासे ।
अतिभवकानित्यादौ प्राग्जातः श्रूयते समासेऽकच् ॥ २६४ ॥

---

बहिरङ्गस्यासिद्धत्वं बोध्यते, न तु जातेऽन्तरङ्गे तस्य तथात्वं मानाभावात्फलाभावाच्च । सूत्थित इत्यत्र च दीर्घैकादेशस्य पूर्वमेव प्रवृत्तत्वेन तस्यान्तरङ्गपरिभाषासाध्यत्वाभावात्तद-नित्यत्वज्ञापनं न संभवतीति भावः ॥ २६० ॥

पूर्वोक्ते इति । 'अन्तरङ्गानपि विधीन् बहिरङ्गो लुग्बाधते', 'अन्तरङ्गानपि विधीन् बहिरङ्गो ल्यब् बाधते' इत्येते परिभाषे अस्यामकृतव्यूहपरिभाषायामेवान्तर्भूते । गोमत्प्रिय इत्यादौ सामासिकलुकाऽन्तरङ्गसुलोपप्रवृत्तिकारणस्य सोः, प्रधायेत्यादौ च ल्यपाऽन्तरङ्ग-ह्याद्यादेशनिमित्तस्य तादिकित्त्वस्य विनाशसम्भावनासत्त्वेनानयैव तयोर्वारणसंभवादिति भावः ॥ २६१ ॥

संभावित इति । अन्तरङ्गनिमित्तविनाशस्य भावित्व एवेयं प्रवर्तत इति नियमो नास्ति, किन्तु यद्यन्तरङ्गं पूर्वं न प्रवर्तत तर्हि बहिरङ्गेण तन्निमित्तविनाशः स्यादिति निमित्तविनाशसंभावनामात्रेणापि प्रवर्तते । तेन गोमद्दण्डीत्यादौ पूर्वं हल्ङ्याब्भ्य इति सुलोपप्रवृत्तावपहार्याभावात्सुपो धात्विति लुकोऽप्राप्तावपि, यदि सुलोपो न स्यात्तर्हि सामासिकलुका तन्निमित्तिविनाशः स्यादिति संभावनायाः सत्त्वेनेयं तत्र प्रवर्तते । अतस्तत्र हल्ङ्याब्भ्य इति सुलोपो न भवति किन्तु सुपो धात्विति लुगेव भवतीत्यर्थः ॥ २६२ ॥

ननु सम्भावनामात्रेणाप्यस्याः प्रवृत्तावल्लोपोऽन इति सूत्रे तपरकरणं व्यर्थं स्यात् । तद्धि, अन प्राणने इति धातोः क्विपि अनुनासिकस्य क्विझलोरित्युपधादीर्घे शसादि-प्रत्ययेषु आन इत्यादिरूपेष्वाकारलोपाभावाय कृतमस्ति । तत्र यदि दीर्घो न स्यात्तर्ह्यल्लोपः प्रवर्तेत्युपधादीर्घनिमित्ताकारविनाशसम्भावनायाः सत्त्वेनानया पूर्वमेव दीर्घाप्रवृत्तौ तपरकरणे सत्यपि तत्र लोपस्य दुर्वारत्वादत आह—अल्लोपोऽन इति ॥ २६३ ॥

अत एवेति । अस्या अनित्यत्वादेव, भवकन्तमतिक्रान्तोऽतिभवकानित्यादौ भाविना समासेनाकज्निमित्तसर्वनामसंज्ञानिमित्तानुपसर्जनत्वविनाशसंभावनायाः

इति दीक्षितादिसम्मतपरिभाषार्थानुसारिणी व्याख्या ।
प्रक्षालनाद्धि पङ्कस्येति न्यायोऽनुकूलोऽत्र ॥ २६५ ॥
कैयटमते तु न कृतो व्यूहस्तर्को निमित्तनाशेऽपि ।
कार्यस्थितिरूपो यैरित्यर्थात्कृतनिवृत्तिरेवेष्टा ॥ २६६ ॥
फलितोऽतश्च निमित्तापाये नैमित्तिकापायः ।
तेनापि समर्थपदं स्वोक्तार्थे ज्ञापकं कथितम् ॥ २६७ ॥
सूत्थितशब्दादिञि सति वृद्धौ दीर्घस्य च निवृत्तौ ।
सावुत्थितिरिति मा भूदित्यर्थं ज्ञापकं तदित्येवम् ॥ २६८ ॥
अपि चार्थोऽयं लोकन्यायात्सिद्धोऽस्ति तत्र हि निमित्तम् ।

---

सत्त्वेऽपि विग्रहवाक्येऽकच् प्रवर्तते, स च समासे श्रूयते । तत्रास्याः प्रवृत्तौ तु विग्रहवाक्येऽपि भवच्छब्दस्य सर्वनामत्वं न स्यात्ततश्चाकज् न स्यादिति भावः । अनुपसर्जनभावोऽनुपसर्जनत्वम् । प्राग्जात इति । अस्या अनित्यत्वादेव प्राक् प्रक्रियावाक्ये जातः अकच् समासे श्रूयत इति भावः ॥ २६४ ॥

प्रक्षालनादिति । 'प्रक्षालनाद्धि पङ्कस्य दूरादस्पर्शनं वरम्' इति न्यायोऽत्र दीक्षितादिमतेऽनुकूलः । लुगादिभिर्जातस्य तत्तत्प्रत्ययस्य निवर्तनापेक्षया तदनुत्पत्त्यन्वाख्यानमेव लघुत्वादाश्रीयते तथाऽत्रापीति शास्त्रीयो दृष्टान्तोऽप्यत्र मतेऽनुकूलो ज्ञेयः ॥ २६५ ॥

कृतनिवृत्तिः—कृतस्यापीडागमादेर्निवृत्तिः ॥ २६६ ॥

फलित इति । कैयटोक्तार्थानुसारेण निमित्तापाये नैमित्तिकापाय इति वचनमकृतव्यूहपरिभाषायाः फलितार्थरूपमित्यर्थः । तेनापि = कैयटेनापि ॥ २६७ ॥

कैयटमते समर्थग्रहणस्य ज्ञापकत्वमुपपादयति—सूत्थितेति । दीर्घस्य निवृत्तौ—पूर्वं कृतस्य सवर्णदीर्घस्याकृतव्यूहपरिभाषया निवृत्तौ सत्यामित्यर्थः । नन्वत्र सवर्णाच्रूपनिमित्तस्य दीर्घेणैव विनाशो न तु वृद्ध्या । अपि च नैमित्तकस्य दीर्घस्य वृद्ध्यैव निवर्तनात्तदपायो न परिभाषासाध्यः । देवदत्तहन्तृहननन्यायेनोकारस्य पुनरुत्थानं च दुरुपपादमिति चेन्न । अत्र हि निमित्तं सवर्णाच्त्वम्, नैमित्तिकं च स्थानिनिवृत्तिपूर्वकमादेशावस्थानम् । एवं च दीर्घैकादेशेऽप्यनुवर्तमानस्य सवर्णाच्त्वरूपनिमित्तस्य वृद्ध्या विनाशे प्रकृतपरिभाषया उक्तरूपस्य नैमित्तकस्यापि विनाशः स्यात् ततश्च अभावाभावस्य प्रतियोगिरूपतया स्थानिन उकारस्य स्वरूपलाभे तस्य च वृद्धौ सावुत्थितिरिति स्यात् । तन्माभूदित्यर्थं समर्थग्रहणम् । परिभाषाऽभावे तूक्तापत्तेरेवाभावात्तद्यर्थं सदस्या ज्ञापकम् ।

उभयविधं कार्यस्थितिनियामकं तदनियामकं चेति ॥ २६९ ॥
आद्यमपेक्षाबुद्धिर्द्वित्वादिस्थितिनियामिका न्याये ।
प्रारब्धं विक्षेपस्थितिनियमकरं च वेदान्ते ॥ २७० ॥
अपरं दण्डादि यथा न हि तन्नाशेऽपि घटनाशः ।
लक्ष्यानुरोधतश्च व्यवस्थितिरितीदमाकूतम् ॥ २७१ ॥

---

तेन च कृतसन्धिकार्यादेव प्रत्ययोत्पत्तिबोधनादत्रनिमित्तापाय इति परिभाषाया अप्रवृत्तिः सूच्यते ततश्च सौस्थितिरित्यादिरूपसिद्धिरित्यभिप्रायात् ॥ २६८ ॥

अयमर्थो लोकन्यायादपि सिद्ध इत्याह—अपि चेति । तत्र = लोके । तदनियामकम् = कार्यस्थित्यनियामकम् ॥ २६९ ॥

क्रमेणोदाहरति आद्यमिति । अयमेकः, अयमेकः, इति नानैकत्वावगाहिनी बुद्धिरपेक्षाबुद्धिः । सा द्वित्वादिसंख्याया निमित्तकारणम् । यावदपेक्षाबुद्धिस्तिष्ठति तावद् द्वित्वादिकमपि तिष्ठति । तन्नाशे च नश्यति, इति न्यायनयेऽङ्गीकारादपेक्षाबुद्धिरूपं निमित्तं कार्यस्थितिनियामकम् । वेदान्तशास्त्रे च प्रारब्धाख्यं कर्म विक्षेपस्य भोगतत्साधनदेहादिरूपस्य स्थितिनियामकम् । कर्म त्रिविधम्—संचितं प्रारब्धं क्रियमाणं चेति । तन्मध्येऽनेकजन्मसंचितानां कर्मणां ब्रह्मसाक्षात्कारेण नाशः, 'क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे' इति श्रुतेः । वर्तमानजन्मनि क्रियमाणानां च श्लेषाभावः—फलोत्पादनसामर्थ्याभावः । 'तद्यथा पुष्करपलाश आपो न श्लिष्यन्त एवमेवंविदि पापं कर्म न श्लिष्यत इति श्रुतेः, तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ' इति ब्रह्मसूत्राच्चावगम्यते । फलदानोन्मुखस्य वर्तमानदेहारम्भकस्य प्रारब्धकर्मणस्तु भोगादेव क्षयः । 'तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ संपत्स्ये' इति श्रुतेः, 'भोगेन त्वितरे क्षपयित्वा संपद्यते' इति ब्रह्मसूत्राच्च । एवं च यावत्प्रारब्धं तावद्विक्षेपस्थितिरिति प्रारब्धस्य विक्षेपस्थितिनियामकत्वं वेदान्तशास्त्रप्रसिद्धमिति बोध्यम् । यद्यप्यपेक्षाबुद्ध्यादिस्थले तत्तत्प्रमाणबलेन, अपेक्षाबुद्धिनाशत्वाद्वित्वादिनाशत्वादिप्रातिस्विकरूपेणैव कार्यकारणभावः । न तु सामान्येन निमित्तनाशत्वेन नैमित्तिकनाशत्वेन रूपेण दण्डनाशे घटनाशादर्शनेन व्यभिचारात् । तथाप्ययमर्थो लोकेऽपि क्वचिद् दृश्यत इत्येतावन्मात्रे ग्रन्थतात्पर्यं ज्ञेयम् ॥ २७० ॥

कार्यस्थित्यनियामकं निमित्तमाह—अपरमिति । तत्र कार्यस्थितिनियामकनिमित्तदृष्टान्तेन निमित्तापाय इति परिभाषा लभ्यते । सा चानित्येत्याह—लक्ष्यानुरोधतश्चेति । लक्ष्यसिद्ध्यनुरोधेनान्यतरदृष्टान्ताश्रयणं कर्तव्यम् । इतीदमाकूतम् = कैयटाशय इत्यर्थः ॥ एवं दीक्षिताद्युक्तार्थे कैयटोक्तार्थे चोभयत्र ज्ञापकन्यायसत्त्वसाम्येऽपि

अन्ये तु वदन्त्यस्यां न मानमस्वीकृतौ न दोषोऽस्ति ।
सेदुष इत्यादिपदावधिकान्वाख्यानतः सिद्धम् ॥ २७२ ॥

सेद्वससिति स्थिते खलु नित्यतया संप्रसारणं पूर्वम् ।
तेन वलादित्वस्याभावान्नेट्प्राप्तिरित्येवम् ॥ २७३ ॥

विषुण इव न सर्वत्राकृतसन्धेः प्रत्ययोद्भवः किन्तु ।
कृतसन्धेरुचित इति भ्रान्तिनिवृत्त्यै समर्थपदम् ॥ २७४ ॥

---

निमित्तनाशे कृतकार्यनिवर्तनापेक्षया भाविनिमित्तविनाशे पूर्वमेव शास्त्राप्रवर्तने लाघवाद्दीक्षितोक्तार्थ एव युक्ततरः । यत्तु परिभाषेन्दुशेखरे—'भाविनिमित्तविनाशे पूर्वमनुत्पत्तौ तु न कश्चिन्न्यायो नापि संप्रतिपन्नो दृष्टान्त' इत्याद्युक्तं, तदयुक्तम् । दीक्षितमतेऽपि न्यायदृष्टान्तयोः प्राक्प्रदर्शितत्वात् ॥ २७१ ॥

अन्येत्विति । नागेशभट्टादयस्त्वित्यर्थः । पदावधिकेति । संपूर्णपदस्य युगपदन्वाख्यानाश्रयणेनेत्यर्थः ॥ २७२ ॥

तदेव दर्शयति—सेद्वसिति । सेद् वस् अस् इति स्थिते संप्रसारणस्य वस्वेकाजितीडागमस्य च प्राप्तौ कृताकृतप्रसङ्गित्वेन नित्यत्वात्संप्रसारणं पूर्वं भवति इडागमस्तु संप्रसारणे कृते वलादित्वाभावेनाप्राप्त्याऽनित्यः । यत्तु परिभाषेन्दुशेखरे प्रतिपदविधित्वात्पूर्वं सम्प्रसारण इत्युक्तं, तत्प्राचीनमताभिप्रायेण । तन्मते नियमशास्त्राणां निषेधमुखेन प्रवृत्त्यङ्गीकारात्, वस्वेकाजिति सूत्रस्य नियमार्थत्वेनेतरनिवृत्तिमात्रे तात्पर्यादार्धधातुकस्येडित्यनेनैवेड्विधानादिडागमस्य न प्रतिपदविधित्वम् । वसोः संप्रसारणमित्यस्यैव तत्त्वम् । अतः प्राचीनमतानुसारी स ग्रंथः । स्वमते तु नियमशास्त्राणां विधिमुखेनैव प्रवृत्त्यङ्गीकाराद्वस्वेकाजिति सूत्रस्यैवेड्विधायकत्वेनेट्संप्रसारणयोरुभयोः प्रतिपदोक्तत्वसाम्यान्नित्यत्वेनैव संप्रसारणस्य पूर्वंप्रवृत्तिरित्युचितम् । इत्येवम्= उक्तप्रकारेणैव सेदुष इत्यादेः सिद्धिरित्यर्थः ॥ २७३ ॥

नन्वकृतव्यूहपरिभाषानङ्गीकारेऽन्तरङ्गत्वात्सन्धिकार्ये कृत एव तद्धितोत्पत्त्या समर्थग्रहणस्य न कश्चिदुपयोग इत्यत आह—विषुण इति । विषु नाना अञ्चतीति त्रिष्वप्वि न्यूनाधिकानि दिनानि, तानि सन्त्यस्येति विषुणः । विषुवदाख्यः कालः । यत्र दिनानि समतां यान्ति । तस्य स्वतो न्यूनाधिकदिनसंबन्धाभावेऽपि तथाविधदिनमूलभूतत्वात्तथोक्तिः । अत्र "विष्वगित्युत्तरपदलोपश्चाकृतसन्धेः" इति वार्तिकेन मत्वर्थे न प्रत्ययः, सन्धेः प्रागेव चोत्तरपदलोपो विधीयते । सन्धिकार्योत्तरमुत्तरपदलोपे तु, उकारस्य वकारे वलिलोपे च विष्ण इत्यनिष्टरूपापत्तिः स्यात् एवं च यथा तत्राकृतसन्धेः

अत एव वैक्षमाणिः सौत्थितिरिति चान्तरङ्गस्य ।
बलवत्त्वोदाहरणं भाष्यकृता कथितमुपपन्नम् ॥ २७५ ॥
चौ प्रत्यङ्गस्य प्रतिषेध इति समादृतं च वचः ।
अनयैव यण् निवृत्तौ प्रतीच इत्यादिकेषु किं तेन ॥ २७६ ॥
च्छ्वोरिति सूत्रे प्रष्टेत्यादौ तुगभावसिद्धयेऽवश्यम् ।
यत्नः कर्तव्य इति च वचनादेषा न भाष्यकारेष्टा ॥ २७७ ॥

---

प्रत्ययोत्पत्तिर्दृश्यते तथा सर्वत्रेष्टेति भ्रान्तिर्माभूदित्यर्थे समर्थपदमन्तरङ्गत्वसिद्धार्थानुवादरूपमेवेति भावः ॥ २७४ ॥

अत एवेति । समर्थग्रहणस्योक्तरीत्याऽपूर्वार्थबोधकत्वाभावादेव विप्रतिषेधसूत्रे भाष्ये, अन्तरङ्गपरिभाषोदाहरणम्—'वृद्धेरेकादेशः वैक्षमाणिः सौत्थितिः । वृद्धिश्च प्राप्नोत्येकादेशश्च । परत्वाद्वृद्धिः स्यादेकादेशो भवत्यन्तरङ्गतः' इत्युक्तम् । समर्थग्रहणस्याकृतव्यूहपरिभाषाप्रतिबद्धसन्धिकार्यप्रापकत्वरूपापूर्वार्थबोधकत्वे तु तेनैवैकादेशस्य प्रथमप्रवृत्तिसिद्धेस्तयोरन्तरङ्गपरिभाषोदाहरणत्वं भाष्योक्तमसंगतं स्यादतस्तन्नापूर्वार्थबोधकं किन्त्वन्तरङ्गपरिभाषालब्धार्थानुवादकमेव । अतस्तेनाकृतव्यूहपरिभाषाज्ञापनं न युक्तमिति भावः ॥ २७५ ॥

ननु समर्थग्रहणेनाकृतव्यूहपरिभाषा ज्ञाप्यते, ज्ञापनोत्तरं च सा तद्धितेषु न प्रवर्तत इत्येव तेन बोध्यते, ततश्च वैक्षमाणिरित्यादावन्तरङ्गत्वादेवैकादेश इति तस्य तत्परिभाषोदाहरणत्वं भाष्यकृदुक्तं युक्तमेवेत्यरुचेराह—चौ प्रत्यङ्गस्येति । प्रतीचः, दधीचा इत्यादौ प्रति अच् दधि अच् इत्येवं स्थितेऽन्तरङ्गत्वाद्यणादेशे पूर्वपदस्याजन्तत्वाभावात् 'चौ' इति दीर्घो न सिध्येदतस्तदर्थं चौ (६।३।१३८) इति सूत्रे भाष्ये 'इहान्ये आचार्याः चौ प्रत्यङ्गस्य प्रतिषेधमाहुः । तदिहापि साध्यम्' इत्युक्तम् अकृतव्यूहपरिभाषासत्त्वे तु तयैव यण्वारणेन दीर्घसिद्धेस्तद्वचनवैयर्थ्यं स्पष्टम् । यद्यप्यग्रे भाष्यकृता चाविति दीर्घविधानसामर्थ्यात् 'न चौ प्रत्यङ्गं भवतीति' ज्ञापयित्वा तद्वचनं प्रत्याख्यातं, तथापि ज्ञापकाश्रयणेन तत्प्रत्याख्यानं नत्वकृतव्यूहपरिभाषयेति तस्या अभाव एवेति भावः ॥ २७६ ॥

ननूक्तवचनप्रत्याख्यानपरभाष्ये चाविति दीर्घविधानसामर्थ्येन, नचौ प्रत्यङ्गं भवतीति यज् ज्ञापितं, तस्यैकदेशानुमत्याऽकृतव्यूहपरिभाषाज्ञापन एव तात्पर्यं कल्प्यते; अतस्तेन तदभावो न सिध्यतीत्यरुचेराह—च्छ्वोरिति । "च्छ्वोः शूडनुनासिके च" (६।४।१९) इति सूत्रे भाष्ये तत्सूत्रे क्ङिद्ग्रहणानुवृत्तिपक्षे प्रष्टा प्रष्टुमित्याद्यर्थे छः षत्वं वक्तव्यम् तुक् च प्रसज्येतेति दोषं प्रदर्श्य, 'निवृत्तेऽपि वैक्ङिद्ग्रहणेऽवश्यमत्र तुगभावार्थो

भाष्ये क्वचिदपि चैषा न दृश्यते कैयटेन कथितं च ।
एतस्या भाष्यकृताऽनाश्रयणादित्यसिद्धवत्सूत्रे ॥ २७८ ॥
पदसंस्कारे हरिरित्यादावसानहेतुकविसर्गे ।
पश्चाद्गच्छत्यादेर्योगे सविसर्गमेव साधु पदम् ॥ २७९ ॥
भाष्यं तत्र विरुद्धं विसर्जनीयस्य स इति सूत्रस्थम् ।
इति चिन्तनेऽत्र पदसंस्काराश्रयणं न कार्यमित्याहुः ॥ २८० ॥

---

यत्नः कर्तव्यः । अन्तरङ्गत्वाद्धि तुक्प्राप्नोति' इत्युक्तम् । यत्नश्च सतुङ्निर्देशरूपो विवक्षितः । अकृतव्यूहपरिभाषासत्त्वे तु शकारेण तुङ्निमित्त छकारविनाशस्य भावित्वात्पूर्वमेव तुकोऽप्रवृत्तौ, प्रवृत्तस्य वा तस्य स्वनिमित्तापाये निवृत्तौ यत्नावश्यकत्वकथनमसङ्गतं स्यात् । अत इयं परिभाषा भाष्यकारासम्मतेति भावः । न च वाञ्छ् धातोः क्विपि वान् वाञ्छौ वाञ्छ इत्यत्र शत्वाभावाय च्छ्वोरिति सूत्रे सतुङ्निर्देशस्यावश्यकतेति भाष्यकाराभिप्राय इति वाच्यम् । सतुङ्निर्देशे वाञ्छतेरप्रत्यये वान् वांशौ वांश इति न सिध्यतीत्याशङ्क्य यथालक्षणमप्रयुक्ते इति भाष्योक्त्या तदर्थं यत्नावश्यकत्वाभावस्यावगमात् । 'आख्यानात्कृतस्तदाचष्टे कृल्लुक् प्रकृतिप्रत्यापत्ति' रिति वार्तिकेन प्रकृतिप्रत्यापत्तिविधानादकृतव्यूह परिभाषाया अनित्वेन यत्नावश्यकत्वकथनं न तु तदसत्त्वेनेत्यपि न वक्तुं युक्तम् । अनित्यत्वेऽपीष्टस्थले प्रवृत्तौ बाधकाभावेन तया तुगभावसिद्धेस्तदर्थं यत्नावश्यकत्वकथनासङ्गतेस्तादवस्थ्यात् ॥ २७७ ॥

भाष्येऽस्याः क्वचिदपि दर्शनाभावाच्चेयं न मन्तव्येत्याह—भाष्य इति । कैयटेनेति । "असिद्धवदत्राभात्" ( ६।४।२२ ) इति सूत्रे कैयटेन—"निमित्तापाये नैमित्तिकस्याप्यपाय इत्यस्याः परिभाषाया भाष्यकारेणानाश्रयणात्' इत्युक्तम् । अनाश्रयणसूचकं च चौ प्रत्यङ्गस्य प्रतिषेधारम्भश्छ्वोरित्यत्रावश्यमत्र तुगभावार्थो यत्नः कर्तव्य इति भाष्यवचनं चेत्युक्तम् तस्मादियं निष्प्रमाणेति भावः ॥ २७८ ॥

अकृतव्यूहपरिभाषासत्वे हरिरित्यादौ विसर्गनिमित्तस्यावसानस्य गच्छत्यादिसंबन्धेन विनाशस्य भावित्वे पूर्वमेव विसर्गाप्रवृत्त्या जातस्य तस्य निवृत्त्या वा हरिर्गच्छतीत्यादि सिध्यति । तस्या अभावे तु वाक्यसंस्कारपक्षे तत्सिद्धावपि पदसंस्कारपक्षे तन्न सिध्येदिति प्राचीनोक्तं दूषणमिष्टापत्त्यैव परिहरति—पदसंस्कार इति ॥ २७९ ॥

भाष्यमिति । उक्तस्थले सविसर्गप्रयोगस्य साधुत्वव्यवस्थापनं "विसर्जनीयस्य सः" ( ८।३।३४ ) इति सूत्रस्थभाष्यविरुद्धम् । तत्र हि प्रथमं खरीत्यस्यानुवृत्तिमनाश्रित्य वृक्षः प्लक्ष इत्यादाववसानेऽपि विसर्गस्य सत्वापत्तिशङ्कायाम् 'आचार्यप्रवृत्तिर्ज्ञापयति नास्य विसर्जनीयस्य सत्वं भवतीति यदयं शर्परे विसर्जनीय इत्याह' इत्युक्तम् । यदिह्यवसान-

इत्थं नागेशमते नास्त्यकृतव्यूहपरिभाषा ।
लाघवमनुरुध्येयं स्वीकार्यति च वदन्ति परे ॥ २८१ ॥
लुग् ल्यब्विषयकवचनद्वयकरणं क्लिष्टकल्पनं च बहु ।
गौरवमेतदभावे तद्वरमस्याः समाश्रयणम् ॥ २८२ ॥
किञ्च विभाजयितृपदादञ् च णिलोपो विधीयते तत्र ।
अन्त्ययलोपनिवृत्त्या वैभाजित्रस्य सिद्धिरनयैव ॥ २८३ ॥

---

निमित्तकस्य विसर्गस्य सत्वं स्यात्तर्हि कः त्सरुरित्यादौ सत्वाप्रवृत्त्या विसर्गः स्वत एव सिद्ध इति तदर्थं शर्परे विसर्जनीय इत्यस्यारम्भोऽनुपपन्नः स्यादतस्तदुक्तार्थज्ञापकमिति भावः न च वासः क्षौमम्, अद्भिः प्सातमित्यादौ ×क ×प योर्बाधनार्थं तदिति वाच्यम् । तावन्मात्रप्रयोजनकत्वे कुप्वोः ×क ×पौ चाशरीत्येव ब्रूयात् । अतो ज्ञापकत्वं युक्तमेव । यदि त्ववसानभङ्गे भाविन्यप्यवसाननिमित्तकविसर्गः प्रवर्तेत तर्हि कः त्सरुरित्यादाववसाननिमित्तकविसर्गस्य सत्वविधानेन शर्परे विसर्जनीय इत्यस्य चारितार्थ्याद्भाष्योक्ता ज्ञापकता भज्येत । तस्मात्, हरिः गच्छतीति विसर्गविशिष्टं रूपमसाध्वेव । इति चिन्तने तु = एवं विचारे तु, अत्र = उक्तस्थले, पदसंस्काराश्रयणं न कर्तव्यम् । व्यवस्थितयोः पक्षयोर्मध्ये येन लक्ष्यसिद्धिः स्यात्तस्यैवाश्रयणीयत्वादिति भावः । निमित्तापाय इत्यस्याअभावे ष्ठा गतिनिवृत्तावित्यादेः षकारस्य धात्वादे षः स इत्यनेन निवृत्तावपि टकारादेरनिवृत्तिः स्यादतश्च स्थाता स्थानमित्यादिप्रयोगाणामसिद्ध्यापत्तिरिति तु नाशङ्क्यम् । तत्र ठकारादेः ष्टुनाष्टुरित्यनेनैव जातत्वाद् बोधकत्वेन तात्पर्यविषयीभूतस्तु थकारादिविशिष्ट एवेति तस्यैव बोध्यताया "नकारजावनुस्वारपञ्चमौ झलिधातुषु । सकारजः शकारश्चेऽर्षाद्दवर्गजस्तवर्गजः ॥" इत्यभियुक्तोक्त्याऽवगमेन लक्ष्ये टवर्गश्रवणापत्त्यभावात् ॥ २८० ॥

**नास्ति** = प्रमाणत्वेन नाङ्गीकृतेत्यर्थः । **स्वीकार्येति** । भाष्यकृता कण्ठरवेणानुक्तत्वेऽपि अन्तरङ्गानपि विधीनित्यादिपरिभाषाज्ञापनद्वारा तदर्थस्याभ्युपगमाद्वक्ष्यमाणलाघवाच्चेयं स्वीकर्तव्यैवेति परे = नागेशभट्टोत्तरवर्तिनः श्रीमद्बालशास्त्रिप्रभृतयो विद्वांसो वदन्ति स्मेत्यर्थः ॥ २८१ ॥

लाघवमेवाह—**लुगित्यादिना** ॥ २८२ ॥

अनन्यथासिद्धं लक्ष्यसिद्धिरूपं प्रयोजनमप्यस्या अस्तीत्याह—**किञ्चेति** । विभाजयितुर्धर्म्यं वैभाजित्रम् । अत्र "ऋतोऽञ्" इति सूत्रस्थेन "विभाजयितुर्णिलोपश्चाञ्च" इति वार्तिकेन विभाजयितृशब्दादञ्प्रत्ययस्तत्सन्नियोगेन णिलोपश्च विधीयेते । तत्रैतत्परिभाषाऽभावेऽन्तरङ्गत्वाणेर्गुणायादेशयोः सतोरलोऽन्त्यस्येत्यनेनान्त्यस्य यकारमात्रस्य

उत्सर्गादपवादोऽन्तरङ्गभूतादपि प्रबलः ।
एवं परनित्याभ्यां तत्राचष्टेऽपवादशब्दार्थम् ॥ २८४ ॥

## येन नाप्राप्ते यो विधिरारभ्यते स तस्य बाधको भवति ॥ ५७ ॥

नाप्राप्तपदे नञ्द्वयमवश्यसंप्राप्तिबोधार्थम् ।
यस्यावश्यप्राप्तौ यः क्रियते तस्य सोऽपवाद इति ॥ २८५ ॥

---

लोपेऽनिष्टरूपापत्तिः। परिभाषासत्त्वे तु स्वनिमित्तस्य णेर्लोपेन विनाशसंभावनया गुणादेशयोरप्रवृत्त्या णिलोपेनेष्टं रूपं सिध्यति। न च विभाजयितुर्यलोप इत्येव वक्तव्ये णिग्रहणसामर्थ्यादत्र गुणायादेशौ न भविष्यतः, णिलोप एव भविष्यति। अत इदं न प्रयोजनमिति वाच्यम्। तथासति विभाजीति प्रातिपदिकादाचार क्विबन्तात्तृचि निष्पन्ने विभाजयितृशब्दे यलोपापत्तेरेवं वक्तुमशक्यत्वात्। तस्मादकृतव्यूहपरिभाषाऽङ्गी कर्तव्येति परमनवीनमतम् ॥ २८३ ॥

एवमन्तरङ्गस्य बलवत्त्वं निरूप्य तत्प्रयुक्तातिप्रसङ्गांश्च समाधाय परनित्येति परिभाषासंगृहीतं क्रमप्राप्तमपवादस्य बलवत्त्वं निरूपयति—उत्सर्गादिति। अपवादशास्त्रं स्वनिष्ठापवादत्वनिरूपकात्परान्नित्यादन्तरङ्गाच्चोत्सर्गशास्त्राद् बलीयः, अपवादत्वादित्यनुमानप्रयोगो ज्ञेयः। तत्रेति। संग्राहकवाक्यान्निष्कृष्टं यद् अन्तरङ्गादप्यपवादो बलवानिति तद्घटकापवादशब्दार्थं निरूपयतीत्यर्थः ॥ २८४ ॥

प्राप्तं प्राप्तिः। नपुंसके भावे क्तः। न अप्राप्ते नाप्राप्ते इति। निषेधार्थकनशब्दस्याप्राप्तशब्देन नैकधेत्यादिवत्सुप्सुपेति समासः। नञ्समासे पृषोदरादित्वान्नलोपाभावो वा ज्ञेयः। येनेति कर्तरि तृतीया। द्वौ न शब्दौ प्रकृतार्थदार्ढ्यं बोधयतः। दार्ढ्यं चात्रावश्यकत्वापरपर्यायं व्यापकत्वरूपम्। ततश्च यत्कर्तृकावश्यकप्राप्तावित्यर्थस्तदाह—नाप्राप्तपदे इति ॥ २८५ ॥

---

१. मुद्रित पुस्तकेषु 'अन्तरङ्गादप्यपवादो बलवान्' इति स्थूलाक्षरैर्मुद्रितं स्वतन्त्रं परिभाषान्तरमिवाभाति। परन्तु तत् पूर्वोक्तपरनित्येत्यादिसंग्राहकवाक्यात्मकपरिभाषैकदेशरूपं ततो निष्कृष्य परिभाषेन्दुशेखरकृता व्याख्यार्थमुद्धृतं वाक्यम्। अतोऽत्र तस्यार्थ एव कारिकया संगृहीतो न तु पृथगुल्लिखितमिति बोध्यम्।

अत्र स इत्यन्तेनापवादशब्दस्य कथितोऽर्थः ।
बलिना दुर्बलबाधो लोकविदित एव शेषेण ॥ २८६ ॥
स्वोद्देश्यासाधारणधर्मस्य व्यापकोऽस्ति यो धर्मः ।
तदवच्छिन्नोद्देश्यकशास्त्रस्य स्वेन बाध इत्यर्थः ॥ २८७ ॥
एजव्यवहितपूर्वावर्णत्वं वृद्धिरेचि शास्त्रस्य ।
उद्देश्यगतस्तादृग्धर्मस्तद्व्यापकत्वं च ॥ २८८ ॥
आद्गुण इति शास्त्रोक्तेऽजव्यवहितपूर्ववृत्त्यवर्णत्वे ।
तदवच्छिन्नोद्देश्यकभावात्तद्बाधनं वृद्ध्या ॥ २८९ ॥

---

स इत्यन्तेन='येन नाप्राप्ते यो विधिरारभ्यते स' इत्यन्तेन । शेषेण— । तस्य बाधको भवतीत्यनेन लोकप्रसिद्धो बलवता दुर्बलस्य बाधः, कथितः=प्रतिपादित इत्यर्थः ॥ २८६ ॥

•निष्कर्षमाह—स्वोद्देश्येति । स्वम्=अपवादशास्त्रम् । तदीयोद्देश्यतावच्छेदकधर्मव्यापकधर्मावच्छिन्नोद्देश्यताकस्योत्सर्गशास्त्रस्य तेन बाध इत्यर्थः । व्याप्यधर्मावच्छिन्नोद्देश्यताकशास्त्रेण व्यापकधर्मावच्छिन्नोद्देश्यताकशास्त्रस्य बाध इति फलितम् । स्वाधिकरणवृत्त्यत्यन्ताभावाप्रतियोगित्वं व्यापकत्वम् । स्वाभाववदवृत्तित्वं व्याप्यत्वम् । तत्र वृत्तित्वं प्रकृते येन केनापि संबन्धेन ग्राह्यं, न तूद्देश्यतावच्छेदकताऽवच्छेदकसंबन्धेनैवेत्याग्रहः । तेन एकाचो द्वे प्रथमस्येति प्रथमैकाज्द्विर्वचनस्य अजादेर्द्वितीयस्येति द्वितीयैकाज्द्विर्वचनेन बाधः सिध्यति तत्र हि अजादेर्द्वितीयस्येति शास्त्रस्योद्देश्यतावच्छेदकं धात्ववयवाद्यजुत्तरत्वविशिष्टद्वितीयैकाच्त्वम् । तदवच्छेदकश्च स्वरूपसंबन्धः । तेन संबन्धेन तस्य उर्णुनावेत्यत्र नु शब्दे वृत्तित्वमस्ति, तत्र प्रथमैकाच्त्वं तु तेन सम्बन्धेन नैवास्ति, तथापि स्वघटकाजुत्तरत्वसंबन्धेन तत्र तदस्त्येवेति तस्योक्तविधद्वितीयैकाच्त्वव्यापकत्वमुपपन्नमिति बोध्यम् ॥ २८७ ॥

उक्तमर्थमुदाहरणेन स्पष्टीकरोति—एजव्यवहितेत्यादिना । उद्देश्यगतः=उद्देश्यतावच्छेदकः । तद्बाधनम्— । आद्गुण इत्यस्य वृद्धिरेचीत्यनेन बाध इत्यर्थः । नन्वकः सवर्णे दीर्घ इति आद्गुण—इको यणचीति द्वयोर्बाधकमिष्यते । तच्चैवं नोपपद्यते । दीर्घशास्त्रीयोद्देश्यतावच्छेदकं सवर्णाजव्यवहितपूर्वत्वविशिष्टाक्त्वं तदपेक्षया आद्गुण इत्येतच्छास्त्रीयोद्देश्यतावच्छेदकस्याजव्यवहितपूर्वत्वविशिष्टावर्णत्वस्य श्रीश इत्यादौ व्यभिचारेण व्यापकत्वाभावात् । एवमिको यणचीत्येतच्छास्त्रीयोद्देश्यतावच्छेदकमजव्यवहितपूर्वत्वविशिष्टमिक्त्वमपि न तद्व्यापकम् । दैत्यारिरित्यादौ व्यभिचारादिति चेत्स-

शाब्दज्ञानविषयते प्रकारताप्रभृतिधर्मसङ्कुचिते ।
अनयोरेव व्याप्यव्यापकभावेन बाध्यबाधकता ॥ २९० ॥
अत एव च भाष्यकृताऽऽदिवृद्धिरन्त्योपधावृद्धी ।
बाधत इत्यनुमितमनुशतिकादिषु पुष्करसदुक्त्या ॥ २९१ ॥
ञ्णित्प्रत्ययता व्याप्या ञ्णित्तद्धितताऽस्ति यद्यपि तथापि ।
वृद्धिविधायकसूत्रजशाब्दविषयता तथाविधा नास्ति ॥ २९२ ॥
सौश्रुत इत्यादावणि नैवाचो ञ्णिति तथाऽत उपधायाः ।
इत्येतयोर्विषयताऽस्ति तु वृद्धेस्तद्धितेष्वचामादेः ॥ २९३ ॥

---

त्वम् । तयोस्तत्तद्रूपेणाव्यापकत्वेऽपि, तदन्यतरत्वेन व्यापकत्वस्य सत्त्वात् । सवर्णदीर्घप्राप्तिस्थले आद्गुण इको यणचीत्यनयोरेकतरस्य प्राप्तिध्रौव्यात् । अतस्तस्य तदुभयबाधकत्वमुपपद्यते । अधिकं विजयायां द्रष्टव्यम् ॥ २८८, २८९ ॥

ननु व्यापकधर्मावच्छिन्ने व्याप्यधर्मावच्छिन्नातिरिक्तत्वबोधनं बाध इति यदुक्तं तत्र यद्युद्देश्यदलप्रविष्टयोर्धर्मयोर्व्याप्यव्यापकभावो बाधप्रयोजक आस्थीयेत तर्हि, अनुशतिकादिषु पुष्करसच्छब्दपाठसामर्थ्येनादिवृद्धिरन्त्योपधावृद्धी बाधत इति भाष्यं विरुध्येत । उद्देश्यदलप्रविष्टयोर्ञ्णित्तद्धितत्वञ्णित्प्रत्ययत्वयोर्व्याप्यव्यापकभावापन्नत्वेन येन नाप्राप्तन्यायेनैवान्त्यवृद्ध्युपधावृद्ध्योर्ञ्णित्तद्धितभिन्ने प्रवृत्तिसिद्धेर्ज्ञापकाश्रयणस्यासंगतत्वापत्तेः । एवमजादेर्द्वितीयस्येत्येतदीयोद्देश्यतादलप्रविष्टस्य आद्यच्त्वस्य व्याप्यत्वात् । तदपेक्षया एकाचो द्वे प्रथमस्येत्येतदीयोद्देश्यतादलप्रविष्टप्रथमैकाच्त्वघटकाच्त्वस्य व्यापकत्वाद्धातोरादिभूतो योऽच् तद्भिन्नाघटितस्य प्रथमैकाचो द्वित्वमित्यर्थे आटतुरित्यादौ द्वित्वं न सिध्येदत आह—शाब्दज्ञानेत्यादि । तत्तत्सूत्रप्रयोज्यशाब्दबोधीयविषयतयोरेव व्याप्यव्यापकभावो ग्राह्यो न तु पदप्रयोज्योपस्थितीयविषयतयोस्तेन तयोरेव बाध्यबाधकभावः । शाब्दबोधीयविषयता च शाब्दबोधीयविशेष्यताप्रकारताभ्यां संकुचिता भवत्यतो नोक्तदोष इति भावः ॥ २९० ॥

उक्तमर्थं भाष्येण समर्थयति—अत एवेति । तद्धितेष्वचामादेः ( ७।२।११७ ) इति सूत्रे भाष्ये-क्रौष्ट्रो जागत इत्यादावादिवृद्धिरन्त्योपधावृद्धी बाधत इत्यनुशतिकादिगणे पुष्करसच्छब्दपाठसामर्थ्येन ज्ञाप्यत इत्युक्तम् । तस्यायं भावः—यदि हि तद्धितेष्वचामादेरित्यादिवृद्धिविषये, अत उपधाया इत्युपधावृद्धिरपि स्यात्तर्हि आदिवृद्ध्योपधावृद्ध्या च पौष्करसादिरित्यस्यसिद्धेरुभयपदवृद्ध्यर्थमनुशतिकादिगणे पुष्करसच्छब्दस्य पाठो व्यर्थः स्यादतः स उक्तार्थज्ञापक इति ॥ २९१ ॥

उक्तस्थले शाब्दबोधीयविषयतयोर्व्याप्यव्यापकभावाभावं दर्शयति—ञ्णिदित्यादिना । तथाविधा नास्ति— । व्याप्यव्यापकभावापन्ना नास्ति । अचोञ्णितीत्यन्त्य-

बाधश्च विषयतायां व्यापकभावेन विदितायाम् ।
व्याप्यविषयताऽऽधारेतरवृत्तित्वप्रमितिजननम् ॥ २९४ ॥
तेनाद्यच्त्वव्यापकमाद्यैकाज्घटकमच्त्वमादाय ।
आद्यज्भिन्नाज्घटितप्रथमैकाचो द्विरुक्तिरिति नार्थः ॥ २९५ ॥
न हि केवलयोरनयोर्विषयत्वं शाब्दबोधेऽस्ति ।
तेनाटतुरित्यादावाद्यज्घटितोऽप्युपेयतेऽड् द्वित्वम् ॥ २९६ ॥

---

वृद्धिसंबन्धिनी अजन्ताङ्गनिष्ठविशेष्यतानिरूपिता ञ्णित्प्रत्ययनिष्ठा प्रकारतारूपा विषयता, अत उपधाया इत्युपधावृद्धिसंबन्धिनी उपधाऽकारनिष्ठविशेष्यतानिरूपिता ञ्णित्प्रत्ययनिष्ठा प्रकारतारूपा विषयता वा, तद्धितेष्वचामादेरित्येतद्विहिताऽऽदिवृद्धिसंबन्धिन्याः प्रातिपदिकनिष्ठविशेष्यतानिरूपिताया ञ्णिन्तद्धितनिष्ठायाः प्रकारतारूपविषयताया न व्यापिका । एतद्विषयताऽऽश्रये सुश्रुत्, मरुत् इत्यादि प्रकृतिकेऽण्प्रत्यये तयोरभावात् । इयं च तद्धितेष्वित्यादिवृद्धिसंबन्धिनी विषयता न तयोर्व्याप्या । तद्द्वयाभाववत्युक्तस्थलेऽस्याः सत्त्वात् । एवं चात्र येन नाप्राप्तन्यायेन बाधस्याप्राप्त्या ज्ञापकेन बाधसाधनमुपपन्नमिति भावः ॥ २९२, २९३ ॥

बाधपदार्थमाह—बाधश्चेति । व्यापकरूपायां शाब्दबोधीयविषयतायां व्याप्यविषयताऽऽश्रयातिरिक्तवृत्तित्वं ज्ञेयमित्याकारकयथार्थज्ञानजननं बाध इत्यर्थः ॥ २९४ ॥

तेनेति—शाब्दबोधीयविषयतयोरेव बाध्यबाधकभावाङ्गीकारेण बाधस्य चोक्तरूपत्वेनेत्यर्थः । आद्यच्त्वेत्यादि पूर्वं शङ्काग्रन्थे निरूपितम् । आद्यैकाजिति भावप्रधानो निर्देशः । आद्यैकाच्त्वघटकमित्यर्थः ॥ २९५ ॥

नहीति । केवलयोरनयोरच्त्वाद्यच्त्वयोः शाब्दबोधे विषयत्वं नास्ति, किन्तु शाब्दबोधीयप्रकारतालिङ्गितयोरेव । तथाहि—एकाचो द्वे प्रथमस्येत्यत्राच्पदार्थेऽन्यपदार्थनिष्ठविशेष्यतानिरूपिता प्रकारताऽस्ति । अजादेर्द्वितीयस्येत्यत्राद्यच्पदार्थे च द्वितीयैकाज्निष्ठविशेष्यतानिरूपिता स्वावधिकपरत्वसंबन्धावच्छिन्नाऽऽद्यच्त्वावच्छिन्ना प्रकारताऽस्ति । तत्राद्यायाः प्रकारताया द्वितीयैकाज्विरहितधातुघटकेऽच्यपि विद्यमानत्वेन द्वितीयप्रकारताऽपेक्षया व्यापकत्वाभावान्न बाध्यत्वम् । तेन आटतुरित्यादावादिभूताज्घटितोऽप्यडरूपः प्रथमैकाच द्वित्वमुपेयते—प्राप्नोतीत्यर्थः । केचित्तु विशेष्यविशेषणभावापन्नशृङ्खलोपनिबद्धयावत्पदार्थसङ्कुचितयोरुद्देश्यदलप्रविष्टधर्मयोर्व्याप्यव्यापकभावाङ्गीकारेण बाधं व्यवस्थापयन्ति । तत्र तादृशधर्मे तादृशधर्माश्रयातिरिक्तवृत्तित्वबोधनरूपो बाधो ज्ञेयः ॥ २९६ ॥

नन्वेवमपि च नेमौ रहौ क्वचित् कार्यिणौ भवतः ।
किन्तर्हि निमित्तमिमौ द्वित्वस्येदं न युज्यते भाष्यम् ॥ २९७ ॥
यण्त्वेन यणो मय इति यर्त्वेनाचोरहाभ्यां द्वे ।
इति कार्यिता हि रेफे निमित्तता व्यापिका नास्ति ॥ २९८ ॥
हर्यनुभव इह रेफे द्वित्वनिमित्तत्वसत्त्वेऽपि ।
मय्परता वाऽजुत्तररहपरता नेति कार्यिताविरहात् ॥ २९९ ॥
व्यापकरूपाऽनचि चेति कार्यिता बाध्यतां निमित्ततया ।
तेन च रेफद्वित्वं शक्यं हर्यनुभवे निवारयितुम् ॥ ३०० ॥
एवमपि तु मद्रहृद-धात्र्यंशार्हादिशब्देषु ।
तत्तच्छास्त्रे रेफद्वित्वापत्तिर्हि दुर्वारा ॥ ३०१ ॥

---

एवं व्यवस्थापितेऽपि भाष्यासङ्गतिमाशङ्कते—नन्विति । हयवरट् सूत्रे भाष्ये मद्रहृद इत्यादावचोरहाभ्यामित्यनेन हकारोत्तररेफस्य द्वित्वमाशङ्क्य 'नेमौ रहौ कार्यिणौ द्विर्वचनस्य । किन्तर्हि । निमित्तमिमौ रहौ द्विर्वचनस्य' । इत्युक्तम् । तन्न युज्यते = न सङ्गच्छत इत्यर्थः ॥ २९७ ॥

तत्र हेतुमाह—यण्त्वेनेत्यादिना । 'यणो मयो द्वे वाच्ये' इत्येतच्छास्त्रीया मयुत्तरत्वविशिष्टयण्त्वावच्छिन्ना कार्यिता, 'अचोरहाभ्यां द्वे इत्येतच्छास्त्रीया च अजुत्तरत्वविशिष्टरेफहकारान्यतरोत्तरत्वविशिष्टयर्त्वावच्छिन्ना च कार्यिता रेफवृत्ति-निमित्ततााया व्यापिका नास्तीत्यर्थः ॥ २९८ ॥

अव्यापकत्वमेव दर्शयति—हर्यनुभव इति । अत्राचो रहाभ्यामित्यनेन यकारद्वित्वं प्रति रेफस्य निमित्तत्वसत्त्वेऽपि, तस्य मयः परत्वाभावादचः पराभ्यां रेफहकाराभ्यां परत्वस्याप्यभावाद् द्वित्वरूपकार्योद्देश्यत्वं नास्ति तेन तदीयकार्यिताया निमित्तता-व्यापकत्वं नेत्यर्थः ॥ २९९ ॥

व्यापकरूपेति । हर्यनुभव इत्यादौ रेफस्याचः परत्वादच्परकत्वाभावाच्च अनचि चेत्यनेन द्वित्वं प्राप्नोति, अचो रहाभ्यामित्यनेन प्राप्तं यकारस्य द्वित्वं प्रति तस्य निमित्तताऽप्यस्ति । तेनानचि चेति शास्त्रीयकार्यिताया एकस्या व्यापकतया रेफगत निमित्ततया स्वाश्रयातिरिक्तवृत्तित्वबोधनरूपबाधेन हर्यनुभव इत्यादौ रेफस्य द्वित्वं निवारयितुं शक्यम् । परन्तु मद्रहृद इत्यत्र हकारोत्तररेफस्याचोरहाभ्यामित्यनेन, धात्र्यंश इत्यत्र मय्प्रत्याहारीयतकारोत्तररेफस्य यणो मयो द्वे वाच्ये इत्यनेन, अर्हं इत्यत्र चानचि चेत्यनेन रेफस्य द्वित्वं दुर्वारम् । एवं चोक्तभाष्यासङ्गतिरेवेति भावः ॥३००, ३०१॥

इति चेन्नैवं तत्र हि माठरपरिवेषणन्यायः।
तक्रन्यायादन्यो भाष्ये कथितोऽस्त्यतस्तदुपपन्नम् ॥ ३०२ ॥
व्यापकधर्मेणावच्छिन्नायास्तत्र वै विषयतायाः।
बाधो विषयतयैव व्याप्यावच्छिन्नया ज्ञेयः ॥ ३०३ ॥
एवं व्यापकताऽऽख्यं निरूपितं बाध्यताबीजम्।
अथ बाधकताबीजं निरूप्यते व्याप्यतारूपम् ॥ ३०४ ॥
तत्प्राप्त्ययोग्यलक्ष्येष्वचारितार्थ्यं तदिति भाष्ये।
आयादय इति सूत्रे न्यासान्तरविवरणे स्पष्टम् ॥ ३०५ ॥
आयादीनां स्यादिभिरव्याप्तौ नावकाशोऽस्ति।
तेनानवकाशत्वादायाद्यैः स्यादिबाध इति कथनात् ॥ ३०६ ॥

---

समाधत्ते—नैवमित्यादिना। माठरपरिवेषणन्यायः—। हयवरट्सूत्रस्थे भाष्ये नेमौ रेहावित्यादिकथनानन्तरमेव तत्समर्थनाय 'तद्यथा ब्राह्मणा भोज्यन्तां माठरकौण्डिन्यौ परिवेविषातामिति। नेदानीं तौ भुञ्जाते।' इत्येष न्यायः प्रदर्शितः। तक्रन्यायादन्य इति। मिदचोऽन्त्यात्परः। ( १। १ ४७ ) इति सूत्रे भाष्ये प्रदर्शितात् 'दधि ब्राह्मणेभ्यो दीयतां तक्रं कौण्डिन्याय' इति सत्यपि सम्भवे बाधनं भवतीत्यर्थोपपादकात्तक्रकौण्डिन्यन्यायाद्भिन्नो माठरपरिवेषणन्यायोऽस्ति, तेनैव रत्वावच्छिन्ननिमित्ततया यत्वंयण्त्वावच्छिन्नकार्यितयोर्बाधः। अतस्तद्भाष्यमुपपन्नमिति न तद्विरोध इति भावः ॥ ३०२ ॥

उक्तन्यायलब्धमर्थमाह—व्यापकेति। रत्वापेक्षया व्यापकेन यत्वेन यण्त्वेन च धर्मेणावच्छिन्नायाः रेफनिष्ठकार्यिताख्यविषयतायाः, व्याप्येन रत्वधर्मेणावच्छिन्नया निमित्तताऽऽख्यविषयतया बाधो ज्ञेय इत्यर्थः ॥ ३०३ ॥

एवमित्यादि स्पष्टार्थम् ॥ ३०४ ॥

तत्प्राप्तीति। तस्य उत्सर्गस्य प्राप्त्ययोग्येषु अविषयभूतेषु लक्ष्येषु अपवादस्याचारितार्थ्यमेव व्याप्यत्वं, तदेव च बाधकताया बीजमित्येतत्, "आयादय आर्धधातुके वा" ( ३। १। ३१ ) इति सूत्रे 'आयादयो वा सार्वधातुके नित्यम्।' इति न्यासमाश्रित्य तन्निरूपणपरे भाष्ये स्पष्टमित्यर्थः ॥ ३०५ ॥

आयादीनामिति। उक्तसूत्रे भाष्ये आर्धधातुक इति परसप्तम्याश्रयणे आयादिभ्यो यदार्धधातुकं तस्मिन्नवस्थिते वा आयादीनां निवृत्तिर्भवति, आहोस्विदायादिप्रकृतेर्यदार्धधातुकं

बाधकताबीजं तच्चतुर्विधं निगदितं च तेष्वाद्यम् ।
तस्मिन्सत्युत्सर्गे कृतेऽप्यचरितार्थतेत्यपरम् ॥ ३०७ ॥
आद्येन सहोत्सर्गे कृतेऽस्य चरितार्थता खलु तृतीयम् ।
अपवादप्रवृत्त्युत्तरमुत्सर्गण्यर्थतेति च तुरीयम् ॥ ३०८ ॥
तत्राद्यद्वितये स्वप्रवृत्तियोग्यातिरिक्त इतरत् स्यात् ।
इति बाधोऽन्त्यद्वितये स्वविहितकार्याश्रयं च हित्वेति ॥ ३०९ ॥

---

तस्मिन्नवस्थिते आयादीनामुत्पत्तिर्भवतीति पक्षद्वयेऽपि दूषणान्युद्भाव्य, "अविशेषेणायादीनां वा विधिमुक्त्वा सार्वधातुके नित्यमिति वक्ष्यामि" इत्युक्त्या "आयादयो वा ।" "सार्वधातुके नित्यम् ।" इति न्यास आश्रितः । तत्र गोपायिष्यतीत्यादौ परत्वात्स्यादिभिरायादीनां बाधमाशङ्क्य, आयादीनामनवकाशत्वात्त एव भविष्यन्तीति समाधाने कृते "ननु चेदानीमेवावकाशः प्रक्लृप्तः । गोपायति धूपायतीति । अत्रापि शप्स्यादिर्भवति । यद्यत्रापि शप्स्यादिर्भवति । नन्वत्रास्ति विशेषः सति वा शप्यसति वा । अन्यदिदानीमेतद् , यदुच्यते नास्ति विशेष इति । यत्तु तदुक्तम् , आयादीनां स्यादिभिव्याप्तोऽवकाश इति स नास्त्यवकाशः" इत्युक्तम् । अनेन तदप्राप्तियोग्येऽचारितार्थ्यरूपं व्याप्यत्वं बाधकताबीजमिति स्पष्टीभवतीति भावः । तत्र भाष्येऽन्ते आर्धधातुक इति विषयसप्तमीमाश्रित्य दोषपरिहाराद्यथाश्रुतन्यास एव स्थापितः ॥ ३०६ ॥

**निगदितं चेति ।** तदप्राप्त्ययोग्येत्यादिना प्रागुक्तम् उत्सर्गप्राप्त्ययोग्यस्थलेऽपवादस्याचारितार्थ्यं प्रथमं बाधबीजमित्यर्थः । **तस्मिन्सतीति ।** तदप्राप्तियोग्येऽचारितार्थ्ये सतीत्यर्थः ॥ ३०७ ॥

**आद्येन सहेति ।** प्रथमोक्तेन तदविषयेऽचारितार्थ्येन सह उत्सर्गे कृते उत्सर्गप्रवृत्त्युत्तरम्, अस्य अपवादस्य चरितार्थतारूपं तृतीयं बाधबीजमित्यर्थः । अपवादोत्तरमिति । अत्राप्याद्येन सहेत्यनुषज्यते तेन तदप्राप्तियोग्येऽचारितार्थ्ये सति अपवादशास्त्रप्रवृत्त्युत्तरमुत्सर्गशास्त्रप्रवर्तनेऽपवादशास्त्रवैयर्थ्यापत्तिरित्येतच्चतुर्थं बाधबीजमित्यर्थः ॥ ३०८ ॥

**तत्रेति ।** प्रथमोक्तबाधबीजद्वयेन, उत्सर्गशास्त्रीयोद्देश्येऽपवादशास्त्रप्रवृत्तियोग्यलक्ष्यघटकातिरिक्तत्वबोधनरूपः संकोचः क्रियते । तेन तत्रापवादस्य पूर्वं प्रवृत्तिः, तदुत्तरं यद्युत्सर्गप्राप्तिरस्ति, तर्हि सोऽपि भवति । अन्त्यद्वयेन तु उक्तसंकोचेन सह स्वविहितकार्याश्रयातिरिक्तत्वबोधनरूपोऽपि संकोचः क्रियते, तेन तत्रोत्सर्गस्य सर्वथैवाप्रवृत्तिः । स्वम् अपवादशास्त्रम् । इतरत् उत्सर्गशास्त्रम् । चकारः प्रथमोक्तसंकोचसमुच्चयार्थः । हित्वेति । इतरत्स्यादित्यनुषञ्जनीयम् ॥ ३०९ ॥

हल्ङ्याब्भ्य इति सुलोपं बाधत एद् हे रमेऽत्र संबुद्धौ ।
याडाप इति विबाध्याम् भवति ततो याटि सिद्ध्यति रमायाम् ॥२१०॥

सर्वेषामित्यादौ सुटि सति तद्बाधितो न नुड् भवति ।
कुलमित्यत्रामि कृते स्वमोर्नलुगिति क्रमात् फलान्येषाम् ॥ २११ ॥

व्याप्यत्वविशिष्टो यः कृत उत्सर्गेऽपि चरितार्थः ।
तस्यैव विधेरेतन्न्यायेन निरूप्यतेऽपवादत्वम् ॥२१२॥

---

चतुर्विधबाधबीजस्थलानि क्रमेणोदाहरति—हल्ङ्याब्भ्य इति । हे रमे इत्यादौ संबुद्धौ चेत्यस्य हल्ङ्याब्भ्य इति सूत्राप्राप्तियोग्यलक्ष्ये चारितार्थ्याभावात्प्रथमं बाधबीजम् । तेन हल्ङ्याब्भ्य इत्यस्योद्देश्ये सुप्रत्यये संबुद्धौ चेत्येतत्सूत्रप्रवृत्तियोग्यलक्ष्यघटकातिरिक्तत्वबोधनरूपसंकोचात् सुलोपः पूर्वं न प्रवर्तते, किन्तु संबुद्धिनिमित्तक आप एकार एव भवति । तदुत्तरं च हल्ङ्याब्भ्य इत्यस्य न प्रवृत्तिस्तत्र आ आविति प्रश्लेषात् । अत एङ्ह्रस्वादित्यनेन संबुद्धिलोपे हे रमे इत्यादि सिध्यतीति भावः । द्वितीयबाधबीजेन तु नात्र निर्वाहः । हल्ङ्याब्भ्य इति सुलोपोत्तरं प्रत्ययलक्षणेन संबुद्धौ चेत्येतस्य चारितार्थ्यात् । नापि तृतीयेन, तस्य हल्ङ्याब्भ्य इति सूत्रविषये प्रवृत्त्यनङ्गीकारात् । अन्यथाऽनड्वानित्यत्र सावनडुह इति नुमा सुलोपबाधे तदुत्तरं सुलोपाभावापत्तेः । चतुर्थस्य त्वत्र विषयतैव नास्ति । द्वितीयबाधबीजस्थलमाह—याडाप इति । याडप्राप्तियोग्ये ङेरामित्यामश्चारितार्थ्याभावाद् याटि कृते च निर्दिश्यमानस्य तद्व्यवधानादामोऽप्राप्त्या चारितार्थ्याभावाद्, याडाप इत्यस्योद्देश्ये ङिप्रत्ययातिरिक्तत्वेन संकोचात्पूर्वं याड् न भवति किन्त्वामेव । कृते त्वामि याट्प्राप्तिसत्त्वात्स भवति तेन रमायामित्यादि सिध्यति ॥ २१० ॥

तृतीयबाधबीजस्थलमाह—सर्वेषामिति । सुटो नुडप्राप्तियोग्येऽचारितार्थ्यान्नुट्प्रवृत्त्युत्तरं यदागमन्यायेन तत्प्राप्त्या चारितार्थ्याच्च नुड्विध्युद्देश्ये द्विविधसंकोचेन सुड्विषये सर्वथा नुडभावः । एवमेव ऊर्णुनाव, अशिशिषतीत्यादौ प्रथमैकाज्द्विर्वचनोत्तरं सावकाशेन द्वितीयैकाज्द्विर्वचनेन प्रथमैकाज्द्विर्वचनस्य बाधो ज्ञेयः । अयमेव तक्रकौण्डिन्यन्यायस्य विषयः । चतुर्थबाधबीजस्थलमाह—कुलमिति । अतोऽमित्यस्य स्वमोर्नपुंसकादिति लुगप्राप्तियोग्ये चारितार्थ्याभावादम्प्रवृत्त्युत्तरं लुकः प्रवृत्तावम्विधानवैयर्थ्यासंभावनासत्त्वाच्च द्विविधसङ्कोचेनाम्विषये सर्वथा लुगभावः ॥ २११ ॥

एतन्न्यायेन = येन नाप्राप्त इति न्यायेन ॥ २१२ ॥

यस्तु निरवकाशत्वाद्बाधस्तद्बोधनेऽस्य वैयर्थ्यात् ।
सत्यपि सम्भव इष्टं बाधनमिति भाष्यसम्मतोऽर्थोऽयम् ॥३१३॥
दधिदानात्प्रागुत्तरमवकाशवताऽपि तक्रदानेन ।
दधिदानं खलु बाध्यत एवं शास्त्रेऽपि विज्ञेयम् ॥३१४॥
प्रथमैकाज्द्वित्वविधेरुत्तरमपि सावकाशेन ।
भवति यथाद्यपरस्यैकाचो द्वित्वेन तद्बाधः ॥३१५॥
एवं च विषयभेदेऽप्यपवादत्वं भवत्यतः सिद्धः ।
विँल्लुक् स्रजिष्ठशब्दे टिलोपमात्रस्य बाधकरः ॥३१६॥

---

**वैयर्थ्यादिति** । निरवकाशविधिना स्वारम्भसामर्थ्यादेव सावकाशस्य बाधसिद्धेस्तत्रैतन्न्यायस्यानुपयोगादित्यर्थः । **भाष्यसम्मत इति** । मिदचोऽन्त्यात्परः ( १।१।४७ ) इति सूत्रे भाष्ये हि—"नैवेश्वर आज्ञापयति नापि धर्मसूत्रकाराः पठन्ति अपवादैरुत्सर्गा बाध्यन्तामिति । किन्तर्हि । लौकिकोऽयं दृष्टान्तः । लोके हि सत्यपि सम्भवे बाधनं भवति । तद्यथा । दधि ब्राह्मणेभ्यो दीयतां तक्रं कौण्डिन्यायेति । सत्यपि सम्भवे दधिदानस्य तक्रदानं निवर्तकं भवति । एवमिहापि—सत्यपि सम्भवेऽचामन्त्यात्परत्वं षष्ठीस्थाने योगत्वं बाधिष्यते' इत्युक्तम् । तेनास्य न्यायस्य चरितार्थविषयत्वं भाष्यसम्मतमिति भावः ॥ ३१३, ३१४ ॥

उत्सर्गे कृते चरितार्थस्योदाहरणमाह—**प्रथमैकाजिति** । इदं च लिटि धातोरनभ्यासस्येति सूत्रेऽनभ्यासग्रहणं प्रत्याचक्षाणस्य भाष्यकारस्य मतेन । तद्ग्रहणसत्त्वे तु प्रथमैकाज्द्विर्वचनोत्तरं धातोः साभ्यासत्वेन द्वितीयैकाज्द्विर्वचनस्यासंभव इति बोध्यम् ॥ ३१५ ॥

**एवं चेति** । उक्तरीत्या एकस्य कार्यिणः कार्यद्वययोगरूपविरोधमनपेक्ष्य व्याप्यत्वमात्रस्य बाधकता बीजत्वाङ्गीकाराद् विषयभेदेऽपि = कार्यिभेदेऽप्यपवादत्वं भवतीत्यर्थः । यत्त्वत्र परिभाषेन्दुशेखरे 'अत एवाचि रादेशेन नुटोऽपवादत्वाद्बाधमाशङ्क्य न विस्रिति ज्ञापकेन समाहितं तृज्वत्सूत्रे भाष्ये' इत्युक्तम्, तत्तु नुटि कृतेऽजादित्वाभावेन अचि र ऋत इत्यस्याप्राप्त्या चरितार्थविषयत्वाभावेन प्रस्तुताननुगुणम् । अचिरादेशविषये गुणदीर्घोत्वानामिव नुटोऽपि प्राप्तिसत्त्वाद्बाध्यसामान्यचिन्तया निरवकाशत्वेनैव तेन तेषां सर्वेषां बाधात् । अविशेषेण विषयभेदेऽपि बाधकत्वं भवतीत्यर्थे भाष्यप्रमाणोपन्यासपरत्वं वा तद्ग्रन्थस्य ज्ञेयम् । तत्र रेफादेशः प्रकृतेः, नुट् तु प्रत्ययस्येति विषयभेदः स्पष्टः । **विँल्लुगिति** । प्रकृत्यैकाच् ( ६।४।१६३ ) इति सूत्रे

नन्वेवं दधिदानं कम्बलदानेन बाध्येत ।
यासुट् च सुटा बाध्यः स्यादिति चेदत्र बोध्यमिदम् ॥३१७॥
बाध्यत्वबाधकत्वे सजातिसमकालयोरेव ।
दधितक्रयोश्च भोजनरुचिकरतैवास्ति साजात्यम् ॥३१८॥
नैवं दधिकम्बलयोर्यासुट् सुडिमौ न समकालौ ।
लिङ्विषये यासुटि सति लादेशानन्तरं हि तथयोः सुट् ॥३१९॥
वार्तिकमतं त्वसम्भव एव विरोधेन बाधकत्वमिति ।
तत्तु सकललक्ष्याणामसाधकत्वेन दूषितं भाष्ये ॥३२०॥
इति शेखरकारमतं परेत्विह प्रथमबाधबीजेन ।
निर्वाहान्नादत्यस्तक्रन्यायो द्विसंकोचः ॥ ३२१ ॥

---

भाष्ये तत्सूत्रं प्रयोजनखण्डनप्रस्तावे अतिशयेन स्रग्वी स्रजिष्ठ इत्यादौ विनो लुकि कृते स्रज् इत्यस्य टेर्लोपो मा भूदित्यर्थं 'नाप्राप्ते टिलोपे विन्मतोर्लुगारभ्यते स बाधको भविष्यति' इनि जातिपक्षाश्रयणेन 'नस्तद्धिते इति 'टेः इति' च विहितयोर्द्वयोरपि टिलोपयोर्लुका बाधः प्रतिपादितः । तत्र टिलोपः स्रज् इत्यस्य लुक् तु विन इति विषयभेदः स्पष्टः ॥ ३१६ ॥

एवम् = विषयभेदेऽप्यपवादत्वमित्यङ्गीकारे ॥ ३१७ ॥

सजातीययोः समकालयोरेव च' बाध्यबाधकभावो भवति, न तु विजातीययोर्भिन्नकालयोश्च दधितक्रयोर्भोजने रुच्युत्पादकत्वरूपं साजात्यमस्ति । एवं दधिकम्बलयोर्नास्ति । तस्मात्कम्बलदानेन दधिदानस्य न बाधः । एवमद्य ब्राह्मणेभ्यो दधि दीयतां श्वः कौण्डिन्याय तक्रमित्युक्ते श्वस्तनतक्रदानेनाद्यतनदधिदानस्य न बाधः । भिन्नकालत्वात् । सुड्यासुटोर्भिन्नकालत्वमुपपादयति—लिङ्विषय इति । यासुट्परस्मैपदेष्वित्यत्र विषयसप्तम्याश्रयणात्परस्मैपदविवक्षायामेव यासुडुत्पत्तेरिति भावः ॥ ३१८, ३१९ ॥

वार्तिकमतमित्यादि स्पष्टार्थम् ॥ ३२० ॥

एवं परिभाषेन्दुशेखरानुसारेण व्याख्याय तत्र गौरवाल्लक्ष्यासिद्धेश्च नवीनमतमाह—परेत्वित्यादिना । पूर्वोक्तेषु चतुर्षु बाधबीजेषु तदप्राप्तियोग्येऽचारितार्थ्यरूपं प्रथममेव बाधबीजमङ्गीकरणीयं तेनैव सर्वत्र निर्वाहात् । स्वप्रवृत्तियोग्यातिरिक्तत्व—स्वविहितकार्याश्रयातिरिक्तत्वेति द्विविधसंकोचविशिष्टस्तक्रकौण्डिन्यन्यायो नाश्रयणीयः ॥ ३२१ ॥

तस्याश्रय ईघ्राध्मोरित्यादौ द्वित्वबाधके विहिते।
द्वित्वं न स्यादेवं तदोः सकारे त्यदाद्यत्वम् ॥ ३२२ ॥

अय्याभ्यां तद्बाधादिदमो म इतीदमफलं स्यात्।
तस्मात्संकोचः स्वप्रवृत्तियोग्यातिरिक्त इत्येव ॥ ३२३ ॥

आमीत्यत्राकारप्रश्लेषात्सुटि कृते न नुट्, परद्वित्वे।
प्रथमैकाज्द्विर्त्वं नानभ्यासपदादिति प्राहुः ॥ ३२४ ॥

---

तदाश्रयणे दोषानाह—तस्याश्रय इत्यादिना। "ईघ्राध्मोः," "हन्तेर्हिंसायां यङि घ्नीभावो वाच्यः" इत्यादेः सन्यङोरितिद्वित्वाप्राप्तियोग्ये चारितार्थ्याभावाद्द्वित्वे कृते च चारितार्थ्यात्तक्रन्यायविषयत्वेनोभयविधसंकोचे ईत्वादिप्रवृत्त्युत्तरं द्वित्वं न स्यात्। यङीति विषयसप्तम्याश्रयणेनेत्वादेः पूर्वं प्राप्त्या द्वित्वस्य तु यङुत्पत्त्यनन्तरं प्राप्त्या समकालत्वाभावेन तत्र तक्रन्यायो न प्रवर्तेत इति कथंचित्तद्वारणेऽन्यत्राह—एवमिति। तदोः सः सावनन्त्ययोरिति त्यदाद्यत्वबाधके सत्वे प्रवृत्ते त्यदाद्यत्वं न स्यात्। एवमनाप्यक इति इदम इदोऽन् इत्यादेशे प्रवृत्ते तन्न स्यात् ॥ ३२२ ॥

अय्याभ्यामिति। "इदोऽय् पुंसि" "यः सौ" इत्याभ्यां त्यदाद्यत्वबाधेन तदप्रवृत्त्यैव मकारश्रवणे सिद्धे इदमो म इति मकारविधानं व्यर्थं स्यात्। तत्सामर्थ्येन तक्रन्यायस्यानित्यत्वज्ञापनापेक्षया तदनाश्रयणमेव वरम्। तत्साध्यफलानामन्यथासिद्धेरिति भावः ॥ तस्मादिति। उक्तस्थलेषु द्विविधसंकोचे दोषसत्त्वादित्यर्थः। इत्येवेति। उक्तरूप एकविध एव संकोचो मन्तव्यः। एवं च द्वितीयतृतीयबाधबीजयोर्विशेषाभावान्नोपयोग इति भावः ॥ ३२३ ॥

ननु तक्रन्यायानुसारितृतीयबाधबीजानङ्गीकारे द्विविधसंकोचाभावे च सर्वेषामित्यादावामः सुटि कृते पुनर्नुट् स्यात्, एवमुर्णुनावेत्यादौ द्वितीयैकाच्द्विर्वचनोन्तरं प्रथमैकाचोऽपि द्विर्वचनं स्यादत आह—आमीत्यत्रेति। परद्वित्वे = द्वितीयैकाचो द्वित्वे सतीत्यर्थः। अनभ्यासपदात्—। लिटि धातोरनभ्यासस्येत्यनभ्यासग्रहणात्। द्वित्वोत्तरं धातोरभ्यासघटितत्वेव तदवयवस्य द्वित्वाप्रवृत्तेरिति भावः। कुलमित्यादौ प्रथमबाधबीजेन स्वमोरिति लुकं बाधित्वाऽतोऽमित्यमि जातेऽतोऽमिति सूत्रारम्भसामर्थ्यादेव न पुनर्लुगिति चतुर्थबाधबीजस्यापि नोपयोग इति बोध्यम् ॥ ३२४ ॥

यत्र निरवकाशत्वाद्बाधस्तत्र तु कृतेऽपवादविधौ ।
यद्युत्सर्गप्राप्तिस्तर्हि स भवतीति पठ्यते तदिदम् ॥ ३२५ ॥

**क्वचिदपवादविषयेऽप्युत्सर्गोऽभिनिविशत इति ॥५८॥**

अत्रापवादशब्दो बाधकपर एव लक्षणया ।
यो हि कृते चरितार्थः स एव तस्यास्ति शक्योऽर्थः ॥ ३२६॥
गण ईत्वं न हलादिः शेषं खलु बाधतेऽपवादत्वात् ।
किन्तु निरवकाशत्वादिति भाष्यं मानमत्रार्थे ॥ ३२७ ॥
तत्र हलादिः शेषे गणूरूपाभ्यासविरहेण ।
ईत्वं हि निरवकाशं नत्वपवादस्ततश्चात्र ॥ ३२८ ॥

---

यत्रेति । तदप्राप्तियोग्येऽचारितार्थ्ये सति तस्मिन्कृतेऽप्यचारितार्थ्यमिति यद् द्वितीयबाधबीजमुक्तं तत्र स्वप्रवृत्तियोग्यातिरिक्तत्वरूप एव सङ्कोचो न तु स्वविहितकार्याश्रयातिरिक्तत्वरूपस्तेन तत्र बाधकप्रवृत्त्युत्तरकाले यद्युत्सर्गस्य प्राप्तिर्भवति तर्हि स भवत्येव, अप्राप्तौ तु नेत्याशयकमिदमाधुनिकैः पठयत इत्यर्थः । बाधके प्रवृत्ते उत्सर्गस्य प्राप्तौ सत्यां तत्प्रवृत्तेरुदाहरणं रमायामिति । अत्र ङेरामि कृते याट् । अप्राप्तौ तु नेत्यस्य पचेयुरिति । अत्र 'अतो दीर्घो यञीति' दीर्घस्य बाधक इत्यादेशे जाते पुनरप्राप्त्या न दीर्घः ॥ ३२५ ॥

शेखरानुसारेण तावदाह—अत्रेति । अत्र = अस्मिन्—प्रकरणे । यो हीति । उत्सर्गे कृते यश्चरितार्थस्तक्रकौण्डिन्यन्यायविषयः स एवापवादशब्दस्य शक्यः शक्तिप्रतिपाद्योऽर्थ इत्यर्थः ॥ ३२६ ॥

उक्तार्थे भाष्यं प्रमाणयति—गण ईत्वमित्यादिना । गुणो यङ्लुकोः (७।४।८२) इति सूत्रे भाष्ये अभ्यासविकारेष्वपवादा उत्सर्गान्न बाधन्त इति परिभाषायाः प्रयोजनं गणेरीत्वं हलादिशेषस्य न बाधकमित्युक्त्वा, न खल्वपि गणेरीत्वमपवादत्वाद्धलादिशेषं बाधते । किन्तर्ह्यनवकाशत्वात्' इत्युक्तम् । तेनानवकाशत्वेन बाधकस्यापवादपदवाच्यत्वाभाव इति भावः ॥ ३२७ ॥

ईत्वविधेर्निरवकाशत्वं दर्शयति—तत्रेति । ई च गण इत्यस्य गणूरूपाभ्यासान्त्यस्य ईकारादेश इत्येवार्थः । सम्भवति सामानाधिकरण्ये वैयधिकरणस्यान्याय्यत्वात् । ततश्च अजीगणदित्यत्र द्वित्वे हलादिः शेष इत्यनेन ग इत्यस्यैवावशेषे गणूरूपाभ्यासा-

अभ्यासविकारेष्वपवादा इति न प्रवर्तेत ।
तत्सिद्धयेऽपवादस्थाने बाधकपदं पठितम् ॥ ३२९ ॥
परमार्थतस्तु भाष्ये प्रयुज्यतेऽयं कृतेऽप्यचरितार्थे ।
उक्तस्थलेऽस्तु तक्रन्यायेन विबाधके न सर्वत्र ॥ ३३० ॥
यत्तु मयड् विषयेऽप्यण् न्यायेनानेन काञ्चनीत्यादौ ।
इत्याहुस्तन्न यतोऽण् कर्मणि चेत्यत्र भाष्ये हि ॥ ३३१ ॥
कर्मण्यणि सिद्धे पुनरणुक्तिरपवादविषयेऽणः ।
अनिवृत्त्यर्थाऽतः खलु गोदायो व्रजति सिद्ध्यतीत्युक्तम् ॥३३२॥

---

भावात्, अभ्यासस्यानर्थकत्वेनानुमानिकस्थान्यादेशकल्पनाया असंभवात्, अक्तपरिमाणग्रहणसत्त्वेनैकदेशविकृतन्यायाप्रवृत्तेश्चाभ्यासे गणरूपत्वाभावादीत्वं न प्राप्नोति अतस्तन्निरवकाशत्वेनैव हलादिः शेष इत्यस्य बाधकं न त्वपवादत्वेन । अतस्तत्र अभ्यासविकारेष्वपवादा उत्सर्गान्न बाधन्त इति परिभाषा न प्रवर्तेत । ततश्च हलादिः शेषं बाधित्वा पूर्वमीत्वप्रवृत्तौ णकारस्येत्वे, आद्गुणे, ह्रस्वे चानिष्टरूपापत्तिः । अतस्तत्परिभाषाप्रवृत्तिद्वारेष्टरूपसिद्धये तस्यामपवादपदं परित्यज्य, अभ्यासविकारेषु बाधका न बाधन्त इति पठितव्यमित्युक्तम् । एवञ्च बाध्यस्यापि हलादिः शेष इत्यस्य पूर्वं प्रवृत्तिस्तत उक्तरीत्या गणरूपाभ्यासविरहेऽपि ईत्वविधानसामर्थ्याद्वयधिकरणान्वयेन गण्धातोर्योऽभ्यासस्तस्येत्वमित्यर्थादलोऽन्त्यस्येति गकारोत्तराकारस्येत्वे नेष्टरूपसिद्धिरिति बोध्यम् ॥ ३२८ ॥ ३२९ ॥

अपवादपदस्योक्तरीत्याऽर्थसंकोचो न युक्त इत्याह—**परमार्थतस्त्विति** । वाऽसरूपोऽस्त्रियाम् ( ३।१।९४ ) लटः शतृशानचौ ( ३।२।१२४ ) अण् कर्मणि च ( ३।३।१२ ) इत्यादिष्वनेकसूत्रेषु भाष्ये, उत्सर्गप्रवृत्त्युत्तरमचरितार्थेष्वप्यपवादशब्दप्रयोगदर्शनात् तदप्राप्तियोग्ये अचरितार्थ एवापवादशब्दस्य वाच्योऽर्थ इति निर्णीयते । **उक्तस्थले इति** । गुणो यङ्लुकोः ( ७।४।८२ ) इति सूत्रस्थभाष्ये तक्रन्यायेन कृते चरितार्थविधावपवादशब्दप्रयोगोऽस्तु । न त्वेवं सर्वत्रेत्यर्थः ॥ ३३० ॥

सीरदेवाद्युक्तिं खण्डयति—**यत्त्वित्यादिना** । क्वचिदपवादविषयेऽपीति न्यायेन नित्यं वृद्धशरादिभ्य इत्यणपवादमयड्विषयेऽपि औत्सर्गिकोऽण् भवति तेन काञ्चनस्य विकारः काञ्चनी नगरीति सिध्यतीति सीरदेवादयः प्राचीना आहुस्तन्न युक्तम् । यतः, 'अण् कर्मणि च ( ३।३।१२ ) इति सूत्रे भाष्ये 'किमर्थमिदमुच्यते न अविषेण कर्मण्यणित्यण्

न्यायेनैव तु सिद्धौ तदसाङ्गत्यान्न तादृशेष्वेषः ।
काञ्चननिर्मितनगरीत्यर्थे शेषेऽणि काञ्चनी सिद्धा ॥ ३३३ ॥
द्विविधेऽपि प्रागुक्ते बाधे चिन्ताद्वितयमस्ति ।
सामान्यतः स्वविषये प्राप्तं बाध्यं विशेषतो वेति ॥ ३३४ ॥
आद्याश्रयेण यचिभं स्वादिष्विति सुप्तिङन्तमित्युभयोः ।
बाधकमिति राजन्येऽन्तःस्थसुपा पदतया नलोपो न ॥ ३३५ ॥
अपराश्रयादतो गुण इत्येतदकः सवर्ण इत्यस्य ।
बाधकमनन्तरत्वान्न तु पूर्वसवर्णदीर्घस्य ॥ ३३६ ॥

---

विहितः स क्रियायामुपपदे क्रियार्थायामन्यत्र च भविष्यति । अणःपुनर्वचनमपवादविषयेऽनिवृत्त्यर्थम् । अणः पुनर्वचनं क्रियते अपवादविषयेऽनिवृत्तिर्यथा स्यात् । गोदायो व्रजति कम्बलदायो व्रजतीति' इत्युक्त्या गोदाय इत्यादावातोऽनुपसर्गे क इत्यण्बाधककप्रत्ययविषयेऽप्यणो निवृत्त्यभावार्थं पुनरण्ग्रहणमिति प्रतिपादितम् । प्रकृतन्यायेनैव तत्सिद्धौ तु पुनरण्ग्रहणं व्यर्थं स्याद् भाष्यं चासङ्गतं स्यात् । अतस्तादृशेषु = प्रत्ययविधायकोत्सर्गापवादेषु 'क्वचिदपवादविषयेऽपी'ति न्यायो न प्रवर्तेत इत्यर्थः । काञ्चनीत्यस्य सिद्धिस्तु प्रकारान्तरेणेत्याह—काञ्चननिर्मितेति काञ्चनेन निर्मितेत्यर्थे शेषे इति विधिसूत्रविहिताण्प्रत्ययेनैव काञ्चनी इति रूपं सिद्धमित्यर्थः । अत्र वृद्धाच्छ इत्यण्बाधकश्छस्तु नाशङ्क्यः । तस्य शेषाधिकारस्थजाताद्यर्थविहिताण्मात्रबाधकत्वात् ॥ ३३१ ॥ ३३२ ॥ ३३३ ॥

द्विविधेऽपीति । तक्रन्यायेन बाधे निरवकाशत्वेन बाधे चेत्यर्थः । सामान्यतः = सामान्यरूपेण । विशेषतो = विशेषरूपेण । बाध्यसामान्यचिन्ता, बाध्यविशेषचिन्ता चेत्यर्थः । तत्र स्वविषये यद्यदन्यत् प्राप्नोति तत्सर्वं बाध्यमिति प्रथमा । वक्ष्यमाणवचनैस्तत्तद्विशेषशास्त्रबाधे द्वितीया चिन्ता ॥ ३३४ ॥

उभयोरेकैकमुदाहरणमाह—आद्येत्यादिना । बाध्यसामान्यचिन्ताऽऽश्रयणेन 'यचि भम्' इति सूत्रं, 'स्वादिष्वसर्वनामस्थाने' 'सुप्तिङन्तं पदम्' इत्युभयोरपि पदसंज्ञाविधायकसूत्रयोर्बाधकम् । तेन राजन्यशब्देऽन्तर्वर्तिविभक्त्या पदत्वेन प्राप्तौ नलोपो न भवति । भसंज्ञया उभयविहितपदसंज्ञाया बाधादिति भावः ॥ ३३५ ॥

अपरेति । बाध्यविशेषचिन्ताऽऽश्रयणात् अतो गुण इति पररूपशास्त्रम्, अनन्तरस्य विधिर्वा भवति प्रतिषेधो वेति वचनेन स्वानन्तरस्य अकः सवर्णे दीर्घ इत्यस्यैव बाधकं

अथ के बाध्यविशेषा इति बाध्यविशेषचिन्तायाम् ।
परिभाषात्रितयेन प्रतिपाद्यन्ते विशेषास्ते ॥ ३३७ ॥

## पुरस्तादपवादा अनन्तरान्विधीन् बाधन्ते नोत्तरान् ॥५९॥

प्रथमोपस्थितबाधेनाकाङ्क्षाया निवृत्तत्वात् ।
पश्चादुपस्थितस्य न बाधो भवतीति बीजमिह ॥३३८॥
अत एत्येधतिवृद्ध्या सन्निहितं बाध्यमेङि पररूपम् ।
न त्वोमाङोश्चेति व्यवहितमेतद्धि पूर्वेण ॥३३९॥

## मध्येऽपवादाः पूर्वान्विधीन् बाधन्ते नोत्तरान् ॥ ६० ॥

ओष्ठादिपञ्चकान्ङीष् मध्ये पठितोऽपवाद इति ।
प्राक्पठितमसंयोगोपधादिति निषेधमपनुदति ॥३४०॥
न तु परपठितं सहनञिति निषेधं बीजमस्यास्तु ।
पूर्वोपस्थितबाधेनाकाङ्क्षाऽपगम एव विज्ञेयः ॥३४१॥

---

न तु व्यवहितस्य प्रथमयोः पूर्वसवर्ण इत्यस्येत्यर्थः । तेन रामा इत्यादौ पूर्वसवर्णदीर्घसिद्धिः ॥ ३३६ ॥

अथ के इत्यादि स्पष्टार्थम् ॥ ३३७ ॥

पुरस्तादिति—। पूर्वपठिता अपवादाः स्वसन्निहितानेव परविधीन् बाधन्ते न तु ततः परानित्यर्थः । एतन्न्यायबीजमाह—प्रथमेति ॥ ३३८ ॥

फलमाह—अत इति ॥ ३३९ ॥

ओष्ठादीति । "नासिकोदरौष्ठजङ्घादन्तकर्णशृङ्गाच्च" (४।१।५५) इति सूत्रोक्त ओष्ठादिशब्दपञ्चकान्तान्ङीष्विधिः, "स्वाङ्गाच्चोपसर्जनादसंयोगोपधात्" (४।१।५४) "सहनञ्विद्यमानपूर्वाच्च" (४।१।५७) इत्यनयोर्मध्ये पठितोऽस्ति अतः स स्वापेक्षया पूर्वमसंयोगोपधादिति निषेधमेव बाधते, न तूत्तरं सहनञ्विद्यमानपूर्वाच्चेति निषेधमित्यर्थः । अस्य फलं, बिम्बोष्ठी बिम्बोष्ठेत्यादौ ङीष्विकल्पः, सनासिका अनासिकेत्यादौ तु ङीष्निषेध एवेति ॥ ३४०, ३४१ ॥

ननु वाच्छन्दसि विधिना प्रीणाहि युयोधि चेत्यादौ ।
सेर्ह्यपिदिति सन्निहितापित्त्वविधेरिव भवेद्विकल्पो हेः ॥३४२॥
नेटीति प्रतिषेधः सन्निहितहलन्तवृद्धिमिव ।
सिचि वृद्धिं मृजिवृद्धिं च वारयेदिति विशङ्क्याह—॥३४३॥

## अनन्तरस्य विधिर्वा भवति प्रतिषेधो वा ॥ ६१ ॥

मूलं पूर्वोपस्थितिरत्रापि, ज्ञापकं च विध्यंशे ।
संख्याऽव्ययेति सूत्रेऽनन्तरङीष्वारणाय ङीब्ग्रहणम् ॥३४४॥
माऽस्त्वनुनासिकलोपस्यैव प्रतिषेध इत्यर्थम् ।
न क्विचि सूत्रे दीर्घग्रहणमिह ज्ञापकं निषेधांशे ॥३४५॥

---

नन्विति—छन्दसि हिरपिद्वेत्यर्थकेन, वाच्छन्दसि (३।४।८८) इति सूत्रेण सन्निहितस्य सेर्ह्यपिच्च (३।४।८७) सूत्रविहितस्यापित्त्वस्यैव तद्व्यवहितस्य ह्यादेशस्यापि विकल्पः स्यात् एवं नेटि (७।२।४) इति निषेधो वदव्रजहलन्तस्याचः (७।२।३) इति हलन्तत्वनिमित्तिकां वृद्धिमिव सिचि वृद्धिः परस्मैपदेषु (७।२।१) मृजेर्वृद्धिः (७।२।११४) इत्येते वृद्धी अपि निवारयेदित्यर्थः ॥ ३४२ ॥ ३४३ ॥

विधिर्वेति । वाशब्दश्चार्थे । विधिनिषेधावनन्तरस्यैव भवत इत्यर्थः । मूलमिति । पुरस्तादपवादा इति न्याय इवात्राप्यनन्तरपठितस्य पूर्वोपस्थितत्वमेव मूलमित्यर्थः । संख्येति । संख्याव्ययादेर्ङीप् (४।१।२६) इति सूत्रे ङीब्ग्रहणं हि, अव्यवहितपूर्वस्य बहुव्रीहेरूधसो ङीष् (४।१।२५) इति सूत्रस्थस्य ङीषो निवारणाय कृतमस्ति । प्रकृतन्यायाभावे तु व्यवहितस्यापि ऋन्नेभ्यो ङीप् (४।१।५) इति ङीपो विधानेनैव सिद्धे किं तेनेति तदनन्तरस्यैव विधिरित्यंशज्ञापकमित्यर्थः ॥ ३४४ ॥

निषेधांशे ज्ञापकमाह—मास्त्विति । यन्तिः रन्तिः, इत्यादौ दीर्घस्यानुनासिकलोपस्य चाभावाय कृते न क्विचि दीर्घश्च (६।४।३९) इति सूत्रे दीर्घग्रहणम् अनन्तरस्य, "अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपो झलि क्ङिति" (६।४।३७) इति सूत्रविहितस्यानुनासिकलोपस्यैव केवलस्य निषेधो मा भूत्, "अनुनासिकस्य क्विझलोः क्ङिति" (६।४।१५) इति सूत्रविहितदीर्घस्यापि निषेधोऽस्त्वित्यर्थं कृतमस्ति । प्रकृतन्यायाभावे तु दीर्घस्याप्यनुवृत्त्योभयनिषेधसिद्धेस्तद्व्यर्थं सदनन्तरस्यैव निषेध इत्यंशज्ञापकमिति भावः ॥ ३४५ ॥

भाष्येऽप्यौशद्यावित्यस्मिञ्छ्लोकेऽष्टपुत्र इत्यादौ ।
औशा सामासिकलुग् न बाध्य इति साधितमनेन ॥३४६॥

पूर्वन्यायादस्य प्राबल्यं तत्र कैयटेनोक्तम् ।
प्रत्यासत्तिकृतोऽयं लक्ष्यानुग इति च पक्षोऽन्यः ॥३४७॥

टिड्ढेत्यनेन डाब्व्यवहितस्य ङीपो विधिः स्वरितभावात् ।
न षडित्येष निषेधो व्याख्यानबलेन टाब्ङीपोः ॥३४८॥

---

**भाष्येऽपीति** । अष्टाभ्य औश् (७।१।२१) इति सूत्रे भाष्ये—अष्टपुत्रः, अष्टभार्य इत्यादौ नाप्राप्ते लुक्यारभ्यमाणत्वादौशादेशः सामासिकलुकोऽपि बाधकः स्यात्तन्निवारणार्थम् 'औशद्यौ" इति वक्तव्यम् । अद्यावित्यस्यानुत्तरपद इत्यर्थः इत्युपक्रम्याग्रे तत्खण्डनयुक्तीनां संग्रहरूपः, "औशद्यावस्तु लुक् तत्र षड्भ्योऽप्येवं प्रसज्यते । अपवादो यस्य विषये यो वा तस्मादनन्तरः ।" इति श्लोकः पठितः । तत्र यो वा तस्मादनन्तर इति कैयटनैत्थं व्याख्यातम्—"औशः षड्भ्यो लुगित्यनन्तरः । द्वितीयाध्यायविहितस्तु व्यवहितः । ननु मध्येऽपवादा इति द्वितीयाध्यायविहितस्यैव लुको बाध प्राप्नोति । नैष दोषः । यत्र द्वावपि व्यवहितौ पूर्वोत्तरौ तत्र पूर्वानुभवाहितसंस्कारोपजनितस्मृत्यारूढस्य पूर्वस्य युक्तो बाधः । इह त्वनेकाध्यायव्यवहितो द्वितीयाध्यायविहितो लुक् महता यत्नेन स्मरणीयोऽनन्तरस्त्वनुभवनीय इति स एव बाध्यते ।" अत्र प्रकृतन्यायाश्रयणं स्पष्टम् ॥ ३४६ ॥

**पूर्वेति** । मध्येऽपवादा इति न्यायापेक्षयाऽनन्तरस्येति न्यायस्य बलीयस्त्वं तत्र = पूर्वोक्तभाष्यव्याख्यायाम् । **प्रत्यासत्तीति** । अयं न्यायः प्रत्यासत्तिमूलकः । लक्ष्यानुरोधाच्च मध्येऽपवादा, अनन्तरस्य विधिर्वेत्यनयोर्न्याययोर्व्यवस्थेति पक्षान्तरम् । इदमपि कैयटेनोक्तभाष्यव्याख्यायामुक्तम्—'अथवा सत्यामसत्यां चोपलब्धौ प्रत्यासत्त्याऽनन्तरस्यैव बाधेन भाव्यमिति ॥ ३४७ ॥

क्वचित्स्वरितत्वप्रतिज्ञानात्सामर्थ्याद्वाऽस्य न्यायस्य बाधो भवतीत्याह—**टिड्ढेति** । ङीप्पदे स्वरितत्वप्रतिज्ञानात्स्वरितेनाधिकं कार्यमित्यर्थाच्च डाब्व्यवहितस्यापि ङीप एव विधिः । सामर्थ्यान्न्यायबाधमुदाहरति—**न षडिति** । न षट् स्वस्रादिभ्यः (४।१।१०) इति सूत्रे भाष्ये पञ्चेत्यत्र न लोपे कृतेऽदन्तत्वात्प्राप्तस्य टापो वारणायं 'स्त्रियामिति वर्तते स्त्रियां यत्प्राप्नोति तस्य प्रतिषेधः' इति व्याख्यानसामर्थ्यान्ङीप्टापोरुभयोर्निषेधः । एवं प्रियपञ्चा द्रौपदीत्यत्र डापोऽपि निषेध इति बोध्यम् ॥ ३४८ ॥

ननु झस्यान्तादेशे दधतीत्यादौ कृतेऽन्तरङ्गत्वात् ।
अन्विधितया स नैव स्थानिवदिति झोऽद्विधिर्न्यर्थः ॥ ३४९ ॥

अत आह—

## पूर्वं ह्यपवादा अभिनिविशन्ते पश्चादुत्सर्गाः ॥ ६२ ॥

अपवादाः खलु पूर्वं बुद्ध्यारूढा भवन्त्यथोत्सर्गाः ।
अपवादविषयमादावालोच्य हि लक्षणैकचक्षुष्कः ॥ ३५० ॥
तद्विषयत्वविनिश्चय उत्सर्गैर्लक्ष्यसंस्कृतिं कुरुते ।
सङ्कोचाकरणे तु द्वयोर्विकल्पः प्रसज्येत ॥ ३५१ ॥

---

अपवादप्रसङ्गादाह—नन्विति । अन्तरङ्गत्वादिति । द्वित्वेऽभ्यस्तसंज्ञायां च सत्यसमदभ्यस्तादित्यस्य प्रवृत्तिः । तदपेक्षया झोऽन्त इत्यस्य शीघ्रोपस्थितिकत्वेनान्तरङ्गत्वादिति भावः । नन्वस्तु पूर्वमन्तादेशः, तस्य स्थानिवद्भावेन झत्वबुद्ध्याऽदादेशो भविष्यत्यत आह—अल्विधितयेति । ननु तत्रानैमित्तिकत्वेनादावेवाभ्यस्तसंज्ञाप्रवृत्त्या तदुत्तरमन्तादेशादादेशयोः समकालप्राप्त्याऽन्तादेशबाधनेनादादेशश्चरितार्थ इति चेन्न । आयनेयीनीयियः ( ७।१।२ ) इति सूत्रे भाष्ये आयन्नादिषु उपदेशिवद्वचनं स्वरसिद्ध्यर्थमिति वार्तिकेनान्तादेशे उपदेशिवद्भाववचनादुपदेशावस्थायामेवान्तादेशप्रवृत्त्या द्वयोः समकालप्राप्तत्वाभावात् । अन्तादेशस्यैव पूर्वप्रवृत्तेः ॥ ३४९ ॥

वाक्यार्थमाह—अपवादा इति । अथ=अपवादशास्त्रीयवाक्यार्थज्ञानोत्तरम् । पूर्वं ह्यपवादा इति, प्रकल्प्य चापवादविषयमित्येतौ न्यायौ भाष्ये तत्र तत्रोपनिबद्धौ तयोर्नागेशभट्टमतानुसारेणाधिकारिभेदेन व्यवस्थामाह—अपवादविषयमित्यादिना । लक्षणमेवैकं मुख्यं चक्षुर्लक्ष्यसाधुत्वज्ञानसाधनं यस्य स लक्षणैकचक्षुष्कः । लक्षणज्ञानाधीनलक्ष्यपरिज्ञानवान् पुरुषः । स आदावपवादविषयं पर्यालोच्य तदविषयत्वनिश्चये सति, उत्सर्गेण लक्ष्यसंस्कारं कुरुते । अपवादशास्त्रस्य पूर्वमनालोचने, उत्सर्गशास्त्रीयोद्देश्येऽपवादशास्त्रप्रवृत्तियोग्यातिरिक्तत्वादिना संकोचाकरणे च, असति बाधके उद्देश्यतावच्छेदकावच्छेदेन विधेयान्वय इति सिद्धान्ताच्छास्त्रद्वयप्रामाण्यादन्यतरत्वेन रूपेण विधेयस्योद्देश्यव्यापकतापत्तौ विकल्पापत्तिः स्यादिति भावः । एवं च दधतीत्यादावपवादस्यादादेशस्य विषये पूर्वमन्तादेशो न प्रवर्तते, तस्मादवतरणोक्तदोषो नेति बोध्यम् ॥ ३५०, ३५१ ॥

लक्ष्यैकदृक् तु तादृक् पर्यालोचनमकृत्वैव ।
त्यक्त्वाऽपवादविषयं संस्कुरुते लक्ष्यमुत्सर्गैः ॥ ३५२ ॥
तस्यापि हि शास्त्रप्रक्रियास्मरणपूर्वकप्रयोगेण ।
धर्मोत्पत्तिः श्रुत्या प्रदर्शिताऽतस्तदर्थमिदमाह ॥ ३५३ ॥

**प्रकल्प्य चापवादविषयं तत उपसर्गोऽभिनिविशते ॥६३॥**

अत्र प्रकल्प्येति पदं परिहृत्येत्यर्थकं ज्ञेयम् ।
तत इत्यपवादविधेः समीक्षणात्प्रागपीत्यर्थम् ॥ ३५४ ॥
इति नागेशाभिमतं व्याख्यानं वस्तुतो न तद्रुचिरम् ।
लक्ष्यैकचक्षुषां न हि शास्त्रापेक्षाऽस्ति शब्दतत्त्वविदाम् ॥ ३५५ ॥
न च शास्त्रमिदं लक्ष्यैकचक्षुषो योगिनोऽधिकृत्योक्तम् ।
सत्यां चापेक्षायामितरवदेवास्तु लक्ष्यसंस्कारः ॥ ३५६ ॥

---

लक्ष्यैकदृगिति । शास्त्रं विनाऽपि लक्ष्यसाधुत्वज्ञानवाँल्लक्ष्यैकचक्षुष्कः पुरुषस्तु, अपवादशास्त्रपर्यालोचनं विनाऽप्यपवादविषयं परित्यज्योत्सर्गेण लक्ष्यं संस्कुरुते तदभिप्रायकं प्रकल्प्य चेति न्यायान्तरम् । ननु तस्य शास्त्रापेक्षैव कुतस्तत्राह—तस्यापीति । 'एकः शब्दः सम्यग् ज्ञातः शास्त्रान्वितः सुप्रयुक्तः स्वर्गे लोके कामधुग् भवति' इति पस्पशाह्निके कैयटोपदर्शितश्रुतेः, 'शास्त्रपूर्वके प्रयोगेऽभ्युदयस्तत्तुल्यं वेदशब्देन' इति तत्रत्यभाष्याच्च शास्त्रप्रक्रियास्मरणपूर्वकप्रयोग एव धर्मोत्पत्त्यवगमाल्लक्ष्यैकचक्षुष्कस्यापि धर्मार्थं शास्त्रस्मरणमावश्यकमिति भावः ॥ ३५२,३५३ ॥

तत इति । तत इति पदं च, अपवादशास्त्रपर्यालोचनात्प्रागपीत्यर्थकमित्यर्थः ॥ ३५४ ॥

व्याख्यानम् = उक्तपरिभाषाद्वयव्याख्यानम् । अरुचिरत्वे हेतुमाह—लक्ष्यैकचक्षुषामित्यादिना । शास्त्रापेक्षाऽभावे हेतुगर्भं विशेषणं शब्दतत्त्वविदामिति । योगजधर्मादिना शास्त्रनैरपेक्ष्येण यथार्थशब्दस्वरूपज्ञातृत्वात्तेषां शास्त्रविषयकजिज्ञासानुपपत्तेरिति भावः ॥ ३५५ ॥

न चेति । व्याकरणस्य हि शब्दसाधुत्वज्ञानं फलं, तेषां च तस्य सिद्धत्वात्तानुद्दिश्येदं शास्त्रं न प्रवृत्तम् । अतस्तदुद्देशेन शास्त्रव्यवस्थापनमयुक्तमिति भावः । एकः शब्द

तस्मादपवादानामालोचनमाद्यवचनेन ।
तज्ज्ञानादुत्सर्गोद्देश्ये सङ्कोच उच्यतेऽन्येन ॥ ३५७ ॥
अत एवैतद्द्वितयं सहैव सर्वत्र पठ्यते भाष्ये ।
तदनन्तरमपवादप्रतीक्षणं चोच्यते नियतम् ॥ ३५८ ॥
यत्तु प्रकल्प्य चेति प्रतीकमादाय कैयटेनोक्तम् ।
पूर्वं हि परस्य यणः प्रसारणं तत्र जाते च ॥ ३५९ ॥

---

इति श्रुतौ शास्त्रान्वित इत्यस्य साधुत्वेन ज्ञात इत्यत्रैव तात्पर्यम् । शास्त्रपूर्वके प्रयोगेऽभ्युदय इति भाष्यास्यापि साधुत्वेन ज्ञातस्य शब्दस्य प्रयोगेऽभ्युदय इत्येवार्थः । प्रायेण मनुष्याणां लक्षणैकचक्षुष्कत्वाच्छास्त्रेणैव साधुत्वज्ञानसंभवाच्छास्त्रान्वित इत्युक्तम् एवं च लक्ष्यैकचक्षुष्काणां शास्त्रस्मरणमन्तराऽपि साधुत्वज्ञानसत्त्वाद्धर्मोत्पत्तिरव्याहतैवेति, न तदर्थमपि शास्त्रापेक्षा । तेषामपि शास्त्रप्रक्रियास्मरणपूर्वक एव प्रयोगेऽभ्युदय इत्याग्रहेऽप्याह—सत्यामिति । तेषामपि, इतरजनवदपवादशास्त्रपर्यालोचनपूर्वकं तद्विषयपरिहारेणोत्सर्गैर्लक्ष्यसंस्कारोऽङ्गीक्रियताम् । किं वैषम्येणेति भावः ॥ ३५६ ॥

स्वमतमाह—तस्मादिति । अधिकारिभेदेन वचनद्वयव्यवस्थापनस्थायुक्तत्वात् । आद्यवचनेन, = पूर्वं ह्यपवादा इत्यादिना वचनेन, अपवादशास्त्राणां पर्यालोचनावश्यकत्वं प्रतिपाद्यते । अन्येन = प्रकल्प्य चापवादविषयमित्यादिना द्वितीयवचनेन तज्ज्ञानात् = अपवादशास्त्रज्ञानात्, उत्सर्गोद्देश्ये उत्सर्गशास्त्रीयोद्देश्यतावच्छेदकावच्छिन्ने सङ्कोचः पूर्वोपदर्शितरीत्या सङ्कोच उच्यते = प्रतिपाद्यत इत्यर्थः ॥ ३५७ ॥

उक्तार्थे मानमाह—अत एवेति । एतद् द्वितयं—उक्तवचनद्वयं, भाष्ये—प्रातिपदिकार्थ ( २।३।४६ ) इत्यादिसूत्रभाष्ये सर्वत्रसहैव पठ्यते तेनैतद्वचनद्वयं मिलित्वा विधिद्वयार्थबोधकं न त्वधिकारिभेदेन भिन्नार्थबोधकमित्यध्यवसीयते । तदनन्तरं च 'न तावदत्र कदाचित्किञ्चिदेशो भवति, अपवादौ तावच्छत्रुशानचौ प्रतीक्षते' इत्यादिवचनेनापवादप्रतीक्षणमुच्यते । तदेतदनयोर्भिन्नाधिकारिकत्वे नोपपद्यते । लक्ष्यैकचक्षुष्कस्यापवादशास्त्रपर्यालोचनाभावात् । तत इत्यस्यापवादशास्त्रपर्यालोचनात्प्रागपीत्यर्थोऽपि प्रसिद्धिविरुद्धः । प्रागादिपदाभावे तत इत्यनेन तदुत्तरमित्यर्थस्यैव परिस्फूर्तेः । अतोऽत्र परित्यागात्मकप्रकल्पनोत्तरमित्येवार्थ उचितः । ल्यपा तदर्थसूचनेऽपि स्पष्टत्वार्थं तदुपादानात् । अत एव भाष्ये बहुस्थलेषु ततः—पदरहित एव पाठो दृश्यते ॥ ३५८ ॥

यत्त्विति । उभे अभ्यस्तम् (६।१।५) इति सूत्रे भाष्ये प्रकृतन्यायघटकं प्रकल्प्य चेति प्रतीकमादाय 'श्रथा न संप्रसारणमिति वचनात् परस्य यणः पूर्वं संप्रसारणं प्रवर्तते । पूर्वस्य तु तन्निमित्तः प्रतिषेधः यदि तु परस्य यणः पूर्वं न प्रवर्तेत तदा पूर्वस्यापि

पूर्वस्य तन्निमित्तो न संप्रसारण इति निषेधः ।
तदनुचितं भाष्यकृता तत्सिद्धयै ज्ञापकाश्रयणात् ॥ ३६० ॥
अपवादार्थधियः प्राङ् नोत्सर्गस्यार्थधीरिति तु नार्थः ।
तस्याशाब्दत्वात्सति पदार्थभाने च शाब्दधीध्रौव्यात् ॥ ३६१ ॥

एतन्मूलकमेव नवीनाः पठन्ति :—

## उपसंजनिष्यमाणनिमित्तोऽप्यपवाद उपसंजात-निमित्तमप्युत्सर्गं बाधत इति ॥ ६४ ॥

यदि न स्यादुत्सर्गोऽवश्यं तत्रापवादः स्यात् ।
इत्थं सम्भावनयाऽप्युत्सर्गं बाधतेऽपवादविधिः ॥३६२॥

---

प्रतिषेधो न स्यात्' इति कैयटेनोक्तम् । तस्यायमाशयः—यत्रोत्सर्गप्रवृत्त्युत्तरं प्राप्तिमताऽपवादेन, उत्सर्गस्य विषयापहारः क्रियते, तत्रापवादस्य यथा प्रवृत्तिः सिध्येत्तथैव पूर्वं प्रवर्तमानेनोत्सर्गेण लक्ष्यसंस्कारः संपादनीय इति, प्रकल्प्य चेत्यादि न्यायस्यार्थः । तेन यून इत्यादौ साध्ये युवन् शब्दस्य श्वयुवेति संप्रसारणं द्वयोर्वकारवकारयोर्न भवति किन्तु परस्य वकारस्यैव तेन न संप्रसारणे संप्रसारणमित्यस्य निषेधस्य विषयलाभादुक्तरीत्येष्टरूपसिद्धिर्भवतीति । किन्त्विदं तत्कथनमयुक्तम् । न संप्रसारणे (६।१।३७) इति सूत्रे भाष्यकृता 'एतदेव ज्ञापयति परस्य भविष्यति न पूर्वस्येति । यदयं न संप्रसारणे संप्रसारणमिति प्रतिषेधं शास्ति' इत्युक्त्या ज्ञापकाश्रयणेनैव परयण्संप्रसारणस्य पूर्वप्रवृत्तिसाधनात् । न्यायेन सिद्धे ज्ञापकानुसरणस्यानौचित्यादिति भावः ॥ ३५९,३६० ॥

प्रकल्प्य चेत्यस्यान्योक्तमर्थान्तरं निरस्यति—**अपवादार्थेति** । अपवादवाक्यार्थज्ञानं विना, उत्सर्गवाक्यार्थज्ञानं न भवतीत्येवोक्तवचनस्यार्थ इति कस्यचित्कथनमपि न युक्तम् । तस्यार्थस्योक्तवचनघटकशब्दैरप्रकाशनात् । अपिच पदजन्यपदार्थोपस्थितौ सत्यां वाक्यार्थज्ञानस्यावश्यंभावात् तदनुत्पत्तौ कारणाभावादित्यर्थः ॥ ३६१ ॥

**एतन्मूलकमिति** । उत्सर्गस्य पूर्वं प्रवृत्तावपवादशास्त्रवैयर्थ्यापत्तिरिति पूर्वं ह्यपवादा इति परिभाषाऽवतरणे उक्तं तन्मूलकमेवेदं नवीना दीक्षितादयः पठन्तीत्यर्थः । **यदि न स्यादिति** । उत्सर्गशास्त्रप्रवृत्त्यभावसंभावनाप्रयोज्यापवादशास्त्रप्रवृत्तिसंभावनायामप्यपवाद उत्सर्गं बाधते । अपवादविषये उत्सर्गः पूर्वं न प्रवर्तत इति भावः । यथा दधतीत्यादौ यदि पूर्वमन्तादेशो न स्यात्तर्ह्यदादेशः स्यादिति संभावनायाः सत्त्वादन्तादेशः पूर्वं न प्रवर्तते तेनादादेशस्य प्रवृत्त्येष्टरूपसिद्धिर्भवति ॥ ३६२ ॥

प्रतिषेधपर्युदासावप्युपलक्ष्यान्निहापवादगिरा ।
अत एव प्रलिपादौ नैव श उपसर्गयोगात्प्राक् ॥ ३६३ ॥
किन्तूपसर्गयोगेऽनुपसर्गादित्यमुष्य परिहारः ।
वागीशादौ पूर्वं न द्वित्वमपि त्वचि निषेधः ॥ ३६४ ॥
अपवादे प्रतिषिद्धे तूत्सर्गो भवति बाधकापगमात् ।
रामावित्यत्र यथा दीर्घनिषेधे भवति वृद्धिः ॥ ३६५ ॥
अत एव चोपपन्नः सौत्रस्तौ सदिति निर्देशः ।
भ्रष्टावसरन्यायोऽत एव शास्त्रेऽत्र नादृत्यः ॥ ३६६ ॥
न च देवदत्तहन्तरि हत इत्यस्यापि विषयोऽत्र ।
निहते हि देवदत्ते न स्यादुन्मज्जनं तस्य ॥ ३६७ ॥

---

अपवादगिरा = अपवादशब्देन । अत एव = प्रतिषेधपर्युदासयोरपि संग्रहादेवेत्यर्थः । प्रलिपादाविति । प्रकर्षेण लिम्पतीति प्रलिप इत्यादावुपसर्गयोगात्पूर्वमनुपसर्गाल्लिम्प-विन्देत्यादिना शप्रत्यये पश्चादुपसर्गयोगे प्रलिम्प इत्याद्यनिष्टरूपापत्तिः स्यात् । प्रति-षेधादिविषयेऽप्येतन्न्यायप्रवृत्त्यङ्गीकारे तु यदि पूर्वं शप्रत्ययो न स्यात्तर्ह्युपसर्गयोगोत्तरमनुप-सर्गादिति निषेधः स्यादिति संभावनायाःसत्त्वात्पूर्वं शप्रत्ययो न भवति तेन निषेधप्रवृत्त्ये-ष्टरूपसिद्धिः । **वागीशादाविति** । वागीशः, वागत्रेत्यादावीशादिशब्दयोगात्प्रागनचिचेति द्वित्वं न प्रवर्तते, अपि त्वीशादिशब्दयोगोत्तरमनचीति द्वित्वनिषेध एव भवतीत्यर्थः । असंयोगाल्लिट्किदित्यत्र तु नास्य न्यायस्य प्रवृत्तिः यत्र पूर्वमुत्सर्गप्रवृत्तावपवादस्य वैयर्थ्यापत्तिस्तस्यैवैतन्न्यायविषयत्वात् । तत्सूत्रोदाहरणे ममन्थतुरित्यादौ लिट् किदित्यु-त्सर्गस्य, असंयोगादिति पर्युदासस्य च समकालप्रवृत्त्या तादृशापत्तेरभावात् । ररन्धतु-रित्यादौ रधिजभोरचीति प्रतिपदोक्तत्वेन नुम एव कित्त्वात्पूर्वं प्रवृत्त्या ममन्थतुरित्यादि-तुल्यत्वान्न नुमः प्राक्कित्त्वापत्तिरिति बोध्यम् ॥ ३६३, ३६४ ॥

**रामाविति** । यथा रामावित्यत्र नादिचीत्यनेन प्रथमयोः पूर्वसवर्ण इति पूर्वसवर्ण-दीर्घस्य निषेधे सति वृद्धिरेचीति वृद्धिः प्रवर्तत इत्यर्थः ॥ ३६५ ॥

अत एव = अपवादे निषिद्धे उत्सर्गशास्त्रप्रवृत्तेरेवेत्यर्थः **भ्रष्टेति** । अवसरे यद् भ्रष्टं तद् भ्रष्टमेवेतिन्याय उक्तनिर्देशादेवात्र शास्त्रे नाश्रयणीय इत्यर्थः ॥ ३६६ ॥

**न चेति** । नहि देवदत्तस्य हन्तरि हते देवदत्तस्योन्मज्जनं भवतीति न्यायस्याप्यत्र न विषयः । अविषयत्वे हेतुमाह—**निहते हीति** । उन्मज्जनम् = पुनरुज्जीवनम् । उक्तमर्थं दार्ष्टान्तिके योजयति—**एवमिति** । पूर्वसवर्णदीर्घेण वृद्धेर्हननसजातीया निवृत्तिर्न क्रियते ।

हननोद्यतस्य हनने त्ववश्यमुन्मज्जनं भवति ।
एवं प्रसक्तदीर्घप्रतिषेधे ह्यक्षता वृद्धिः ॥ ३६८ ॥
प्रतिपदविधित्वमप्यवकाशाभावे सति प्रबलम् ।
अपि सावकाशतायां शीघ्रोपस्थिततयाऽन्तरङ्गत्वात् ॥ ३६९ ॥
नन्वन्तरङ्गमप्याद्गुणमयजे इन्द्रमित्यादौ ।
बाधेत तदपवादः सवर्णदीर्घोऽत आहेदम् ॥३७०॥

## अपवादो यद्यन्यत्र चरितार्थस्तर्ह्यन्तरङ्गेण बाध्यते ॥६५॥

---

किन्तु हननोद्यमसजातीया तस्य प्रसक्तिरेव भवति । प्रसक्तस्यैव निषेधात् । ततश्च नादिचीत्यनेन तत्प्रतिषेधे वृद्धिरक्षता हि = अव्याहतैवेत्यर्थः ॥ ३६७, ३६८ ॥

प्रतिपदोक्तविधीनां बलवत्त्वविषये व्यवस्थामाह—प्रतिपदेति । अवकाशाभावे—। निरवकाशत्वे सत्येवेत्यर्थः । अत्र शेषाद्विभाषा ( ५।४।१५४ ) इति सूत्रस्थं भाष्यं मानम् । तत्र हि—प्रतिपदविहिता डजादयो बाधका भविष्यन्ति, अतः शेषग्रहणमनर्थकमित्याशङ्क्य 'अनवकाशा हि विधयो बाधका भवन्ति सावकाशाश्च समासान्ताः । कोऽवकाशः ? विभाषा कप् सोऽवकाशः । कपः प्रसङ्गे उभयं प्राप्नोति परत्वात्कप्प्राप्नोति । तस्माच्छेषग्रहणं कर्तव्यम् ।' इति समाहितम् । एवं च तस्य निरवकाशत्वरूपबाधबीज एवान्तर्भावो न तु तत् स्वातन्त्र्येण बाधबीजमिति भावः । अपि सावकाशतायामिति । प्रतिपदविधेः सावकाशत्वेऽपि शीघ्रोपस्थितिकत्वेनान्तरङ्गत्वात्परनित्यापेक्षया बलवत्त्वमङ्गीक्रियत इत्यर्थः । तेन स्त्रीपुंसयोश्चरितार्थस्यापि अप्तृन्निति दीर्घस्य नपुंसके प्रतिपदोक्तत्वेन शीघ्रोपस्थितिकतयाऽन्तरङ्गत्वान्नित्यादपि झलन्तलक्षणान्नुमः पूर्वं प्रवृत्त्या स्वाम्पीति सिध्यति । यत्तु प्रतिपदोक्तस्य शीघ्रोपस्थितिकत्वेन बलवत्त्वं प्रदर्श्य 'अत एव रमे इत्यादौ प्रतिपदोक्तत्वात्पूर्वमेत्वे आकारप्रश्लेषाद्धल्ङ्यादिलोपो न प्राप्नोतीत्याशङ्क्यैङ्ह्रस्वादिति लोपेन साधितम्' इति दीक्षितोक्तिसमर्थकं परिभाषेन्दुशेखरे उक्तं, तत्तु न युक्तम् । हल्ङ्यादिलोपाप्राप्तिविषये संबुद्धिनिमित्तकस्य आप एत्वस्य चारितार्थ्याभावेन निरवकाशत्वादेवैत्वेन हल्ङ्याब्भ्य इति सुलोपस्य बाधात् ॥ ३६९ ॥

अन्तरङ्गमपीति । अयज इ इन्द्रम् इति स्थिते पूर्वोपस्थितनिमित्तकत्वेनाद्गुण इति गुणोऽन्तरङ्गः । अकः सवर्णे दीर्घ इति दीर्घश्च यणगुणयोरपवादः । अतोऽत्र गुणं बाधित्वा दीर्घः स्यादिति भावः ॥ ३७० ॥

दीर्घो हि समानाश्रयदैत्यारिप्रभृतिके विबाध्य गुणम् ।
चरितार्थस्तस्मादिह न बाधते सोऽन्तरङ्गपरिभाषाम् ॥३७१॥

सत्यपि च यण्गुणौ प्रत्यपवादत्वे सवर्णदीर्घस्य ।
तद्विषयव्यतिरिक्ते गुणप्रवृत्तिर्हि निर्बाधा ॥३७२॥

ज्ञेयं पूर्वोपस्थितनिमित्तरूपेऽन्तरङ्ग एवेदम् ।
तस्मादक्षद्यूरिह न बाध्यते वलि वलोपेनोठ् ॥३७३॥

ननु गण ईत्वमजीगणदित्यादौ निरवकाशत्वात् ।
स्याद्बाधकं हलादिःशेषस्यातः समाधत्ते ॥३७४॥

## अभ्यासविकारेषु बाध्यबाधकभावो नास्ति ॥६६॥

---

परिभाषासाधकयुक्तिमाह—दीर्घो हीति । दीर्घस्यान्तरङ्गपरिभाषामबाधित्वैव समानस्थानिनिमित्तके दैत्यारिरित्यादौ गुणबाधेन चरितार्थत्वादत्रान्तरङ्गपरिभाषाबाधे मानाभावान्न प्रवृत्तिरित्यर्थः ॥ ३७१ ॥

अपवादप्रयुक्तबाधस्वरूपपर्यालोचने चेयं परिभाषा नापूर्वा किन्तु तत्सिद्धार्थानुवादिकैवेत्याह—सत्यपीति । अपवादशास्त्रीयव्याप्यविषयतया उत्सर्गशास्त्रीयव्यापकविषयतायां स्वाश्रयातिरिक्तवृत्तित्वबोधनमेव बाधः । तथाच, अवर्णे सवर्णाजव्यवहितपूर्वत्वविशिष्टाभिन्नत्वेन, अचि वा, अगव्यवहितोत्तरत्वविशिष्टसवर्णाजभिन्नत्वेन संकोचे अयज इ इन्द्रमित्यत्र अकारस्येकारस्य च तथात्वेन गुणप्रवृत्तिरव्याहतैवेति भावः ॥ ३७२ ॥

इदम्=अन्तरङ्गेणापवादस्य बाधनम् । अक्षद्यूरिति । अत्रोत्सर्गो लोपो व्योरिति वलोपः, तदपवादश्च च्छ्वोःशूडित्यूठ् । स च वश्चन्दाचारक्विबन्तात्कर्तरि क्विपि च्छ्वोरित्यनेनोठि ऊः इति रूपे समानाश्रये चरितार्थस्तथाप्यन्तरङ्गेण वलि लोपेन न बाध्यते । वलिलोपस्य पूर्वोपस्थितनिमित्तकत्वरूपान्तरङ्गत्वाभावादिति भावः ॥ ३७३ ॥

नन्विति—अजीगणदित्यादौ ई च गण इति सूत्रविहितं गणधातोरभ्यासस्येत्वं, हलादिः शेष इत्यनेन णकारनिवृत्तौ गणरूपाभ्यासाभावादीत्वाप्राप्त्या निरवकाशम् । हलादिशेषस्त्वन्यत्र सावकाशः । अत ईत्वेन तद्बाधे णस्येत्वे आद्गुणेऽभ्यासह्रस्वेऽग्लोपित्वेन सन्वद्भावाभावाद्दीर्घो लघोरित्यस्याप्रवृत्त्या अजिगणदित्यनिष्टरूपापत्तिरिति भावः ॥३७४॥

दीर्घोऽकित इति सूत्रेऽकिद्ग्रहणं ज्ञापयत्येनाम् ।
यंयम्यत इत्यादौ दीर्घविधेर्बाधके निरवकाशे ॥३७५॥
नुकि सत्यनजन्तत्वाद्दीर्घाप्राप्त्या हि तद् व्यर्थम् ।
सत्यामस्यां तु नुकः प्राग्दीर्घनिवारणात्सफलम् ॥३७६॥
नुकि सत्यनजन्तत्वाद्दीर्घाप्राप्त्या पुनश्च तद्व्यर्थम् ।
इति तु न शङ्क्यं तद्धि व्यधिकरणान्वयमपीह सूचयति ॥३७७॥
एषा च परादीनामपि बोधयति ह्यबाधकताम् ।
सन्वद्भावस्यातः परोऽपि दीर्घो न बाधको भवति ॥३७८॥

---

अकिद्ग्रहणस्य ज्ञापकत्वमुपपादयति— यंयम्यत इत्यादिना । नुकीति । नुगतोऽनुनासिकान्तस्येत्यनेन अदन्ताभ्यासस्य नुगागमे कृते सति, अभ्यासस्याजन्तत्वाभावाद्दीर्घाप्राप्त्या प्रकृतपरिभाषाऽभावे, हि यतस्तद् = अकिद्ग्रहणं व्यर्थम् । अतस्तदेनां ज्ञापयतीत्यर्थः । ज्ञापितायां त्वस्यां तत्सार्थकमित्याह—सत्यामिति । अनया परिभाषयाऽभ्यासविकारेषु बाध्यबाधकभावाभावबोधनाद् बाध्यस्यापि दीर्घस्य पूर्वप्रवृत्तिः स्यादतस्तन्निवारणार्थमकिद्ग्रहणं चरितार्थमित्यर्थः । न च नुगुत्पत्तेः प्रागकित एवाभ्यासस्य सत्त्वेन कृतेऽप्यकिद्ग्रहणे दीर्घो दुर्वार इति वाच्यम् । यद्यत्र दीर्घो न प्रवर्तेत तर्ह्यभ्यासस्यादन्तत्वेन नुकि सत्यकिदिति निषेधः प्रवर्तेतेति संभावनायाः सत्त्वेन, उपसंजनिष्यमाणनिमित्तन्यायेन पूर्वं दीर्घस्याप्रवृत्तेः । अकिद्ग्रहणाभावे त्वेवं संभावनाया असंभवाद्दीर्घोऽवश्यं प्रवर्तेत । तस्मादकिद्ग्रहणं सार्थकम् ॥ ३७५, ३७६ ॥

नुकीति । नुकि कृतेऽभ्यासस्याजन्तत्वाभावाद्दीर्घाप्राप्त्या, पुनश्च = परिभाषाज्ञापनोत्तरमपि, तद् अकिद्ग्रहणं व्यर्थमिति तु नाशङ्क्यम् । हि = यतः तद् यावता विनाऽनुपपन्नं तावञ्ज्ञाप्यमिति न्यायाद्दीर्घोऽकित इति सूत्रे व्यधिकरणान्वयमपि सूचयति = ज्ञापयति । तेन, अकितोऽभ्यासस्यावयवो योऽच् तस्य दीर्घ इत्यर्थेन नुकि कृतेऽपि दीर्घप्राप्त्या तन्निवारणेनाकिद्ग्रहणं चरितार्थमिति भावः ॥ ३७७ ॥

परादीनाम् = परनित्यान्तरङ्गाणाम् । परस्याबाधकतामुदाहरति— सन्वद्भावस्येति । अचीकरदित्यादौ परोऽपि "दीर्घो लघोः"रिति दीर्घः सन्वल्लघुनीति सन्वद्भावं न बाधते । तेन पूर्वं सन्यत इतीत्वे तदुत्तरं दीर्घे चेष्टरूपसिद्धिर्भवति । सन्वद्भावस्यावकाशः, अचिक्षणदित्यत्र । तत्राभ्यासाकारस्य लघुत्वाभावेन दीर्घाप्राप्तेः । दीर्घस्यावकाशः, अनूननादित्यादौ तत्राभ्यासेऽकाराभावेन सन्वद्भावप्रयुक्तस्य सन्यत इत्यस्याप्रवृत्तेः । एवमन्योऽन्यस्याविषये चरितार्थयोस्तयोरचीकरदित्यादौ युगपत् प्राप्तौ परत्वेन यदि दीर्घः

मीमांसत इत्यादौ मान्वधदान्शान्भ्य इति दीर्घः ।
अप्यन्तरङ्गभूतो न बाधते सन्यत इतीत्वम् ॥३७९॥
अभ्यासविकारेषु प्रतिषिद्धे बाध्यबाधकत्वे च ।
केन कदा भवितव्यं कार्येणेतीदृशविचारे ॥३८०॥
येन समावेशः स्यात् क्रमेण तेन प्रवृत्तिश्चेत् ।
बोभूयत इत्यादौ गुणेऽथ ह्रस्वे पुनर्गुणो न स्यात् ॥३८१॥
तस्माद्बाध्याः पूर्वं भवन्ति तेष्विति विनिर्णयो ज्ञेयः ।
प्राक्पठितत्वाद्बाध्ये ह्रस्वे सत्यथ गुणे च तत्सिद्धम् ॥३८२॥
बाध्यत्वेऽपि हलादिः शेषो न प्राग् व्यथो लिटीत्यस्मात् ।
उभयेषां ग्रहणस्य हि सामर्थ्यात्संप्रसारणं बलवत् ॥३८३॥

---

प्रवर्तेत तर्हि ह्रस्वाकाराभावेन सन्यत इतीत्वं न सिध्येत् । अनया परिभाषयाऽभ्यासविकारेषु परस्याप्यबाधकत्वबोधनात्तत्सिद्धिरिति भावः ॥ ३७८ ॥

अन्तरङ्गस्याबाधकतामुदाहरति—मीमांसत इति । अन्तरङ्गभूत इति । दीर्घस्यापरनिमित्तकत्वेनान्तरङ्गत्वं बोध्यम् ॥ ३७९, ३८० ॥

येनेति । येन क्रमेण कार्यप्रवर्तने सर्वेषां समावेशः सिध्येत्तेन क्रमेण तत्प्रवृत्तिरित्यङ्गीकारे तु बोभूयत इत्यादौ "गुणो यङ्लुको"रित्यनेनाभ्यासस्य गुणप्रवृत्युत्तरमपि ह्रस्व इत्यनेनाभ्यासह्रस्वप्रवृत्तिसंभवात्पूर्वं गुणे तदुत्तरं ह्रस्वे, लक्ष्ये लक्षणं सकृदेव प्रवर्तेत इति न्यायेन पुनर्गुणाप्रवृत्त्या तदसिद्ध्यापत्तिरित्यर्थः । न चैवं गुणो यङ्लुकोरित्यस्य वैयर्थ्यापत्तिः । तस्य डोढौक्यते तोत्रौक्यते इत्यादौ चरितार्थत्वात् । तत्र ह्रस्वप्रवृत्त्युत्तरमेव इग्लाभेन ह्रस्वस्यैव पूर्वं प्रवृत्तेः ॥ ३८१ ॥

तस्मात् । समावेशपक्षस्यायुक्तत्वादित्यर्थः । तेषु = अभ्यासविकारेषु । बाध्यस्य पूर्वप्रवृत्त्यङ्गीकारेणोक्तरूपसिद्धिं दर्शयति—प्रागिति । ह्रस्वविधेरष्टाध्याय्यां पूर्वपठितत्वेन बाध्यत्वात्पूर्वं ह्रस्वे कृते तदुत्तरं गुणे च बोभूयत इत्यादेः सिद्धिरित्यर्थः ॥ ३८२ ॥

नन्वेवं हलादिः शेष इत्यस्य पूर्वत्वाद् व्यथो लिटीति संप्रसारणविधायकात्पूर्वं प्रवृत्ताववशिष्टस्य वकारस्य संप्रसारणापत्तिरत आह—बाध्यत्वेऽपीति । तत्र हेतुमाह—उभयेषामिति । "लिट्यभ्यासस्योभयेषाम्" इति सूत्रे वच्यादीनां ग्रह्यादीनां चानुवृत्त्यैव सिद्धेः उभयेषामिति पदं तेषां संप्रसारणमेव स्यान्नेतरत्कार्यमिति संप्रसारणतदाश्रयकार्ययोर्बलवत्त्वबोधनात्तत्र संप्रसारणस्यैव पूर्वप्रवृत्त्या न दोष इति भावः ॥३८३॥

ननु तच्छीलाद्यर्थकतृन्विषये ण्वुलपि पक्षे स्यात् ।
अपवादो हि विकल्पितबाधकदिह वाऽसरूपविधेः ॥३८४॥

अत आह—

## ताच्छीलिकेषु वाऽसरूपविधिर्नास्ति ॥ ६७ ॥

सिद्धे ण्वुलैव वुञ्विधिरेकाज्भ्यो निन्दहिंसप्रभृतिभ्यः ।
स्वरसाम्याद्बाधकतृन्बाधार्थो ज्ञापयत्येनाम् ॥३८५॥

ताच्छीलिकेष्वितीयं विषयार्थे सप्तमी ततश्चास्याः ।
एकस्मिन्नपि ताच्छीलिके प्रवृत्तिर्भवत्येव ॥३८६॥

---

अपवादप्रसङ्गादाह—नन्विति । आक्वेस्तच्छीलतद्धर्मतत्साधुकारिष्विति सूत्रोक्तेषु तच्छीलाद्यर्थेषु 'तृन्' इति सूत्रेण विहितस्यापवादस्यापि तृनो विषये ण्वुल्तृचाविति कर्तृसामान्यार्थे विहितो ण्वुलपि पक्षे = विकल्पेन स्यात् । सामान्ये विशेषाणामन्तर्भावाद्विवक्षावशेन तेन ताच्छील्यादिविशिष्टकर्तृरूपार्थस्यापि बोधसम्भवादिति भावः । नन्वपवादविषये कथमुत्सर्गस्य प्रवृत्तिरत आह—अपवादो हीति । वाऽसरूपोऽस्त्रियामित्यनेनासरूपापवादस्य विकल्पेनोत्सर्गबाधकताप्रतिपादनादित्यर्थः ॥ ३८४ ॥

ण्वुलिति । निन्दहिंसेत्यादिसूत्रे येऽनेकाचो धातवस्तेभ्यो ण्वुलि वुञि च स्वरे विशेषसत्त्वेन तेभ्यो वुञ्विधानस्य सार्थक्येऽपि, एकाज्भ्यो ण्वुलि वुञि वा न कश्चिद्विशेषः, लितीत्यनेन प्रत्ययात्पूर्वस्योदात्तत्वे, ञ्नित्यादिर्नित्यमित्यनेनाद्युदात्तत्वे वा स्वरैक्यात् । अतस्तेभ्यो ण्वुल् तृचाविति ण्वुलैव सिद्धे वुञ्विधानं व्यर्थम् । अतः सामर्थ्याण्ण्वुलबाधकस्य ताच्छीलिकतृनो बाधार्थमेव वुञ्विधानम् । प्रकृतपरिभाषाऽभावे तु वाऽसरूप इत्यनेन तृन्विषये ण्वुलपि पक्षे प्रवर्तेतैवेति वुञ्विधानं व्यर्थं सदिमां ज्ञापयतीति भावः । स्पष्टं चेदं निन्दहिंस (३।२।१४६) इति सूत्रे भाष्ये ॥ ३८५ ॥

विषयार्थ इति । अधिकरणार्थत्वे तृत्सर्गापवादयोर्द्वयोस्ताच्छीलिकत्व एवेयं प्रवर्तेत । तथासत्युक्तज्ञापकासङ्गतिः स्यात् । उत्सर्गस्य ण्वुलोऽताच्छीलिकत्वात् । किञ्चालंकरिष्णुरितिवदलंकारक इत्यपि तच्छीलाद्यर्थे प्रयोग आपद्येत । विषयसप्तम्याश्रयणे त्वेकस्यापवादस्य ताच्छीलिकत्वेऽपि तद्विषयत्वसत्त्वान्नोक्तदोष इति भावः ॥ ३८६ ॥

न मिथोऽपि तेष्वयमिति जुचङ्क्रम्येत्यादिके पदिग्रहणात् ।
उक्त्वा बाधो मा भूद् युच इत्यर्थाद्भवति विदितम् ॥३८७॥
तस्मादलं कृञस्तृन भवति, दीपेर्युजो निषेधाच्च ।
ज्ञेयमनित्यमिदमतः कम्राकमनेत्युभयसिद्धिः ॥३८८॥
ननु वाऽसरूपविधिना हसितं छात्रस्य हसनमित्यादौ ।
घञपि प्राप्नोति तथेच्छति भोक्तुमितीह लिङ्लोटौ ॥३८९॥
ईषत्पानः सोमो भवतेत्यादौ च खलपि स्यात् ।
इति वैकल्पिकबाधोद्भवदोषनिवारणायाह ॥३९०॥

---

एवं ताच्छीलिकानामताच्छीलिकैः सह समावेशो नेति प्रतिपाद्य ताच्छीलिकेषु परस्परमपि वाऽसरूपविधिर्नेत्याह—न मिथो ऽपीति । तत्र ज्ञापकमाह—जुचङ्क्रम्येत्यादिना । पदधातोरनुदात्तेतश्चेत्यनेन युचि सिद्धे 'जुचङ्क्रम्य दन्द्रम्य सृगृधिज्वलशुचलषपतपदः' इतियुज्विधायकसूत्रे पदधातुग्रहणं हि, लषपतपदेति विशेषविहितेन, उक्त्वा युजबाधो मा भूदित्यर्थम् । तेन ताच्छीलिकेषु परस्परं वाऽसरूपविधिर्नास्तीति ज्ञाप्यत इत्यर्थः ॥ ३८७ ॥

उक्तज्ञापनफलमाह—तस्मादिति । उक्तार्थज्ञापनात् अलंकृञ् निराकृञित्यादिना विहितस्य तृन्बाधकस्येष्णुचो विषये तृन भवतीत्यर्थः । नन्वेवं ताच्छीलिकेषु परस्परं वाऽसरूपविध्यभावङ्गीकारे नमिकम्पीति रेण अनुदात्तेतश्चेति युचो नित्यबाधात् कमेत्येकमेव रूपं स्यात् इष्यते तु कम्रा कमनेत्युभयम्, अत आह—दीपेरिति । नमिकम्पीति रेण युचो बाधे सिद्धे, सृददीपदीक्षश्चेत्यनेन दीपेर्युञ्निषेधो व्यर्थः संस्ताच्छीलिकेषु परस्परं वाऽसरूपविधाभावस्यासार्वत्रिकतां ज्ञापयति । तेन कम्रा कमना, गन्ता गामुक इत्यादिषु पर्यायेण ताच्छीलिकप्रत्ययसिद्धिरित्यर्थः ॥ ३८८ ॥

नन्विति । हसितमित्यौदौ नपुंसके भावे क्तः' 'ल्युट् च' इत्याभ्यां नपुंसकत्वविशिष्टे भाव क्त ल्युटोर्विधानाद्विशेषविहितत्वेनापवादभूतयोरपि तयोर्विषये वाऽसरूप इत्यनेन पक्षे "भावे" इति सामान्यसूत्रविहितो घञपि स्यात् । ततश्च हासमित्यनिष्टरूपापत्तिः । एवमिच्छति भोक्तुमित्यत्र "समानकर्तृकेषु तुमुन्" इत्यनेन समानकर्तृकेष्विच्छार्थेषूपपदेषु विहितस्यापवादभूतस्य तुमुनो विषये "इच्छार्थेषु लिङ्लोटौ" इति सामान्यसूत्रविहितौ लिङ्लोटावपि स्यातामित्यर्थः ॥ ३८९ ॥

ईषत्पान इति । ईषदनायासेन पातुं शक्य ईषत्पानः । अत्र "ईषद्दुःसुषु कृच्छ्राकृच्छ्रार्थेषु खल्" इति खलोऽपवादस्य, आतो " युच्इत्यस्य विषये खलपि

## क्त्ल्युट्तुमुन्खलर्थेषु वाऽसरूपविधिर्नास्ति ॥६८॥

एतच्चानित्यत्वाश्रयणात् सिद्धं हि वाऽसरूपविधेः ।
तदनित्यत्वं चार्हे कृत्यतृचश्चेति कृत्यतृज्ग्रहणात् ॥३९१॥
तद्धि चकारसमुच्चितलिङा तयोर्बाधवारणाय कृतम् ।
नित्यत्वे तूक्तविधेर्वैकल्पिकबाधनेऽस्य वैयर्थ्यात् ॥३९२॥
ननु तेन लुटो विषये श्वः पक्तेत्यत्र लृडपि स्यात् ।
अस्ति ह्यादेशकृतं वैरूप्यं लुड्लृटोरतश्चाह ॥३९३॥

## लादेशेषु वाऽसरूपविधिर्नास्ति ॥६९॥

लस्य तु वैरूप्यं नास्त्यादेशानां च नापवादत्वम् ।
तस्मादियमादेशद्वारकवैरूप्यवल्लकारेषु ॥३९४॥

---

वाऽसरूपविधिना स्यात् । एतत्सर्वदोषवारणायाहेत्यर्थः ॥ ३९० ॥ ३९१ ॥

ज्ञापकत्वमुपपादयति **तद्धिति** । हि = यतः, तत् = कृत्यतृज्ग्रहणम् । तयोः = कृत्यतृचोः । **बाधवारणायेति** । सामान्येन भावकर्मणोर्विहितानां कृत्यानां, कर्तरि तृचश्च, अर्हरूपविशेषार्थे विहितेन लिङा बाधो मा भूत्, कृत्याः, तृच् लिङ् एते सर्वेऽर्हार्थे भवन्त्वित्यर्थं तत्सूत्रे कृत्यतृज्ग्रहणं कृतम् । तेन भवता कन्या वोढव्या, भवान् कन्याया वोढा, भवान् कन्यां वहेत् इत्येते भवान्कन्योद्वहनयोग्य इत्यर्थे प्रयोगाः सिध्यन्ति । वाऽसरूपविधेर्नित्यत्वे तु कृत्यतृग्ग्रहणं विनाऽपि, अपवादेन लिङा कृत्यतृचोर्विकल्पेन बाधे तेषां समावेशसिद्धेस्तद्व्यर्थं सत्तस्यानित्यत्वं ज्ञापयति । ततश्चैषा परिभाषा फलितेति भावः । वाऽसरूपविधेरनित्यत्वेनैव पूर्वोत्तरपरिभाषयोरपि क्रोडीकारात्तयोः पृथङ्निरूपणं प्रपञ्चार्थम् ॥ ३९२ ॥

क्तादिष्विवान्यत्रापि वाऽसरूपविधिप्रयुक्तदोषमाशङ्क्य परिभाषया समाधत्ते— **नन्विति** । तेन = वाऽसरूपविधिना, अनद्यतने लुडित्यपवादस्य विषये श्वः पक्ता इत्यादौ लृट्चेति भविष्यत्सामान्ये विधीयमानो लृडपि स्यात् । ननु नानुबन्धकृतमसारूप्यमिति परिभाषया लुड्लृटोर्वैरूप्याभावात्कथं तत्र वाऽसरूपविधिप्रवृत्तिरत आह—**अस्ति हीति** । तयोः स्वतो वैरूप्यानाश्रयणेऽपि तदादेशानां डाऽऽदीनां वैरूप्यादादेशवैरूप्यस्य लकारेऽप्यारोपात्तत्प्रवृत्तिः सम्भवतीत्यर्थः ॥ ३९३ ॥

**लस्य त्विति** । लुड्लृटोरनुबन्धकृतासारूप्यस्याग्रहणाल्लकारमात्रस्य तु वैरूप्याभावात्

लङ्बाधकलिड्विषये हशश्वतोर्लङ्विधानमिह लिङ्गम् ।
सिद्धोऽन्यथा परोक्षे लिटा सह लङः समावेशः ॥३९५॥
शत्रादिभिः सह तिङामस्तु समावेश इत्यर्थम् ।
शतृविधिसूत्रे भाष्येऽनुवर्तितं खलु विभाषेति ॥३९६॥
कानज्विधौ च वेति प्रोक्तमतश्चापवादोऽत्र ।
आदेशेतरं इष्टोऽतः क्वसुविषये न पक्षे तिङ् ॥३९७॥
ननु च ङमो ह्रस्वादिति सूत्रे ङम इत्यचीत्युभयलिङ्गात् ।
तस्मादिति तस्मिन्नित्यनयोः परिभाषयोरुपस्थितया ॥ ३९८ ॥

---

तदादेशानां चोत्सर्गापवादत्वाभावाद्वाऽसरूपविध्यप्रसक्त्या परिभाषावैफल्यं स्यादतो लादेशेष्वित्यस्य आदेशद्वारकवैरूप्यवत्सु लकारेष्वित्यर्थः। आदेशपदमुक्तार्थे लाक्षणिकम्। आदेशाश्च ते लश्चेति कर्मधारयः। पूर्वनिपात प्रकरणस्यानित्यत्वाद्विशेषणवाचकस्याप्यादेश-पदस्य परनिपात इति बोध्यम् ॥ ३९४ ॥

ज्ञापकमाह—लङ्बाधकेति। अनद्यतनभूतार्थे विधीयमानस्य लङो बाधकोऽपवादो यः परोक्षानद्यतनभूतार्थे विधीयमानो लिट्, तद्विषये हशश्वतोर्लङ् चेत्यनेन लङ्विधान-मस्यां लिङ्गं = ज्ञापकम्। अन्यथा = लादेशेषु वाऽसरूपविधिसत्त्वे ॥ ३९५ ॥

ननु लकारनिष्ठमुत्सर्गापवादत्वं तदादेशेष्वारोप्यादेशेष्वेव वाऽऽसरूपविधिप्रसक्त्याऽ-नया तन्निषेध इत्यङ्गीक्रियतां ततश्च लादेशपदे क्लिष्टकल्पना न कर्तव्येति लाघवमित्याशङ्का-यामाह—शतादिभिरित्यादि। लटः शतृशानचौ (३।२।१२४) इति सूत्रे भाष्ये पचतीत्यादावपवादैः शत्रादिभिस्तिङां बाधमाशङ्क्य तत्र नन्वोर्विभाषेति सूत्राद्विभाषा-पदानुवृत्त्या प्रथमासमानाधिकरणे पचन् पचतीत्यादिवैकल्पिकरूपसिद्धिः, अन्यत्र च 'अप्रथमासमानाधिकरणे' इति योगविभागसामर्थ्यान्नित्यं शत्रादय इति व्यवस्थापितम्। सूत्रकृता च लिटः कानज्वेति सूत्रे वाग्रहणं कृतम्। तत्सर्वमादेशेषु वाऽसरूपविधि-प्रवर्तने तेनैव विकल्पसिद्धेरनुपपन्नं सद् वाऽसरूपसूत्रेऽपवाद आदेशत्वानाक्रान्त एव ग्राह्य इति ज्ञापयति। ज्ञापनफलमाह—अत इति। 'भाषायां सदवसश्रुवः' इति भूतसामान्ये वा लिट् तस्य नित्यं क्वसुरादेशश्च विधीयते। स च विशेषविहित-त्वात्तिङामपवादस्तद्विषये उक्तज्ञापनात्पक्षे तिङ् न भवति। तेन भूतसामान्ये निषेदिवा-नित्याद्येव भवति। निषसादेत्यादि तु भूतानद्यतनपरोक्ष एवेति भावः ॥ ३९६, ३९७ ॥

एवं पूर्वपरेत्यादिपरिभाषासंगृहीतपरादीनां बलवत्त्वं सविस्तरं निरूप्य बलवत्त्वनिरूपण-प्रसङ्गात्पञ्चमीनिर्देशस्य बलवत्त्वप्रतिपादिकामुभयनिर्देशे इति परिभाषामवतारयति—नन्विति। ङमोह्रस्वादचि ङमुण्नित्यमिति सूत्रे ङम इति पञ्चम्यन्तपदरूपस्य

**किं यो ङमः परोऽच् तत्पूर्वस्याथान्ङमो ङमुङ् भवति ।**
**अथवाऽचः प्राग् यो ङम् ततः परस्येति संशये प्राह ।। ३९८ ।।**

तस्मादित्युत्तरस्येति परिभाषोपस्थापकलिङ्गस्य सत्त्वात्, अचीति सप्तम्यन्तपदरूपस्य तस्मिन्निति निर्दिष्टे पूर्वस्येति परिभाषोपस्थापकलिङ्गस्य च सत्त्वात्तयोरुभयोरुपस्थित्या संशयः ।। ३९८ ।।

ननु तत्र परिभाषाद्वयोपस्थितौ ङमः परो योऽचः पूर्वस्तस्य ङमुट्, अचः पूर्वो यो ङमः परस्तस्य ङमुडिति वाऽर्थे, प्रत्यङ् आत्मेत्यादौ ङमः परस्याचः पूर्वस्य च तन्मध्यवर्तिनोऽभावेन सूत्राप्रवृत्तावपि, प्रत्यङ् परम आत्मेत्यादौ तादृशस्य परमशब्दस्य सत्त्वेन तत्र सूत्रस्य चारितार्थ्यसंभवात्कथं सन्देह इति चेत् । अत्रेदं बोध्यम् । तस्मिन्निति परिभाषोपस्थाप्यम्, अव्यवहितत्व—पूर्वत्व—षष्ठ्यर्थेत्यंशत्रयम् । तस्मादिति परिभाषोपस्थाप्यं चाव्यवहितत्वोत्तरत्वषष्ठ्यर्थेत्यंशत्रयम् । तन्मध्ये यत्र योंऽशः प्रमाणान्तरेण सिद्धो बाधितो वा भवति तत्र तदतिरिक्तांश एव परिभाषयोपस्थाप्यते । यथा परश्चेत्यधिकारे गुप्तिज्किद्भ्यः सन्नित्यादिप्रत्ययविधौ परत्वांशस्य सिद्धत्वात् षष्ठ्यर्थस्य च बाधितत्वादव्यवहितत्वांश एव तस्मादित्यनयोपस्थाप्यते । इको यणचि, उदःस्थास्तम्भोरित्यादौ षष्ठ्यर्थस्य सिद्धत्वादंशद्वयस्यैवोपस्थितिर्भवति । प्रकृते तस्मिन्निति तस्मादित्याभ्यां स्वीयसर्वांशोपस्थापने पूर्वोत्तरपदार्थयोः स्वातन्त्र्येण विधेये ङमुट्पदार्थेऽन्वये, ह्रस्वात्परो यो ङम् तदन्तं यत्पदं तदव्यवहितोत्तरस्य ङमुट्, अजव्यवहितपूर्वस्य च ङमुडित्यर्थे उद्देश्यभेदेन विधेयभेदाद्वाक्यभेदापत्तिः स्यात् । सम्भवति चैकवाक्यत्वे वाक्यभेदो न युक्तः । अतः पूर्वोत्तरपदार्थयोरन्यतरस्य विशेष्यत्वमितरस्य च विशेषणत्वमेव स्वीकर्तव्यम् । तत्र विशेषणपदोत्तरविभक्तेः शब्दसाधुत्वमात्रप्रयोजनकत्वाद्बोध्यार्थराहित्यात्षष्ठ्यंशबाध आवश्यकः एवं चैकया षष्ठ्यंशविकलं पूर्वत्वमुत्तरत्वं वाऽव्यवहितत्वांशसहितमुपस्थाप्यम्, अपरया चांशत्रयम् । षष्ठ्यर्थविकलस्य पूर्वत्वस्योत्तरत्वस्य वा कुत्रान्वय इति जिज्ञासायां श्रुतानुमितयोः श्रुतसंबन्धो बलवानिति न्यायेन पूर्वत्वस्य साक्षाच्छ्रुते ङम्पदार्थे उत्तरत्वस्य चाच्पदार्थेऽन्वय उचितो न त्वनुमितयोरुत्तरपूर्वयोः । एतेन प्रत्यङ्परम आत्मेत्यादौ सूत्रचारितार्थ्यशङ्काऽपास्ता । उक्तरीत्याऽन्वये निर्णीते च तस्मिन्निति परिभाषोपस्थापितस्य पूर्वपदार्थस्य विशेष्यत्वविवक्षायां तस्मादिति परिभाषया षष्ठ्यंशविकलस्योत्तरपदार्थस्योपस्थापनात् ङम उत्तरो योऽच् तदव्यवहितपूर्वस्य ङमुडित्यर्थेन ङमन्तपदस्य ङमुट् प्राप्नोति । तस्मादिति परिभाषोपस्थापितस्योत्तरपदार्थस्य विशेष्यत्वविवक्षायां तु तस्मिन्निति परिभाषया षष्ठ्यंशविकलस्य पूर्वपदार्थस्योपस्थापनाद् अचः पूर्वो यो ङम् तदव्यवहितोत्तरस्य ङमुडित्यर्थेनाचो ङमुट् प्राप्नोतीत्येकस्मिन्धर्मिणि ङमुडागमे विभिन्नोदेश्यकत्वज्ञानात्संदेह उपपन्नः । तदाह—किं य इति । ततः परस्येत्यस्य अच इति शेषः ।। ३९९ ।।

# उभयनिर्देशे पञ्चमीनिर्देशो बलीयान् ॥ ७० ॥

सप्तम्या निर्देशोऽचीति कृतार्थोऽस्ति मय उञो वविधौ ।
पञ्चम्या निर्देशोऽनवकाशस्तेन बलवान् सः ॥ ४०० ॥
बलवत्त्वात्स्वार्थेऽसौ वर्तत इह सप्तमी तु षष्ठयर्थे ।
इत्युद्द्योते निगदितमिह नव्योक्ता तु सरणिरियम् ॥ ४०१ ॥
तस्मादिति परिभाषा प्रबला स्वविधेयमर्पयति पूर्वम् ।
तच्च विशेष्यमथान्याऽर्पयति ङमीदं विशेषणीभवति ॥४०२॥
यत्रोभयोरचरितार्थता यथा ङः सि धुट् प्रभृतौ ।
तत्रापि परत्वात्स्यात्तस्मादित्येव बलवती प्रथमम् ॥४०३॥

---

उभयनिर्देश इति । "तस्मिन्निति—" ( १।१।६६ ) इति सूत्रे भाष्ये स्पष्टोऽयमर्थः । अनवकाश इति । एतेनास्या न्यायसिद्धत्वं दर्शितम् ॥ ४०० ॥

बलवत्त्वादिति । ङम इति पञ्चमीनिर्देशस्योक्तरीत्या बलवत्त्वादसौ स्वार्थ एव वर्तते, अचीति सप्तमीनिर्देशस्य दुर्बलत्वात्सप्तमीषष्ठयर्थे तेन ङमन्तपदात्परस्याचो ङमुडिति निर्णयः । उद्द्योत इति । "तस्मिन्निति—इति सूत्रे भाष्योद्द्योते नागेशभट्टेन—"पञ्चमीनिर्देशो भविष्यतीत्यस्य बलवान्स्वार्थे एव भविष्यतीत्यर्थः । सप्तमी तु षष्ठ्यर्थे इति भावः ।" इत्युक्तम् । प्रकृतपरिभाषाव्याख्याने प्राचीनैष्टीकाकृद्भिरपि तदेवानुसृतम् । "तस्मिन्निति निर्दिष्टे पूर्वस्य षष्ठी, तस्मादित्युत्तरस्य षष्ठीति" भाष्योक्तः षष्ठीप्रकल्पनपक्षस्तु षष्ठी स्थाने योगेत्यतः षष्ठीपदानुवृत्तिगौरवादेकदेशिन इति तत्रैवोद्द्योते स्पष्टम् । सरणिरियम्—। वक्ष्यमाणा रीतिरित्यर्थः ॥ ४०१ ॥

तस्मादिति । ङमोह्रस्वादचीत्यादौ पञ्चमीनिर्देशस्य निरवकाशत्वेन बलवत्त्वात्तस्मादिति परिभाषा बलवती अतः सैव प्रथमं स्वविधेयमव्यवहितोत्तरस्येत्याकारकमुपस्थापयति तच्चोद्देश्यदले विशेष्यं भवति । अथ = तदुत्तरम्, अन्या = तस्मिन्निति परिभाषा अर्पयति = स्वविधेयमुपस्थापयति । इदम् = तदुपस्थापितमव्यवहितपूर्वत्वं ङमि ङमन्तपदे विशेषणीभवति । एवं च, अजव्यवहितपूर्वं यद् ङमन्तपदं तदव्यवहितोत्तरस्य ङमुडित्यर्थादच एव ङमुडागमः संपद्यते । तेन कुर्वन्नास्ते इत्यादौ पूर्वनकारस्य पदान्तत्वेन पदान्तस्येति णत्वनिषेधः सिध्यति । इति नव्यपण्डितप्रदर्शिता सरणिः ॥४०२ ॥

उभयोः पञ्चमीनिर्देशसप्तमीनिर्देशयोः । स्यात् = प्रवर्तेत ॥ ४०३ ॥

उभयोश्चरितार्थत्वेऽप्येवं परशास्त्रबलवत्त्वात् । तेनामि सर्वनाम्नः सुडित्यनेनाम एव सुट् सिद्धः ॥४०४॥

इति श्री परिभाषेन्दुप्रभायां बाधबीजनिरूपणं नाम द्वितीयं प्रकरणम् ॥



---

एवम् = तस्मादित्यस्या एव पूर्वप्रवृत्तिरित्यर्थः । तेनेति । "आमि सर्वनाम्नः सुट्" इति सूत्रे आमीति सप्तमी त्रेस्त्रय इत्यत्र चरितार्था, आदिति पञ्चम्यन्तपदं च "आज्जसेरसुक्" इति सूत्रादनुवर्तते तदीया पञ्चमी तत्रैव चरितार्थेति द्वयोश्चरितार्थत्वेऽपि तस्मादित्युत्तरस्येत्यस्य सूत्रपाठापेक्षया परत्वात्तस्यैव पूर्वप्रवृत्तिः । तेनाम एव सुड् न त्वङ्गस्येति भावः । सिद्धशब्दः प्रकरणान्ते मङ्गलार्थः ॥ ४०४ ॥

इति श्री परिभाषेन्दुप्रभाव्याख्यायां भावप्रकाशिकायां बाधबीजनिरूपणं नाम द्वितीयं प्रकरणम् ।



## अथ शेषार्थनिरूपणं नाम तृतीयं प्रकरणम्



नन्ु सत्वमतः कुकमीत्युक्तं न स्यादयस्कुम्भ्याम् ।
सूत्रपठितकुम्भात्मकपरपदविरहादतः प्राह ॥ १ ॥

### प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणम् ॥७१॥

प्रातिपदिकसामान्यार्थके च तद्व्याप्यबोधके पठिते ।
स्त्रीत्वद्योतकप्रत्यययुक्तस्यापीष्यते ग्रहणम् ॥ २ ॥
तद्व्याप्यत्वं शब्दज्ञानविषयतागतं ग्राह्यम् ।
तेन च कुमारधातौ सत्यपि तत्त्वं समासविधिबोध्ये ॥ ३ ॥
लिङ्गं चात्र कुमारः श्रमणादिभिरिति समासविधिसूत्रे ।
स्त्रीलिङ्गश्रमणाऽऽदिकशब्दानां पाठ इति बोध्यम् ॥ ४ ॥

---

अथोक्तप्रकरणद्वयावशिष्टार्थप्रतिपादकपरिभाषाप्रकरणं व्याचिख्यासुरादौ लिङ्गविशिष्टपरिभाषामवतारयति—नन्विति अतः कुमीति । अतः कृकमिकंसकुम्भेत्यादि सूत्रविहितं विसर्गस्य सत्वम्, अयः शब्दात्कुम्भीशब्दे उत्तरपदे परे न स्यात् । तत्र हेतुः—सूत्रपठितेत्यादिः ॥ १ ॥

प्रातिपदिकेति । प्रातिपदिकत्वरूपसामान्यधर्मप्रकारकोपस्थितिजनके प्रातिपदिकशब्दे, प्रातिपदिकत्वव्याप्यानुपूर्व्यादिधर्मप्रकारकोपस्थितिजनके कुम्भादिपदे वा उच्चारिते सति, स्त्रीत्वरूपलिङ्गबोधकटाबादिप्रत्यययुक्तस्यापि ग्रहणं बोधनमिष्यते = तात्पर्यविषयीभवतीत्यर्थः ॥ २ ॥

नन्वेवं कुमारः श्रमणादिभिरिति सूत्रे स्त्रीलिङ्गश्रमणाऽऽदिशब्दपाठोऽस्या ज्ञापक इति नोपपद्येत । कुमारत्वरूपानुपूर्व्याः कुमार क्रीडायामिति धातावपि सत्त्वेन प्रातिपदिकत्वव्याप्यत्वाभावात्तदवच्छिन्नबोधके कुमारशब्दे लिङ्गविशिष्टपरिभाषाया अप्रवृत्त्या ज्ञापनोत्तरमप्युक्तसूत्रे स्त्रीप्रत्ययान्तश्रमणादिपाठानुपपत्तेस्तादवस्थ्यात् । अत आह—तद्व्याप्यत्वमिति । उक्तरीत्या कुमारत्वस्य प्रातिपदिकत्वव्याप्यत्वाभावेऽपि कुमारः

स्त्रीलिङ्गश्रमणादिभिरस्ति कुमारीपदस्यैव ।
सामानाधिकरण्यं न कुमारस्येति तेन सिद्धेयम् ॥ ५ ॥
उपपदविधावियं न द्विषतीतापे न तेन तापेः खच् ।
न समासान्तविधाविति राज्ञष्टज् मद्रराज्यां न ॥ ६ ॥
महदात्वे च न तस्मान्महतीप्रिय इह न खल्वात्वम् ।
ञ्नित्स्वरविधौ न राजस्वरे बहोर्नञ्वदित्यादौ ॥ ७ ॥

---

श्रमणादिभिरिति समासविधायकसूत्रजन्यशाब्दबोधे कुमारप्रकृतिकसुबन्तस्यैव विषयीभावात्तत्रत्यकुमारपदप्रयोज्यविषयतायाः प्रातिपदिकत्वव्याप्यत्वात्तादृशविषयताप्रयोजककुमारशब्दस्य प्रातिपदिकग्रहणत्वाल्लिङ्गविशिष्टग्रहणं सुलभमिति नोक्तानुपपत्तिरिति भावः ॥ ३ ॥ ४ ॥

उक्तपाठस्य ज्ञापकत्वमुपपादयति—**स्त्रीलिङ्गेत्यादिना** । सामानाधिकरण्यं = भिन्नप्रवृत्तिनिमित्तयोः शब्दयोरेकार्थप्रतिपादकत्वम् । तेन = उक्तपाठेन ॥ ५ ॥

एतत्परिभाषाऽऽश्रयणे यत्र यत्रातिप्रसङ्गस्तानि स्थलानि "ङ्याप्प्रातिपदिकात्" (४।१।१) इति सूत्रे भाष्ये परिगणितानि । तदनुसारेण तेष्वस्या अप्रवृत्तिमुदाहरति—**उपपदविधावित्यादिना** । उपपदनिमित्तको विधिरुपपदविधिः । द्विषतीतापे = द्विषतीताप इत्यत्र तापेः खच् । द्विषत्परयोस्तापेरित्यनेन द्विषन्तप इत्यत्रेव प्राप्तः । राज्ञष्टजिति । "राजाहःसखिभ्यष्टच्" इति समासान्तष्टच्प्रत्ययो मद्राणां राजा मद्रराज इत्यत्रेव मद्राणां राज्ञी मद्रराज्ञीत्यत्र प्राप्तः । स न भवति । यद्यत्र टच् स्यात्तर्हि भस्याढे तद्धिते इति पुंवद्भावे नस्तद्धित इति टिलोपे च मद्रराजीत्यनिष्टं रूपं स्यात् ॥ ६ ॥

**महदात्वे चेति** । आन्महतः समानाधिकरणजातीययोरित्यात्वं महान् प्रियो यस्य स महाप्रिय इत्यत्रेव महती प्रिया यस्य स महतीप्रिय इत्यत्रापि प्राप्नोति । महती जङ्घा यस्य स महाजङ्घ इत्यादौ तु स्त्रियाः पुंवदिति पुंवद्भावे सत्यात्वं भवत्येव, अतो महतीप्रिय इत्युदाहृतम् । तत्र अपूरणीप्रियादिष्विति पुंवद्भावनिषेधात् । ञ्नित्स्वरेति ञ्नित्यादिरुदात्त इत्युदात्तस्वरो दाक्षिरित्यादौ पुंसीव स्त्रीप्रत्ययान्ते दक्षस्यापत्यं स्त्री दाक्षीत्यादौ प्राप्तः । राजस्वरे—राजा चेति सूत्रेण ब्राह्मणकुमारयोः परयो राजशब्दस्य प्रकृतिस्वरो राजब्राह्मणः राजकुमार इत्यत्रेव राजब्राह्मणी राजकुमारीत्यत्र प्राप्तः । समाससङ्घातग्रहणेषु च बहोर्नञ्वदुत्तरपदभूम्नीति स्वरो बहुगोमानित्यत्रेव बहुगोमतीत्यादौ प्राप्तः । एतानि कार्याणि तत्र तत्र लिङ्गविशिष्टपरिभाषाया अप्रवृत्त्या न भवन्तीत्यनुसन्धेयम् ॥ ७ ॥

एवं विभक्तिकार्ये नेयमतो नुम् न गोमतीप्रभृतौ ।
एतेष्वतिप्रसङ्गो ङ्याप्सूत्रे दर्शितो हि भाष्येऽस्याः ॥ ८ ॥
यदिह समासान्तविधावेतस्या न प्रवृत्तिरित्युक्तम् ।
तत्तु समासावयवे राजादावेव विज्ञेयम् ॥ ९ ॥
सङ्घातग्रहणे तु प्रवर्ततेऽवश्यमत एव ।
कप्प्रतिषेधः सिध्यत्यातिभ्रात्रीह वन्दिते भ्रातुः ॥१०॥
प्रातिपदिकताव्याप्यं ग्राह्यमखिलमत्र नानुपूर्व्येव ।
अत एव बहुव्रीहेरुधस इति सूत्रभाष्यमुपपन्नम् ॥११॥

---

एवमिति । ङ्याप्सूत्रे भाष्ये 'विभक्तौ चोक्तम् । न वा विभक्तौ लिङ्गविशिष्टाग्रहणात्' इति विभक्तिकार्येऽस्या अप्रवृत्त्युक्तेरुगिदचामिति नुम् गोमतीत्यादौ नेत्यर्थः ॥ ८ ॥ ९ ॥

सङ्घातग्रहणेत्विति । यत्र समासान्तविधौ समासरूपसङ्घातग्रहणं क्रियते तत्रत्वियमवश्यं प्रवर्तते । संघातग्रहणेषु स्वरविधावेव दोषोक्तेः । बहुव्रीहेरूधसो ङीष् (४।१।२५) इति सूत्रे कुण्डोध्नीत्यत्र ऊधश्शब्दान्तसमुदायनिष्ठं बहुव्रीहित्वमनया ङ्यन्त आनीय कबापादनपरभाष्यप्रामाण्याच्च । तेनातिशयितो भ्राता यस्याः साऽतिभ्रात्री, आसमन्तात्स्थिताऽतिभ्रात्री यस्य स आतिभ्रात्री इत्यत्र नद्यन्तबहुव्रीहित्वात्प्राप्तस्य नद्यृतश्चेति कपः, अनया पूजितार्थभ्रातृशब्दान्तबहुव्रीहित्वातिदेशेन वन्दिते भ्रातुरिति निषेधः सिध्यति । प्रथमसमासे तु ऋदन्तोत्तरपदकबहुव्रीहित्वस्य वर्णत्वव्याप्यधर्मघटितत्वेन वक्ष्यमाणरीत्याऽतिदेशासंभवात्कबप्राप्त्याऽतिदेशस्य नोपयोग इत्यतो द्वितीयसमास उक्तः ॥ १० ॥

कुमारः श्रमणादिभिरित्यत्र, अतः कृकमीत्यत्र च कुमार कुम्भेत्यानुपूर्वीप्रकारकबोधजनके परिभाषाप्रवृत्तिदर्शनात्सर्वत्र प्रातिपदिकत्वव्याप्यो धर्म आनुपूर्वीरूप एव ग्राह्य इति भ्रान्तिनिवारणायाह–प्रातिपदिकतेत्यादि । अखिलम् = धर्ममात्रम् । नानुपूर्व्येव–। आनुपूर्वीरूप एव धर्मो ग्राह्य इति निर्बन्धो नाऽस्तीत्यर्थः । अत्रार्थे भाष्यं प्रमाणयति—अत एवेति ॥ ११ ॥

तत्र हीति । उक्तसूत्रभाष्ये हि, कुण्डोध्नीत्यत्रानया बहुव्रीहित्वमानीय, नद्यृतश्चेति सूत्रस्य नद्यन्ताद् बहुव्रीहेः कबित्यर्थे कबापादनं कृतम् । नद्यन्तानां यो बहुव्रीहिरित्येवं

तत्र हि कुण्डोध्नीति ङयन्तं, मत्वाऽनया बहुव्रीहिम् ।
नद्यृत इति कप्शङ्का कृताऽत्र नास्त्यानुपूर्व्युपादानम् ॥१२॥
स्वाद्यवयवके स्वोद्देश्यकलिङ्गप्रत्ययान्तसमुदाये ।
आरोप्यते स्वधर्मो वर्णत्वव्याप्यघटितान्यः ॥१३॥
न हि लभ्यमदन्तत्वं वर्णत्वव्याप्यधर्मघटितत्वात् ।
तेनातो भिस ऐसिति रमाभिरित्यादिषु न भवति ॥१४॥
नन्वेवं युवतीरित्यादौ स्यात् संप्रसारणापत्तिः ।
णित्त्वानङौ तथाऽऽत्वं सखीसुपथ्यादिषु स्युरत आह ॥ १५ ॥

सः' इति नद्यन्तप्रकृतिकसुबन्तोत्तरपदकबहुव्रीहेः कब्नित्यर्थाश्रयणेन च समाहितम् । आनुपूर्वीमात्रग्रहणे तु नद्यृतश्चेत्यत्रानुवृत्तस्य बहुव्रीहिपदस्यानुपूर्वीप्रकारेण बोधकत्वाभावात्तदसङ्गतिः । प्रातिपदिकत्वव्याप्यधर्ममात्रग्रहणे तु बहुव्रीहित्वस्य तथात्वात्तदुपपन्नमिति भावः ॥ १२ ॥

ननु प्रातिपदिकबोधकपदस्य लिङ्गबोधकप्रत्ययविशिष्टरूपेऽर्थे शक्तेर्लक्षणाया वाऽभावात्परिभाषयाऽपि कथं तत्प्रतिपादनम् ? उक्तसूत्रे स्त्रीलिङ्गश्रमणादिशब्दपाठान्यथानुपपत्त्या लक्षणाङ्गीकारे तु केवलस्य ग्रहणं न स्यात् । एकेन पदेन युगपच्छक्यलक्ष्योभयार्थबोधनासंभवादत आह—**स्वाद्यवयवक इत्यादि**। स्वं स्त्रीप्रत्ययप्रकृतिभूतः कुमारादिशब्दः। स आद्यवयवो यस्यैवंभूते, स्वनिष्ठोद्देश्यतानिरूपितविधेयताऽऽश्रयीभूतो यो लिङ्गप्रत्ययस्तदन्तसमुदाये, वर्णत्वव्याप्यात्त्वादिघटितादन्तत्वाद्यतिरिक्तः स्वधर्मः = स्ववृत्तिधर्मं आरोप्यत इति परिभाषया प्रतिपाद्यते । तथा च नोक्तानुपपत्तिरिति भावः ॥१३॥

वर्णत्वव्याप्यघटितभिन्न एव धर्म आरोप्यत इति यदुक्तं तत्फलमाह—**न हीत्यादिना** ॥ १४ ॥

उक्तपरिभाषानिषेधवचनमवतारयति—**नन्विति** । एवम् = लिङ्गविशिष्टपरिभाषया स्त्रीप्रत्ययान्तसमुदाये स्त्रीप्रत्ययप्रकृतिधर्मातिदेशे । युवतीः पश्येत्यादौ तिप्रत्ययान्ते युवन्शब्दत्वातिदेशात् श्वयुवमघोनामतद्धित इति संप्रसारणापत्तिः स्यात् । ननु मघवत इत्यादौ संप्रसारणवारणाय श्वयुवेति सूत्रे अल्लोपोऽन इत्यतः, अन इत्यस्यापकर्षेण नकारप्रश्लेषेण च नकारान्तानामन्नन्तानां श्वादीनां संप्रसारणविधानान्नकारान्तत्वस्य वर्णत्वव्याप्यधर्मघटितत्वेन लिङ्गविशिष्टपरिभाषयाऽतिदेशासंभवान्नात्र दोष इत्यरुचेराह—**णित्त्वानङाविति** । स्त्रीलिङ्गसखीशब्दे सखिशब्दत्वातिदेशेन ततः परस्य सर्वनामस्थानस्य सख्युरसंबुद्धाविति णिद्वद्भावः स्यात् । सौ चानङादेशः सुपथीशब्दे च सुपथिन्शब्दत्वातिदेशे पथिमथ्यृभुक्षामादिति सौ परे आत्वापत्तिरित्यर्थः ॥ १५ ॥

## विभक्तौ लिङ्गविशिष्टाग्रहणम् ॥ ७२ ॥

अत्र विभक्ताविति खलु विषयार्थे सप्तमी ज्ञेया ।
तेन विभक्त्युद्देश्यकविभक्तिकृतकार्यमात्र इदम् ॥ १६ ॥
भाष्ये युवोरनाकाविति सूत्रे विवृतमेतदन्ये तु ।
पूर्वाऽनित्यत्वं घटघटीग्रहान्मूलमस्याहुः ॥ १७ ॥
ननु तस्यापत्यमिह हि तस्येति पुमेकवचननिर्देशात् ।
तद्भिन्नलिङ्गवचनात्षण्मात्रादेर्न सिध्येदण् ॥ १८ ॥

---

विभक्तिसम्बन्धिकार्ये कर्तव्ये प्रातिपदिकग्रहणे लिङ्गविशिष्टग्रहणं नेति परिभाषार्थः । **विभक्तीति** । विभक्त्युद्देश्यके विभक्तिनिमित्तके चेति सर्वस्मिन्नपि विभक्तिसम्बन्धिकार्ये, इदम् = लिङ्गविशिष्टाग्रहणमित्यर्थः विभक्त्युद्देश्यकेऽप्येतत्प्रवृत्त्या शुनीशब्दात्तृतीयैकवचने शुन्या इत्यत्र उदात्तयणो हल्पूर्वादिति सूत्रविहितस्य शसादिविभक्तेरुदात्तत्वस्य न गोश्वन्निति सूत्रेण प्रतिषेधो न भवति ॥ १६ ॥

**भाष्ये इति** । युवोरनाकौ (७।१।१) इति सूत्रे भाष्ये 'विभक्तौ लिङ्गविशिष्टग्रहणं नेत्येषा परिभाषा कर्तव्या' इत्युपक्रम्यात्रोपदर्शितान्यन्यानि च प्रयोजनान्युक्तानि । ज्ञापकं नोक्तम् । अत इयं वाचनिकी । एतत् = प्रकृतवचनम् । मतान्तरमाह— **अन्ये त्विति** । पूर्वाऽनित्यत्वम् = पूर्वोक्ताया लिङ्गविशिष्टपरिभाषाया अनित्यत्वम् । **घटघटीति** । शक्तिलाङ्गलाङ्कुशतोमरयष्टिघटघटीधनुष्षु ग्रहेरुपसंख्यानमिति वार्तिके घटग्रहणेनैव घटीग्रहणे सिद्धे द्वयोरुपादानं लिङ्गविशिष्टपरिभाषाया अनित्यत्वज्ञापकम् । तदेवास्य वचनस्य मूलमित्यन्य आहुरित्यर्थः । अत्रारुचिबीजं तु ज्ञापकस्य भाष्याविचारितत्वम् ॥ १७ ॥

लिङ्गपदघटितत्वसाधर्म्यात् सूत्रे लिङ्गवचनमिति परिभाषामवतारयति—**नन्विति** । **पुमेकेति** । पुँल्लिङ्गैकवचनयोर्निर्देशादित्यर्थः । यद्यपि नपुंसकेऽपि तस्येति रूपं, तथापि पुंनपुंसकयोर्युगपन्निर्देशस्य कर्तुमशक्यत्वात्प्राथम्याद्भाष्ये "पुँल्लिङ्गेनायं निर्देशः क्रियते एकवचनान्तेन च । तेन पुँल्लिङ्गादेवोत्पत्तिः स्यात् । एकवचनान्ताच्च । स्त्रीनपुंसकलिङ्गाद् द्विवचनबहुवचनान्ताच्चेदं न स्यात्" इत्युक्तत्वात्तदनुसारेणेदम् । **षण्मात्रादेरिति** । षण्णां मातॄणामपत्यं षाण्मातुरः स्कन्दः । अत्र प्रकृत्यर्थस्य स्त्रीलिङ्गत्वाद् बहुत्वसंख्याविशिष्टत्वाच्चापत्यार्थेऽण्प्रत्ययो न स्यात् । एवं सुमातुरपत्यं सौमात्र इत्यत्राण् न स्यात् । क्षत्रस्यापत्यं क्षात्रिरित्यत्र च क्षत्रशब्दस्य नपुंसकलिङ्गत्वादपत्य इञ् न स्यादित्याद्यापत्तिर्ज्ञेया ॥ १८ ॥

**एवमपत्यमिति पदे नपुंसकैकत्वनिर्देशात् ।**
**औपगवश्चौपगवाविति च न सिध्येदतः प्राह ॥ १९ ॥**

## सूत्रे लिङ्गवचनमतन्त्रम् ॥ ७३ ॥

**सूत्रघटकपदबोध्ये न लिङ्गसंख्ये विवक्षिते मुनिना ।**
**ज्ञापकमत्र नपुंसकमिति पदमर्धं नपुंसकमितीह ॥ २० ॥**
**पूर्वापरेति सूत्रेऽर्धपदे पाठ्येऽर्धमिति पृथग्योगात् ।**
**क्लीबार्थविवक्षायां तद्व्यर्थं सन्निवेदयत्येनाम् ॥ २१ ॥**

---

**नपुंसकेति** । अपत्यमिति नपुंसकलिङ्गनिर्देशात्, पुंस्यपत्येऽणभावापत्त्या औपगव इत्यादि न सिध्येत् । एकवचननिर्देशाच्च द्वित्वविशिष्टेऽपत्यार्थे औपगवावित्यादि न सिध्येदिति यथाक्रमं योज्यम् ॥ १९ ॥

परिभाषार्थमाह—**सूत्रेति** । **मुनिना** = भगवता पाणिनिना ॥ २० ॥

अर्धं नपुंसकमित्यत्र नपुंसकग्रहणमकृत्वा अर्धमिति न्यासे तत्र नपुंसकत्वविवक्षायामपि लिङ्गस्य केवलान्वयित्वेन स्वरूपसंबन्धेन नपुंसकत्वविशिष्टोऽर्धशब्द एकदेशिना समस्यत इत्यर्थः स्यात् । ततश्च ग्रामार्धो नगरार्ध इत्यादौ पुंस्त्वविशिष्टार्थाभिधायिनोऽप्यर्धशब्दस्य स्वतो नपुंसकत्वात्तद्व्यावृत्तिर्नस्यादतो बोधकत्वसंबन्धेन नपुंसकत्वविशिष्टोऽर्धशब्दः समस्यत इत्यर्थलाभाय तत्र नपुंसकग्रहणस्यावश्यकत्वेन न ज्ञापकत्वमित्याशङ्काऽवसरं परिहरन् प्रकारान्तरेण ज्ञापकत्वमुपपादयति—**पूर्वापरेत्यादिना** । नपुंसकग्रहणाभावे, अर्धमित्यस्य स्वरूपसंबन्धेन नपुंसकत्वविशिष्टोऽर्धशब्द एकदेशिना समस्यत इत्यर्थकत्वे पूर्वापराधरोत्तरमेकदेशिनैकाधिकरणे इत्यत्रार्धशब्दपाठेनैव तस्य समाससिद्धेरर्धमिति पृथग्योगकरणं व्यर्थं स्यादतस्तत्सामर्थ्येन बोधकत्वसंबन्धेन नपुंसकत्वविशिष्टोऽर्धशब्दः समस्यत इत्यर्थलाभसंभवात्प्रकृतपरिभाषाऽभावे नपुंसकग्रहणं व्यर्थं सदेनां ज्ञापयतीति भावः । न च 'भित्तं शकलखण्डे वा पुंस्यर्धोऽर्धं समेंऽशके' इत्यमरोक्त्या समांशवाच्यर्धशब्दो नित्यं नपुंसके वर्तते, तस्यैव समासो यथा स्यादित्यर्थं नपुंसकग्रहणं न परिभाषाज्ञापकमिति वाच्यम् । एओङ् सूत्रे भाष्ये 'नैव हि लोके नान्यस्मिन्वेदेऽर्द्धं एकारोऽर्द्धं ओकारो वाऽस्ति' इति समांशवाच्यर्धशब्दस्य पुँल्लिङ्गे प्रयोगात्तस्या अमरोक्तेरनादरणीयत्वात् । केचित्त्वर्द्धं एकार इत्यादिभाष्ये वस्तुतः समांशस्य खण्डत्वेनैव बोधकत्वात्पुँल्लिङ्गप्रयोगोपपत्तेस्तद्विरोधाभावादमरोक्तं समांशवाचिनो नित्यनपुंसकवृत्तित्वं सम्यगेवेति, तल्लाभार्थकं नपुंसकग्रहणं न परिभाषाज्ञापनक्षममिति

धान्यार्थी सपलालान्सतुषाञ्छालीन् यथाऽऽनयति गेहे ।
आदाय ततो धान्यं त्यजति पलालादिकं तथाऽत्रापि ॥ २२ ॥

तच्चलिङ्गं वचनं चोक्तमपि हि नान्तरीयकत्वेन ।
न विवक्षितमिति तस्यापत्यमितीहोपपादितं भाष्ये ॥ २३ ॥

ननु च भृशादिभ्यो भुव्यच्वेरिति सूत्रविहितः क्यङ् ।
क्व दिवा भृशा भवन्तीत्यत्रापि स्यादतः प्राह ॥ २४ ॥

**नञिवयुक्तमन्यसदृशाधिकरणे तथाह्यर्थगतिः ॥७४॥**

नञ्युतमिवयुतमपि च स्वबोध्यभिन्ने स्वबोध्यसदृशेऽर्थे ।
वर्तत इति पदशक्तिस्वभावतो लोकसिद्धमिदम् ॥ २५ ॥

---

वदन्ति । तन्मते 'गोत्राद्यून्यस्त्रियाम्', 'यञञोश्चेत्यादि प्रकृतपरिभाषाज्ञापकम् । अपत्यप्रत्ययस्य स्त्रियां बहुत्वे चाप्रवृत्तौ तद्वैयर्थ्यस्य स्पष्टत्वादिति बोध्यम् ॥ २१ ॥

भाष्ये त्वस्या लोकन्यायसिद्धत्वमुक्तं तद्दर्शयति—धान्यार्थीत्यादिना । नान्तरीयकत्वेन = अवश्यवक्तव्यत्वेन । विनार्थकादन्तराशब्दाद्गहादित्वाच्छप्रत्यये नैकधेत्यादिवन्नशब्देन समासे स्वार्थिके कनि नान्तरीयकशब्दः साधुः । उपपादितमिति । तस्यापत्यम् ( ४।१।९२ ) इति सूत्रे भाष्ये हि 'नान्तरीयकत्वादत्र पुँल्लिङ्गेन निर्देशः क्रियते एकवचनान्तेन च अवश्यं कयाचिद् विभक्त्या केनचिद्वचनेन निर्देशः कर्तव्यः । तद्यथा कश्चिद्धान्यार्थी शालिकलापं सतुषं सपलालमाहरति नान्तरीयकत्वात् । स यावदादेयं तावदादाय तुषपलालान्युत्सृजति' इति धान्यदृष्टान्तं तदुत्तरं च मत्स्यदृष्टान्तमुक्त्वा, 'एवमिहापि नान्तरीयकत्वात्पुँल्लिङ्गेन निर्देशः क्रियते एकवचनान्तेन च नह्यत्र निर्देशस्तन्त्रम्' इत्युपसंहृतम् ॥ २२, २३ ॥

लिङ्गसंख्याविषयकपरिभाषानिरूपणानन्तरं तदाश्रयद्रव्यविषयकपरिभाषाया उपस्थितत्वादाह—ननु चेति । क्व दिवेति । ये रात्रौ भृशा = भूयिष्ठा नक्षत्रादयस्ते दिवा = दिवसे क्व भवन्तीति विवक्षायामपि भृशशब्दस्याच्व्यन्तत्वात्क्यङ् प्रसज्यत इति भावः ॥ २४ ॥

नञ्युतमिति । युतं युक्तं संबद्धमिति यावत् । संबन्धश्च स्वद्योत्यार्थनिष्ठविशेष्यतानिरूपितप्रकारतावदर्थोपस्थापकत्वरूपः । यत्तु नञ्पदस्य पूर्वत्वरूपो योगः, इव पदस्य तु परत्वरूपः । स्वघटितसमासघटकत्वरूपस्तूभयसाधारण इति भूत्यामुक्तम् । तत्प्रायिकम् । इवेन समासस्यानित्यत्वात्, उद्बाहुरिव वामन इत्यादौ तस्य पूर्वप्रयोगस्यापि सत्त्वाच्च ।

अब्राह्मणमानेतुं कथितो लोष्टादि नानयति किन्तु ।
ब्राह्मणभिन्नं ब्राह्मणसदृशं च क्षत्रियप्रभृतिम् ॥ २६ ॥

चन्द्र इवेत्युक्ते तद्भिन्नं तत्सममवैति वदनादिम् ।
एवं च्व्यन्ताद्भिन्ने च्व्यन्तसमे क्यङ्ङभूततद्भावे ॥ २७ ॥

ये निशि नक्षत्राद्या भृशाः क्व नु भवन्ति ते दिवसे ।
इत्यर्थ उक्तवाक्ये च्व्यर्थाभावान्न भवति क्यङ् ॥ २८ ॥

तत्सादृश्यमभावस्तदन्यता तस्य चाल्पत्वम् ।
अप्राशस्त्यविरोधावित्युक्ताः पण्डितैर्नञर्थाः षट् ॥ २९ ॥

तत्र तु भेदविशिष्टं सादृश्यं तद्विशिष्टभेदो वा ।
विनिगमनाविरहान्नञ्द्योत्य इति विमृश्य पृथगुक्तिः ॥ ३० ॥

---

परिभाषायामधिकरणपदं द्रव्यवाचकम् । तच्चात्रार्थमात्रोपलक्षणं, द्रव्यभिन्ने गुणक्रियादावपि भेदसादृश्यान्वयसंभवात् । हि = यतः । तथा = एवंरूपाऽर्थगतिः, शब्दशक्तिस्वभावादेवार्थावगतिर्भवति । एवं च लोकसिद्धोऽयमर्थो नात्र ज्ञापकापेक्षा । तदेतत्सर्वं कारिकायां संगृहीतम् ॥ २५ ॥

लोकसिद्धत्वमेव दृष्टान्तेन विशदीकरोति—अब्राह्मणमित्यादिना । आनेतुं कथितः = आनयेत्युक्तो जनः । लोष्टादि = मृत्पिण्डादि ॥ २६ ॥

अवैति = जानाति । अभूततद्भावे = अभूततद्भावविषये क्यङ्—भवतीति शेषः ॥२७॥

अवतरणोक्तदोषं निराकरोति—ये निशीति ॥ २८ ॥

'तत्सादृश्यमभावश्च तदन्यत्वं तदल्पता । अप्राशस्त्यं विरोधश्च नञर्थाः षट् प्रकीर्तिताः ॥' इत्यभियुक्तश्लोके सादृश्यभेदयोः पृथगुक्तेस्तात्पर्यं दर्शयितुं तत्रोक्तान्नञर्थांस्तावदनुवदति—तत्सादृश्यमित्यादिना ॥२९॥

तत्र त्विति । विशेष्यविशेषणभावे विनिगमनाविरहाद् भेदविशिष्टसादृश्यम् = तद्भिन्नत्वे सति तत्सादृश्यम्, अथवा तद्विशिष्टभेदः—सादृश्यविशिष्टभेदः, तत्सदृशत्वे सति तद्भिन्नत्वरूपो नञ्द्योत्योऽर्थं इति सादृश्यभेदयोः, प्राधान्याप्राधान्यप्रयुक्तोऽर्थभेदस्तत्रोक्तः । नञः सादृश्यविशिष्टभेदबोधकत्वमब्राह्मण इत्यादौ सुप्रसिद्धम् । भेदविशिष्टसादृश्यबोधकत्वं तु 'मृगो न भीमः कुचरो गिरिष्ठाः' इत्यादौ वेद एव प्रसिद्धम् ।

यत्त्वोषधेश्च सूत्रेऽप्रथमायामित्यनेन सिद्धेऽपि ।
उक्ताद्विभक्तिशब्दादनित्यतामाहुरेतस्य ॥ ३१ ॥
तन्न यतोऽनित्यत्वे नास्ति फलं भाष्यसम्मतं किमपि ।
तत्र विभक्ताविति तु न्यायप्राप्तार्थमनुवदति ॥ ३२ ॥
सादृश्यं खलु भेदाघटितमिति च सूच्यतेऽन्यसदृशोक्त्या ।
सदृशपदाद्भेदार्थाधिगमेऽन्यपदस्य वैयर्थ्यात् ॥ ३३ ॥
ननु संख्यादेः पूर्वं लिङ्गावगमोऽस्त्यतोऽन्तरङ्गत्वात् ।
व्याघ्रीत्यादौ स्त्रीत्वार्थकटापि ततः सुपि समासे ॥ ३४ ॥

---

भीमो भयङ्करः, कुचरः कुत्सितचारी हिंस्रः, गिरिष्ठाः पर्वताश्रयो मृगो न सिंहः इवेति, इन्द्रस्तुतिः ॥ ३० ॥

यत्त्विति । ओषधेश्च विभक्तावप्रथमायाम् । दीर्घः स्यान्मन्त्रे । यदोषधीभ्यः । अत्र अप्रथमायामित्यनेनैव प्रकृतन्यायेन विभक्त्यर्थलाभेऽपि विभक्तिग्रहणं नञिवयुक्त-न्यायस्यानित्यत्वज्ञापकमिति केचिदाहुः । तन्न युक्तम् । फलाभावात् । नन्वस्ति फलम्, अनचि चेत्यत्र नञा सादृश्यविरहितभेदमात्रबोधनादज्भिन्नस्यावसानस्य प्रतीत्या वाक् इति द्वित्वसिद्धिरत आह—भाष्यसम्मतमिति । तत्रावसाने द्वित्वसिद्धये भाष्यकृता प्रसज्यप्रतिषेधाश्रयणाच्च तदेतन्न्यायानित्यत्वफलमिति भावः । किञ्चानित्यत्वफलमिदमेव वक्तव्यं यत्क्वचिदसदृशोऽपि भिन्नो नञा प्रत्याय्यत इति । तदपि लोकसिद्धत्वात्, केनचिद्धर्मेण सादृश्यस्य संभवाच्चोपपन्नमिति तदर्थे न ज्ञापकापेक्षा । अत एव "अकर्तरि च कारके संज्ञायाम्" इति सूत्रे प्रकृतन्यायमाश्रित्य कारकग्रहणं भाष्यकृता प्रत्या-ख्यातम् ॥ ३१, ३२ ॥

सादृश्यमिति । अस्यां परिभाषायामन्यसदृशेति कथनेन सादृश्यं भेदाघटितमिति सूच्यते । तद्भिन्नत्वे सति तद्गतभूयो धर्मवत्त्वं सादृश्यमिति सादृश्यस्य भेदघटितत्व-नियमाङ्गीकारे सदृशपदादेव भेदार्थलाभेऽन्यपदवैयर्थ्यापत्तेस्तद्बलेन तस्य भेदाघटितत्वं ज्ञाप्यत इत्यर्थः । इदं च मञ्जूषायां स्पष्टम् ॥ ३३ ॥

नञ्घटितस्यार्थनिरूपणे कृते तथाविधेनातिङ्पदेन ज्ञापितत्वाद् गतिकारकेत्यस्या उपन्यासः नन्विति । जातिव्यक्तिलिङ्गसंख्याकारकाणां क्रमेणोपस्थित्यङ्गीकारात्तत्क्रमेणैव च तत्तत्कार्यप्रवृत्तेः, व्याघ्री कच्छपीत्यादौ प्र प इत्यादेः संख्याकारकबोधकसुबपेक्षया लिङ्गबोधकटाप्प्रत्ययस्य पूर्वोपस्थितनिमित्तकत्वेनान्तरङ्गत्वात्पूर्वं टापि ततः सुपि तदुत्तरं कुगतिप्रादय इत्यादिना समासे अकारान्तत्वाभावाज्जातिलक्षणो ङीष् न स्यादित्यर्थः ।

जातेरस्त्रीविषयादिति ङीष् न स्याददन्तताविरहात् ।
उपसंजनिष्यमाणन्यायस्त्वपवादवैयर्थ्ये ॥ ३५ ॥
न च टाबपेक्षया लुक्प्रयोजकसमासबलवत्त्वम् ।
तद्ध्यन्तरङ्गकारणनाशकतायामतश्चाह ॥ ३६ ॥

---

नन्वत्र यदि पूर्वं टाब्न स्यात्तदा समासोत्तरं ङीष् स्यादिति सभावनायाः सत्त्वेनोप- 'सञ्जनिष्यमाणनिमित्तन्यायेन पूर्वं टाब् न भविस्यत्यत इदमवतरणं न युक्तम् । न च भविष्यदवादविषयातिरिक्तत्वेनाप्युत्सर्गोद्देश्ये सङ्कोच इत्येव तन्न्यायतात्पर्यम्, प्रकृते तु व्याघ्रशब्दस्यैव जातिवाचकत्वेन ङीष्रूपापवादविषयत्वाद् व्रेत्यस्य तदतिरिक्तत्वेन तन्न्यायप्रवृत्तावपि टाप्स्यादेवेत्यवतरणं युक्तमिति वाच्यम् । सिद्धान्तानुरोधेन भविष्यदपवाद- विषयघटकचरमावयवातिरिक्तत्वेनापि सङ्कोचस्यावश्यकत्वेनात्र तत्प्रवृत्तौ टाब्वारणस्य शक्य- त्वात् । भविष्यदपवादविषयघटकातिरिक्तत्वेन सङ्कोचाङ्गीकारे तु अजया क्रीताऽजक्रीतीत्यत्र क्रीतात्करणपूर्वादित्यपवादविषयाजाक्रीतशब्दघटकत्वेनाजशब्दाट्टाब्न स्यादतश्चरमावयव- निवेशः कृतः । यत्तु भविष्यदपवादविषयान्तारिक्तत्वेन सङ्कोचे, घन इव कपिला घनकपिलेत्यत्र तत्पुरुषे तुल्यार्थेति पूर्वपदप्रकृतिस्वरे कपिलेत्यस्यानुदात्तान्तत्वेन अन्यतो ङीष् इत्यपवादविषयसमासचरमावयवात्कपिलशब्दात्पूर्वं टापोऽप्रवृत्तौ समासेऽदन्तत्वा- दन्यतो ङीषिति ङीषापत्तिः ! भविष्यदपवादविषयातिरिक्तत्वेन सङ्कोचे तु घनकपिलेत्य- स्यैवापवादविषयत्वात्केवलस्य कपिलेत्यस्य तथात्वाभावात्पूर्वं टाप्प्रवृत्त्या नोक्तदोष इत्याहुस्तदयुक्तम् । घनकपिलेत्यादौ घन इव कपिलेति कपिलशब्दाट्टापि सुपि च कृत एव समासप्रवृत्त्या टाप्प्रवृत्तिकाले कपिलशब्दस्यान्तोदात्तत्वेनापवादविषयान्तत्वाभावात् । अनुदात्तान्तस्यैव तद्विषयान्तत्वात् । तस्मादुपसंजनिष्यमाणे न्यायेनैव दोषवारणादवतरण- मसङ्गतमित्याशङ्कायामाह उपसंजनिष्यमाणन्यायस्त्विति । स हि न्यायो यत्र समकालप्राप्तिकापवादविषयातिरिक्तत्वेन सङ्कोचेऽपवादशास्त्रवैयर्थ्यापत्तिर्यथादधतीत्यादौ तत्र भविष्यदपवादषियातिरिक्तत्वेनापि सङ्कोच इति तात्पर्यकः । प्रकृते त्वेवं सङ्कोचेऽपि जातेरस्त्रीविषयादित्यपवादशास्त्रस्य तरी वृषलीत्यादौ चारितार्थ्यान्न तत्प्रवृत्तिरिति भावः ॥ ३४, ३५ ॥

प्रकारान्तरेणावतरणासङ्गतिमाशङ्क्य समाधत्ते—न चेति । समासबलवत्त्वम् । अन्तरङ्गानपीति न्यायेनेति भावः । समासबलवत्त्वाट्टापः प्रागेव समासो भविष्यतीति न दोष इत्याशयः । निराकरणहेतुमाह—तद्धीति । लुक्प्रयोजकसमासबलवत्त्वं हि तस्यान्तरङ्गनिमित्तविनाशकत्व एवाङ्गीक्रियते प्रकृते तु तथात्वाभावान्न तत्प्रवृत्तिरत उक्तस्थले ङीष्सिद्ध्यर्थं परिभाषामाहेत्यर्थः ॥ ३६ ॥

## गतिकारकोपपदानां कृद्भिः सह समासवचनं प्राक् सुबुत्पत्तेः ॥ ७५ ॥

उपपदमतिङिति सूत्रेऽतिङ् ग्रहणात्कुगतिसूत्रे च ।
तस्यापकर्षणादिह न सुपेति ततश्च सिद्धेयम् ॥ ३७ ॥

अपि कारकांश एतत्सिद्धिर्ज्ञेयैकदेशसम्मत्या ।
क्रीतात्करणेत्यपि च ज्ञापकमत्रान्यथा हि तद्व्यर्थम् ॥ ३८ ॥

अम्बाम्बेत्यत्र च गोभूम्याद्युक्तेरनित्येयम् ।
अपदादित्वात् षत्वाप्रतिषेधेनान्यथासिद्धेः ॥ ३९ ॥

---

कुगतिसूत्रे = "कुगतिप्रादयः" इति सूत्रे । इह न सुपेति । अतिङ् इत्यस्य तिङन्ताघटितोऽयं समास इत्यर्थात्, सुपेत्यनुवृत्तौ तिङन्तस्य समासाप्राप्त्या तद्वैयर्थ्यापत्तेनोक्तसूत्रद्वये सुपेत्यस्य निवृत्तिर्ज्ञाप्यते । तेनोपपदांशे गत्यंशे चेयं परिभाषा सिद्धेत्यर्थः ॥ ३७ ॥

ननु गत्युपपदांशेऽतिङ्ग्रहणेन परिभाषासिद्धावपि कारकांशे किं मानमत आह— अपीति । स्थालीपुलाकन्यायेनैकदेशानुमत्या कारकांशेऽपीयं सिद्धा तेनाश्वक्रीतीत्यादि सिद्धम् । अन्यथा तत्राप्यन्तरङ्गत्वात्पूर्वं टाप्यदन्तत्वाभावात्क्रीतात्करणपूर्वादिति ङीष् न स्यादिति भावः । न केवलं स्थालीपुलाकन्यायस्तदंशे ज्ञापकमप्यस्तीत्याह—क्रीतादिति । अन्यथेति । कारकस्य कृदन्तेन सह सुबुत्पत्तेः प्राक्समासाभावे पूर्वं टाप्यदन्तत्वाभावान्ङीषोऽसिद्ध्या तद्वैयर्थ्यापत्तेरित्यर्थः । न चानया सुबुत्पत्तेः प्राक्समासबोधनेऽपि टाप्समासयोर्व्याघ्रेति समुदायापेक्षत्वसाम्येन, टापः स्त्रीत्वरूपाधिकार्थापेक्षत्वेऽप्यर्थकृतबहिरङ्गत्वस्य ङ्ह्यपेक्षत्वरूपबहिरङ्गत्वस्य चान्तरङ्गपरिभाषानिरूपणे निरस्तत्वेन टाबपेक्षया समासस्यान्तरङ्गत्वाभावात् परत्वेन टाबेव भविष्यति ततश्च परिभाषाऽऽश्रयणेऽप्युक्तापत्तितादवस्थ्यमिति वाच्यम् । प्रष्ठी प्रवरीत्यादौ पुंयोगादिति ङीषः, व्याघ्रीत्यादौ जातेरिति ङीषश्च प्रेक्षतपरिभाषाप्रयोजनत्वं प्रतिपादयत "पुंयोगात्—" (४।१।४८) इति सूत्रस्थस्य भाष्यस्य प्रामाण्येन सुप्पदस्य प्रत्ययमात्रोपलक्षणत्वाङ्गीकारेण टापोऽपि प्रागेव समासप्रवृत्तेरदोषात् । अत एव अणिनुण इत्यणः प्राक्समासप्रवृत्त्या साङ्कुटिनमिति सिध्यति ॥ ३८ ॥

अम्बाम्बेति । अम्बाम्बगोभूमीत्यादिसूत्रे इणन्तगोभूम्यादिशब्दग्रहणादियमनित्या । अस्या नित्यत्वे गोभूमीत्यादीनां सुपिस्थ इत्येतद्विहितकप्रत्ययान्तेन, स्थशब्देन सह

अत एव धनक्रीतेति टाप् परे त्विह पदात्परस्यादिः ।
इति पञ्चमीसमासाश्रयणेन निषेधसंप्राप्त्या ॥ ४० ॥
गोभूम्यादिग्रहणं षत्वार्थमतो न लिङ्गमुक्तार्थे ।
अपि च हृदिस्थप्रभृतिषु षत्वाभावाय नियमार्थम् ॥ ४१ ॥
सिद्धश्च धनक्रीतेत्यादौ टाप्प्रत्ययस्त्वजादित्वात् ।
तस्मादनित्यतायां मानं च फलं च नेत्याहुः ॥ ४२ ॥
सर्वोऽपि कारकार्थकसुपां कृदन्तैः सह समासः ।
प्रागेव सुबुत्पत्तेः सामान्यत एव कारकग्रहणात् ॥ ४३ ॥

---

उपपदमतिङ् इति सूत्रेण सुबुत्पत्तेः प्रागेव समासे तस्य पदत्वाभावेन सात्पदाद्योरिति निषेधाप्राप्त्या आदेशप्रत्यययोरित्यनेनैव षत्वसिद्धेस्तद्ग्रहणं व्यर्थं स्यादतस्तदस्या अनित्यत्वज्ञापकम् ॥ ३९ ॥

अत एव ! अस्या अनित्यत्वादेव, क्वचित्सुबुत्पत्त्युत्तरं समासस्तेन पूर्वं टाप्यदन्तत्वाभावात्क्रीतादिति ङीषोऽप्रवृत्त्या सा हि तस्य धनक्रीतेत्यस्य सिद्धिरिति केचित् । तन्मतस्यायुक्ततामाह—परे त्वित्यादिना । उपपदसमासे दधिसेचावित्यादौ षत्वाभावाय सात्पदाद्योरित्यत्र पदात्परस्यादिः पदादिरिति पञ्चमीसमासाश्रयणाद्गोष्ठादिषु षत्वनिषेधप्राप्त्या तत्र षत्वार्थे गोभूम्यादिग्रहणस्यावश्यककत्वेनोक्तार्थज्ञापकत्वं न संभवतीत्यर्थः । ननु दधिसेचावित्यत्र सिचेर्विचि सेचयतेः क्विपि वा दध्नः सेचौ दधिसेचाविति षष्ठीसमासोऽस्तु । उत्तरपदत्वे चापदादिविधावित्यत्रापदादिविधावित्युक्तेः प्रत्ययलक्षणनिषेधाभावेनान्तर्वर्तिविभक्त्या पदत्वेन पदस्यादिः पदादिरिति षष्ठीसमासेऽपि षत्वनिषेधसिद्धेः पञ्चमीसमासाश्रयणमनावश्यकमित्यरुचेराह—अपि चेति । पूर्वपदान्तादिणः परस्य स्थशब्दावयवसकारस्य षत्वं चेद्भवति तर्हि गोभूम्यादिभ्य एवेति नियमार्थं तद्ग्रहणम् । तेन हृदिस्थ इत्यादौ षत्वं न । एवं च तन्नानित्यत्वज्ञापकमिति भावः । अनित्यत्वस्य यत्फलमुक्तं तदप्यन्यथासिद्धमित्याह—सिद्धश्चेति । धनक्रीतेत्यादौ टाप्प्रत्ययस्तु अजादेराकृतिगणत्वादजाद्यतष्टाबित्यनेनैव सिद्ध इत्यर्थः ॥ ४०, ४१, ४२ ॥

कारकसमासविषये नागेशमतमाह—सर्वोऽपीति । सामान्यत इति । परिभाषायां कारकसामान्यवाचककारकपदोपादानादित्यर्थः ॥ ४३ ॥

अत एव कुम्भकारप्रभृतौ षष्ठीसमासमपवाध्य ।
भवति परत्वादुपपदसमास इति वार्तिककृतोक्तम् ॥ ४४ ॥
अपि च विभाषा षष्ठीसमास इति तद्विरहपक्षे ।
उपपदसमास इति वच उपपन्नं भाष्यकारस्य ॥ ४५ ॥
आद्यस्य सुबुत्पत्तेः पश्चाद्भावेऽपरस्य तु ततः प्राक् ।
विप्रतिषेधविकल्पप्रतिपादनसङ्गतिर्न स्यात् ॥ ४६ ॥
इति नागेशाभिमतं व्याख्यानमथोच्यते नवीनमतम् ।
कारकविशेषवाचकशब्दोपादान एवेयम् ॥ ४७ ॥

---

तन्मतं तावदुपपादयति—**अत एवेत्यादिना** । उपपदमतिङ् (२।२।१९) इति सूत्रे भाष्ये 'षष्ठीसमासादुपपदसमासो विप्रतिषेधेन । षष्ठीसमासादुपपदसमासो भवति विप्रतिषेधेन । षष्ठीसमासस्यावकाशः । राज्ञः पुरुषो राजपुरुषः । उपपदसमासस्यावकाशः । स्तम्बेरमः कर्णेजपः । इहोभयं प्राप्नोति । कुम्भकारो नगरकारः । उपपदसमासो भवति विप्रतिषेधेन । न वा षष्ठी समासाभावादुपपदसमासः* । न वार्थो विप्रतिषेधेन । किं कारणम् ? षष्ठीसमासस्याभावादुपपदसमासो भविष्यति । गतिकारकोपपदानां कृद्भिः सह समासवचनं प्राक्सुबुत्पत्तेरिति समासवचनात् । अथवा विभाषा षष्ठीसमासः । यदा न षष्ठीसमासस्तदोपपदसमासो भविष्यति ।' इत्युक्तम् । तत्र षष्ठीसमासस्योत्तरपदे सुबुत्पत्त्युत्तरं प्रवृत्त्यङ्गीकारे उपपदसमासस्य ततः प्रागेव प्राप्त्या विप्रतिषेधप्रतिपादकवार्तिकासङ्गतिः स्यात् । एवम् अथवा विभाषा षष्ठीसमास इत्यादिभाष्यस्याप्यनुपपत्तिः । भिन्नकालिकत्वेन विकल्पासंभवात् । एवं च कुम्भकार इत्यादौ षष्ठीसमासोऽपि सुबुत्पत्तेः पूर्वमेव । षष्ठीसमासाभावे चोपपदसमासप्रयुक्त एकार्थीभाव इति तत्र न कदाचिद्वाक्यम् । प्रथमद्वितीयवार्तिकप्रत्याख्यानपरम्, 'अथवा विभाषा षष्ठीसमास' इत्यादि, भाष्यमेव सिद्धान्तप्रतिपादकमिति नागेशभट्टाभिप्रायः ॥ ४४, ४५, ४६ ॥

नवीनमतमाह—**कारकविशेषेति** । कारकविशेषोपादानेन समासविधायके कर्तृकरणे कृता बहुलमित्यादावेवास्याः परिभाषायाः प्रवृत्तिर्न तु कारकार्थकविभक्तिमात्रस्य कृदन्तेन समासविधाने इत्यर्थः ॥ ४७ ॥

अत एव च टाबन्तैः श्रिताऽऽदिशब्दैः समाससिद्ध्यर्थम् ।
एकादेशः पूर्वान्तवदित्येवाश्रितं भाष्ये ॥ ४८ ॥

तृजकाभ्यामिति चापां स्रष्ट्रीत्यादौ निषेधसिद्ध्यर्थम् ।
ङ्याप्सूत्रे भाष्यकृता लिङ्गविशिष्टग्रहणमुक्तम् ॥ ४९ ॥

तदुभयमसङ्गतं स्यात्प्राग्यदि टाबादितः समासः स्यात् ।
किञ्च सुपेति पदं यदि षष्ठीत्यत्रानुवर्तते तर्हि ॥५०॥

कृद्भिः सह न समासो युक्तस्तत्र च सुपेत्यननुवृत्तौ ।
मातुः स्मरतीत्यादौ तिङाऽपि स स्यादतश्च तदयुक्तम् ॥५१॥

विप्रतिषेधविकल्पप्रतिपादकवचनमेकदेश्युक्तिः ।
उपपदसमास एवान्तरङ्ग इति युक्त एष सिद्धान्तः ॥५२॥

गोपालिकाऽऽदि सिध्यति गोपालात्स्वार्थिके कनि च टापि ।
आपः सुपः परत्वाभावादित्थं हि निर्बाधम् ॥५३॥

---

अत्र भाष्यं प्रमाणयति—अत एवेत्यादिना । ङ्याप्प्रातिपदिकात् ( ४।१।१ ) इति सूत्रे भाष्ये कष्टं श्रिता कष्टश्रितेत्यादौ टापा सहैकादेशस्य पूर्वान्तवद्भावाश्रयणेन द्वितीयाश्रितेति समासः साधितः । एवम्, अपां स्रष्ट्रीत्यादौ तृजकाभ्यां कर्तरीति षष्ठीसमासनिषेधो लिङ्गविशिष्टपरिभाषया साधितः । नागेशभट्टोक्तरीत्या तु कारकार्थकविभक्तिमात्रस्य कृदन्तेन समासस्य कृदन्तात्सुबुत्पत्तेः प्रागेव प्रवृत्तौ भाष्यकृत उक्तप्रयासो विफलः स्यादिति भावः । तन्मतस्यायुक्तत्वेऽन्यामपि युक्तिमाह—किञ्चेत्यादिना । अतश्च तदयुक्तमित्यन्तेन । सः=समासः ॥ ४८, ४९, ५०, ५१ ॥

एकदेश्युक्तिरिति । मातुः स्मरतीत्यादौ समासवारणाय षष्ठीति सूत्रे सुपेत्यस्यानुवृत्तेरावश्यकत्वादुपपदसमासस्य चोत्तरपदाद्विभक्त्युत्पत्तेःप्रागेव प्रवृत्तेस्तेन सह षष्ठीसमासस्य विप्रतिषेधविकल्पयोरयुक्तत्वात् । षष्ठीति सूत्रेऽनुवृत्तेन विभाषेत्यनेनैकार्थीभावस्यैव विकल्पबोधनात्पक्षे वाक्यापत्तेर्दुर्वारत्वाच्च विप्रतिषेधादिप्रतिपादकं भाष्यस्थं वचनद्वयमेकदेश्युक्तिः । अन्तरङ्गत्वाभिप्रायेणोपपदसमासस्यैव प्रवृत्तिरित्यर्थप्रतिपादकं "नवाऽर्थो विप्रतिषेधेन । षष्ठीसमासस्याभावादुपपदसमासो भविष्यति" इति भाष्यमेव सिद्धान्त्युक्तिः । तस्यैव युक्तत्वादिति भावः ॥ ५२ ॥

नन्वेवं "पुंयोगा"दिति सूत्रस्थस्य "गोपालिकादीनां प्रतिषेध" इति वार्तिकस्योदाहरणे गोपालिकेत्यादौ गोः पालक इति सुबन्तेन समासे गोपालकस्य स्त्रीत्यर्थे

नन्वञ्चग्रहणाद्धातोरुगित्त्वकृतकार्यमञ्चतेरेव ।
इति नियमेनोगिदचामित्यत्राधातुपदमफलम् ॥ ५४ ॥

अत आह—

## साम्प्रतिकाभावे भूतपूर्वगतिः ॥ ७६ ॥

कार्यप्रवृत्तिकाले शास्त्रोदितधर्मविरहेऽपि ।
वचनबलेन विधिः स्यात्प्राक्तनधर्माश्रयेणापि ॥ ५५ ॥
तेनाधातुपदबलाद्धातुत्वं भूतपूर्वमादाय ।
गोमत्यतेः क्विपि कृते गोमानित्यत्र नुम् सिद्धः ॥ ५६ ॥

---

टापि तस्यान्तर्वर्तिसुपः परत्वात्प्रत्ययस्थादित्यकारस्येत्वं न स्यात् । तत्राह—गोपालिकादीति । गां पालयतीति गोपाल इति कर्मण्यण् । तदन्ताद्गोपालशब्दात्स्वार्थिके कन्प्रत्यये ततष्टापि, आपः सुपः परत्वाभावादित्यप्रवृत्तिरव्याहता । अतस्तेन नागेशमतसमर्थनं न युक्तमिति भावः ॥ ५३ ॥

गतिकारकशब्दाभ्यां तत्सम्बन्धिनो धातोः स्मरणादाह—नन्विति । उगिदचामिति सूत्रे उगित्पदेनाञ्चुधातोरपि ग्रहणात्तस्य नुमि सिद्धे, अञ्ग्रहणं, धातोश्चेदुगित्त्वप्रयुक्तकार्यं भवति तर्हि अञ्चतेरेवेति नियमार्थम् । तेन नियमेनैवाञ्चत्यतिरिक्तधातुव्यावृत्तेस्तत्राधातुपदं व्यर्थमित्याशङ्कायां तत्सार्थक्योपपादनार्थं परिभाषामाहेत्यर्थः । न चाञ्चतेश्चेदुगित्कार्यं तर्हि नलोपिन एवेति नियमाङ्गीकारेणाधातुपदवैयर्थ्यं नेति वाच्यम् । सनकारस्याञ्चतेर्नुमि सत्यपि वर्णग्रहणे जातिग्रहणान्नश्चापदान्तस्येत्यनेन द्वयोरपि नकारयोरनुस्वारद्वये श्रवणे विशेषाभावात्, नपुंसकस्य झलच इत्यस्माज्झलच इत्यस्यानुवृत्त्याऽचः परो यो झल् तदन्तस्यैव नुम्विधानेन तत्र नुम्प्रसक्तेरभावाच्च तादृशनियमासंभवात् ॥ ५४ ॥

शास्त्रोदितेति । शास्त्रोक्तो यो निमित्तभूतो धर्मस्तस्याभावेऽपीत्यर्थः । विधिः = कार्यप्रवृत्तिः ॥ ५५ ॥

अधातुपदबलात् = अधातुग्रहणसामर्थ्यात् । गोमत्यतेरिति । गोमन्तमात्मन इच्छतीत्यर्थे सुप आत्मनः क्यजित्यनेन क्यचि गोमत्यधातोः कर्त्रर्थे क्विपि अल्लोपयलोपयोर्गोमच्छब्दः । तस्येदानीं धातुत्वेन साम्प्रतिकाधातुत्वाभावेऽपि भूतपूर्वमधातुत्वमाश्रित्य नुम् सिद्ध इत्यर्थः । इयं च नामि ( ६।४।३ ) इत्यादि सूत्रेषु भाष्ये स्पष्टा । तत्र हि आमीति न्यासे 'नित्यत्वाद्दीर्घे कृते नुड् न स्यादित्याशङ्कायां 'वचनाद्भूतपूर्वगतिर्विज्ञास्यते । ह्रस्वान्तो यो भूतपूर्व इति इत्युक्तम् ॥ ५६ ॥

ननु सर्वादीनीत्ययमन्यपदार्थे यतो बहुव्रीहिः ।
अत इतरेषां संज्ञा स्यान्न तु सर्वस्य तत आह ॥ ५७ ॥

## बहुव्रीहौ तद्गुणसंविज्ञानमपि ॥ ७७ ॥

तस्यान्यपदार्थस्य हि गुणाः प्रकारात्मका अवयवार्थाः ।
तेषां समासवाच्यार्थस्य विशेष्येऽन्वयित्वमित्यर्थः ॥ ५८ ॥

अपिना चातद्गुणसंविज्ञानमपीष्यते बहुव्रीहौ ।
तत्रावयवार्थानामुपलक्षणतैव विज्ञेया ॥ ५९ ॥

यत्र ह्यन्यपदार्थः समवाये नास्ति संबद्धः ।
अथवा संयोगेन प्रायस्तत्राद्यविज्ञानम् ॥ ६० ॥

समवायेन यथाऽऽनय पिङ्गाक्षं लम्बकर्णमिति ।
संयोगेन यथाऽस्मिन् विप्राः प्रचरन्ति लोहितोष्णीषाः ॥ ६१ ॥

---

उगिदचामित्यत्रोगित्पदस्य बहुव्रीहित्वात्तत्प्रसङ्गेनाह—नन्विति । 'सर्वादीनि सर्वनामानि' इति सूत्रे 'सर्वादीनि' इत्यत्र सर्वादिशब्दः सर्व आदिर्येषां तानीत्यन्यपदार्थप्रतिपादकबहुव्रीहिसमाससंज्ञोऽस्ति । अतः सर्वशब्दभिन्नानां विश्वादिशब्दानां सर्वनामसंज्ञा स्यान्न तु सर्वशब्दस्य तस्यान्यपदार्थोपलक्षणत्वेनैवोपयोगादिति भावः ॥ ५७ ॥

तद्गुणसंविज्ञानमित्यस्यार्थमाह—**तस्येत्यादिना** । अवयवार्थाः = बहुव्रीहिघटकपदार्थाः तेषां; समासबोध्यो यः प्रधानीभूतोऽर्थस्तं प्रति यो विशेष्यभूतोऽर्थस्तदान्वयित्वं तद्गुणसंविज्ञानमित्यर्थः ॥ ५८ ॥

**उपलक्षणतैवेति** । अन्यपदार्थपरिचयमात्रतात्पर्यकत्वेन तेषां विशेषणत्वाभावात्समासार्थविशेष्येऽनन्वयित्वमिति भावः ॥ ५९ ॥

उभयोर्विषयव्यवस्थामाह—**यत्रेत्यादिना** । समवायेन = समवायसंबन्धेन । **आद्यविज्ञानम्** = तद्गुणसंविज्ञानम् ॥ ६० ॥

क्रमेणोदाहरति–समवायेनेति । पिङ्गाक्षमानय, लम्बकर्णमानयेत्यादौ, बहुव्रीहिबोध्यस्यान्यपदार्थस्य मनुष्यविशेषस्य पशुविशेषस्य वा, अवयविरूपत्वेन स्वावयवेषु समवायसंबन्धेन संबद्धत्वात्तद्गुणसंविज्ञानम् । तेन समासान्तर्वर्तिपदार्थानामक्षिकर्णादीनामपि समासार्थं प्रति विशेष्यभूतायामानयनक्रियायामन्वयो भवति **संयोगेनेति** । श्येनयागप्रकरणे

उक्तेतरसम्बन्धे भवति प्रायो द्वितीयविज्ञानम् ।
आनय दृष्टसमुद्रं चित्रगुमित्यादिकेषु यथा ॥ ६२ ॥
सर्वादीनीत्यत्रादिपदं प्रथमांशवाच्यतश्चाद्यम् ।
जक्षित्यादय इह तत् पूर्वार्थमतोऽन्त्यविज्ञानम् ॥ ६३ ॥
प्रायोक्त्या सति तादृशसंबन्धेऽप्यन्वयो न भुक्त्यादौ ।
संबन्धान्तरसत्त्वेऽप्यस्ति यथा देहि गां तरुणवत्साम् ॥ ६४ ॥

---

लोहितोष्णीषा ऋत्विजः प्रचरन्तीत्यादिवाक्यानि सन्ति । तत्रान्यपदार्थस्य ऋत्विग्रूपस्योष्णीषेण संयोगसंबन्धसत्त्वात्तद्गुणसंविज्ञानम्, ऋत्विग्भिः सहोष्णीषाणामपि प्रचरणेऽन्वयादिति भावः ॥ ६१ ॥

उक्तेतरेति । संयोगसमवायभिन्नसंबन्धेन संबन्धिन्यन्यपदार्थे, अतद्गुणसंविज्ञानम् । यथा दृष्टसमुद्रमानय, चित्रगुमानयेत्यादौ । अत्राद्ये विषयविषयिभावः संबन्धः । द्वितीये च स्वस्वामिभावः । तेन समुद्रस्य गवां चानयनेऽन्वयो न भवतीत्यर्थः ॥ ६२ ॥

एवं लौकिकोदाहरणेषु व्यवस्थां प्रदर्श्य प्रकृते शास्त्रीयोदाहरणे तामाह—**सर्वादीनीति** । अत्रादिशब्दस्य प्रथमावयववाचित्वात्समवायसंबन्धेनान्यपदार्थः सर्वविश्वेत्यादिपञ्चत्रिंशच्छब्दसमुदायरूपः संबद्धस्तस्मादाद्यम् = तद्गुणसंविज्ञानं भवति । तेन सर्वशब्दस्यापि सर्वनामपदेऽभेदसंबन्धेनान्वयो भवति ततश्च तस्यापि सर्वनामसंज्ञा सिध्यति । अतद्गुणसंविज्ञानोदाहरणमाह—**जक्षित्यादय इति** । अत्र जक्ष् इति पृथक् पदम् । तदुत्तरम्, इत्यादय इति पदम् । इतिशब्देन जक्षधातुः परामृश्यते । आदिपदमत्र पूर्ववाचकं, तेन निरूप्यनिरूपकभावसंबन्धसत्त्वादतद्गुणसंविज्ञानम् । तस्मात्षट्स्वन्तर्भूयजक्षधातोरभ्यस्तसंज्ञायां नान्वयः, किन्तु जक्ष् धातुस्तदुत्तरवर्तिनोऽन्ये जागृप्रभृतयः षड्धातवश्चेति सप्ताभ्यस्तसंज्ञा इत्यर्थो लभ्यते ॥ ६३ ॥

उभयत्रापि प्राय इत्युक्तं तत्फलमाह—**प्रायोक्त्येति** । **तादृशसंबन्धेऽपि** = संयोगसमवायान्यतरसंबन्धेऽपि, भुक्त्यादौ—। लम्बकर्णो भोज्यताम्, लोहितोष्णीषा ऋत्विजो बोध्यन्तामित्यादौ भोजनबोधनादिक्रियासु कर्णोष्णीषादेरन्वयो न संभवत्यतस्तत्रातद्गुणसंविज्ञानमेवेति भावः । **सम्बन्धान्तरेति** । संयोगसमवायभिन्नसंबन्धेऽपि समासार्थविशेष्यान्वयिन्यन्वयोऽस्ति = भवतीत्यर्थः यथा तरुणवत्सां गां देहीत्यत्र जन्यजनकभावसंबन्धसत्त्वेऽपि गवा सह वत्सस्य दानेऽन्वयो भवति । एवं दृढसेनो राजा युध्यत इत्यादौ राज्ञा सह सेनाया अपि युद्धक्रियायामन्वयः ॥ ६४ ॥

अन्तर्वर्तिपदार्थान्वययोग्यविशेष्यसन्निधौ तेषाम् ।
तत्र विशेषणता स्यादुपलक्षणताऽन्यथेति निष्कर्षः ॥ ६५ ॥

स्यान्नतु वदः सुपि क्यप् चेति चकारानुकृष्टस्य ।
यत्प्रत्ययस्य भुव इत्यत्राप्यनुवृत्तिरत आह ॥ ६६ ॥

## चानुकृष्टं नोत्तरत्र ॥ ७८ ॥

पूर्वस्मादनुवृत्ते णमुलि पुनश्चाव्ययेऽयथेत्यत्र ।
णमुलुक्तिलिङ्गमिह त्वाचेत्येवान्यथा तु वदेत् ॥ ६७ ॥

अस्यां तु बोधितायां णमुलः खलु चानुकृष्टस्य ।
न स्यादुत्तरसूत्रेष्वनुवृत्तिरतस्तदर्था सा ॥ ६८ ॥

इदमनियतं तृतीया च होरिह हि चानुकृष्टाऽपि ।
अनुवर्तते द्वितीयाऽन्तरान्तरेणेति सूत्रेऽस्मिन् ॥ ६९ ॥

---

निष्कर्षमाह—अन्तर्वर्तीति । बहुव्रीहिसमासान्तर्वर्तीत्यर्थः । तेषाम् = बहुव्रीह्यन्तर्वर्तिपदार्थानाम् । तत्र = अन्यपदार्थे विशेषणता । एवं च तत्तद्विशेषणविशिष्टस्यैवान्यपदार्थस्य विशेष्येऽन्वयः । अन्यथा— । उक्तविधविशेष्यासन्निधाने, उपलक्षणता । एवं च तत्र केवलस्यैव विशेष्येऽन्वय इति भावः ॥ ६५ ॥

पूर्वपरिभाषायां समुच्चयार्थकापिशब्दोपादानात्तत्समानार्थकचशब्दघटितत्वसाधर्म्येणोपस्थितां चानुकृष्टमिति परिभाषामवतारयति—स्यादिति । भुव इत्यत्र = 'भुवो भावे' इति सूत्रे ॥ ६६ ॥

पूर्वस्मात् = 'स्वादुमिणमुल्' इति सूत्रात् । अव्यये यथेत्यत्र = 'अव्ययेऽयथाभिप्रेताख्याने कृञः क्त्वाणमुलौ' इति सूत्रे । णमुलुक्तिः = णमुल्ग्रहणम् । अन्यथात्विति । प्रकृतपरिभाषाऽभावे तु तत्र क्त्वा चेत्येव वदेत्, तावतैव णमुलनुकर्षसंभवात् । एवं च तत्र णमुल्ग्रहणं व्यर्थं सदस्या ज्ञापकमिति भावः ॥ ६७ ॥

ज्ञापनोत्तरं चारितार्थ्यमाह—अस्यां त्विति । उत्तरसूत्रेषु = तिर्यच्यपवर्गे इत्यादिषु । तदर्था = उत्तरसूत्रेषूभयोरनुवृत्त्यर्था सा णमुलुक्तिः ॥ ६८ ॥

इदमिति—एतद्वचनमनित्यम् । अत एव "तृतीया च होश्छन्दसि" ( २।३।३ ) इति सूत्रे च शब्देन कर्मणि द्वितीया ( २।३।२ ) इति सूत्रादनुकृष्टाऽपि द्वितीया =

तत्र व्यवस्थितिरियं यश्चोऽस्ति व्यवहितेऽनुवर्त्ययुतात् ।
तत्रेयं यस्तु तदव्यवहितसूत्रेऽस्ति तत्र नैवेयम् ॥ ७० ॥
अनुवृत्त्यर्थसकलचप्रत्याख्यानं तु भाष्योक्तम् ।
अव्यवहितविषयमतो न तद्विरुद्धेयमिति बोध्यम् ॥ ७१ ॥
अनुदात्तादेश्चान्तोदात्तान्नु यद्विधीयते कार्यम् ।
तच्च हलादिहलन्तान्नस्याद्धल्षु स्वराभावात् ॥ ७२ ॥

द्वितीयेति पदम्, "अन्तरान्तरेण युक्ते" (२।३।४) इत्यस्मिन्सूत्रेऽनुवर्तत इत्यर्थः। न च तत्र विधेयाश्रवणादाकाङ्क्षापूर्तये द्वितीयासंबन्ध आवश्यक इति नैतदनित्यत्वफलमिति वाच्यम्। विधेयाकाङ्क्षायास्तृतीयासंबन्धेनापि पूर्तिसम्भवात्। तत्र तृतीयापदानुवृत्तौ 'अपवर्गे तृतीया' (२।३।६) इत्यत्र तृतीयाग्रहणवैयर्थ्यापत्तिरित्युच्यते चेत्तर्हि तेन अन्तरान्तरेणेत्यत्र द्वितीयासंबन्ध एव भवतीति निश्चयात्तस्य चैतदनित्यत्वमन्तराऽनुपपत्तेस्तदेवानित्यत्वज्ञापकमवेहि। अत एव षष्ठी चानादर इत्यत्र चकारेणानुकृष्टायाः सप्तम्याः स्वामीश्वरेति सूत्रे संबन्धो भवति ॥ ६९ ॥

अनित्यत्वेनास्याः क्वचित्प्रवृत्तिः क्वचित्तु न। ते च प्रवृत्त्यप्रवृत्ती व्यवस्थिते इत्याह—तत्रेति। यश्चकारोऽनुवर्त्यपदघटितसूत्रापेक्षया व्यवहितसूत्रस्थस्तत्रेयं प्रवर्तते। यस्तु तादृशसूत्राव्यवहितसूत्रस्थस्तत्र नैव प्रवर्ततेऽर्थात्तत्र चानुकृष्टस्याप्युत्तरत्र संबन्धो भवतीति भावः ॥ ७० ॥

'लुटि च क्लृपः (१।३।९३) इति सूत्रस्थेनानुवृत्त्यर्थसकलचकारप्रत्याख्यानेन विरुद्धेयम्' परिभाषेन्दुशेखरोक्तोऽस्या भाष्यविरोधोऽप्युक्तव्यवस्थया परिहृत इत्याह—अनुवृत्त्यर्थेति। अनुवर्त्यघटितसूत्राव्यवहितसूत्रस्थचकाराणामेव प्रत्याख्यानं भाष्यकृदभिप्रेतम्। लुटि च क्लृप इति सूत्रे भाष्ये वृद्भ्यः स्यसनोः (१।३।९२) इत्यस्मात्स्यसनोरनुवृत्त्यर्थं लुटि च क्लृपः (१।३।९३) इति सूत्रे यदि चकारः क्रियते, तर्हि वा क्यषः (१।३।९०) इति सूत्राद्वापदस्य द्युद्भ्यो लुङि (१।३।९१) इति सूत्रेऽनुवृत्त्यर्थमपि चकारः कर्तव्य इत्यर्थकमुक्त्वा 'अथेदानीमन्तरेणापि चकारमनुवृत्तिर्भवति। इहापि नार्थश्चकारेण। एवं सर्वे चकाराः प्रत्याख्यायन्ते' इत्युक्त्याऽव्यवहितोत्तरसूत्रस्थचकारस्यैव वैयर्थ्यप्रदर्शनपूर्वकं प्रत्याख्यानप्रतिपादनात् तादृशस्थलेष्वेव स्वरितत्वेन चकारमन्तराऽप्यनुवृत्तिरिति तात्पर्यमध्यवसीयते। यत्र त्वनेकसूत्रव्यवहितस्यानुवृत्तिरिष्टा तत्र चकारमन्तरा तात्पर्यस्य दुर्ग्रहत्वात्तादृशचकारप्रत्याख्याने न तात्पर्यम्। तेष्वेव चेयं प्रवर्तत इति, न भाष्यविरोध इति भावः ॥ ७१ ॥

नञ्घटितपरिभाषाप्रस्तावादाह—अनुदात्तादेरिति। 'अनुदात्तादेरञ्' इति समूहार्थे विधीयमानोऽञ्प्रत्ययः कापोतमायूरमित्यादौ न स्यात्। हलादित्वेनानुदात्तादित्वा-

अत आह—

## स्वरविधौ व्यञ्जनमविद्यमानवत् ॥ ७१ ॥

स्वरभेदावच्छिन्नोद्देश्यककार्ये विधातव्ये ।
व्यवधानकरं व्यञ्जनमसत्समं वेद्यमित्यर्थः ॥ ७३ ॥
नोत्तरपद इति सूत्रे पृथिवीरुद्रादिपर्युदासवचः ।
ज्ञापकमस्यास्तेषु हि न निषेधस्यान्यथाप्रसक्तिरिति ॥ ७४ ॥
स्वरकर्मके विधौ न प्रवर्तते किन्त्वियं स्वरोद्देश्ये ।
अत एवाजादी इति सार्थकमच इत्यपि स्वरविधाने ॥ ७५ ॥

---

भावात् । 'अन्तोदात्तादुत्तरपदादन्यतरस्यामनित्यसमासे' इति तृतीयादिविभक्तेर्वैकल्पिकोदात्तत्वं परमवाचेत्यादौ न स्यात् । हलन्तत्वेनोत्तरपदस्यान्तोदात्तत्वाभावादित्यर्थः । हल्सु स्वराभावात् । स्वरस्योदात्तत्वादेरज्धर्मत्वादिति भावः ॥ ७२ ॥

धर्मिग्राहकमानात्स्वरविधावित्यस्य स्वरोद्देश्यके विधावित्यर्थो, न तु स्वरकर्मके विधाविति तदाह—**स्वरभेदेति** । स्वरत्वव्याप्यधर्मघटितधर्मावच्छिन्नोद्देश्यताक इत्यर्थः । **असत्समम्** = अविद्यमानसदृशम् ॥ ७३ ॥

नोत्तरपद इति । देवताद्वन्द्वे चेत्यनेन विहितस्योभयपदप्रकृतिस्वरस्य निषेधकं नोत्तरपदेऽनुदात्तादावपृथिवीरुद्रपूषमन्थिष्विति सूत्रं तत्र, द्यावापृथिवी इत्यादौ निषेधाप्रवृत्त्यर्थमपृथिवीत्यादि पर्युदासवचनमस्या ज्ञापकम् । तेष्विति । अस्या अभावे पृथिवीत्यादेर्हलादित्वेनोक्तनिषेधप्रसक्त्यभावादित्यर्थः ॥ ७४ ॥

स्वरोद्देश्यकविधावेवास्याः प्रवृत्तिरित्यत्र मानमाह—**स्वरकर्मक इत्यादिना** । अजादी इति । 'शतुरनुमो नद्यजादी' । अनुम् यः शता तदन्तादन्तोदात्तात्परा नदी अजादिश्च शसादिविभक्तिरुदात्ता स्यात् । अत्र अजादी इति विभक्तेरजादित्वविशेषणम्; 'अचः कर्तृयकि ।' उपदेशेऽजन्तानां कर्तृयकि परे आदिरुदात्तो वा । अत्र अच इति धातुविशेषणं चोक्तव्यवस्थाऽऽश्रयणादेव सार्थकम् । स्वरकर्मकविधानेऽप्यस्याः प्रवृत्तौ तु तुदद्भ्यामित्यादौ विभक्तिस्थव्यञ्जनस्यानया परिभाषयाऽविद्यमानवद्भावे अजादित्वविशेषणं व्यावर्त्याभावाद्व्यर्थं स्यात् । एवं भिद्यत इत्यादौ हलन्तधातुव्यावर्तकस्याच इत्यस्यापि वैयर्थ्यं ज्ञेयम् । न च शतुरनुमो नद्यजादी इत्यत्रान्तोदात्तादित्यनुवृत्तेस्तस्यापि स्वरोद्देश्यकत्वेनास्याः प्रवृत्तिः स्यादेवेत्यजादिग्रहणसार्थक्यं दुरुपपादमिति वाच्यम् । स्वरत्वव्याप्यधर्मघटितान्तोदात्तत्वादिधर्मबुद्धौ व्यञ्जनं प्रतिबन्धकं न

तेनान्तोऽवत्या इति राजवतीत्यत्र नोदात्तः ।
तत्र हि नलोपशास्त्रासिद्धत्वेनान्वती - सत्त्वात् ॥ ७६ ॥
एवमुदश्वित्वानित्यत्र तकारव्यवहितत्वात् ।
ह्रस्वात्परस्य मतुपो विहितं न भवत्युदात्तत्वम् ॥ ७७ ॥
स्वरयुक्ताच्सान्निध्याज्जपाकुसुमरञ्जितस्फटिकसदृशम् ।
व्यञ्जनमप्याभाति स्वरवदतः स्वरकृतो विधिः सुलभः ॥ ७८ ॥
इत्थमनावश्यकता प्रदर्शिता कैयटेनास्याः ।
तदिदं ध्वनितं चोच्चैरुदात्त इत्यत्र भाष्येऽपि ॥ ७९ ॥

---

भवतीत्यत्रैव परिभाषातात्पर्यादनया तुदद्भ्यामित्यादौ व्यञ्जनस्य दकारान्तेऽन्तोदात्तत्व-बुद्ध्यप्रतिबन्धकत्वेऽपि भ्यामादावजादित्वबुद्ध्यप्रतिबन्धकत्वे मानाभावात्तद्व्यावृत्त्यर्थ-कतया तस्य सार्थक्यात् ॥ ७५ ॥

उक्तव्यवस्थाफलमाह—तेनेति । 'अन्तोऽवत्याः' इत्येतत्सूत्रविहितोऽवतीशब्दस्यान्त उदात्तो वेत्रवतीत्यत्रेव राजवतीत्यत्र प्राप्तः । किन्तु नलोपः सुप्स्वरेत्यनेन स्वरविधौ नलोपस्यासिद्धत्वेनान्वतीशब्दत्वबुद्ध्या न भवति । स्वरकर्मके विधौ व्यञ्जनस्याविद्यमान-वद्भावाश्रयणे तु स दुर्वारः स्यादिति भावः ॥ ७६ ॥

ह्रस्वात्परस्येति । 'ह्रस्वनुड्भ्यां मतुप्' इति ह्रस्वान्तादन्तोदात्तान्नुटश्च परस्य मतुप उदात्तत्वम्, उदश्वित्वान् मरुत्वान् इत्यादौ तकारव्यवधानेन ह्रस्वान्तात्परत्वाभावान्न भवति अत्राप्युक्तरीत्याऽनया परिभाषया तकारस्योदश्विच्छब्देऽन्तोदात्तत्वबुद्ध्यप्रतिबन्ध-कत्वेऽपि ह्रस्वान्तत्वबुद्धिप्रतिबन्धकत्वं भवत्येवेति बोध्यम् ॥ ७७ ॥

'उच्चैरुदात्तः' (१।२।२९) इति सूत्रे कैयटेन त्वस्या अनावश्यकत्वं दर्शितमित्याह—स्वरयुक्तेति । स्वरवत् = स्वरविशिष्टम् । स्वरकृतः = अनुदात्तादित्वादिप्रयुक्तः ॥७८॥

कैयटेनेति । उक्त सूत्रे 'अथ प्रथमानिर्दिष्टमज्ग्रहणमनुवर्तते । उताहो न' इति भाष्यव्याख्यायां 'ननु को विशेषः । यावता यत्र स्वरो विधीयते तत्र व्यञ्जनस्या-विद्यमानत्वादच एव भविष्यति । अनुदात्तादेरञित्यादावनुवादेऽपि न दोषः । स्वत एव हलोऽनुदात्तत्वं भवतु अजुपरागवशाद्वा तदनुवादेन कार्यविधाने न कश्चिद्विशेषः । एवं तर्हि न्यायव्युत्पादनार्थं एवायं विचारः ।' इति कैयटेनोक्तम् । तत्रानुदात्तादेरञित्यादावनुवादेऽपि न दोष इत्यादिना ग्रन्थेन प्रकृतपरिभाषाया अनावश्य-कत्वप्रदर्शनं स्पष्टम् । ननूदात्तत्वादिविशिष्टाजुपरागवशाद् व्यञ्जनस्योदात्तादिवदवभासेऽपि

नन्वेवमपि समासान्तोदात्तत्वं हलन्तेषु ।
राजदृषत्प्रभृतिषु नाकारस्यापि तु भवेद्दकारस्य ॥ ८० ॥

अत आह—

## हल्स्वरप्राप्तौ व्यञ्जनमविद्यमानवत् ॥ ८० ॥

नौप्रतिषेधश्च यतोऽनाव इति ज्ञापयत्येनाम् ।
नैवाद्युदात्ततायाः प्राप्तिरितरथा नकारादेः ॥ ८१ ॥
आदिर्नकार एवोदात्तगुणऌकाररूपतां यातु ।
मैवं निमित्तभूतं द्व्यच्कत्वं तत्र सति नश्येत् ॥ ८२ ॥

---

वस्तुतस्तस्योदात्तत्वाद्यभावेन तदादाय शास्त्रप्रवृत्तिर्न युक्ताऽत आह—ध्वनितमिति । उच्चैरुदात्त इति सूत्रे भाष्येऽपि ध्वनितमेतत् । तत्र हि 'नैते व्यञ्जनस्य गुणाः, किन्त्वच एव तत्सामीप्यात्तु व्यञ्जनमपि तद्गुणमुपलभ्यते । तद्यथा द्वयोरक्तयोर्वस्त्रयोर्मध्ये शुक्लं वस्त्रं तद्गुणमुपलभ्यते' इत्यादिना उदात्तत्वादीनामज्धर्मत्वं व्यञ्जनेषु तु सामीप्यात्तदवभासमात्रमिति व्यवस्थाप्य स्वरोद्देश्यकस्यानुदात्तादेरजित्यादेर्व्यञ्जनादेर्व्यञ्जनाच्च प्रवृत्त्यर्थं न कश्चिदुपायः प्रदर्शितस्तेनानुदात्तत्वाद्यवभासमात्रमादायाप्युक्तशास्त्रप्रवृत्तिः कर्तव्येति सूचितम् । अतो भाष्यानुमतत्वात्कैयटोक्तिरप्यादरणीयैवेति भावः । इयमग्रिमपरिभाषा चेति द्वे अपि 'समासस्य' ( ६।१।२२३ ) इति सूत्रे भाष्ये स्पष्टे ॥ ७९ ॥

**एवमपीति।** पूर्वपरिभाषया स्वरोद्देश्यकविधेरव्याप्तिवारणेऽपि स्वरकर्मकविधेरव्याप्तिरस्त्येवेति भावः। **समासान्तोदात्तत्वम्**—"समासस्य" इति सूत्रविहितं समासान्त्यवर्णस्योदात्तत्वं राजदृषदित्यादौ षकारोत्तराकारस्यान्त्यत्वाभावान्न स्यात् । किन्तु दकारस्य स्थानेऽन्तरतमत्वादुदात्त ऌकारः स्यादिति भावः ॥ ८० ॥

**यतोऽनावः ।** यत्प्रत्ययान्तस्य द्व्यच आदिरुदात्तो नावं विनेति सूत्रार्थः । **नैवेति ।** नाव्यमित्यत्रादेर्नकारस्य स्वरायोग्यत्वास्वरयोग्यस्य चाकारस्यादित्वाभावात्स प्रतिषेधो व्यर्थः सन्नस्या ज्ञापक इति भावः ॥ ८१ ॥

ज्ञापकत्वासंभवमाशङ्कते—**आदिरिति ।** व्यञ्जनस्योदात्तत्वासंभवेऽप्युदात्तत्वगुणविशिष्टोऽन्तरतमोऽन्त्, ऌकार एव नकारस्य स्थाने आदेशो भवतु तथा च न प्रतिषेधवैयर्थ्यमिति भावः । परिहरति—**मैवमिति ।** नकारस्य स्थाने ऌकारे सति अचां त्रित्वेन आद्युदात्तविधेर्निमित्तभूतं द्व्यच्कत्वम् अज्निष्ठं द्वित्वं नश्येत् । उत्तरसंख्यया पूर्वसंख्याया बाधात् । एवं चोपजीव्यविरोधस्यान्याय्यत्वात्संनिपातपरिभा-

इत्युपजीव्यविरोधादनुचितमत्राद्युदात्तत्वम् ।
अत उक्तनिषेधस्य प्रकृतार्थज्ञापकत्वमुपपन्नम् ॥८३॥
पूरणगुणेति तव्यत्यपि दिव औत्स्यान्नतु क्विन्तदिवेः ।
ण्यत्यपि च यतोऽनावः श्वयतेरश्वङ्यपीत्यतश्चाह ॥८४॥

**निरनुबन्धकग्रहणे न सानुबन्धकस्य ॥ ८१ ॥**

**तदनुबन्धकग्रहणे नातदनुबन्धकस्य ॥ ८२ ॥**

विहितं हि वामदेवादित्यस्मिन् ङ्यड्ड्यतोर्डित्वम् ।
ययतोश्चेत्यत्र तयोरग्रहणार्थं तदेतयोर्लिङ्गम् ॥८५॥

---

यया नाव्यमित्यत्र तत्सूत्रप्रवृत्तिर्न स्यात् तस्मान्नौशब्दप्रतिषेधस्य प्रकृतपरिभाषाज्ञापकत्वं युक्तमेवेत्यर्थः। ननु सन्निपातलक्षणो विधिः स्वनिमित्तसन्निपातविघातकस्य स्वातिरिक्तस्य स्वयं निमित्तं न भवतीत्येव सन्निपातपरिभाषार्थः। अत एवादन्ताङ्ङ्भ्यां प्रत्ययसन्निपातेन जातस्य सुपि चेति दीर्घस्य ह्रस्वत्वनिवृत्तिद्वारोक्तसंनिपातविघातकत्वेऽपि न दोषः। एवं चात्र स्वस्यैव स्वनिमित्तविघातकत्वेन तत्परिभाषाप्रवर्तनमयुक्तमिति चेत्। अत्रोच्यते—यस्य विधेः स्वनिमित्तविनाशं विना चारितार्थ्यमेव न संभवति तस्य तन्नाशकत्वमवश्यमङ्गीकर्तव्यमित्येतन्मूलकमेव तत्र स्वातिरिक्तस्येत्युच्यते। प्रकृते स्वजादिशब्दे उक्तविधेश्चारितार्थ्यादुपजीव्यविरोधस्यायुक्तत्वमिति न्यायमूलकत्वात्तया परिभाषया स्वेन स्वनिमित्तसन्निपातविघातो नेत्यर्थस्यैव बोधनीयत्वात्तत्प्रवृत्तिरुचितैव ये तु पूर्वपरसंबन्ध एव सन्निपातो न तु विशेष्यविशेषणसंबन्धोऽपीत्यभ्युपगच्छन्ति तन्मते प्रकृते तादृशसंबन्धाभावात्सन्निपातपरिभाषाया अप्रवृत्तावपि, स्वरविधायकेन विद्यमानस्याच उदात्तत्वादिगुणविधानमेव क्रियत इति पक्षावलम्बनेन नकारस्योदात्तलकारादेशापत्त्यभावान्नौप्रतिषेधस्य भाष्योक्ता ज्ञापकतोपपादनीया ॥ ८२, ८३ ॥

नन्वघटितप्रस्तावादेवाह—पूरणगुणेति'। 'पूरणगुणसुहितार्थ' इति सूत्रविहितः षष्ठीसमासनिषेधः स्वकर्तव्यमित्यादौ तव्यत्प्रत्ययान्तेऽपि स्यात्। लक्ष्ये तकारस्याश्रवणेन तस्यापि तव्यरूपत्वादिति भावः। एवमन्यत्रापि शङ्काबीजं बोध्यम्। दिव औदिति। अत्राव्युत्पन्नस्य निरनुबन्धकस्य दिविति प्रातिपदिकस्य ग्रहणेऽपि सानुबन्धकदिवुधातोः क्विपि निष्पन्नस्य दिव्शब्दस्यौत् स्यात्। यतो नाव इत्याद्युदात्तविधिर्यत्प्रत्ययान्त इव ण्यत्प्रत्ययान्तेऽपि प्रवर्तेत। श्वयतेरइत्यङ्प्रत्यये परे विहितोऽकारादेशश्चङ्यपि स्यादित्यर्थः ॥ ८४ ॥

ज्ञापकमाह—विहितं हीति। 'वामदेवाड्ड्यड्ड्यौ' इति सूत्रे वामदेवेन दृष्टं

तन्मात्रेतो ग्रहणे स च तद्भिन्नश्च यत्रेतौ ।
तस्य ग्रहणं नेति द्वितीयवचनस्य वेद्योऽर्थः ॥८६॥
सामान्यापेक्षमिदं लिङ्गमतः प्रत्यये च तद्भिन्ने ।
सञ्चरत इमे भाष्ये दिव औत्सूत्रे प्रवर्तिता ह्याद्या ॥ ८७ ॥
वर्णग्रहणे नैतत्प्रवृत्तिरित्यौङ आप इति सूत्रे ।
भाष्ये स्पष्टमतश्चाधीत इहेङ्यति सवर्णदीर्घत्वम् ॥८८॥

---

साम वामदेव्यमित्येतत्सिद्धये विहितयोर्ड्यड्यतोर्डित्वं हि न टिलोपार्थम् । यस्येति चेत्यकारलोपेनैव सिद्धेः । अतस्तद् 'ययतोश्चातदर्थे' इत्यत्र तयोरग्रहणार्थम् । प्रकृतपरिभाषाद्वयाभावे लक्ष्यस्थं रूपमादाय सूत्रप्रवृत्तौ यशब्देन ड्यस्य यच्छब्देन च ड्यतो ग्रहणं दुर्वारमिति तयोर्डित्वं व्यर्थं सत्क्रमेण परिभाषाद्वयं ज्ञापयति । ययतोश्चेत्यनेन गुणप्रतिषेधविषयान्नञः परस्य तद्धितसंज्ञकययदन्तस्योत्तरपदस्यान्त उदात्तो विधीयते तेन पाशानां समूहः पाश्या, न पाश्या अपाश्येत्यादौ 'तत्पुरुषे तुल्यार्थ इति अव्ययपूर्वपदप्रकृतिस्वरं बाधित्वाऽन्तोदात्तो भवति । अवामदेव्यमित्यत्र तु प्रकृतपरिभाषाभ्यां ड्यड्यतोर्ग्रहणवारणादव्ययपूर्वपदप्रकृतिस्वर एवेति बोध्यम् ॥ ८५ ॥

द्वितीयपरिभाषार्थस्यास्पष्टत्वादाह—तन्मात्रेत इति । सर्वं वाक्यं सावधारणमिति न्यायेन तदनुबन्धकेत्यस्य तन्मात्रानुबन्धकेत्यर्थः । अतदनुबन्धकपदस्य, न स एवानुबन्धो यस्येति वाच्योऽर्थस्तत्फलितार्थमाह—स च तद्भिन्नश्च यत्रेताविति । इच्छब्दोऽनुबन्धपर्यायः ॥ ८६ ॥

ज्ञापकसाजात्यात्प्रत्ययग्रहण एवैतयोः प्रवृत्तिरिति भ्रमं निवारयितुमाह—सामान्यापेक्षमिति । सञ्चरतः = प्रवर्तेते । तत्र प्रमाणमाह—भाष्य इति । आद्यायाः प्रत्ययाप्रत्ययसाधारण्ये प्रमाणप्रदर्शनेनान्त्याया अपि डित्त्वरूपसमानज्ञापकज्ञाप्यत्वेन तथात्वं द्रष्टव्यम् ॥ ८७ ॥

भाष्ये स्पष्टमिति । औङ आपः (७।१।१८) इति सूत्रे भाष्ये हि—औङ् इति ङकारः प्रथमा-द्वितीया द्विवचनयोः सामान्यग्रहणार्थ इत्युक्त्वा, पक्षान्तरमुक्तम्—'अथवा वर्णग्रहणमिदं भवति । न चैतद्वर्णग्रहणेषु भवति । अननुबन्धकग्रहणे न सानुबन्धकस्येति' इति । अयं भावः—औङ इत्यत्रौकारो वर्ण एव निर्दिष्टोऽस्ति । न प्रत्ययः । ङकारस्त्वसंदेहार्थो नानुबन्धार्थः । वर्णनिर्देशे च निरनुबन्धकपरिभाषा न प्रवर्तते तेनौटोऽपि ग्रहणं सिध्यतीति । वर्णग्रहणेष्वप्रवृत्तेः फलमाह—अतश्चेति ।

येनानुबन्धवत्त्वं भवति द्व्यनुबन्धकत्वं च।
तदनुच्चारण एव प्रवृत्तिरनयोः स्वलिङ्गसाजात्यात् ॥८९॥
तस्मान्न जश्शसोरित्यत्राद्याऽतश्च तद्धितस्य शसः।
ग्रहणं स्यादिति शङ्का न विधेया शानुबन्धनिर्देशात् ॥९०॥
अन्त्याचान्यतरस्योच्चारण एवानुबन्धस्य।
तेन वनोरच सूत्रे ग्रहणं सिद्धं ङ्वनिप्क्वनिब्वनिपाम् ॥९१॥
ननु च कुटीरप्रभृतौ स्वार्थे रप्रत्ययविधानात्।
प्रकृतेर्लिङ्गवचनयोरनुवर्तनमेव युक्तमिति ॥९२॥

---

अधि इते इत्यत्र सानुबन्धके इङ्धातौ परेऽप्यकः सवर्णे दीर्घ इति दीर्घैकादेशः सिध्यतीत्यर्थः ॥ ८८ ॥

येन—। अनुबन्धेनेति शेषः। स्वलिङ्गसाजात्यात् = स्वस्वज्ञापकानुसारात्। यप्रत्ययस्य ङकारेण सानुबन्धकत्वं यत्प्रत्ययस्य च तेन द्व्यनुबन्धकत्वम्। तस्यानुबन्धस्य ययतोश्चेत्यत्रानुच्चारणादनयोः परिभाषयोः प्रवृत्तिर्भवति। एवमन्यत्रापि व्यवस्थेति भावः ॥ ८९ ॥

उक्तव्यवस्थाफलमाह—तस्मादिति। जश्शसोः शिरिति सूत्रे शकारानुबन्धस्योच्चारणान्निरनुबन्धकपरिभाषाया अप्रवृत्त्या तद्धितशस एव ग्रहणं स्यादित्याशङ्का न कर्तव्येत्यर्थः। अत्र शकारानुबन्धो नास्ति किन्तु तद्धितशसेव गृहीत इत्यपि नाशङ्क्यम्। जस्साहचर्येण विभक्तिशस एवात्र ग्रहणात् ॥ ९० ॥

अन्त्या च—। अन्त्यपरिभाषा चेत्यर्थः। ग्रहणं सिद्धमिति। वनो रचेत्यत्र वन् इति शब्दे कस्याप्यनुबन्धस्याग्रहणात्तदनुबन्धकपरिभाषाया अप्रवृत्त्या उक्तानां त्रयाणामपि ग्रहणं सिद्धमित्यर्थः ॥ ९१ ॥

पूर्वपरिभाषायास्तद्धितसम्बन्ध्यनुबन्धज्ञाप्यत्वेन तद्धितप्रसङ्गादाह—ननु चेति। ह्रस्वा कुटी कुटीरः। अत्र "कुटी शमी शुण्डाभ्यो रः" इत्यनेन स्वार्थे = ह्रस्वत्वविशिष्टकुटीरूपप्रकृत्यर्थे रप्रत्ययविधानात्प्रकृत्यर्थानतिरिक्तार्थकतया प्रकृतिगतलिङ्गसंख्यानुवर्तनमेव न्याय्यम्। तथा च 'ईषदसमाप्तौ' (५।३।६७) इति सूत्रे भाष्ये—ईषदसमाप्तेरेकत्वात्पटुकल्पौ पटुकल्पा इति द्विवचनबहुवचनयोरनुपपत्तिमाशङ्क्य 'प्रकृत्यर्थविशेषणत्वात्सिद्धम्*। सिद्धमेतत्। कथम्? नायं प्रत्ययार्थः = किन्तर्हि? प्रकृत्यर्थविशेषणमेतत्। ईषदसमाप्तौ यत्प्रातिपदिकं वर्तते तस्मात्कल्पबादयो भवन्ति। कस्मिन्नर्थे,? स्वार्थ इति।

पुंस्त्वं न युक्तमेवं नियतस्त्रीभूमवाचिनोऽप्शब्दात् ।
कल्पप्यपूकल्पमिति क्लीबैकत्वं न युक्तमत आह ॥९३॥

## क्वचित्स्वार्थिकाः प्रकृतितो लिङ्गवचनान्यतिवर्तन्ते ॥८३॥

कर्मव्यतिहारे णच् स्त्रियां प्रविहितस्ततोऽञ्विधौ स्वार्थे ।
पुनरपि णचः स्त्रियामित्युक्तं स्त्रीपदामिमां विवेदयति ॥९४॥
ननु च युवोरिति सूत्रे सुपथी नगरीत्युदाहृतं भाष्ये ।
तत्र समासान्त इनः स्त्रियामिति स्यात्कबत आह ॥९५॥

## समासान्तविधिरनित्यः ॥ ८४ ॥

अंश्वादिगणे राजञ्छब्दोऽत्र ज्ञापकोऽन्यथा तु टचि ।
चित इत्यन्तोदात्ते सिद्धे तद्व्यर्थता स्पष्टा ॥९६॥

---

स्वार्थिकाश्च प्रकृतितो लिङ्गवचनान्यनुवर्तन्ते' इत्युक्तम् । इति = अतो हेतोः । अस्याग्रिमपद्ये पुंस्त्वं न युक्तमित्यत्रान्वयः ॥ ९२ ॥

अन्यत्रापि दोषमाह—एवमिति । ईषदसमाप्ता आपः, अप्कल्पम् , इत्यत्र 'आपः स्त्रीभूम्निवार्वारि' इत्यमरोक्त्यनुसारेण नित्यस्त्रीलिङ्गबहुवचनान्तादप्शब्दात् 'ईषदसमाप्तौ कल्पब्देश्यदेशीयरः' इत्यनेन कल्पप्प्रत्यये कृते नपुंसकत्वमेकवचनान्तत्वं च न युक्तमित्यर्थः ॥ ९३ ॥

ज्ञापकमाह—कर्मव्यतिहार इत्यादिना । व्यावक्रोशी, व्यावहासीत्यादौ कर्मव्यतिहारे णच् स्त्रियामित्यनेन स्त्रीलिङ्गे भावे णच्प्रत्ययविधानात्तदुत्तरं जायमानः स्वार्थिकस्तद्धितोऽञ्प्रत्ययः उक्तन्यायात् स्त्रियमेव बोधयिष्यति । तथापि क्रियमाणं 'णचः स्त्रियामञ्' इति सूत्रे स्त्रियामिति स्त्रीपदोपादानं स्वार्थिकानां प्रकृतिलिङ्गसंख्यानुवर्तनं न सार्वत्रिकमिति ज्ञापयति । ज्ञापिते च तस्मिन् णजन्तस्य स्त्रीत्वे वृत्तावप्यञन्तं तद्भिन्नलिङ्गं मा भूदित्यर्थं तच्चरितार्थम् । इयं च 'ईषदसमाप्तौ' (५।३।६७) इति सूत्रे, 'विभाषा सुपो बहुच्' (५।३।६८) इति सूत्रे च भाष्ये स्पष्टा ॥ ९४ ॥

तद्धितप्रसङ्गादेवाह—ननु चेति । 'युवोरनाकौ' (७।१।१) इति सूत्रे भाष्ये विभक्तौ लिङ्गविशिष्टाग्रहणमित्यस्याः परिभाषायाः प्रयोजनं सुपथी इति स्त्रीलिङ्गे पथिमथीत्यात्वं नेत्युक्तम् । तत्र इनः स्त्रियामिति सूत्रेण समासान्तः कप् स्यादित्यर्थः ॥ ९५ ॥

परिभाषेन्दुशेखरोक्तं ज्ञापकमाह—अंश्वादीति । 'प्रतेरंश्वादयस्तत्पुरुषे' इति सूत्रेण प्रतिराजेत्यत्रान्तोदात्तत्वसिद्ध्यर्थमंश्वादिगणे राजन् इति शब्दः पठ्यते । तत्पाठोऽ-

अपि च द्वित्रिभ्यां पाद्दन्मूर्धस्विह हि मूर्धशब्दस्य ।
असमासान्तस्य वचो ज्ञापकमत्र प्रदर्शितं भाष्ये ॥९७॥
ननु च शतानीत्यादौ नुमि विहिते नान्तसंख्यात्वात् ।
ष्णान्ता षडिति हि षट्त्वे षड्भ्यो लुक् स्यादतश्चाह ॥९८॥

## सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्य ॥८५॥

पौर्वापर्याद्यात्मकसंबंधः सन्निपातपदबोध्यः ।
तद्धेतुको विधिस्तद्विघातकस्यानिमित्तमित्यर्थः ॥९९॥

---

स्या ज्ञापकः । एतस्या अभावे तु समासान्तविधेर्नित्यत्वे तत्र राजाहःसखिभ्यष्टजिति टचि, "चितः" = चितः सप्रकृतिकस्यान्त उदात्त इत्यनेनैवान्तोदात्तसिद्धेस्तद्वैयर्थ्यापत्तिरित्यर्थः ॥ ९६ ॥

ननु राज्ञीं प्रति गतः प्रतिराज्ञिरित्यत्र समासान्तविधौ लिङ्गविशिष्टपरिभाषाया अप्रवृत्त्या टचोऽभावाच्चित इत्यस्याप्राप्त्याऽन्तोदात्तत्वसिद्ध्यर्थं त्वेनां श्वादिगणे राजञ्छब्दपाठस्य चारितार्थ्यान्न ज्ञापकत्वमित्यरुचेर्भाष्योक्तं ज्ञापकमाह—अपि चेति । द्वित्रिभ्यां पाद्दन्मूर्धसु बहुव्रीहौ ( ६।२।१९७ ) इति सूत्रे पाद्दत् इति वत् समासान्तं विधाय मूर्धस्विति वक्तव्ये मूर्धस्विति समासान्तप्रत्ययरहितनकारान्तमूर्धशब्दनिर्देशात्समासान्तस्यानित्यत्वं ज्ञाप्यत इति तत्सूत्रे भाष्ये स्पष्टम् । एवं च द्विमूर्धा द्विमूर्ध इत्युभयरूपेऽपि बहुव्रीहावन्तोदात्तत्वं सिध्यति । बहुव्रीहिग्रहणमप्यत्र ज्ञापकम् । अन्यथा मूर्धस्विति समासान्तनिर्देशेनैव सिद्धेस्तद्व्यर्थं स्यात् । ज्ञापिते त्वस्मिन्नर्थे, अकृतसमासान्तेऽपि स्वरप्रवृत्त्यर्थं यथाश्रुतनिर्देशस्यावश्यकत्वाद् बहुव्रीहीतरसमासे स्वराप्रवृत्तये बहुव्रीहिग्रहणं चरितार्थमिति बोध्यम् ॥ ९७ ॥

नञ्पदघटितत्वसाधर्म्यात्सन्निपातपरिभाषामवतारयति— । नन्विति । षट्त्वे = शतश् इत्यस्य षट्संज्ञायाम् । न च विभक्तिसापेक्षनुमो बहिरङ्गत्वेनासिद्धत्वात्षट्संज्ञा न स्यादिति वाच्यम् । संज्ञाया विधिनिमित्तनिमित्तकत्वाङ्गीकारेण षट्संज्ञाया अपि षड्भ्यो लुगिति विधिशास्त्रापेक्षितजश्शस्सापेक्षत्वेनोभयोः साम्यात् । उपादास्तेत्यत्र मीनातिमीनोतिदीङां ल्यपि चेत्यात्वे कृते घुसंज्ञायां स्थाघ्वोरिच्चेतीत्वं प्राप्नोतीत्यपि परिभाषेन्दुशेखरेऽवतरणे उक्तम् । किन्तु "क्रन्मेजन्तः" ( १।१।३९ ) इति सूत्रे भाष्ये सन्निपातपरिभाषाप्रस्तावे "एतदपि नास्ति प्रयोजनम् । उक्तमेतत् । दीङः प्रतिषेधः स्थाघ्वोरित्वे इति" इत्युक्त्या तत्प्रयोजनस्य निरस्तत्वादत्र नोपन्यस्तम् । सन्निपातो लक्षणं निमित्तं यस्य

तेन शतानीत्यत्राजन्ताङ्गशि सन्निपातजनितो नुम् ।
तत्सन्निपातनाशकृषट्संज्ञां प्रति निमित्ततां नैति ॥१००॥
शकटावित्यादौ घेरत्वेऽदन्तान्न टाब् भवति ।
एवमियेषेत्यादौ गुणे सतीजादिगुरुमतो नैवाम् ॥१०१॥
उपजीव्यविरोधस्यान्याय्यत्वं मूलमेतस्याः ।
तेन विशेष्यविशेषणसंबंधस्यापि सन्निपातत्वम् ॥१०२॥
अत एव ग्रामणिकुलमित्यादौ क्लीबह्रस्वेऽपि ।
ह्रस्वस्य पितीतिविहितं तुग्वारणमेतया भवति ॥१०३॥
अस्ति हि तत्राजन्तप्रातिपदिकयोस्तथाविधो योगः ।
तज्जनितत्वाद्ध्रस्वोऽजन्तत्वविघातके तुकि न हेतुः ॥१०४॥

---

स सन्निपातलक्षणः । विधीयत इति विधिः कार्यम् । तं विहन्तीति तद्विघातः । तदेतत्सकलमभिप्रेत्य सन्निपातशब्दार्थकथनपूर्वकं परिभाषार्थमाह—**पौर्वापर्येति** । आदिपदेन नागेशोल्लिखितो विशेष्यविशेषणयोरभेदसंबंधोऽपि संगृह्यते । तद्धेतुकः = तन्निमित्तकः ॥ ९८, ९९ ॥

लक्ष्ये समन्वयं दर्शयति—**तेनेत्यादिना** । **नैति**—न गच्छति । षट्संज्ञाया उक्तसन्निपातविनाशकत्वं लुग्द्वारेति बोध्यम् ॥ १०० ॥

अन्यदपि भाष्योदाहृतं प्रयोजनद्वयं संगृह्णाति—**शकटावित्यादिना** । शकटौ, पद्धतावित्यादौ, 'अच्च घेः' इत्यत्वे कृते 'अजाद्यतष्टाप्' इत्यदन्तत्वप्रयुक्तष्टाब्न भवति । इयेष उवोषेत्यादौ च लघूपधगुणे कृते 'इजादेश्च गुरुमतोऽनृच्छः' इत्याम् न भवतीत्यर्थः ॥ १०१ ॥

**उपजीव्येति** । उपजीवयतीत्युपजीव्यः णिजन्ताद्बाहुलकेन कर्तरि यत् । उपकारक इत्यर्थः । तद्विरोधस्य लोकेऽप्यन्याय्यत्वं प्रसिद्धं तदेवास्या मूलं, नत्वियं ज्ञापकसिद्धा । न तिसृचतसृेति ज्ञापकसिद्धत्वाङ्गीकारे तु ज्ञापकसाजात्येन पूर्वपरसंबंध एवास्याः प्रवृत्त्यापत्तेरिति भावः । **विशेष्येति** । विशेष्यस्य विशेषणेन सह यः सम्बन्धोऽभेदरूपस्तस्यापि **सन्निपातत्वम्** = सन्निपातपदबोध्यत्वमित्यर्थः । तत्राप्युपजीव्यविरोधायुक्तत्वस्य तुल्यत्वादिति भावः ॥ १०२ ॥

**क्लीबह्रस्वेऽपीति** । ग्रामण्यः कुलं ग्रामणिकुलमिति समासे—'इको ह्रस्वोऽङ्यो गालवस्य' इत्युत्तरपदनिमित्तकह्रस्वे तु पूर्वपरसम्बन्धरूपसन्निपाताश्रयणेनैव तुग्वारण-

अर्थकृतं च बहिष्ट्वं नेति क्लीबाश्रितस्य ह्रस्वस्य ।
नासिद्धत्वं क्विश्चाजानन्तर्ये निषिद्धं तत् ॥ १०५ ॥
सर्वविधस्याश्रयणादेवास्यां सन्निपातस्य ।
वर्णाश्रय इत्यादिकवार्तिककारोक्तिरुपपन्ना ॥ १०६ ॥
दाक्षिप्रभृतावत इञ् विधेरदन्तत्वहेतुकत्वेन ।
अस्ति विशेष्यविशेषणभावो न तु पूर्वपरयोगः ॥ १०७ ॥
यत्तु तथाविध एवाश्रयणीयः सन्निपात इति मत्वा ।
भाष्ये न प्रत्ययः संनिपातलक्षण इति निगदितम् ॥ १०८ ॥

---

संभवात्क्लीबेत्युक्तम् । पृथक्पदत्वे नपुंसकलिङ्गे ह्रस्वो नपुंसके प्रादिपदिकस्येत्यनेन ह्रस्वे ग्रामणि इति शब्दे प्रत्ययलक्षणेन क्विप्परकत्वात्, ह्रस्वस्य पिति कृति तुगित्यनेन प्राप्तस्तुक्, विशेष्यविशेषणयोरभेदसम्बन्धस्यापि संन्निपातत्वाङ्गीकारेण 'ह्रस्वो नपुंसके' इति सूत्रेऽजन्तत्वस्य प्रातिपदिकविशेषणत्वेन तत्संबन्धप्रयुक्तो ह्रस्वस्तद्विघातकस्य तुकोनिमित्तं न भवति तुकि सत्यजन्तत्वस्य विघातेनाजन्तप्रातिपदिकयोरभेदसम्बन्धस्यापि विघातात् । अतस्तत्र तुङ् न भवति । एवं च विशेष्यविशेषणसम्बन्धोऽपि सन्निपात इत्यङ्गीकर्तव्यमिति भावः ॥ १०३, १०४ ॥

अन्तरङ्गपरिभाषया तु तुग्वारणमशक्यमित्याह—अर्थकृतमिति । अर्थकृतबहिरङ्गत्वस्यानाश्रयणान्नपुंसकार्थापेक्षत्वेऽपि ह्रस्वस्य तुकि कर्तव्ये बहिरङ्गासिद्धत्वं न भवति । अपि च नाजानन्तर्यपरिभाषयाऽत्र तत्=असिद्धत्वं निषिद्धमित्यर्थः ॥ १०५ ॥

विशेष्यविशेषणसंबन्धोऽपि सन्निपात इत्यत्र गमकमाह—सर्वेत्यादिना । वर्णाश्रय इति । 'कृन्मेजन्तः' ( १ । १ । ३९ ) इति सूत्रे भाष्ये संनिपातपरिभाषादोषनिरूपणोपक्रमे 'तस्य दोषो वर्णाश्रयः प्रत्ययो वर्णविचालस्य * । इति वार्तिकम् । तस्यैतस्य लक्षणस्य दोषो वर्णाश्रयः प्रत्ययो वर्णविचालस्यानिमित्तं स्यात् । क्व । अत इञ्, दाक्षिःप्लाक्षिः' इति तद्विवरणम् । सन्निपातपरिभाषाऽऽश्रयणे दाक्षिरित्यादावकारान्तत्वनिमित्तक इञ्प्रत्ययो यस्येति चेत्यकारलोपस्य निमित्तं न स्यादिति तदर्थः । तत्र चादन्तत्वप्रातिपदिकयोर्विशेष्यविशेषणभावरूप एव संबन्धोऽस्ति । न तु पूर्वपरसंबन्धरूपः । अतस्तदुक्तार्थगमकमिति भावः ॥ १०६, १०७ ॥

उक्तार्थे भाष्यविरोधं परिहरति—यत्त्वित्यादिना । तथाविध एव पूर्वपरसम्बन्धरूप एव । भाष्ये—उक्तसूत्रे भाष्ये । निगदितम्—उक्तवार्तिकस्यायुक्तत्वप्रदर्शकं वचनमुक्तमित्यर्थः ॥ १०८ ॥

तदनन्तरमङ्गाख्या तद्धनिमित्तं भवेदिति च कथितम् ।
तत्त्वेकदेशिवचनं शैवादिष्वपि तथात्वसाम्येन ॥ १०९ ॥
अङ्गाख्याया न स्याल्लोपनिमित्तत्वमनयेति ।
वर्णाश्रय इत्येवं विशेषवचनं हि न घटेत ॥ ११० ॥
इति केचिदाहुरन्ये त्वत्र प्रागुक्तभाष्यवचनबलात् ।
पूर्वोत्तरसंश्लेषात्मैवेष्टः सन्निपातोऽत्र ॥ १११ ॥
यस्मात्प्रत्ययविधिरिति सूत्रे यस्मादिति पदेन ।
यद्धर्मविशिष्टस्योद्देश्यत्वं तद्वतः परामर्शः ॥ ११२ ॥

---

तदनन्तरमिति । उक्तरीत्या वार्तिकानुपपत्त्युद्भावनानन्तरम् 'अङ्गसंज्ञा तद्धनिमित्तं स्यात्' इति कथितम् । प्रत्ययस्य स्वतः सन्निपातनिमित्तकत्वाभावेऽपि तत्प्रयुक्ताङ्गसंज्ञायाः प्रकृतिप्रत्ययसन्निपातनिमित्तकत्वसत्त्वेन सा तत्सन्निपातविघातकस्य यस्येति चेति लोपस्य निमित्तं न स्यादित्यङ्गसंज्ञाद्वारा वर्णाश्रयप्रत्ययस्थले सन्निपातपरिभाषाऽव्याप्तिरूपदूषण-प्रतिपादकं वार्तिकं युक्तमिति भाष्याशयः । तदुभयमप्येकदेशिवचनम् । तत्त्वे हेतुमाह—शैवादिष्विति । शैवो गार्ग्यो वैनतेय इत्यादिष्वप्यङ्गसंज्ञायाः प्रकृतिप्रत्ययसन्निपात-निमित्तकत्वसाम्येन तत्राप्यवर्णलोपेऽङ्गसंज्ञानिमित्तस्योक्तसंनिपातस्य विघातावश्यंभावेन च सा वर्णलोपस्य निमित्तं न स्यादित्यापत्तिसत्त्वाद् वर्णाश्रय इति विशिष्योक्तेरसंगतत्वं स्यात् । अतस्तद्भाष्यमेकदेश्युक्तिः । सन्निपातपरिभाषाया उपजीव्यविरोधस्यायुक्तत्व-मिति न्यायमूलकत्वेन सर्वविधसंबन्धस्य सन्निपातपदेन ग्रहणौचित्याच्च न प्रत्ययः सन्निपात-लक्षण इति भाष्यमप्येकदेश्युक्तिरूपमिति भावः ॥ १०९, ११० ॥

उक्तमतमुपसंहरति—इति केचिदिति । इदं च मतं परिभाषेन्दुशेखरे उपजीव्य-विरोधस्यायुक्तत्वमित्यत आरभ्य इति केचिदित्यन्तग्रन्थेनोल्लिखितमस्ति । अत्र मते न प्रत्ययः सन्निपातलक्षण इत्यादिभाष्यस्यैकदेश्युक्तित्वोपवर्णनं बाधकाभावादयुक्तम् इत्यारुचेस्त्रिपथगाकारादिमतमाह—अन्ये त्वित्यादिना । प्रागुक्तेति—न प्रत्ययः सन्निपात-लक्षण इति भाष्यप्रामाण्यादित्यर्थः ॥ १११ ॥

अङ्गसंज्ञा तद्धनिमित्तं स्यादिति भाष्यस्यैकदेश्युक्तित्वं निरस्यति—यस्मादित्या-दिना । अङ्गसंज्ञासूत्रे यस्मादित्यनेन प्रत्ययविधौ यो धर्म उद्देश्यतावच्छेदकत्वेनोपात्त-स्तदवच्छिन्न एव शब्दः परामृश्यते ॥ ११२ ॥

तेनादन्तप्रकृतीन्प्रत्ययसंश्लेषहेतुकाङ्गाख्या ।
तत्संश्लेषविघातकलोपस्याहेतुरिति युक्तम् ॥ ११३ ॥
शैवादिषु तु शिवादिप्रातिपदिकतोऽण्यकारलोपेऽपि ।
न हि सन्निपातनाशो न्यायात्खल्वेकदेशविकृतमिति ॥ ११४ ॥
दक्षाद्यदन्तशब्दादिञि लोपेऽदन्तता त्वलभ्यैव ।
विकृतावयवनिबन्धनबुद्धेः खलु दुरुपपादत्वात् ॥ ११५ ॥
ग्रामणि कुलमित्यत्र क्लीबह्रस्वस्त्वसिद्ध एव तुकि ।
क्व्यन्तान्तर्भूतक्विब्निमित्तकेऽस्मिन् हि सोऽस्ति बहिरङ्गः ॥ ११६ ॥
अपि च विशेष्यविशेषणभावो यदि सन्निपातः स्यात् ।
छे चेति तुग् न सिध्येत्क्लीबत्वे ग्रामणीत्यतश्छत्रे ॥ ११७ ॥

---

तेनेति । उक्तरीत्या परामर्शेनाङ्गसंज्ञानिमित्तभूतो योऽकारान्तप्रातिपदिकेञ्प्रत्यय-पौर्वापर्यरूपः सन्निपातस्तद्विघातकस्य यस्येति चेति लोपस्याङ्गसंज्ञा निमित्तं न स्यात् । ईदृशश्च सन्निपातो वर्णाश्रयप्रत्यये एव सम्भवतीति विशिष्योक्तिरुपपन्नाऽतस्तदाश्रय-वर्णनपरस्योक्तभाष्यस्य युक्तत्वान्नैकदेश्युक्तित्वमिति भावः ॥ ११३ ॥

यदुक्तं शैवो गार्ग्य इत्यादावप्यङ्गसंज्ञाया लोपनिमित्तत्वानापत्त्या वर्णाश्रय इति विशिष्योक्तेरसंगतत्वापत्तिरिति तत्राह—शैवादिष्विति । तत्राङ्गसंज्ञानिमित्तभूतस्य शिवादिप्रातिपदिकाण्प्रत्ययसंनिपातस्याकारलोपेऽप्येकदेशविकृतमनन्यवदिति न्यायेन तदभिन्नत्वबुद्धया विघातो नास्ति । तस्य न्यायस्य लौकिकत्वेनाशास्त्रीयेऽपि सन्निपाते प्रवृत्त्यौचित्यात् । अक्तपरिमाणग्रहणेऽपि तत्प्रवृत्तेः प्रागुपपादितत्वाच्चेति भावः ॥ ११४ ॥

दाक्षिरित्यादौ तु नायं प्रकारः संभवतीत्याह—दक्षादीति ॥ ११५ ॥

ग्रामणि कुलमित्यत्र नपुंसकह्रस्वे प्राप्तस्य तुको वारणं विशेष्यविशेषणभावात्मक-सन्निपाताङ्गीकारे सत्येव सन्निपातपरिभाषया संभवतीति यदुक्तं तस्यान्यथासिद्धिमाह—ग्रामणीत्यादिना । तुकि=तुग्दृष्टया । क्व्यन्तेति । बहिरङ्गत्वेन विवक्षितं यच्छास्त्रं 'ह्रस्वो नपुंसके—' इति तन्निमित्तसमुदायात्मकं क्विबन्तप्रातिपदिकं, तदन्तर्भूतः क्विप् तन्निमित्तकत्वेनान्तरङ्गे, अस्मिन्=तुकि कर्तव्ये हि यतः स ह्रस्वः, बहिरङ्गः । अतस्तस्यासिद्धत्वान्न तुगिति तत्र संनिपातपरिभाषाया नोपयोग इति भावः ॥ ११६ ॥

विशेष्यविशेषणसंबन्धस्य सन्निपातत्वाङ्गीकारे लक्ष्यासिद्धिमाह—अपि चेति । ग्रामनयनकर्तृ कुलं ग्रामणि । अत्र नपुंसकह्रस्वे ततश्छत्रशब्दे परे छे चेति तुगागमेन

ज्ञापकसिद्धैवेयं ज्ञापकमस्या न तिसृत्रिति हि सूत्रम् ।
एतदभावे तिसृणामित्यादौ ङीपि तस्य वैयर्थ्यात् ॥ ११८ ॥

न षडिति नात्र निषेधो न तिसृत्रिति ज्ञापकान्नताभ्यां ङीप् ।
इति भाष्यात्स्वस्रादिषु तत्पाठोऽनार्ष इत्याहुः ॥ ११९ ॥

स्वनिमित्तसन्निपातं साक्षाद्वा हरति यः परम्परया ।
तस्य स्वान्यस्य स्वयमनिमित्तमितीह फलितोऽर्थः ॥ १२० ॥

---

ग्रामणिच्छत्रमिति रूपम् । तत्र प्रातिपदिकस्याजन्तसंनिपातेन जातो यो ह्रस्वस्तस्याजन्तत्वविघातकतुकं प्रत्यनिमित्तत्वे तुङ् न स्यात् । पूर्वपरयोः संबन्ध एव सन्निपात इत्यङ्गीकारे त्वत्र तदभावात्संनिपातपरिभाषाया अप्रवृत्त्या तुक् सिध्यति । अन्तरङ्गपरिभाषया तु नात्र तुगभावः । तुकश्छकारनिमित्तकत्वेनान्तरङ्गत्वाभावात् ॥ ११७ ॥

ज्ञापकसिद्धैवेति । नोपजीव्यविरोधायुक्तत्वन्यायमूला येन सर्वविधः संबन्धः सन्निपातपदेन गृह्येतेति भावः । तिसृ नाम् इति स्थिते, अपरनिमित्तकत्वेनान्तरङ्गत्वाद्दीर्घं बाधित्वा 'ऋन्नेभ्य' = इति ङीपि, 'न तिसृ चतसृ' इति दीर्घनिषेधस्य वैयर्थ्यात्तेनेयं ज्ञाप्यते । ज्ञापितायां त्वस्यां त्रिचतुः शब्दयोर्विभक्त्यानन्तर्यरूपो यः सन्निपातस्तन्निमित्तकयोस्तिस्रादेशचतस्रादेशयोस्तद्विघातकङीब्निमित्तत्वायोगान्ङीब् न भवतीति स निषेधश्चरितार्थः । ज्ञापकसाजात्याद्दुपदर्शितभाष्यप्रामाण्याच्च पूर्वपरसंबन्ध एव सन्निपातपदबोध्य इति भावः ॥ ११८ ॥

ननु 'न षट्स्वस्रादिभ्यः' इति ङीब्निषेधान्न तिसृ चतसृ इति निषेधश्चरितार्थोऽतश्च न ज्ञापक इत्याशङ्कायामाह—न षडिति । स निषेधोऽत्र न प्रवर्तते । 'ऋन्मेजन्तः' ( १।१।३९ ) इति सूत्रे भाष्ये न तिसृ चतसृ इति नामि दीर्घनिषेधाज्ज्ञापकात्तिसृचतसृशब्दाभ्यां ङीब् न भवतीति कथनात्तयोः स्वस्रादिगणे पाठस्यानार्षत्वावगमात् । तत्र तयोः पाठसत्त्वे ज्ञापकेन ङीबभावसाधनप्रयासवैफल्यापत्तेरिति भावः । इत्याहुः—। उपक्रमोक्तमन्ये त्विति, अत्राभिसंबध्यते ॥ ११९ ॥

एवं सन्निपातपदार्थे परिभाषायां मानं च निरूप्य, फलितं परिभाषार्थमाह—स्वनिमित्तेति । वक्ष्यमाणभाष्योदाहरणानुरोधात्सन्निपातविघातकत्वं साक्षात्परंपरासाधारणं ग्राह्यम् । शतानि सहस्राणीत्यादौ नुमादेः स्वनिमित्तसन्निपातविघातं विना चारितार्थ्यस्यैवाभावात्, स्वान्यस्य = स्वातिरिक्तस्य स्वयमनिमित्तमित्यर्थः फलितः । ननु शतानीत्यादौ स्वपदबोध्यनुम्निमित्तभूतः सन्निपातोऽजन्ताङ्गस्य सर्वनामस्थानानन्तर्यरूपः स च

अत आधय इत्यादौ भाष्योक्ते लुङ् निमित्तभूतायाम् ।
अव्ययसंज्ञायामपि न गुणो हेतुस्ततश्च नाकजपि ॥ १२१ ॥

येष्वेतत्परिभाषाप्रवर्तने दोष आपतति ।
तत्परिगणनं भाष्ये कृतमिह तानि प्रदर्श्यन्ते ॥ १२२ ॥

वर्णाश्रयोऽत इञ् खलु वर्णविचालस्य दाक्षिरित्यादौ ।
णिच्यात्वं क्रापयतीत्यादौ न पुको निमित्तं स्यात् ॥ १२३ ॥

---

स्वेनैवापहृतः । यस्तु लुका विनाश्यो नान्तसर्वनामस्थानयोः सन्निपातः, स न नुमो निमित्तमिति कथं सन्निपातपरिभाषया लुग्वारणम् ? एवं श्रीयायेत्यत्र सुपि चेति दीर्घोत्तरमनयाऽऽतो धातोरित्यालोपवारणं च कथमिति चेत् । अत्रेदं बोध्यम् । उक्तस्थलेषु प्रथमसन्निपातस्य स्वेन नाशेऽपि स्वनिमित्तभूताङ्गविभक्त्योः सन्निपातोऽवशिष्यत एवेति तद्विघातेन सन्निपातपरिभाषाप्रवृत्त्युपपत्तिः । यद्वा तद्विघातस्येत्यत्र तत्पदेन स्वनिमित्तभूतः स्वसम्पाद्यश्चेत्युभयविधसन्निपातग्रहणात्तदुपपत्तिः ॥ १२० ॥

परम्परया स्वनिमित्तसन्निपातविघातकस्यापि स्वयं न निमित्तमित्युक्तेः प्रयोजनमाह— अत इति । कृन्मेजन्त इति सूत्रे भाष्ये आधये आधेः चिकीर्षोः इत्यादौ घेर्ङितीति गुणे, कुम्भकारेभ्य इत्यादौ च बहुवचने झल्येदित्येत्वे सति एजन्तकृदन्तत्वेन प्राप्ताऽव्ययसंज्ञा सन्निपातपरिभाषया वारिता । तत्राव्ययसंज्ञा, अङ्गसुपोः सन्निपातस्य साक्षान्न विघातिका, लुकैव तद्विघातात् । तथापि साक्षात्परम्परासाधारणस्य विघातकत्वस्य विवक्षितत्वादव्ययादाप्सुप इति लुग्द्वारा तस्या उक्तसन्निपातविघातकत्वात्तत्र गुणादिकं न निमित्तीभवत्यतोऽव्ययसंज्ञा न भवति । तेन तद्भाष्यं संगच्छते । लुक इवाव्ययसंज्ञाया अप्यप्रवृत्त्या च तत्राकजपि न भवतीत्यर्थः ॥ १२१ ॥

**परिगणनमिति** । कृन्मेजन्तः ( १।१।३९ ) इति सूत्रे भाष्ये तस्य दोष इत्युपक्रम्य वर्णाश्रय इत्यादिवार्तिकैः सन्निपातपरिभाषाऽतिव्याप्तिदोषाः परिगणिताः । तेष्वेतत्परिभाषाया अप्रवृत्त्या तत्तत्कार्यसिद्धिरिति तदाशयः ॥ १२२ ॥

**वर्णेति** । 'वर्णाश्रयः प्रत्ययो वर्णविचालस्य* ।' इति वार्तिकम् । अनिमित्तं स्यादिति शेषः । तत्रैतत्परिभाषाया अप्रवृत्त्या तत्तन्निमित्तं भवतीति सर्वत्र बोध्यम् । **णिचीति** । 'आत्वं पुग्विधेः क्रापयति* । क्रीधातोर्णौ वृद्धौ क्रीङ्जीनां णावित्येच आत्वं धातुणिचोराऽनन्तर्यरूपसन्निपातविघातकस्य पुको निमित्तं न स्यात् । अङ्गस्य य आकारस्तस्य पुगित्यवयवभक्तं पुकं मत्वाऽयं दोषोपन्यास इति कैयटः । उद्योते तु यदागमपरिभाषया पुग्विशिष्टस्याङ्गस्यागमिग्रहणग्राह्यत्वेऽपि निर्दिश्यमानपरिभाषया सूत्रोपात्ते निर्दिश्यमान एव निमित्तान्वयात्पुकोऽङ्गभक्तत्वेऽपि दोषोपन्यासो युक्त एवेत्युक्तम् ॥ १२३ ॥

पुग् ह्रस्वस्याकारणिविश्लेषकरो ह्यदीदपत्प्रभृतौ ।
टापस्त्यदाद्यकारो या सेत्यादौ विभक्तिसन्निधिजः ॥ १२४ ॥
इड्विधिरालोपस्य च ययिवानित्यादिरूपेषु ।
पूर्वनिघातस्य मतुब्विभक्त्युदात्तत्वमग्निमत्प्रभृतौ ॥ १२५ ॥
अपि च नदीह्रस्वत्वं सम्बुद्धिविलोपकं कुमार्यादौ ।
यादेशो दीर्घस्य च कष्टायेत्यादिरूपेषु ॥ १२६ ॥
इत्येतेऽष्टौ दोषास्तत्प्रतिविधयश्च कैयटेनोक्ताः ।
कष्टायेत्यादिकनिर्देशादस्या अनित्यतेत्यन्ये ॥ १२७ ॥

---

पुगिति । पुग्ह्रस्वत्वस्यादीदपत्❀ । अदीदपदित्यादौ दा धातोः पुक् णौ चङीति ह्रस्वत्वस्य निमित्तं न स्यादित्यर्थः । आकारेति । आकारान्ताङ्गस्य णेश्च विश्लेषकरो व्यवधायकः सन्निपातविघातक इति यावत्, एवंभूतः पुग् ह्रस्वस्य निमित्तं न स्यात् । टाप इति । त्यदाद्यकारष्टाब्विधेः ❀ । या सेत्यादौ त्यदादीनाम इति विभक्त्यानन्तर्यनिमित्तकोऽकारादेशस्तत्सन्निपातविघातकस्य टापो निमित्तं न स्यादित्यर्थः ॥ १२४ ॥

इड्विधिरिति । इड्विधिराकारलोपस्य ययिवान्❀ । ययिवान्, तस्थिवानित्यादौ वस्वेकाजाद्घसामिति धात्वाकारनिमित्तक इडागम आतो लोप इटि चेत्याकारलोपस्य निमित्तं न स्यात् । मतुब्विभक्त्युदात्तत्वं पूर्वनिघातस्य ❀ । अग्निमान् इत्यत्र ह्रस्वनुड्भ्यां मतुबिति पूर्वमुदात्तमाश्रित्य क्रियमाणं मतुप उदात्तत्वं शेषनिघातेन पूर्वस्यानुदात्तत्वं प्रति निमित्तं न स्यात् । परमवाचा इत्यादौ च 'अन्तोदात्तादुत्तरपदात्' इति विभक्त्युदात्तत्वं पूर्वनिघातस्य निमित्तं न स्यादित्यर्थः ॥ १२५ ॥

अपि चेति । नदीह्रस्वत्वं सम्बुद्धिलोपस्य ❀ । नदि कुमारि इत्यादौ 'अम्बार्थनद्यो ह्रस्वः' इति संबुद्धिनिमित्तको ह्रस्वादेश 'एङ्ह्रस्वात्संबुद्धेः' इति सम्बुद्धिलोपस्य निमित्तं न स्यादित्यर्थः । यादेशो दीर्घत्वस्य ❀ । कष्टायेत्यादावदन्ताङ्गङेर्सन्निपातनिमित्तको 'ङेर्यः' इति यादेशस्तत्संनिपातविघातकस्य 'सुपि च' इति दीर्घत्वस्य निमित्तं न स्यात् । 'यादेशो दीर्घत्वस्य' इति वचनं यद्यपीदानीन्तनभाष्यपुस्तकेषु नोपलभ्यते तथापि कैयटेन तत्र प्रतिविधानस्योक्तत्वात् पूर्वमासीत् पश्चाल्लेखकप्रमादाद्भ्रष्टमित्यनुमीयते ॥ १२६ ॥

इत्येते इति । तथा च भाष्यम्—'दोषाः खल्वपि साकल्येन परिगणिताः । प्रयोजनानामुदाहरणमात्रम् । कुत एतत् ? न हि दोषाणां लक्षणमस्ति । तस्माद्यान्येतस्याः परिभाषायाः प्रयोजनानि तदर्थमेषा कर्तव्या, प्रतिविधेयं दोषेषु' इति । दोषाणां समा-

ननु ङेर्यादेशमपरनिमित्तकं प्रति सुपीति दीर्घविधेः ।
बहिरङ्गासिद्धतया न वर्तते सन्निपातनाशकधीः ॥ १२८ ॥
इति चेन्नासिद्धत्वारोपेऽपि हि वस्तुतो विहतिसत्त्वात् ।
अपि चान्तरङ्गशास्त्रे कार्येऽन्यासिद्धता न तु कृतेऽस्मिन् ॥ १२९ ॥
किञ्चातिदेशिकं सन्निपातविहतेरभावमादाय ।
न निरोधोऽस्या भाष्येऽतिव्याप्त्युक्तेर्नदीह्रस्वे ॥ १३० ॥

---

धानोपायाश्च—'विधानसामर्थ्यादाङ्गो वर्णविचालो भविष्यति । कष्टायेति ज्ञापकाद्यशब्दे दीर्घो भविष्यति इत्यादिना प्रातिस्विकरूपेण कैयटेनोक्ताः । अन्ये = भट्टोजिदीक्षित नागेशभट्टादयस्तु 'कष्टाय क्रमणे' इति सूत्रे कष्टायेति दीर्घनिर्देशात् 'न यासयोः' इत्यत्र टाब्निर्देशाच्चास्या अनित्यतैव सर्वदोषप्रतिविधानमिति मन्यन्त इत्यर्थः ॥ १२७ ॥

कष्टायेत्यादेः संनिपातपरिभाषाऽविषयत्वमाशङ्कते—नन्विति । तत्र ङेर्यादेशस्यापरनिमित्तकत्वेनान्तरङ्गत्वात्तद्दृष्ट्या सुपि चेति दीर्घस्य परनिमित्तकत्वेन बहिरङ्गतयाऽसिद्धत्वात्तस्य सन्निपातविघातकत्वज्ञानं नास्ति, अतोऽस्या अप्रवृत्त्या दीर्घं प्रति यादेशो निमित्तं स्यादेवेत्युक्तः निर्देशेनास्या अनित्यत्वज्ञापनं न युक्तमिति भावः ॥ १२८ ॥

समाधत्ते—इति चेन्नेति । आरोपितासिद्धत्वे सत्यपि वस्तुतः सन्निपातविघातस्य जायमानत्वात्परिभाषाप्रवृत्तिः स्यादेवेति भावः । अतिदेशस्थलेष्विव शास्त्रस्य प्रवृत्तौ निवृत्तौ वा निमित्तबुद्धेरेवापेक्षितत्वादज्ञातः स्वरूपसन्सन्निपातविघातोऽकिंचित्कर इत्यरुचेराह—अपि चेति । अन्तरङ्गे कर्तव्ये जातस्य समकालप्राप्तिकस्य च बहिरङ्गस्यासिद्धत्वं भवति न तु कृतेऽन्तरङ्गे तस्य तथात्वं मानाभावादिति भावः ॥ १२९ ॥

ननु ङेर्य इत्यस्य जातत्वेन तत्प्रतिदीर्घस्यासिद्धत्वं मा भूत् । परिभाषां प्रत्येव दीर्घस्यासिद्धत्वं भविष्यति । सन्निपातलक्षणविधित्वस्य परिभाषालिङ्गत्वेनास्या ङेर्य इति शास्त्रस्थत्वेन तन्निमित्तनिमित्तकत्वेन चान्तरङ्गत्वादजातत्वाच्च तां प्रति दीर्घविधिरसिद्धत्वबोधनसम्भवात् । अत आह—किञ्चेति । निरोधः = प्रवृत्तिवारणम् । भाष्य इति । 'कृन्मेजन्तः' (१।१।३९) इति सूत्रे भाष्ये कुमारि नदि इत्यादौ संबुद्ध्यानन्तर्यनिमित्तको ह्रस्वः सम्बुद्धिलोपस्यानिमित्तं इत्यादिति सन्निपातपरिभाषाया अतिव्याप्तिदोष उक्तः । तत्र लोपोत्तरं स्थानिवद्भावेन ह्रस्वनिमित्तसन्निपातविघाताभावाङ्गीकारे भाष्यसङ्गतिः स्पष्टा । तस्मादातिदेशिकसन्निपातविघाताभावमादायास्या अप्रवृत्तिर्न युक्तेति भावः । सन्निपातस्याशास्त्रीयत्वात्तत्र शास्त्रीयं स्थानिवत्त्वं नेत्युच्यते चेत्तर्ह्यसिद्धत्वमपि शास्त्रीयं कथमशास्त्रीये सन्निपाते प्रवर्तेतेति विभाव्यताम् ॥ १३० ॥

किन्त्वेवमनित्यत्वाश्रयणेऽस्या उक्तनिर्देशात् ।
भाष्योदितपरिगणनं ह्यसङ्गतं स्यादतोऽत्र बोध्यमिदम् ॥ १३१ ॥
अल्मात्रादेशादतिरिक्तः खलु सन्निपातघातकरः ।
ग्राह्योऽत्र तद्विघातस्तेन गवाग्रं तथा रामैः ॥ १३२ ॥
अष्टानामित्यादिष्वल्मात्रादेशवत्सु नैवेयम् ।
अत्र च हलि सर्वेषामिति निर्देशादिकं लिङ्गम् ॥ १३३ ॥

---

कष्टायेत्यादिनिर्देशादनित्यत्वज्ञापनेऽपि परिगणनपरभाष्यप्रामाण्याद्भाष्योपदर्शितस्थलेष्वेवास्या अप्रवृत्तिः । तदतिरिक्तस्थले प्रवृत्तिरेवेति परिभाषेन्दुशेखरे नागेशभट्टेन निर्णीतम् । पुनस्तद्विरुद्धं शब्देन्दुशेखरे गवाग्रमित्यत्र सन्निपातपरिभाषाया अनित्यत्वाद्दीर्घः, अष्टानामित्यत्र तस्या अनित्यत्वान्नुटि कृते आत्वमित्याद्युक्तम् । तत् स्वग्रन्थविरोधाद्भाष्यविरोधाच्चायुक्तमिति मत्वाऽऽह—किन्त्वित्यादि । इदम् = वक्ष्यमाणम् ॥ १३१ ॥

अल्मात्रेति । अल्त्वव्याप्यधर्मावच्छिन्न एकवर्णात्मक आदेशोऽल्मात्रादेशः । तद्भिन्न एव सन्निपातविघातकः परिभाषायां तद्विघातपदेन ग्राह्य इत्यर्थः । भाष्यपरिगणितदोषेषु यत्राल्मात्र आदेशः सन्निपातविघातकस्तत्रेदमेव प्रतिविधानम् । अनेकलक्ष्यानुरोधेन वक्ष्यमाणज्ञापकबलेन चैतत्कल्पनाया आवश्यकत्वात् । यत्र त्वल्मात्रादेशातिरिक्तो लोपागमादिः सन्निपातविघातकस्तत्र कैयटोक्तमन्यद्वा यथासम्भवं प्रातिस्विकं प्रतिविधानम् । नन्वननुगतमनित्यत्वाश्रयणमिति भावः । गवाग्रमिति । अत्रावङादेशः स्वनिमित्तसन्निपातविघातकस्य सवर्णदीर्घस्यानिमित्तं स्यादित्यतिप्रसङ्गो दीर्घस्याल्मात्रादेशरूपत्वेन परिह्रियते । एवं रामैरित्यत्रैसादेशो वृद्ध्येकादेशस्यानिमित्तं स्यादित्यपि परिहरणीयम् ॥ १३२ ॥

अष्टानामिति । अत्र षट्चतुर्भ्यश्चेति नान्तसंख्यावाचकाष्टन्शब्दाम्प्रत्ययसन्निपातेन जातो नुट्, हलादित्वसंपादनद्वारा उक्तसन्निपातविघातकस्याप्यष्टन आ विभक्तावित्यात्वस्य निमित्तं भवति । आदिपदेन सर्वेषामित्यादौ सुट् एत्वस्य, एधेते इत्यत्रेयादेशो गुणस्य कुमार्यै इत्यत्राऽऽगमो यणः, श्रियै इत्यत्राट् इयङः, ते इत्यत्र जसः शी इतीकारादेशो गुणस्येत्यादिसंग्रहः । तेषु सुडादयस्तत्तत्सन्निपातनिमित्तका अपि तन्निमित्तसन्निपातविघातकानामेकारादीनां निमित्तभूता भवन्त्येव । सन्निपातविघातकस्याल्मात्रादेशरूपत्वादिति बोध्यम् । अस्यां कल्पनायां मानमाह—अत्र चेति । हलि सर्वेषामित्यत्र सर्वेषामिति निर्देश उक्तार्थज्ञापकः । आदिपदेन बहुवचने झल्येदिति सूत्रे झल्ग्रहणं संगृह्यते । तद्धि रामाणामि-

ननु पञ्चेन्द्राण्य इति द्विगोरणि कृतेऽस्य देवतेत्यर्थे ।
अण्ङीपोरुभयोर्लुक्यानुक् श्रूयेत तत्राह ॥ १३४ ॥

## सन्नियोगशिष्टानामन्यतरापाये उभयोरप्यपायः ॥ ८६ ॥

सह विहितकार्ययुगलेष्वेकापायेऽन्यदप्यपैत्येव ।
अत इह ङीपि निवृत्ते निवर्ततेऽवश्यमानुगपि ॥ १३५ ॥

ननु पञ्चभिरेनीभिः क्रीतः पञ्चैत इत्यत्र ।
लुक्तद्धितेति ङीब्लुकि नस्यापायेऽपितश्रुतिर्न स्यात् ॥ १३६ ॥

इति चेन्नैकतरस्यापाये सम्भाव्यमाने हि ।
उभयोरपि नोत्पत्तिर्भवतीत्यर्थेन तत्सिद्धेः ॥ १३७ ॥

---

त्यादावेत्वाभावाय । उक्तार्थानङ्गीकारे तु सन्निपातपरिभाषया एत्वाप्राप्त्या तदनुपपत्तिः स्पष्टा । अतस्तदपि ज्ञापकम् । परिभाषाज्ञापकस्य न तिसृचतसृ इत्यस्य सापादिकत्वेन तद्देशस्थाया अस्याः परिभाषाया अपि सापादिकत्वात्त्रिपाद्यां न प्रवृत्तिः । तेन पञ्चानामित्यत्र न लोपः, जग्धमित्यत्र जग्ध्यादेशोत्तरं झषस्तथोर्धोऽध इति धत्वं च सिध्यतीति सर्वमनवद्यम् ॥ १३३ ॥

पूर्वपरिभाषाऽवतरणे लुकः प्रक्रमेण लुगन्तरस्मरणात्प्रसङ्गसङ्गत्याऽऽह—नन्विति । पञ्चेन्द्राण्यो देवता अस्येति पञ्चेन्द्रः । अत्र साऽस्य देवतेति तद्धितार्थे विषये तद्धितार्थेति द्विगौ ततोऽणि तस्य द्विगोर्लुगनपत्य इत्यनेन लुकि, लुक्तद्धितलुकीति स्त्रीप्रत्ययस्य लुकि, आनुकः श्रवणापत्तिरित्यर्थः ॥ १३४ ॥

सन्नियोगशिष्टानामिति । ननु द्वयोर्मध्ये एक इत्यर्थविवक्षायामेवान्यतरशब्दप्रयोगात् सन्नियोगशिष्टानामिति बहुवचनमनुपपन्नमिति चेन्न । सन्नियोगशिष्टौ च सन्नियोगशिष्टौ च संनियोगशिष्टौ चेत्यष्टाध्याय्यां यावन्तः सन्नियोगशिष्टास्तेषामेकशेषेण बहुवचनोपपत्तेः । एवम्, अन्यतरश्चान्यतरश्चान्यतरश्चेत्यन्यतरशब्दस्याप्येकशेषः । प्रत्येकसंनियोगशिष्टपदार्थस्य च प्रत्येकान्यतरपदार्थेऽन्वय इति न काचिदनुपपत्तिः । तदाह—सहेति । अपायो निवृत्तिः । ननु तत्रेन्द्रशब्दाकारस्यानुगाकारेण सह यो दीर्घैकादेशस्तद्विशिष्टस्य परादिवद्भावेनानुक्त्वादानुम्निवृत्तौ पञ्चेन्द्र इत्यत्राकारस्यापि श्रवणं न स्यादिति चेन्न । अन्तरङ्गानपि विधीन्बहिरङ्गो लुग्बाधत इति न्यायेन लुकः प्रागेकादेशाप्रवृत्तेः ॥१३५॥

परिभाषाङ्गीकारेऽपि प्रयोगासिद्धिमाशङ्क्य समाधत्ते नन्वित्यादिना । पञ्चैत इत्यत्र क्रीतार्थकठकोऽध्यर्धपूर्वद्विगोरित्यनेन लुकि, लुक्तद्धितलुकीत्यनेन ङीपो लुकि

ज्ञापकमस्याश्छपदं छलुग्विधौ बिल्वकादिभ्यः ।
छस्यैव लुग् न तु कुको निवृत्तिरिति बोधनाय हि तत् ॥ १३८ ॥
लुक्शब्दश्च प्रत्ययलोपस्यैवाभिधानकः किञ्च ।
छः प्रतिपदोक्त एभ्यस्तल्लुकि सिद्धेऽस्य वैयर्थ्यात् ॥ १३९ ॥
ननु च प्रतिपदविहितग्रहणेनातिप्रसङ्गपरिहारात् ।
सकुकामनुवादः कुगनिवृत्तयेऽतश्छपदमफलम् ॥ १४० ॥
मैवं ततोऽपि यः खलु शीघ्रतरोपस्थितिर्विकारार्थः ।
बिल्वादिभ्योऽण् तस्य ग्रहणनिवृत्त्यै कुगनुवादात् ॥ १४१ ॥

---

तत्सन्नियोगशिष्टस्य नत्वस्यापायेऽपि देवदत्तहन्तृहननन्यायेन तकारस्य पुनः श्रवणं न स्यादिति भावः । समाधानं स्पष्टम् । तत्सिद्धेः—तकारश्रवणसिद्धेरित्यर्थः । ॥१३६,१३७ ॥

छपदमिति । 'बिल्वकादिभ्यश्छस्य लुक्' इति सूत्रे छग्रहणमस्या ज्ञापकम् । ज्ञापकतामुपपादयति— छस्यैवेत्यादिना । बिल्वादीनां नडाद्यन्तर्गतत्वात्तेभ्यो नडादीनां कुक् चेत्यनेन चातुरर्थिकः कुक्सन्नियोगशिष्टश्छप्रत्ययो विधीयते । तदुत्तरं बिल्वकादिभ्यश्छस्य लुगित्यनेन कृतकुगागमेभ्यस्तेभ्यः परस्य छस्य तद्धिते परे लुग्विधीयते । तेन बिल्वा यस्यां सन्ति सा बिल्वकीया, तस्यां भवो बैल्वक इति सिध्यति । तत्र लुक् शब्दस्य प्रत्ययमात्रलोपाभिधायकत्वाच्छप्रत्ययभिन्नस्य च बिल्वकादिशब्दानुच्चार्य विहितत्वरूपप्रतिपदोक्तत्वाभावाल्लक्षणप्रतिपदोक्तपरिभाषया छस्यैव लुग्भविष्यतीति छग्रहणं व्यर्थं सच्छस्यैव लुग्यथा स्यात्तत्संनियोगशिष्टकुको निवृत्तिर्माभूदित्यर्थे पर्यवस्यति । प्रकृतपरिभाषाभावे तु कुग्निवर्तकवचनाभावादेव तदनिवृत्तेः सिद्धत्वात्तदृर्थं सदेनां ज्ञापयति । अस्यां ज्ञापितायां च, छेन सह कुकोऽपि निवृत्तेः प्राप्त्या छस्यैव निवृत्तिर्न तु कुक इति बोधनेन तच्चरितार्थमिति भावः ॥ १३८, १३९ ॥

ज्ञापितेऽपि वचने, छग्रहणस्य वैयर्थ्यमाशङ्कते— नन्विति । बिल्वादिभ्यो लुगित्येतावन्मात्रोक्तावपि लक्षणप्रतिपदोक्तपरिभाषया नडादीनां कुक्चेत्येतद्विहित बिल्वादिप्रकृतिकच्छप्रत्ययव्यतिरिक्तस्य कस्यचिल्लुगप्राप्त्या बिल्वकादिभ्य इति कृतकुगागमानुवादसामर्थ्यादेव कुक्श्रवणं सेत्स्यति । एवं च छग्रहणस्योक्तप्रयोजनाभावेन तन्निष्फलमिति भावः ॥ १४० ॥

समाधत्ते—मैवमिति । ततोऽपि—छप्रत्ययादपि । शीघ्रतरोपस्थितिः—नडादिपदेन नडादिगणान्तर्गतबिल्ववेण्वादिशब्दज्ञानापेक्षया विशिष्यनिर्दिष्टबिल्वादिपदेन

यत्र तु समुच्चयार्थश्चस्तत्र न्यायसिद्धेयम् ।
तत्र हि समानकाले समानदेशे च विधिनियमात् ॥ १४२ ॥
यश्वेतयतीत्यादौ टिलोपविधिना निवर्तिते ङीपि ।
नस्यानया निवृत्तौ णाविष्ठवदिति मुधैव पुंवत्त्वम् ॥ १४३ ॥
तेनेयमनित्येति ज्ञाप्यत इति कैयटेनोक्तम् ।
तदयुक्तमैडविडयतिप्रभृतिषु पुंवत्त्वसार्थक्यात् ॥ १४४ ॥
ऐनेयादि तु सिध्येदीलोपस्थानिवत्त्वेन ।
खेयाद्यपि पूर्वस्माद्विधिरिति खलु पञ्चमीसमासेन ॥ १४५ ॥

---

बिल्वव्रीह्यादिशब्दज्ञानस्य झटिति जायमानत्वात्तदुद्देश्यको बिल्वादिभ्योऽणिति विकारार्थकोऽण् शीघ्रतरोपस्थितिक इति भावः। कुगनुवादादिति। कुगनुवादस्योक्तरीत्या चरितार्थत्वेन सामर्थ्याभावादिति भावः। यत्रत्विति। समुच्चयो हि साहित्यं तच्च प्रकृते विधेययोरेकप्रयोगघटकतया स्थितिमत्त्वरूपं, तदेकस्य निवृत्तावपरस्य स्थितौ नोपपद्यते, द्वयोरेकप्रयोगे स्थित्यभावात् अतस्तत्र। चशब्देनैव परिभाषाबोध्यार्थलाभात्तत्फलितार्थरूपैवेयमिति भावः ॥ १४१,१४२ ॥

टेः (६।४।१५५) इति सूत्रे कैयटेनास्या अनित्यत्वं ज्ञापितं तदनूद्य निरस्यति—यश्वित्यादिना। एनीमाचष्टे एतयति, श्येनीमाचष्टे श्येतयतीत्यादौ णौ प्रातिपदिकस्येष्ठवद्भाववचनाट्टिलोपविधानेन ङीब्रूपे टिभागे लुप्ते ङीप्संनियोगशिष्टस्य नत्वस्यापि प्रकृतपरिभाषया निवृत्त्योक्तरूपसिद्धेस्तत्र पुंवद्भावो व्यर्थः। एवं चोक्तसूत्रे "णाविष्ठवत्प्रातिपदिकस्य*" इतीष्ठवद्भाववचनस्योक्तस्थले पुंवद्भावरूपं भाष्योक्तं प्रयोजनं न संगच्छेत। अतः पुंवद्भाववचनमस्या अनित्यत्वज्ञापकं तेन श्यैनेय इत्यादि सिध्यतीति कैयटेनोक्तम्। तदयुक्तमिति। इडविट् शब्दात् 'जनपदशब्दात्क्षत्रियादञ्' इत्यपत्यार्थकस्याञ्प्रत्ययस्य स्त्रियाम् 'अतश्च' इत्यनेन लुकि इडविडमाचष्ट इत्याचक्षाणार्थे णिचि पुंवद्भावेन स्त्रीत्वप्रयुक्तलुको निवृत्तौ एडविडयति, एवं दरदोऽपत्यं स्त्री दरत् तामाचष्टे दारदयतीत्यादौ पुंवद्भावविधानस्य चारितार्थ्यात्कैयटोक्तज्ञापनमयुक्तमित्यर्थः ॥ १४३, १४४ ॥

नन्वस्या अनित्यत्वे एन्या अपत्यम्—ऐनेयः, श्येन्या अपत्यं—श्यैनेय इत्यादौ यस्येति चेत्यनेनेकारलोपेऽपि तत्सन्नियोगशिष्टस्य नादेशस्यानिवृत्त्येष्टरूपं सिध्यति। नित्यत्वे तु कथं तत्सिद्धिस्तत्राह—ऐनेयादित्विति। ननु तत्र स्थानिभूतादचः पूर्वत्वेन दृष्टस्य नकारस्य कार्यान्तराभावात्कथं स्थानिवत्त्वमिति चेन्न। न पदान्त

ननु शीलार्थे छत्रादित्वाणप्रत्यये चुराशब्दात् ।
चौरीत्यत्राण्विरहान्ङीब्न प्राप्नोति तत्राह ॥ १४६ ॥

## ताच्छीलिके णेऽण्कृतानि भवन्ति ॥ ८७ ॥

अन्नित्यणि विहितं खलु बाधितुमुक्तं प्रकृतिभावम् ।
कार्म्मस्ताच्छील्य इति हि निपातनं ज्ञापयत्येनाम् ॥ १४७ ॥

---

(१।१।५८) इति सूत्रे भाष्ये पूर्वविधावित्यत्र विधानं विधिरिति भावसाधनस्यापि विधिशब्दस्याङ्गीकारात्पूर्वस्य विधानं भावः स्थितिरिति यावत्, तस्यां कर्तव्यायामित्यर्थेन स्थानिवत्त्वसंभवात् । कर्मसाधनविधिशब्दाश्रयणेऽपि परिभाषया नकारस्य निवृत्तिरूपे कार्ये कर्तव्ये स्थानिवत्त्वप्रवृत्तेरव्याहतत्वाच्च । खेयादीति । खेयमित्यत्र ईच खन इत्यनेन खने ईकारादेशस्तत्सन्नियोगशिष्टो यत्प्रत्ययश्च विधीयते । तत्रेकारस्याद्गुणेन निवृत्तावपि यत्प्रत्ययो न निवर्तते । अचः परस्मिन्पूर्वविधावित्यत्र पूर्वस्माद्विधिः पूर्वविधिरिति पञ्चमीसमासाश्रयणेन स्थानिभूतादचः पूर्वस्मात्परस्य विधावपि स्थानिवद्भावात् । एवं तार्तीयीक इत्यत्रादिवृद्धया संप्रसारणनिवृत्तावपि "त्रेः सम्प्रसारणं च" इति संप्रसारणसन्नियोगशिष्टस्यैकक्प्रत्ययस्य, न निवृत्तिः । वृद्धेः स्थानिवद्भावात् । फुल्लस्यापत्यं फौल्लिरित्यत्र च, "अनुपसर्गात्फुल्लक्षीबकृशोल्लाघाः" इत्युकारसन्नियोगशिष्टस्य तकारस्थानिकलादेशस्योकारनिवृत्तावपि न निवृत्तिः । यत्तु ज्ञापकसाजात्याद्यत्र द्वुकाऽन्यतरापायस्तत्रैवैषा प्रवर्तते, तेन ऐनेयादिषु लोपेनापाये नास्याः प्रवृत्तिरिति केचिदाहुस्तन्न युक्तम् । वातातीसाराभ्यां कुक् चेति कुक्संनियोगशिष्टमत्वर्थीयेन्प्रत्ययान्तवातकिन्शब्दादपत्यार्थेऽणि नस्तद्धित इति टिलोपे ककारस्यानिवृत्त्यापत्त्या वात इति रूपासिद्धेः । तस्मादुक्तव्यवस्थैव समीचीना ॥ १४५ ॥

तद्धितप्रसङ्गादाह—नन्विति । चुरा शीलमस्या इति चौरी । अत्र छत्रादिभ्यो ण इति णप्रत्ययान्तचौरशब्दस्याणन्तत्वाभावान्ङीब् न प्राप्नोतीत्यर्थः ॥ १४६ ॥

ताच्छीलिके इति । 'शीलम्' इति सूत्रे तदस्येत्यनुवृत्तेस्तदस्य शीलमित्यर्थकत्वाच्छीलिके इत्युक्तम् । अणकृतानि = अणप्रत्ययनिमित्तककार्याणि । अन्निति । कर्म शीलमस्येति कार्मं इत्यत्र नस्तद्धित इति टिलोपस्य बाधके, "अन्" = अणि अन् प्रकृत्या स्यादिति प्रकृतिभावे प्राप्ते तं बाधितुं कार्म्मस्ताच्छील्ये इति टिलोपनिपातनमस्या ज्ञापकम् । अस्या अभावे अणि विहितस्य प्रकृतिभावस्य णे अप्राप्त्या नस्तद्धित इत्यनेनैव सिद्धे तद्वैयर्थ्यादिति भावः ॥ १४७ ॥

ताच्छीलिक इति वचनात्तद्भिन्ने णेऽणकृतं नास्ति।
दण्डः प्रहरणमस्यामिति णे दाण्डेति टावेव ॥ १४८ ॥
ननु कंसपरिमृडादेर्भ्यामादौ स्यान्मृजेर्वृद्धिः।
एवं रज्जुसृडादेरमागमः स्यादतश्चाह ॥ १४९ ॥

**धातोः कार्यमुच्यमानं तत्प्रत्यये भवति ॥ ८८ ॥**

सिद्धेऽन्यथा ष्यञि परे हनस्त इत्येव नस्तत्वे।
तत्त्वनिपातनमस्या निवेदकं भ्रौणहत्यपदे ॥ १५० ॥
पाठान्तरं स्वरूपग्रहणपरं तु प्रसृड्भिरित्यादौ।
अनुदात्तर्दुपधत्वादम आपत्त्या तिरस्कृतं भाष्ये ॥ १५१ ॥

---

नास्ति = न भवति। दण्ड इति। तदस्यां प्रहरणमिति क्रीडायां ण इत्येत द्विहितणप्रत्ययस्य ताच्छीलिकत्वाभावाद्दण्डः प्रहरणमस्यामिति दाण्डा क्रीडेत्यत्राण्कार्याप्रवृत्त्या टावेव भवतीत्यर्थः ॥ १४८ ॥

प्रत्ययप्रसङ्गान्निपातनज्ञाप्यत्वसाधर्म्याच्चास्या अत्रोपन्यासः। नन्विति। प्रत्ययसामान्ये विहिता मृजेर्वृद्धिः कंसपरिमृड्भ्यामित्यादौ विभक्तिसंज्ञकप्रत्ययेऽपि प्रवर्तेत। एवं सृजिदृशोरित्यमागमो रज्जुसृड्भ्यां देवदृग्भ्यामित्यादावपि स्यात्। भ्यामादावित्युक्तिर्भाष्योक्तोदाहरणानुरोधात्। विभक्तिमात्र इयमापत्तिर्द्रष्टव्या। चकारो दोषान्तरसमुच्चयार्थः। मस्जिनशोर्झलीति नुमागम उदकमग्भ्यां प्रणड्भ्यामित्यादावपि स्यात्। हनस्त इति तकारादेशो वार्त्रघ्न इत्यादावपि स्यात्। अचि विभाषेति गिरतेरेफस्य लत्वं देवगिरावित्यादावपि स्याद् एतत्सर्वदोषनिवारणार्थं परिभाषामाहेत्यर्थः ॥ १४९ ॥

धातोरिति। धातुत्वव्याप्यधर्मावच्छिन्नोद्देश्यताकं कार्यं तत्प्रत्यये = धातुत्वावच्छिन्नोद्देश्यतानिरूपितविधेयताश्रये प्रत्यये परे भवतीत्यर्थः। सिद्ध इति। भ्रूणं हतवान् भ्रूणहा। ब्रह्मभ्रूणेति क्विप्। भ्रूणघ्नो भावः कर्म च भ्रौणहत्यम्। गुणवचनब्राह्मणादिभ्यः कर्मणि चेति ब्राह्मणादेराकृतिगणत्वात्ष्यञ्। अत्र हनस्तोऽचिण्णलोरित्यनेनैव हनस्तकारादेशे सिद्धे 'दाण्डिनायनहास्तिनायन—'इति सूत्रे भ्रौणहत्येति तकारादेशनिपातनं व्यर्थं सदस्या ज्ञापकमित्यर्थः पाठान्तरमिति—। धातोः स्वरूपग्रहणे तत्प्रत्यये कार्यविज्ञानमिति पाठो 'मृजेर्वृद्धिः' (७।२।११४) इति सूत्रे भाष्ये दूषितः। तत्र 'यदि स्वरूपग्रहण इत्युच्यते, प्रसृड्भ्यां प्रसृड्भिः अनुदात्तस्य चर्दुपधस्यान्यतरस्यामिति

नन्विति यण्प्रतिषेधात्सुधियोरिति तत्र निर्देशात् ।
एषाऽनित्या तस्मादियङादौ न प्रवर्त्त्येयम् ॥ १५२ ॥

ननु सर्वनामसंज्ञाऽव्ययसंज्ञा चाप्यकज्वतो न स्यात् ।
तत्त्वस्य वा तदन्तत्वस्याभावादतश्चाह ॥ १५३ ॥

---

अम् प्राप्नोति एवं तर्हीयं परिभाषा कर्तव्या धातोः कार्यमुच्यमानं तत्प्रत्यये भवतीति' इत्युक्तम् ॥ १५०,१५१ ॥

**नन्विति** । न भूसुधियोरिति यण्निषेधात्, तत्र सुधियोरितीयङ्निर्देशाच्चैषाऽनित्या । एरनेकाच इत्यत्रास्याः प्रवृत्तौ सुपि यणादेशाप्राप्त्या सुधीशब्दस्य यण्निषेधो व्यर्थः स्यात् । अचिश्नुधातुभ्रुवामित्यत्र प्रवृत्तौ च सुधियाविति निर्देशोऽसङ्गतः स्यात् । अत इयमनित्येतीयङादिविधौ नास्याः प्रवृत्तिरित्यर्थः । यदि तु ज्ञापकसाजात्याद्धातुत्वेतरधातुत्वव्याप्यधर्मावच्छिन्नबोधकपदोपादान एवैतस्याः प्रवृत्तिरिति मन्यते तदाऽचिश्नुधातुभ्रुवामित्यादौ धातुपदोपादानादेवास्या न प्रवृत्तिरित्यनित्यज्ञापनाभावेऽपि न दोषः । उक्तार्थतात्पर्यग्राहकमेवोक्तप्रतिषेधादिकमिति बोध्यम् । प्रणङ्भ्यामित्यादौ धातूद्देश्यकप्रत्ययस्य क्विपः सत्त्वान्नशेर्वेति कुत्वमस्याः प्रवर्तनेऽपि निर्बाधम् । एवं च 'यत्कार्यं प्रत्ययनिमित्तं तत्रेयं व्यवस्थापिका । तेन पदान्तत्वनिबन्धनं नशेर्वेति कुत्वं प्रणङ्भ्यामित्यादौ भवत्येव इतिपरिभाषेन्दुशेखरोक्तव्यवस्थाऽनुपयुक्तेति बोध्यम् ॥ १५२ ॥

प्रत्ययप्रसङ्गादेवाह—**नन्विति** । सर्वनामसंज्ञा हि सर्वादिगणपठितानां तदन्तानां च भवति । एवमव्ययसंज्ञा स्वरादीनां तदन्तानां च । अकज्विशिष्टानां सर्वक उच्चकैरित्यादीनां तु गणे पाठाभावात्तदन्तत्वस्याप्यभावाच्च ते संज्ञे न स्याताम् । ततश्च सर्वके इत्यादौ जसः शीति श्यादेशो न स्यात् । उच्चकैरित्यादावव्ययादाप्सुप इति सुपो लुङ् न स्यादित्याद्यापत्तिर्ज्ञेया एवं भिनत्ति छिनत्तीत्यादौ श्नम्विशिष्टस्य धातुत्वाभावे धातोरन्तस्योदात्तत्वं न स्यादित्यपि बोध्यम् । न च वर्णाश्रमेतरा इत्यादौ श्यादेशस्य, अत्युच्चैसावित्यादौ सुब्लुकश्च वारणायोक्तसूत्रयोः सर्वनाम्न इत्यव्ययादिति च पञ्चम्या विहितविशेषणत्वाश्रयणात्, अज्ञाताद्यर्थकाकच्प्रत्ययापेक्षयाऽन्तरङ्गत्वेन सुपः प्रागुत्पत्तेश्चोक्तस्थलेषु प्रत्ययानां सर्वनाम्नोऽव्ययाच्च विहितत्वेन तत्तत्कार्यं स्यादेवेत्यवतरणासङ्गतिरिति वाच्यम् । तत्र प्रत्ययबोधकपदेन तदादेरुपस्थित्या यस्मात्प्रत्ययो विहितस्तदादेः सर्वनाम्नस्तदादेरव्ययाच्च परस्येत्यर्थेनैवोक्तापत्तिवारणसम्भवेन विहितविशेषणाश्रयणे मानाभावात् ॥ १५३ ॥

## तन्मध्यपतितस्तद्ग्रहणेन गृह्यते ॥ ८९ ॥

लिङ्गं च नेदमदसोरित्यत्राकोरितीदमेतस्याः ।
साकच्कस्यान्यत्वादग्रहणे तस्य वैयर्थ्यात् ॥ १५४ ॥

गङ्गाप्रवाहपतिता गङ्गाग्रहणेन गृह्यते हि नदी ।
इति लोकन्यायेन तु न शक्यते साधयितुमेतत् ॥ १५५ ॥

धर्मो हि सर्वनामत्वादिरयं वर्ततेऽक्तपरिमाणः ।
तस्मान्न्यूनाधिकयोर्वचनाभावे न लभ्योऽसौ ॥ १५६ ॥

ननु गातिस्थेति सिचो लुक् सामान्येन पाग्रहणात् ।
पिबतेरिव पातेरपि परस्य कस्मान्न तत्राह ॥ १५७ ॥

## लुग्विकरणालुग्विकरणयोरलुग्विकरणस्य ॥ ९० ॥

स्वरतीत्यादौ सूङिति वक्तव्ये सूतिसूयतीत्येवम् ।
पृथगुल्लेखनमस्या ज्ञापकमिति कैयटस्तत्र ॥ १५८ ॥

---

तन्मध्येति । स्वघटकपूर्वत्व—स्वघटकपरत्व—स्वपर्याप्तोद्देश्यतानिरूपितविधेयताऽऽश्रयत्वैतत्रितयसंबन्धेन तद्विशिष्टत्वं तन्मध्यपतितत्वम् ॥ ज्ञापकमाह—लिङ्गं चेति । अस्य ज्ञापकत्वं च "येन विधिस्तदन्तस्य" (१।१।७२.) इति सूत्रे भाष्ये यथाश्रुतसूत्राभिप्रायेणोक्तम् । "नेदमदसोरकोः" (७।१।११) इति सूत्रे भाष्ये इदमदसोः कादिति न्यासमाश्रित्य इदमदसोः कादेव नान्यत इति नियमार्थकतां चोक्त्वा, अकोरित्यस्य प्रत्याख्यानात् । तत्पक्षे "एतत्तदोः सुलोपोऽकोः—" इत्यत्राकोरित्यस्यैतज्ज्ञापकत्वं बोध्यम् ॥ १५४ ॥

प्रकारान्तरेण प्रयोजनसिद्धिमाशङ्क्य परिहरति—गङ्गेत्यादिना । वचनाभावे—वचनकल्पनां विनेत्यर्थः ॥ १५५, १५६ ॥

ग्रहणव्यवस्थापकत्वसाधर्म्याल्लुग्विकरणपरिभाषाया उपन्यासः । एवमुत्तरस्या अपि । पिबतेरिवेति । यथा शब्विकरणपाधातोः परस्य सिचो लुग् भवति तथा लुग्विकरणपाधातोः परस्यापि तस्य लुका भवितव्यम् । पात्वस्य साम्यादिति भावः ॥ १५७ ॥

स्वरतीति । स्वरतिसूतिसूयतिधूञूदितो वा (७।२।४४) इति सूत्रे सूङ् इत्युक्त्यैव षूङ् प्राणिगर्भविमोचन इत्यादादिकस्य, षूङ्प्राणिप्रसव इति दैवादिकस्य च संग्रहसंभवा-

पूर्वोत्तरसहचारादलुग्विकरणस्य सूयतेरेव ।
ग्रहणं मास्त्वित्यर्थं पृथगुल्लेखो हि चरितार्थः ॥१५९॥
भाष्ये यस्य विभाषेत्यत्र ध्वनितेयमत्र विदितादौ ।
क्वसुप्रत्ययेऽस्य वेट्त्वादिट्प्रतिषेधं विशङ्कयोक्तम् ॥१६०॥
यदुपाधेर्हि विभाषा तदुपाधेरिण्निषेधोऽसौ ।
शविकरणस्य विभाषाऽस्ति लुग्विकरणश्च वेत्तिरयम् ॥१६१॥
विशिसहचाराद्ग्राह्यः शविकरणो नेतरोऽन्यसहचारात् ।
तस्यानया विरोधादिति तद्भाष्याशयाद्ध्वननमस्याः ॥१६२॥

---

स्तुतिसूयत्योः पृथङ्निर्देशो व्यर्थः सन्निमां ज्ञापयतीति "स्वरतिसूति—" इति सूत्रे कैयटेनोक्तं तन्न युक्तम् ॥ १५८ ॥

अयुक्तत्वे हेतुमाह पूर्वोत्तरेति । प्रकृतपरिभाषाऽभावेऽपि, सूङ्इत्युक्तौ पूर्वोत्तरयोः स्वरतिधूञोः साहचर्येण तत्सदृशस्यालुग्विकरणस्य दैवादिकस्य सूयतेरेव ग्रहणं प्राप्नोति; तन्मा भूत्, उभयोरपि ग्रहणमस्त्वित्यर्थे पृथङ्निर्देशस्य चरितार्थत्वात्परिभाषाज्ञापकत्वं न युक्तमित्यर्थः ॥ १५९ ॥

एवं कैयटोक्तज्ञापके निरस्ते मानान्तरजिज्ञासायामाह—भाष्य इत्यादि । "यस्य विभाषा" (७।२।१५) इति सूत्रे भाष्ये इयं ध्वनिता । ध्वननप्रकारं दर्शयति—अत्रेत्यादिना । उक्तसूत्रे भाष्ये हि—"यस्य विभाषाऽविदेः॥ । यस्य विभाषाऽविदेरिति वक्तव्यम् । इह मा भूत् । विदितः, विदितवान् । तत्तर्हि वक्तव्यम् । न वक्तव्यम् । यदुपाधेर्विभाषा तदुपाधेः प्रतिषेधः । शविकरणस्य विभाषा, लुग्विकरणश्चायम्" इत्युक्तम् । "विभाषा गमहनविदविशाम्" इति सूत्रेण विद्धातोः परस्य वसोरिड्विकल्पविधानाद् "यस्य विभाषा" इत्यनेन निष्ठायामिण्निषेधप्राप्त्याशङ्कया वार्तिकस्य तत्प्रत्याख्यानभाष्यस्य च प्रवृत्तिः ॥ १६० ॥

यदुपाधेरिति उपाधिर्व्यावर्तको धर्मः । यादृशधर्मविशिष्टस्य विभाषा = इड्विकल्पो विधीयते; तादृशधर्मविशिष्टस्यैव यस्य विभाषेत्यनेन निषेधः । विभाषा गमहनविदविशामिति सूत्रे शविकरणस्य तौदादिकस्य विद्लृलाभे इत्यस्य ग्रहणं न तु लुग्विकरणस्यादादिकस्य विद्ज्ञान इत्यस्य । चो हेतौ यतोऽयं लुग्विकरणस्ततोऽस्य न ग्रहणमिति भावः ॥१६१॥

तत्र प्रकृतपरिभाषानुरोधेनैव साहचर्यस्य नियामकत्वं भाष्याभिप्रेतमित्याह—विशिसहचारादिति । इतरो लुग्विकरणः । अन्यसहचारात् । हनिसाहचर्यात् ।

ननु च प्रजिघाययिषत्यत्र णिचः सनि णिचा व्यवहितत्वात् ।
हेरचङीत्यभ्यासात्परस्य न स्यात्कुरत आह ॥१६३॥

## प्रकृतिग्रहणे ण्यधिकस्यापि ग्रहणम् ॥ ९१ ॥

अचङीति प्रतिषेधो ज्ञापक इह चङि हि नान्यथा प्राप्तिः ।
कुत्वविषय एवेयं तेन शपो लुग् न शाययत्यादौ ॥१६४॥
भ्यस इत्यत्र भ्यमितिच्छेदे युष्मभ्यमित्यादौ ।
शेषेऽन्त्यलोपपक्षेऽकारस्यैत्वं निवारयितुमाह ॥१६५॥

## अङ्गवृत्ते पुनर्वृत्तावविधिः ॥ ९२ ॥

अङ्गस्येत्यधिकारे यन्निष्पन्नं कृते तस्मिन् ।
पुनरप्याङ्गप्राप्तौ न विधेया तत्प्रवृत्तिरित्यर्थः ॥१६६॥

---

तस्य = अलुग्विकरणग्रहणस्य । अस्या असत्त्वे विरोधासंभवादुक्तभाष्येणास्या ध्वननं ज्ञेयम् ॥ १६२ ॥

णिचः सनि—। हिधातुप्रकृतिकणिजन्तात्सनि । हेरचङीति । द्वित्वप्रयोज्यसंज्ञानिमित्तककार्याणां द्वित्वनिमित्तप्रत्ययाव्यवहितपूर्वत्वनिमित्तकत्वमिति वार्णपरिभाषायां निरूपितत्वात्प्रकृतेऽभ्याससंज्ञानिमित्तककुत्वस्यापि तथात्वाण्णिज्व्यवधाने प्रवृत्तिर्न स्यादिति भावः ॥ १६३ ॥

नान्यथेति । प्रकृतपरिभाषाऽभावे अजीहयदित्यत्र णिचा व्यवधानाद्धेरिति कुत्वस्याप्राप्त्याऽचङीति प्रतिषेधो व्यर्थः सन्निमां ज्ञापयतीत्यर्थः । कुत्वेति । हेरचङि (७।३।५६) इति सूत्रे भाष्ये हेश्चङि 'प्रतिषेधानर्थक्यमङ्गान्यत्वात्' इत्याशङ्क्य 'एवं तर्हि ज्ञापयत्याचार्योऽन्यत्र ण्यधिकस्य कुत्वं भवतीति किमेतस्य ज्ञापने प्रयोजनम् ? प्रतिघाययिषतीत्येत्र कुत्वं सिद्धं भवति' इत्युक्त्याऽस्याः कुत्वमात्रविषयकत्वमवगम्यते । तेनान्यत्रास्या अप्रवृत्त्या शाययतीत्यादौ शीधातोरादादिकत्वेन प्राप्तः शब्लुग् न भवतीत्यर्थः ॥ १६४ ॥

अङ्गाधिकारीयकार्यविषयकत्वसाधर्म्यादङ्गवृत्तपरिभाषोपन्यासः भ्यस इत्यत्र = भ्यसो भ्यमिति सूत्रे एत्वं = बहुवचने झल्येदित्येत्वम् । ॥ १६५ ॥

परिभाषाया अङ्गशब्दोऽङ्गाधिकारपरः । अङ्गे अङ्गाधिकारे वृत्तं निष्पन्नं पठितं

ज्यादादीयस इत्याकारविधानादनुमितेयम् ।
ईलोपेनाकृदिति च दीर्घेणैवान्यथा सिद्धेः ॥१६७॥
एषाऽनित्या किंयत्तदोरितीह द्वयोरिति प्रयोगात् ।
अत एव निष्ठितस्येत्युक्तं भाष्ये भ्यसो भ्यमिति सूत्रे ॥१६८॥
यत्रैकस्मिन्नाङ्गे जाते परिनिष्ठितं भवति रूपम् ।
तत्रान्यस्याऽऽङ्गस्य प्रवर्तनं नेति तस्यार्थः ॥१६९॥
केचित्तु वदन्त्यस्या न लक्ष्यसिद्ध्यात्मकं फलं किञ्चित् ।
अत एव न वक्तव्यः पिबेर्गुणनिषेध इत्येव ॥१७०॥
भाष्ये फलमुक्तं तच्चादन्तत्वाश्रयात्सिद्धम् ।
भ्यस इत्यत्राभ्यमितिच्छेदाद्युष्मभ्यमित्यादि ॥१७१॥

---

शास्त्रं तद्विहितकार्यं वा अङ्गवृत्तम् । तस्मिन् कृते पुनरस्याङ्गस्य वृत्तौ प्राप्तौ सत्याम्, अविधिरविधानमित्यर्थः । तदाह—अङ्गस्येति ॥ १६६ ॥

ज्ञापकमाह—ज्यादादिति । ईलोपेन—। बहोर्लोप इत्यतो लोपपदानुवृत्त्या आदेः परस्येति ज्यशब्दात्परस्य ईयस ईकारस्य लोपविधानेन "अकृत्सार्वधातुकयोर्दीर्घः" इति दीर्घेण च ज्यायानिति रूपसिद्धेः, प्रकृतपरिभाषाऽभावे आकारविधानं व्यर्थं सदस्या ज्ञापकम् । ज्ञापितायां त्वस्यां लोपोत्तरं दीर्घाप्रवृत्त्या तत्सार्थकमिति भावः ॥ १६७ ॥

किंयत्तदोरिति । "किंयत्तदोर्निर्धारणे द्वयोरेकस्य डतरच्" इति सूत्रे द्वयोरिति निर्देशादियमनित्या । अन्यथा तत्र त्यदादीनाम इत्यत्वे कृते ओसि चेत्येत्वं न स्यादिति तन्निर्देशानुपपत्तिरिति भावः । अत एव—। अस्या अनित्यत्वेन सर्वत्राप्रवृत्तेरेव । निष्ठितस्येति । अङ्गवृत्ते पुनर्वृत्तावविधिर्निष्ठितस्येति पठितमित्यर्थः ॥ १६८ ॥

निष्ठितस्येत्यनेनोक्तार्थलाभमाह—यत्रेति । परिनिष्ठितं प्रयोगार्हम् । आङ्गकार्ये जाते निष्ठितस्य = परिनिष्ठितस्य प्रयोगार्हतां प्राप्तस्य शब्दस्य पुनरन्याङ्गकार्यप्राप्तौ तदविधानमिति तत्पाठेऽर्थः । परिनिष्ठितत्वज्ञानं च शिष्टप्रयोगात् । एवं च यत्र परिनिष्ठितत्वज्ञानं तत्रैवास्याः प्रवृत्तिः । अन्यत्र नेत्यनित्यत्वं फलितम् ॥ १६९ ॥

केचित् = भाष्यतात्पर्यविद इत्यर्थः । पिबेरिति । ज्यादादीयसः ( ६।४।१६० ) शजनोर्जा ( ७।३।७९ ) इति सूत्रयोर्भाष्ये एनां ज्ञापयित्वा 'किमेतस्य ज्ञापने प्रयोजनम्' इति प्रश्ने 'पिबेर्गुणप्रतिषेधश्चोदितः स न वक्तव्यो भवति' इत्येव फलमुक्तं न तु

यत्तु

## संज्ञापूर्वको विधिरनित्यः ॥९३॥

ओरोदिति वक्तव्ये गुणवचनात्संज्ञया विधिरनित्यः ।
इति गम्यतेऽस्य च फलं स्वायम्भुवमिति तथा क्षिणोत्यादि ॥१७२॥

## आगमशास्त्रमनित्यम् ॥९४॥

सिद्धे निलोडिति लघुन्यासेन प्रोक्तमानि लोडिति यत् ।
तज्ज्ञापकमेतस्याः सिद्धमतस्तर्तुकाम इत्यादि ॥१७३॥

---

लक्ष्यसिद्धिरूपम् । 'तच्च फलं पित्रादेशस्यादन्तत्वाश्रयणादिकारस्योपधात्वाभावेन गुणाप्रवृत्त्यैव सिद्धम् । भ्यसोऽभ्यमित्यत्र अभ्यम् इत्येवच्छेदस्तेन युष्मभ्यमित्यादावेत्वस्य न प्राप्तिरतस्तदप्यस्या न प्रयोजनम् । अतश्चेयं निष्फलेति भावः ॥ १७०, १७१ ॥

अङ्गवृत्तपरिभाषाऽन्ते खण्डिता, तद्वदितरा अपि प्राचीनपठिता नव परिभाषा भाष्यकृदसंमत्या खण्डनीयास्तास्वनित्यपदघटिताः षट् परिभाषास्तावदुपन्यस्य प्राचीनोक्तं तदीयज्ञापकादिकं दर्शयति—यत्त्वित्यादिना । गुणवचनात् = ओर्गुण इति गुणग्रहणात् । संज्ञया विधिरिति । विधेयसमर्पकसंज्ञापदघटितं शास्त्रमित्यर्थः । संज्ञाघटितशास्त्रमात्रेऽस्याः प्रवृत्तौ तु ओरोदित्युक्तेऽप्यस्य भाधिकारीयत्वेन संज्ञापूर्वकत्वादनित्यत्वं स्यादेवेति गुणग्रहणस्य परिभाषाज्ञापनोत्तरमपि चारितार्थ्यं न स्यात् । एवमचः परस्मिन्नित्यस्याच्संज्ञापूर्वकत्वेनानित्यत्वादेव स्थानिवद्भावाप्रवृत्तौ न पदान्तेति सूत्रं व्यर्थं स्यात् । अतो विधेयसमर्पकपदस्य संज्ञारूपत्व एवास्याः प्रवृत्तिरिति बोध्यम् । स्वायम्भुवमिति । स्वयंभुव इदं स्वायम्भुवम् । धाम स्वायंभुवं ययुरिति कुमारसंभवे प्रयोगः । अत्र ओर्गुण इत्यस्यानित्यत्वेनाप्रवृत्त्याऽचिश्नुधात्विति उवङ् । क्षिणु इति तनादिको हिंसार्थो धातुस्तस्य उप्रत्यये परे लघूपधगुणाभावः । आदिपदेन ज्योतिषमित्यादिसंग्रहः । अत्र अधिकृत्य कृते ग्रन्थे इत्यर्थेऽणि वृद्ध्यभावः ॥ १७२ ॥

तत् = आनिलोडित्यत्राकारोपादानम् । तर्तुकाम इति—। सागरं तर्तुकामस्येत्यादाविडभावः फलमित्यर्थः ॥ १७३ ॥

## गणकार्यमनित्यम् ॥ ९५ ॥

सिद्धे तनादिषु कृञः पाठेन तनादिकृञ्भ्य इति सूत्रे ।
कृञ्ग्रहणादेतदतो न विश्वसेदत्र न शपो लुक् ॥ १७४ ॥

## अनुदात्तेत्त्वलक्षणमात्मनेपदमनित्यम् ॥ ९६ ॥

अनुदात्तेत्त्वात्सिद्धे ङित्करणं चक्षिङो गमकमत्र ।
तेन च सिद्धः स्फायन्निर्मोकेत्यत्र तङभावः ॥ १७५ ॥

## नञ्घटितमनित्यम् ॥ ९७ ॥

सिद्धे विनार्थकनञाऽनुदात्तमित्यत्र वर्जपदम् ।
ज्ञापकमत्रातो नेयङुवङ्ङित्यप्रवर्तनात्सुभ्रु ॥ १७६ ॥

## आतिदेशिकमनित्यम् ॥ ९८ ॥

ङ्लोडिति वाच्ये लोटो लङ्वदिति ज्ञापकोऽतिदेशोऽस्याः ।
तेन च जुहुत्वादिषु न सिजभ्यस्तेति झेर्जुसादेशः ॥ १७७ ॥

---

सिद्धे इति । करोतीत्यादावुप्रत्ययविधाने सिद्धे इत्यर्थः । एतत् = इदं वचनं ज्ञाप्यते । अतो 'न विश्वसेदविश्वस्त' मित्यत्र श्वसधातोरादादिकत्वेऽपि शपो लुग् नेत्यर्थः । एवं 'स चापि गदया दैत्यः सर्वा एवाहनत्पृथक्' इत्यत्राहनदित्यस्य सिद्धिः ॥ १७४ ॥

ङिदिति । इकारस्थानेऽकार एव पाठ्यस्तेन युज् भविष्यति नुम् च न भविष्यति, एवं च ङित्करणं व्यर्थं सदस्या ज्ञापकमिति बोध्यम् । स्फायन्निति । अत्र स्फायीधातोरनुदात्तेत्त्वेऽप्यात्मनेपदस्याप्रवृत्त्या परस्मैपदसिद्धिः ॥ १७५ ॥

सिद्ध इति । अनुदात्तं पदमेकवर्जमित्यत्र विनार्थकनञा समासं कृत्वाऽनेकमित्युक्त्यैव एकवर्जमित्यर्थलाभसंभवाद्वर्जग्रहणं व्यर्थं सन्नञ्घटितस्यानित्यत्वं ज्ञापयति । तेन नेयङुवङ्स्थानावस्त्रीति नदीसंज्ञानिषेधस्यानित्यत्वेनाप्रवृत्त्या हा पितः क्वासि हे सुभ्रु ! इति भट्टिप्रयोगे अम्बार्थनद्योर्ह्रस्व इति ह्रस्वसिद्धिरित्यर्थः ॥ १७६ ॥

ङ्लोडिति । लोटो ङित्त्वकरणेनैव ङित्कार्यनिर्वाहाल्लङ्वदित्यतिदेशो व्यर्थ इति भावः । जुहुत्वादिषु—। जुहुतु, बिभ्यतु इत्यादिषु ॥ १७७ ॥

इति परिभाषाषट्कं प्राचीनोदितमनित्यपदघटितम् ।
तद् भाष्येऽनुपलम्भादसम्मतत्वाच्च निर्मूलम् ॥ १७८ ॥

भाष्यानुक्तैरेवंविधैरनुमितैः प्रयोगसाधुत्वम् ।
न विनिश्चेतुं शक्यं प्रमाणरहितेष्वविश्वासात् ॥ १७९ ॥

न विचारितं यदीयं प्रयोजनं किञ्चिदपि भाष्ये ।
सौत्राक्षराणि तानि हि पुण्यैकफलानि पाठकृताम् ॥ १८० ॥

स्वायम्भुवमित्यादित्वसाधु लोके पृषोदरादिषु वा ।
आनीति च परिभाषाज्ञप्त्युद्धरमप्यचरितार्थम् ॥ १८१ ॥

आडागमविरहितनेः प्रसिद्धिविरहात्प्रयोगस्य ।
तस्माल्लोड्ग्रहणमिवाड्ग्रहणमपि स्पष्टबोधार्थम् ॥ १८२ ॥

---

खण्डयति—इतीत्यादिना । अनुपलम्भात् = अदर्शनात् । भाष्येऽनुक्तानामपि तत्र ध्वनितानां प्रामाण्याङ्गीकारादाह—असंमतत्वाच्चेति । भाष्यकृत इति शेषः ॥ १७८ ॥

ननु भाष्येऽदर्शनं नाप्रामाण्यकारणम् । तत्रानुल्लिखितानामपि सूत्राणां प्रामाण्याङ्गीकारात् । अतः शिष्टप्रयोगसमर्थनाय सूत्राक्षरवैयर्थ्यापत्तिपरिहाराय च स्वीक्रियन्तामेता अप्यत आह—भाष्यानुक्तैरिति । अनुमितैः = ज्ञापितैर्वचनैः । सूत्राणां तु स्पष्टार्थतया विशेषवक्तव्याभावेन भाष्यानुल्लिखितानामपि महर्षिपाणिनिप्रणीतानां प्रत्यक्षतया प्रामाण्यं सुनिश्चितम् । इमास्तु परिभाषा न पाणिन्यादिभिरुक्ता न वा भाष्ये क्वापि ज्ञापिताः; अतः सकलप्रयोगसमर्थननिपुणस्य भगवतो भाष्यकारस्याज्ञानकल्पनाऽपेक्षया, आसामप्रामाण्यमेव कल्पयितुमुचितमिति भावः ॥ १७९ ॥

ननूक्तपरिभाषाणामनभ्युपगमे तज्ज्ञापनप्रयुक्तचारितार्थ्यवतां गुणादिपदानां वैयर्थ्यं दुष्परिहरमत आह—न विचारितमिति । न्यासान्तरे लाघवसत्त्वेऽपि येषां सौत्राक्षराणां प्रयोजनं भाष्यकृता न विचारितं तेषां पाठेन पुण्योत्पत्तिरेव फलम् । अज्ञानामपि पारायणे धर्मश्रवणात् । प्रयोगसिद्धिरूपं दृष्टं फलं न कल्पनीयमित्यर्थः ॥ १८० ॥

लोके इति । छन्दसि तु सर्वे विधयो विकल्प्यन्त इति स्वायम्भुव इत्यस्यापि साधुत्वमिति भावः । बहुशिष्टप्रयोगान्महाकविप्रयोगाच्च तस्य लोकेऽप्यसाधुत्वकल्पनमयुक्तमित्यरुचेराह—पृषोदरादिषु चेति । आनीत्यादीनां ज्ञापकत्वमपि विघटयति—आनीति । आडागमरहितोऽपि निप्रत्ययो यदि क्वचित्स्यात्तर्हि तत्र णत्वव्यावृत्त्याऽऽङ्ग्रहणं

कृञ्ग्रहणं भाष्यकृता प्रत्याख्यातं तनादिसूत्रस्थम् ।
गणकार्यस्यानियमो न विश्वसेदित्यसावार्षः ॥ १८३ ॥

भाष्यानुक्तत्वाच्च ज्ञापकता नैव चक्षिङो ङस्य ।
विरहार्त्तरामवाक्ये सुभ्रु इति न दूषणाय भट्टिकृतौ ॥ १८४ ॥

सिच्साहचर्यतश्चाभ्यस्तादप्यनतिदिष्टङित्त्ववतः ।
लस्य स्थाने यो झिस्तस्य जुसिति नैष जुहवुप्रभृतौ ॥ १८५ ॥

---

चरितार्थं स्यात् । नत्वेवंविधः प्रयोगोऽस्ति । अतस्तद्वैयर्थ्यस्य ज्ञापनोत्तरमपि तदवस्थत्वात्तस्योक्तार्थज्ञापकत्वमनुपपन्नमिति भावः ॥ १८१,१८२ ॥

तनादिसूत्रस्थं='तनादिकृञ्भ्य उः' इति सूत्रस्थम् । अनियमः=अनियतत्वम् । न विश्वसेदिति । इदमुपलक्षणम् । स्तुन्वन्ति दिव्यैः स्तवैरित्यादयो भागवतादिपुराणस्थाः प्रयोगा अप्यार्षाः तेषामसाधुत्वेऽपि ऋषीणां तपोमाहात्म्यान्न दोषः । तदीयतपोबलाद् यज्ञमध्ये स्मृतिपुराणाद्यन्तर्गततत्पाठेऽस्मदादीनामपि न प्रत्यवायः । स्वातन्त्र्येणैवं प्रयुञ्जानास्तु प्रत्यवयन्त्येवेति पतिः समास एवेत्यस्मिन्सूत्रे शब्देन्दुशेखरे स्पष्टम् ॥ १८३ ॥

ङकाराभावेऽन्तेदित्त्वेन नुमापत्तिरतस्तदभावसंपादनेन ङित्त्वं चरितार्थमिति परिभाषेन्दुशेखरोक्तं चारितार्थ्यं तु अकारकरणेनैव नुम्वारणसिद्धेर्निरसितुं शक्यमतः सर्वसाधारणं भाष्यानुक्तत्वमेव तदीयज्ञापकताखण्डनहेतुरित्याह—**भाष्यानुक्तत्वादिति** । नञ्घटितमनित्यमित्यस्य फलं सुभ्रु इत्यत्र नेयङुवङ्स्थानित्यस्यानित्यतयाऽम्बार्थनद्योर्ह्रस्व इति ह्रस्वसिद्धिरिति प्राचीनोक्तं निरस्यति—**विरहार्त्तेति** । भट्टिकाव्ये 'हा पितः क्वासि हे सुभ्रु' इति रावणेन सीतापहरणे कृते सीताविरहार्त्तस्य भगवतो रामस्य वाक्ये सुभ्रु इत्यसाधुपदप्रयोगो विरहार्त्तत्वेनानवहितचित्ततां सूचयन्विरहपोषकत्वेन काव्यस्य गुण एव न दूषक इति भावः । इदं च शेखरानुसारेण । भट्टिकाव्यटीकायां जयमङ्गलायां तु भ्रूशब्दात् 'अप्राणिजातेश्च'—इत्यूङि बहुव्रीहावुपसर्जनह्रस्वे सुभ्रुशब्दात्पुनः' 'ऊङुतः'इत्यूङि सुभ्रूशब्दः । तस्य च लाक्षणिकत्वादचिन्त्वित्यत्र भ्रूशब्देनाग्रहणादुवङ्स्थानित्वाभावेन नेयङुवङिति निषेधाविषयत्वान्नदीसंज्ञायां सम्बुद्धावम्बार्थनद्योरिति ह्रस्वेन सुभ्रु इत्यस्य साधुत्वं व्यवस्थापितम् । सर्वथाऽपि तु परिभाषाया नोपयोगः ॥ १८४ ॥

आतिदेशिकमनित्यमित्यस्य प्रयोजनं निरस्यति—**सिजिति** । सिजभ्यस्तविदिभ्यश्चेत्यत्राभ्यस्तपदस्य सिच्साहचर्यादित्यर्थः ॥ १८५ ॥

एवमेव

## सर्वविधिभ्यो लोपविधिरिड्विधिश्च बलवान् ॥ ९९ ॥

नाग्लोपीत्यग्ग्रहणादाहुर्लोपस्य बलवत्त्वम् ।
वृद्धौ सत्यां यदि टेर्लोपः स्यात्तर्हि तस्य वैयर्थ्यात् ॥ १८६ ॥

तेन च वारीत्यस्माण्णिचि लुङ्यववारदित्यत्र ।
वृद्धेः प्राक् टेर्लोपादग्लोपित्वेन नोपधाह्रस्वः । १८७ ॥

एवं पटुशब्दाण्णिचि लुङि वृद्धेः प्राक् टिलोपेन ।
अग्लोपित्वात्सन्वद्भावो नेत्यपपटत् सिद्धम् ॥ १८८ ॥

इड्विधिबलवत्त्वे च ज्ञापकमाहुः सनिग्रहगुहोश्च ।
इत्यत्रोगन्तात्सन इट्प्रतिषेधार्थमुगनुकर्षकचम् ॥ १८९ ॥

तदनाश्रयणे तत्रेट्करणात्प्राक् सन इको झलिति किस्वे ।
श्रयुक इति सूत्रेणैवेण्णिषेधसिद्धेः किमेतेन ॥ १९० ॥

---

अन्या अपि भाष्यानुक्ताः प्राचीनपठिताः परिभाषास्तदीयज्ञापकाद्यनुवादपूर्वकं निरस्यति—एवमेवेत्यादिना । नाग्लोपीति । "नाग्लोपिशास्वृदिताम्" इत्यत्र अवर्णमात्रग्रहणे कर्तव्ये अगिति प्रत्याहारग्रहणाल्लिङ्गाल्लोपविधेर्बलवत्त्वं प्राचीना आहुः । तद्धि वारि आख्यत् अववारत् इत्यादौ णौचङ्युपधाह्रस्वाभावार्थम् । तत्र परत्वाद्वृद्धौ सत्यां टिलोपेऽग्लोपित्वाभावान्निषेधाप्रवृत्त्या प्रत्याहारग्रहणवैयर्थ्यं स्पष्टम् । अवर्णग्रहणं तु अकारान्तानां णिचि वृद्धौ सत्यामाकाररूपटेर्लोपे निषेधप्रवृत्त्यर्थमावश्यकमिति भावः ॥ १८६ ॥

फलमाह—तेन चेति । टेर्लोपात्—इष्ठवद्भावेन टिलोपात् ॥ १८७ ॥

अन्यदपि फलमाह—एवमिति । सन्वद्भावो नेति । सन्वद्भावाप्रवृत्त्या सन्यत इतीत्वं दीर्घो लघोरिति दीर्घश्च न भवति तेन अपपटदिति रूपं सिद्धमित्यर्थः ॥ १८८ ॥ इगनुकर्षकेति । श्र्युकः कितीति सूत्रादुकोऽनुकर्षणार्थमुक्तसूत्रे चकारग्रहणमिड्विधेर्बल-वत्त्वज्ञापकमाहुरित्यर्थः ॥ १८९ ॥

ज्ञापकत्वमुपपादयति—तदित्यादिना । तदनाश्रयणे = इड्विधेर्बलवत्त्वानाश्रयणे ॥ १९० ॥

अत एव च श्वयित्वेत्यादौ प्राक्संप्रसारणाद्भवतीट् ।
तेन च नत्त्वा सेडिति किद्भावात्संप्रसारणाभावः ॥ १९१ ॥

तदुभयमसमीचीनं णौ चङि सूत्रे हि भाष्यकृता ।
वृद्धेर्लोपो बलवानित्येव ज्ञापितं न सर्वेभ्यः ॥ १९२ ॥

अनुवृत्त्यर्थसकलचप्रत्याख्यानान्न चस्य लिङ्गत्वम् ।
नित्यत्वादेव च संप्रसारणात्पूर्वमिट् सिद्धः ॥ १९३ ॥

---

ज्ञापनफलमाह—अत एवेति । श्वयित्वेत्यादाविडागमात्पूर्वं क्त्वाप्रत्ययस्य कित्त्वात्तस्मिन्परे श्विधातोर्यजादित्वात्संप्रसारणे इष्टरूपं न सिध्येत् । इड्विधेर्बलवत्त्वे ज्ञापिते तु संप्रसारणात्पूर्वमिटः प्रवृत्त्या इडुत्तरं न क्त्वा सेडिति निषेधेन कित्त्वाभावात्संप्रसारणाप्रवृत्त्या तत्सिद्धिरित्यर्थः ॥ १९१ ॥

तदुभयमिति । प्राचीनोक्तं, सर्वविधिभ्यो लोपविधिर्बलवान्, सर्वविधिभ्य इड्विधिर्बलवानिति वचनद्वयमयुक्तमित्यर्थः । तत्राद्यस्यायुक्तत्वे हेतुमाह—णौ चङीति । "णौ चङ्युपधाया ह्रस्वः" (७।४।१) इति सूत्रे भाष्ये हि नाग्लोपीत्यत्राागिति प्रत्याहारग्रहणाद् वृद्धेर्लोपो बलीयानित्येव ज्ञापितं न तु सर्वविधिभ्यो लोपविधिर्बलवानिति तस्मात्तत्कल्पनमयुक्तमित्यर्थः । यदपि प्रत्ययलोपे प्रत्ययलक्षणमिति सूत्रं लोपस्य सर्वतो बलवत्त्वज्ञापकम्, अन्यथा प्रत्ययलोपात्पूर्वमेव प्रत्ययनिमित्तकार्याणां प्रवृत्त्येष्टसिद्धौ तद्वैयर्थ्यात् । तेन कानि सन्तीत्यत्र यणादेशात्प्राक् श्नसोरित्यल्लोपो भवतीति परिभाषावृत्तौ सीरदेवेनोक्तं तदप्ययुक्तम् । प्रत्ययलक्षणसूत्रस्य नियमार्थताया एव भाष्यसम्मतत्वात् । कानि सन्तीत्यादौ पदान्तरसापेक्षयणादेशापेक्षया एकपदाश्रितस्य श्नसोरित्यल्लोपस्यान्तरङ्गत्वादेव पूर्वप्रवृत्तेरिति बोध्यम् ॥ १९२ ॥

इड्विधेर्बलवत्त्वज्ञापकं निरस्यति—अनुवृत्त्यर्थेति । अनुवर्त्यपदघटितसूत्राव्यवहितसूत्रस्थचकाराणां प्रत्याख्यानस्य प्राग्व्यवस्थापितत्वात् "श्र्युकः किति (७।२।११) इति सूत्राव्यवहितोत्तरस्मिन् "सनिग्रहगुहोश्च" (७।२।१२) इत्यत्र चकारस्य प्रत्याख्यानान्न तेनोक्तार्थज्ञापनमिति भावः । फलस्यान्यथासिद्धिमाह—नित्यत्वादेवेति । एवं नेड्वशीत्यत इटोऽनुवृत्तौ पुनरार्धधातुकस्येड्वलादेरित्यत्रेड्ग्रहणमिड्विधेर्बलवत्ताज्ञापकमित्यपि न युक्तम् । भाष्यकृता तस्य प्रत्याख्यातत्वात् । यथाश्रुतसूत्रन्यासपक्षेऽपि तस्य गुणरूपविकारवारणार्थकत्वस्योक्तत्वाच्चेति बोध्यम् ॥ १९३ ॥

यदपि

ननु हन्तेर्यङ्लुकि सत्याशीलिंङि नोचितो वधादेशः ।
समुदायस्याहन्त्वादुत्तरखण्डस्य चार्थरहितत्वात् ॥ १९४ ॥
यश्चास्ति पूर्वखण्डोऽर्थवत्तया हन्पदग्राह्यः ।
तस्योत्तरखण्डेन व्यवधानादाह तत्रेदम् ॥ १९५ ॥

**प्रकृतिग्रहणे यङ्लुगन्तस्यापि ग्रहणम् ॥ १०० ॥**

षाष्ठं द्विर्वचनं द्विः प्रयोग इति भाष्यसिद्धान्तात् ।
उभयात्मनि समुदाये प्रकृतित्वान्न्यायसिद्धमिदम् ॥ १९६ ॥
अत एव द्वित्वे सति जुहुधीत्यादौ भवति हेर्धिः ।
तदपि न युक्तं तादृशवचनस्यादर्शनाद्भाष्ये ॥ १९७ ॥
अधुना सिद्धान्तेन प्रत्येकं तत्त्वबोधनेऽप्युभयोः ।
समुदायस्य तु तत्त्वं प्रमाणविरहान्न शक्यते वक्तुम् ॥ १९८ ॥

---

हन्तेर्यङ्लुगन्तादाशीर्लिङि वध्यादिति रूपमभ्युपगच्छतां माधवादीनां मतेनाशङ्कते—नन्विति। वधादेशः = "हनो वधलिङि" इत्यनेन विहितः। अनौचित्ये हेतुमाह—समुदायस्येति। जंहन्निति समुदायस्य हन्रूपत्वाभावात्। उत्तरखण्डस्य चागन्तुकत्वेनार्थवत्त्वाभावादर्थवद्ग्रहणपरिभाषया ग्रहणायोग्यत्वादिति भावः ॥१९४-१९५॥

षाष्ठमिति। षष्ठाध्यायस्थैरेकाचो द्वे प्रथमस्येत्यादिभिर्विहितं द्विर्वचनं द्विःप्रयोगरूपम्। तत्रोच्चारणपदाध्याहारेण एकाच इत्यादेस्तन्निरूपितकर्मषष्ठीत्वस्यैवोचितत्वात्। स्थानपदाध्याहारेण षष्ठ्यास्तन्निरूपितसंबन्धार्थकत्वकल्पनायामाटिटत् प्रतीषिषतीत्यादौ प्रकृतिप्रत्ययसंमोहेन णिलोपस्य सन्यत इतीत्वादेश्चाप्रवृत्त्यापत्तेः। स्पष्टं चेदम्, "आदेशप्रत्ययोः" (८।३।५९) इति सूत्रे भाष्ये। तत्र हि 'न धातुद्विर्वचने स्थाने द्विर्वचनं शक्यमास्थातुम्।' इत्याद्युक्त्वा 'तस्मात्तत्र द्विष्प्रयोगो द्विर्वचनम्' इत्युक्तम्। उभयात्मनि = प्रयोगद्वयरूपे प्रकृतित्वात् = उक्तसिद्धान्तेन समुदायस्य प्रकृतित्वावगमात् ॥ १९६ ॥

द्वित्वे सतीति। द्वित्वोत्तरं जुहु इति समुदायस्य हुझल्भ्यो हेर्धिरिति सूत्रस्थहुपदेन ग्रहणादिति भावः ॥ १९७ ॥

समुदायस्य = हंन्हन् इत्यादेः। तत्त्वम् = हन्रूपत्वम्। न शक्यते वक्तुम्। प्रत्यक्षविरोधादिति भावः ॥ १९८ ॥

अत एव परत्वात्सत्यस्तेर्द्वित्वे परस्य भुवि ।
पूर्वस्य श्रवणं स्यादित्याशङ्कयार्धधातुक इतीयम् ॥ १९९ ॥

विषयार्थे सप्तम्यत आदौ भूभाव एव भवतीति ।
द्यतेर्दिगीति सूत्रे समाहितं भाष्यकारेण ॥ २०० ॥

त्वद्रीत्या समुदायादेशे तदसङ्गतिः स्पष्टा ।
तस्मादुत्तरखण्डाश्रयणेनैव प्रवृत्तयः सर्वाः ॥ २०१ ॥

तस्यैव ह्युपदर्शितभाष्यादवगम्यतेऽर्थवत्त्वादि ।
णस्तु गदादीनामुपसर्गस्येत्यर्थतः प्रणिजगाद ॥ २०२ ॥

---

अत एव—समुदायस्य तत्तद्धातुरूपत्वाभावादेव । परत्वादिति । द्यतेर्दिगि लिटि ( ७।४।९ ) इति सूत्रे भाष्ये हि 'इह चापि बभूवेति । यदि तावत्स्थाने द्विर्वचनम् । भूभावः सर्वादेशः प्राप्नोति । अथ द्विः प्रयोगो द्विर्वचनम् । परस्य भूभावे कृते पूर्वस्य श्रवणं प्राप्नोति । नैष दोषः । आर्धधातुकीयाः सामान्येन भवन्ति । अनवस्थितेषु प्रत्ययेषु । तत्रार्धधातुकसामान्ये भूभावे कृते यो यतः प्राप्नोति स ततो भविष्यति । इत्युक्तम् । अत्र भ्वादेशविधायकसूत्राद्द्वित्वविधायकस्य परत्वेन पूर्वं प्रवृत्त्या अस् अस् इति स्थिते उत्तरखण्डस्य भू इत्यादेशे कृते पूर्वस्य श्रवणापत्तिमाशङ्क्य, आर्धधातुकीयाः सामान्येन भवन्तीत्यादिनाऽऽर्धधातुक इति पदे विषयसप्तम्याश्रयणेन समाहितम् ॥ १९९,२०० ॥

**त्वद्रीत्या** = परिभाषाङ्गीकारवाद्युक्तरीत्या । **समुदायादेशे** = तन्मते समुदायस्याऽऽसरूपत्वेन समुदायस्य भ्वादेशे । उत्तरखण्डाश्रयणेनैवेति । उत्तरखण्डमादायैव यथायोगं तत्तत्कार्यप्रवृत्तिर्बोध्येत्यर्थः ॥ २०१ ॥

**तस्यैव** = उत्तरखण्डस्यैव । **भाष्यात्** = द्यतेर्दिगीतिसूत्रस्थादुपदर्शितभाष्यात् । नानर्थकेऽलोऽन्त्यविधिरनभ्यासविकारे इत्यत्रानभ्यासविकार इति पर्युदासादपि अभ्यासस्यानर्थकत्वावगमादुत्तरखण्डस्यैवार्थवत्त्वमिति प्रतीयते । नन्वेवं प्रणिजगादेत्यादावुत्तरखण्डस्यैवार्थवत्त्वेन गदधातुरूपत्वात्तस्य चाभ्यासेन व्यवहितत्वान्नेर्गदनदेति सूत्रविहितमुपसर्गस्थान्निमित्तात्परस्य गदाद्यव्यवहितपूर्वस्य नेर्नस्य णत्वं न स्यादत आह—णस्त्विति । उक्तसूत्रे सप्तम्याः षष्ठ्यर्थवृत्तित्वमाश्रित्य गदादीनामुपसर्गो यो निः गदादिनिरूपितोपसर्गत्ववानिति यावत्, तदीयनकारस्य णत्वमित्यर्थेनाभ्यासव्यवधानेऽपि णत्वप्रवृत्त्या प्रणिजगादेत्यादि सिध्यतीत्यर्थः ॥ २०२ ॥

नन्वेवं बोभूत्विति निपातनाद्भूसुवोरिति निषेधः ।
यङ्लुकि लोट्येव स्यादिति भाष्यवचो विरुध्येत ॥ २०३ ॥
समुदायस्याभूत्वाद्यङ्लुकि तस्याप्रसक्तत्वात् ।
इति चेन्न तदन्तस्याङ्गस्येत्यर्थेन तत्प्राप्तेः ॥ २०४ ॥
तस्माद्धन्तेर्यङ्लुकि वध्यादित्यादिमाधवाद्युक्तिः ।
चिन्त्यैव तत्र चान्ये वावध्यादादिकान्याहुः ॥ २०५ ॥
यदपि
ननु वृद्धिर्यस्याचामादिस्तद्वृद्धमित्यत्र ।
इक्परिभाषोपगमे शालीयादेरसिद्धिः स्यात् ॥ २०६ ''

द्विः प्रयोगात्मकसमुदायस्य तत्तद्धातुरूपत्वानङ्गीकारे भाष्यविरोधमाशङ्कते—नन्वेवमित्यादिना । तथाहि 'दाधर्तिदर्धर्ति' (७।४।६५) इति सूत्रे भाष्यम्—बोभूत्विति किं निपात्यते । भवतेर्यङ्लुगन्तस्यागुणत्वं निपात्यते । नैतदस्ति प्रयोजनम् । सिद्धमत्रागुणत्वं भूसुवोस्तिङीति । एवं तर्हि नियमार्थं भविष्यति । अत्रैव यङ्लुङन्तस्य गुणो न भवति नान्यत्र । क्व मा भूत् । बोभवतीति' इति । अत्रैवेत्यस्य लोटयेव छन्दस्येव चेत्यर्थः । बोभवतीत्यत्र छन्दसि लेट्, लेटोऽडाटावित्यट् ॥ २०३ ॥

विरुद्धत्वे हेतुमाह—समुदायस्येति । अभूत्वात् = भूरूपत्वाभावात् । उत्तरखण्डस्य च तिङ्यस्माद्विहितस्तदादित्वाभावादित्यपि बोध्यम् । तस्य = भूसुवोस्तिङीति गुणनिषेधस्य । समाधत्ते—नेति ॥ २०४ ॥

उपसंहरति—तस्मादिति । वावध्यादिति । आर्धधातुक इत्यस्य विषयसप्तम्यन्तत्वात्तत्समानाधिकरणं लिङीत्यपि विषयसप्तम्यन्तं, तेन द्वित्वात्पूर्वमेव वधादेशे तस्य द्वित्वे दीर्घोऽकित इत्यभ्यासदीर्घे च वावध्यादिति रूपमिति केचित् । अन्ये तु लिङीत्यस्य परसप्तम्यन्तत्वमेवाश्रित्य हन्धातोर्द्वित्वेऽन्तरङ्गत्वादभ्यासस्य नुकि उत्तरखण्डस्य वधादेशे जंवध्यादिति । अपरे त्वनुनासिकान्ताङ्गत्वरूपनिमित्तस्य विनाशोन्मुखत्वादकृतव्यूहपरिभाषया नुगप्रवृत्त्याऽभ्यासदीर्घे जावध्यादिति रूपमाहुः ॥ २०५ ॥

खण्डनीयत्वादेवाह—यदपीति । अस्याग्रे वक्ष्यमाणेन तन्नेत्यनेनान्वयः । इक्परिभाषोपगमे इति । इको गुणवृद्धी इत्यस्य यत्र गुणवृद्धिपदे उच्चार्येते तत्रेक इति षष्ठ्यन्तं पदमुपतिष्ठत इत्यर्थेन वृद्धिर्यस्याचामित्यत्रापि तदुपस्थितौ, इकस्थानिका वृद्धिर्यस्याचामादिस्तद् वृद्धमित्यर्थे ऐतिकायन औपगव इत्यादीनामेव वृद्धसंज्ञा स्यात् न तु

अत आह

**विधौ परिभाषोपतिष्ठते नानुवादे ॥ १०१ ॥**

प्राधान्यं हि विधेयस्यातश्च विधेयवाचि पदम् ।
परिभाषोपस्थापकलिङ्गं नोद्देश्यवाचि पदम् ॥ २०७ ॥

तेन मृजेर्वृद्धिरिहेक्परिभाषोपस्थितिर्न्याय्या ।
न तु वृद्धिर्यस्याचामित्यत्रोद्देश्यवाचित्वात् ॥ २०८ ॥

यत्र तु परिभाषाया लिङ्गं न विधेयवाचि सम्भवति ।
तत्रोद्देश्यगतमपि प्रधानमेवेष्यते लिङ्गम् ॥ २०९ ॥

यद्धि विधेये साक्षाद्विशेषणं तत्प्रधानमन्यस्मात् ।
इक इति पदं यथेको यणचीत्यत्रेति तल्लिङ्गम् ॥ २१० ॥

तस्मात्षष्ठी स्थाने योगे त्येषोपतिष्ठते तत्र ।
यत्तु न तादृगुदीचामात इति यथा न तत्रैषा ॥ २११ ॥

---

शालमालेत्यादीनाम् । ततश्च तत्र वृद्धाच्छ इत्यस्याप्रवृत्त्या शालीय इत्यादिरूपाणि न सिध्येयुरित्यर्थः ॥ २०६ ॥

विधावित्यस्य प्रधाने इति अनुवादे इत्यस्याप्रधाने इत्यर्थे तात्पर्यमित्याशयेन व्याचष्टे—प्राधान्यमिति । प्रधानाप्रधानयोः प्रधाने कार्यसंप्रत्यय इति न्यायादिति भावः । लिङ्गमित्यस्योचितमिति शेषः ॥ २०७ ॥

न्याय्येति । तत्र वृद्धिपदस्य विधेयबोधकत्वादिति भावः । उद्देश्यवाचित्वात् । तत्र वृद्धिपदस्योद्देश्यबोधकत्वादित्यर्थः ॥ २०८ ॥

प्रधानम् = परम्पराविशेषणापेक्षया प्रधानं साक्षाद्विधेयविशेषणमित्यर्थः ॥ २०९ ॥

अन्यस्मात् = परम्परया विशेषणात् । उदाहरणमाह—इक इति । इको यणचीति सूत्रे इक इति पदं यण्रूपविधेये साक्षाद्विशेषणम् अतस्तत् षष्ठीस्थाने योगेति परिभाषोपस्थापकं लिङ्गमित्यर्थः ॥ २१० ॥

न तादृक् । विधेये साक्षाद्विशेषणं न किन्तु परम्परयेत्यर्थः । उदीचामिति । उदीचामातःस्थाने यक्पूर्वाया इत्यत्र आत इति अकारस्य साक्षाद्विशेषणं न तु विधेयस्य, अतस्तत्र षष्ठी स्थाने योगेति परिभाषा न प्रवर्तत इत्यर्थः ॥ २११ ॥

अत एव स्थाने पदमिह सफलं ज्ञापकं तदित्याहुः ।
तदसदमुख्य उदात्तस्वरितादिपदेऽप्युपस्थानात् ॥ २१२ ॥

ष्यङ इति सूत्रे भाष्येऽल्लोपोऽन इतीह भाधिकारस्थे ।
भपदोपस्थापितयचि प्रवर्तनादकथनाच्च भाष्यकृता ॥ २१३ ॥

स्थाने ग्रहणस्य च न ज्ञापकता स्थानसंबन्धः ।
परिभाषया न लभ्योऽपि तु योग्यतयेति भाष्योक्तेः ॥ २१४ ॥
किञ्चेको गुणवृद्धी इति सूत्रेऽचश्च सूत्रे च ।
अध्याहृतं विधीयत इति तन्मूलः प्रवादोऽयम् ॥२१५॥

---

अत एव = उक्तपरिभाषाया अप्रवृत्तेरेव । ज्ञापकमिति । न्यायसिद्धाया अस्या ज्ञापकमप्यस्तीति भावः ॥ खण्डयति—तदसदित्यादिना । "उदात्तस्वरितयोर्यणः स्वरितोऽनुदात्तस्य ।", उदात्तस्थाने स्वरितस्थाने च यो यण् ततः परस्यानुदात्तस्य स्वरितः स्यादित्यर्थः । अत्रोद्देश्योऽनुदात्तस्तद्विशेषणं यण इति, तस्य विशेषणमुदात्तस्वरितयोरिति परम्परया विशेषणेऽपि तत्र षष्ठी स्थाने योगेत्यस्या उपस्थितिर्भवत्येव । अतोऽस्या व्यभिचरितत्वादनाश्रयणमिति भावः आदिपदेन इको यणचीत्यादावुद्देश्यविशेषणेऽचीत्यादौ तस्मिन्निति परिभाषोपस्थित्या बहुषु स्थलेषु व्यभिचारः सूच्यते ॥ २१२ ॥

भाष्यविरोधादपि नाश्रयणीयेत्याह—ष्यङ इति । "ष्यङः संप्रसारणम्—" (६।१।१३) इति सूत्रे भाष्ये—अनस्तक्ष्णेत्यादावाद्यान्घटकाकारस्याल्लोपोऽन इति लोपमाशङ्क्य "एवं तर्हि कार्यकालं संज्ञापरिभाषम् । यत्र कार्यं तत्रोपस्थितं द्रष्टव्यम् । भस्येति, तत्रोपस्थितमिदं भवति यचि भमिति । तत्र यजादिपरतयाऽन्कारं विशेषयिष्यामः । अनाऽकारम् । यजादिपरस्यानो योऽकार इति" इत्युक्तम् । तत्र परम्परया विधेयविशेषणेऽपि तस्मिन्निति निर्दिष्टे पूर्वस्येति परिभाषाप्रवर्तनादेतदाश्रयणे तद्विरोधः स्पष्टः । अकथनाच्च = भाष्यकृताऽस्याः क्वाप्यनुक्तत्वाच्चेत्यर्थः ॥ २१३ ॥

स्थाने ग्रहणस्य प्रकृतपरिभाषाज्ञापकत्वमपि न युक्तमित्याह—स्थाने इति । स्थानसम्बन्धः । षष्ठ्याः स्थाननिरूपितसंबन्धार्थकत्वम् । योग्यतयेति—। 'यद्यपि लोके बहवोऽभिसम्बन्धा आर्था यौनाः मौखाः स्रौवाश्चेति । शब्दस्य तु शब्देन कोऽन्योऽभिसंबन्धो भवितुमर्हति; अन्यदतः स्थानात्' इति षष्ठी स्थाने योगा (१।१।४९) इति सूत्रस्थभाष्ये शब्दस्य शब्देन सह स्थाननिरूपितसंबन्धस्यैव योग्यत्वं दर्शितम् । षष्ठी स्थाने योगेति सूत्रं निर्दिश्यमानपरिभाषार्थकम् । इति च तत्र भाष्ये स्पष्टम् ॥ २१४ ॥

अध्याहृतमिति । इको गुणवृद्धी इत्यत्र गुणवृद्धिशब्दाभ्यां यत्र गुणवृद्धी विधीयेते इति अचश्चेत्यत्र ह्रस्वदीर्घप्लुतशब्दैर्यत्राज्विधीयत इति सूत्रद्वये विधीयत इति पदस्या-

देवान्नमस्करोतीत्यत्र कृञः कर्मणि द्वितीयायाः ।
ननु बाधिका परत्वान्नमोऽन्वयकृता चतुर्थी स्यात् ॥२१६॥
स्वगतापकृष्टताबुद्ध्यनुकूला हि क्रिया नमोद्योत्या ।
तत्र च बोधे देवान्वयसत्त्वेन द्वयोः समं प्राप्तेः ॥२१७॥
यदि तु नमस्कारार्थाभिधायकनमोऽन्विताच्चतुर्थीष्टा ।
तर्हि नमस्यति देवानत्र तदापत्तिरत आह ॥२१८॥

## उपपदविभक्तेः कारकविभक्तिर्बलीयसी ॥१०२॥

पदसंबन्धनिमित्ता विभक्तिरुपपदविभक्तिरित्युक्ता ।
पदसम्बन्धः स्वार्थान्वयप्रयुक्तोऽत्र विज्ञेयः ॥२१९॥

---

व्याहारः क्रियते । स एव विधौ परिभाषोपतिष्ठते नानुवादे इत्यस्य प्रवादस्य मूलम् । अन्यत्र तु नास्य फलमित्यर्थः । एतच्चोक्तसूत्रद्वयव्याख्यायां शब्देन्दुशेखरे स्पष्टम् ॥२१५॥

पूर्वपरिभाषानिरूपणे षष्ठी स्थाने योगेति विभक्तिविषयकपरिभाषोपन्यासात्तत्प्रसङ्गेनाह—देवानिति । अत्र देवानां कृधात्वर्थव्यापारप्रयोज्यफलाश्रयत्वेन देवशब्दात् कर्मणि द्वितीयेत्यनेन प्राप्ताया द्वितीयायाः परत्वेन बाधिका 'नमः स्वस्ति—' इति सूत्रविहिता नमःशब्दार्थान्वयप्रयुक्ता चतुर्थी स्यादित्यर्थः ॥ २१६ ॥

ननु तत्र नमःपदार्थेऽन्वयविवक्षायां चतुर्थी, कृधात्वर्थफलेऽन्वयविवक्षायां द्वितीयेति द्वयोर्युगपत्प्राप्त्यभावेन विप्रतिषेधशास्त्रप्रवृत्तिरनुपपन्नाऽत आह—स्वगतेत्यादि । नमस्काररूपोऽर्थः ,कृधातुवाच्यः । नमः पदं तद् द्योतकम् । नमस्कारश्च स्वनिष्ठापकृष्टत्वप्रकारकबोधानुकूलः करशिरःसंयोगादिव्यापाररूपः । अतस्तदन्तर्गतबोधे देवानामन्वयेन, नमः कृ इत्येतदुभयान्वयसत्त्वाद्विभक्तिद्वयस्य युगपत्प्राप्त्या विप्रतिषेधशास्त्रप्रवृत्तिर्युक्तैवेति भावः ॥ २१७ ॥

यदि त्विति । स्वस्त्यादिपदसाहचर्येण निपातत्वानाक्रान्तः शक्त्या नमस्कारार्थाभिधायको यो नमः शब्दस्तदन्वितात्, स्वार्थान्वयद्वारा तत्संबद्धात्प्रातिपदिकाच्चतुर्थीत्यर्थाश्रयणे देवान् नमस्करोतीत्यत्र चतुर्थी न प्राप्नोतीत्युच्यते चेत्तर्हि नमस्यति देवानित्यत्र नमःशब्दस्य नमस्कारवाचकत्वात् तदापत्तिः = द्वितीयां बाधित्वा चतुर्थ्यापत्तिरित्यर्थः ॥ २१८ ॥

स्वार्थेति । स्वं नमः स्वस्तीत्यादि पदम्; तदर्थस्य देवादिपदार्थे योऽन्वयस्तत्प्रयुक्तः, तद्वारक इत्यर्थः । समभिव्याहारमात्रस्य संबन्धत्वे 'नमः समस्तभूताना-

कारकविशेषकर्मादिबोधिका कारकविभक्तिः ।
प्रथमाया अपि तत्त्वं सह युक्त इतीह सूचितं भाष्ये ॥२२०॥

वाचनिकीयं भाष्ये पठिता सहयुक्त इत्यादौ ।
केचित्तु मुख्यभूतक्रियाऽन्वयनिमित्तकत्वेन ॥२२१॥

कारकविभक्तयः खलु बलवत्यस्तदिह मूलमित्याहुः ।
तदसत्तत्र च दीयत इति सूत्रस्थाकरविरोधात् ॥२२२॥

तत्र हि यस्य च भावेनेत्येतदपेक्षयाऽधिकरणार्था ।
सप्तम्यधिकबलेति व्यक्तं तुल्यः क्रियान्वयस्तु तयोः ॥२२३॥

---

मादिभूताय भूभृते इत्यादौ' नमस्कार्यातिरिक्तवाचकशब्दादपि चतुर्थ्यापत्तेरिति भावः ॥ २१९ ॥

क्रियान्वय्यर्थकविभक्तित्वं कारकविभक्तित्वमिति कैयटाद्यभिमतार्थाङ्गीकारे, यस्य च भावेनेति भावलक्षणसप्तम्या अपि तथात्वापत्तिः स्यादत आह—कर्मादीति । कारकत्वव्याप्यकर्मत्वादिबोधकविभक्तित्वं कारकविभक्तित्वमित्यर्थः । तत्त्वम् = कारकविभक्तित्वम् । सूचितमिति । 'सहयुक्तेऽप्रधाने' ( २।३।१९ ) इति सूत्रे भाष्ये—पुत्रेण सहागतो देवदत्त इत्यादावनया परिभाषया प्रथमायाः प्राबल्यमास्थाय, अप्रधानग्रहणं प्रत्याख्यातम् । तेन प्रथमाया अपि कारविभक्तित्वं ध्वनितमिति भावः ॥ २२० ॥

सहयुक्त इत्यादौ = 'सहयुक्तेऽप्रधाने' इत्यादिसूत्रेषु । मुख्यभूतेति । वाक्यार्थे क्रियायाः प्राधान्यात्तत्संबन्धनिमित्तककर्माद्यर्थककारकविभक्तीनां बलवत्त्वम् । तत्=प्रधानसम्बद्धत्वम्, इहास्यां परिभाषायां मूलं प्रमाणं, नत्वियं वाचनिकीति भावः । उक्तमतं नागेशमतानुसारेण निरस्यति—तदसदिति । आकरो भाष्यकैयटौ ॥ २२१,२२२ ॥

व्यक्तमिति । भाष्ये ध्वनितम्, कैयटेन च स्पष्टीकृतमित्यर्थः । तत्र च दीयते कार्यं भववत् ( ५।१।९६ ) इति सूत्रे वार्तिककृता 'कार्यग्रहणमनर्थकं तत्र भवेन कृतत्वादिति कार्यग्रहणे प्रत्याख्याते भाष्यकृता दीयते ग्रहणस्यापि वैयर्थ्यमाशङ्कितम्—यथैव हि यन्मासे कार्यं तन्मासे भवं भवति । एवं यदपि मासे दीयते तदपि मासे भवं भवति । तत्र, तत्र भव इत्येव सिद्धम् । न सिध्यति । न तन्मासे दीयते । किं तर्हि मासे गते । एवं तर्हि औपश्लेषिकमधिकरणं विज्ञास्यते' इति । अत्र कैयटः—'मासे गते इति । मासे दीयत इति नैषाऽधिकरणसप्तमी किं तर्हि यस्य च भावेनेति । तत्र भव इत्यत्र चाधिकरणसप्तम्याश्रिता, उपपदविभक्तेः कारकविभक्तिर्बलीयसीति न्यायात्, इह त्वतिदेशसामर्थ्याद्भावलक्षणसप्तमीपरिग्रहः । औपश्लेषिकमिति ।

न च कारकतत्क्रिययोर्योगः साक्षादतोऽन्तरङ्गोऽसौ ।
नम आदेस्तु द्योत्यक्रियाकृतत्वेन बहिरङ्गः ॥ २२४ ॥

तेनास्या बलवत्त्वं परिभाषामूलमिति वाच्यम् ।
भाष्ये नमो वरिव इति सूत्रस्थे तद्विरुद्धोक्तेः ॥ २२५ ॥

तत्र नमस्यति देवानत्र चतुर्थी निवारिता ह्यनया ।
अत्र च नमः पदार्थो मुण्डयतौ मुण्डवत् क्रियारूपः ॥ २२६ ॥

एवं च नमोऽर्थेऽपि क्रियात्मके कर्मसम्बन्धात् ।
भाष्यानुपपत्तिरतो वाचनिकीत्येव मन्तव्यम् ॥ २२७ ॥

एतन्नागेशमतं परे तु मुख्यक्रियान्वयबलेन ।
कारकसुपां प्रबलता न्यायादेवागतेत्याहुः ॥२२८॥

---

मासेऽतिक्रान्ते यद्दीयते तस्य मास औपश्लेषिकमधिकरणमिति तत्र भव इत्यनेनैव सिद्धमित्यर्थः, इति । क्रियान्वयनिमित्तकत्वेन कारकविभक्तीनां बलवत्त्वाङ्गीकारेऽधिकरणसप्तम्या भावलक्षणसप्तम्याश्च तथात्वेन साम्यादाद्याया अपरापेक्षया बलवत्त्वासंभवादुक्तभाष्यकैयटासङ्गतिरिति भावः ॥ २२३ ॥

कारकविभक्तीनामन्तरङ्गत्वमस्या मूलमित्यपि निराकरोति—न चेति । नम आदेस्त्विति । नमः स्वस्तीत्यादौ स्वं रूपमिति सूत्रेण स्वरूपस्यैव नमः शब्दार्थत्वात्तस्य स्वद्योत्यक्रियाकर्मत्वमेव देवादिभिः सम्बन्धः । एवं चासौ क्रियाद्वारकत्वेन बहिरङ्गः । क्रियायास्तु साक्षादेव कर्मत्वसंबन्ध इत्यन्तरङ्गः शीघ्रोपस्थितिकत्वादिति भावः ॥ २२४ ॥

अस्याः = कारकविभक्तेः ॥ २२५ ॥

तत्र = नमो वरिवश्चित्रङः क्यच्' इति सूत्रस्थे भाष्ये । मुण्डवत् = मुण्डपदार्थ इव । क्रियारूपः—। नमस्यतीत्यत्र स्वनिष्ठापकृष्टत्वप्रकारकबोधो नमःशब्दार्थः, तदनुकूलव्यापारश्च क्यजन्तार्थः । तेन नमःशब्दार्थस्य क्रियारूपत्वम् ॥ २२६ ॥

कर्मसम्बन्धात् = कर्मत्वेनैव देवानामन्वयात् । भाष्यानुपपत्तिः = उपपदविभक्तेरिति परिभाषया तत्र चतुर्थीवारणपरभाष्यानुपपत्तिरित्यर्थः ॥ २२७ ॥

मुख्यक्रियान्वयबलेन = प्रधानीभूतक्रियान्वयित्वरूपहेतुना । न्यायादेवागता = न्यायसिद्धैवेत्यर्थः ॥ २२८ ॥

भाष्यं तत्र च दीयत इति सूत्रस्थं तु न विरुद्धम् ।
तस्मिन्निति परिभाषासामर्थ्यादेव शास्त्रेऽस्मिन् ॥२२९॥
अधिकरणार्था सप्तम्ये वा सति बाधके ज्ञेया ।
एवं च तत्र भव इत्यधिकरणे सप्तमीति तात्पर्यात् ॥२३०॥
देवान्नमस्यतीत्यपि बलवत्त्वात्सिध्यति प्रधानविधेः ।
नमनघटकबोधं प्रति तज्जनकव्यापृतेः प्रधानत्वात् ॥२३१॥
तज्जन्यफलाधारे कर्मणि विहिता द्वितीयैव ।
बोधान्वयप्रयुक्तां बलवत्त्वाद्बाधते खलु चतुर्थीम् ॥ २३२ ॥
अत एव सुतेन सहायातस्य पितुः स्वमत्रसहयुक्ते ।
भवति विबाध्य तृतीयां प्रधानसंबन्धबोधिका षष्ठी ॥ २३३ ॥
पितृगतसाहित्यात्मकसंबन्धापेक्षया विशेष्यतया ।
यः खलु धनानुयोगिकसंबन्धस्तस्य मुख्यत्वात् ॥ २३४ ॥

---

पूर्वोक्तं भाष्यविरोधं परिहरति—भाष्यमिति । सामर्थ्यादेवेति । यदि सर्वत्र शास्त्रे सत्सप्तम्याश्रीयेत तर्हि तस्मिन्निति परिभाषा व्यर्था स्यात् औपश्लेषिकसप्तम्या एव तल्लिङ्गत्वात् । सप्तमीति ज्ञाप्यते । अत एव स्नुक्रमोरनात्मनेपदनिमित्ते (७।२।३६) इति सूत्रे तस्मिन्निति निर्दिष्टे पूर्वस्येति परिभाषायां सत्यां सत्सप्तम्याश्रयणस्यावश्यकत्वादिति कैयटेनोक्तम् । तात्पर्यात् = भाष्यस्येति शेषः । एवं च तद्बलेनास्या वाचनिकत्व-व्यवस्थापनं न युक्तमिति भावः ॥ २२९,२३० ॥

प्रधानविधेः = प्रधाननिमित्तककार्यस्य । द्वितीयायास्तथात्वमुपपादयति—नमने-त्यादिना । नमनं नमस्कारः । व्यापृतेः = व्यापारस्य ॥ २३१ ॥

तज्जन्यफलाधारे = प्रधानीभूतव्यापारजन्यफलाश्रये ॥ २३२ ॥

अत एवेति । अस्याः प्रधानाप्रधानयोः प्रधाने कार्यसंप्रत्यय इति न्यायमूल-कत्वादेव कारकविभक्त्यतिरिक्तस्थले पुत्रेण सहागतस्य पितुर्धनमित्यत्रापि सह युक्तेऽ-प्रधान इति सूत्रेऽप्रधानग्रहणप्रत्याख्याने सहयुक्तत्वेन पितृशब्दात्प्राप्तां तृतीयां प्रधान-संबन्धबोधकत्वेन बलवत्त्वात्षष्ठी बाधते । वाचनिकत्वे तु षष्ठयाः कारकविभक्तित्वा-भावेन तन्न सिध्येदिति भावः ॥ २३३ ॥

पितृप्रतियोगिकस्य धनानुयोगिकस्य संबन्धस्य प्राधान्यमुपपादयति—पितृगतेति । पुत्रप्रतियोगिकः पित्रनुयोगिको यः साहित्यरूपः संबन्धस्तदपेक्षया विशेष्यत्वेन प्रधानी-

नन्वदमुयङित्यादावदसोऽसेरित्यनेन सूत्रेण ।
पूर्वदकारादेरपि मुत्वं स्याल्लत्वतुल्यमत आह ॥ २३५ ॥

## अनन्त्यविकारेऽन्त्यसदेशस्य ॥ १०३ ॥

लक्ष्यान्त्यविकारस्याप्रयोजकं भवति यच्छास्त्रम् ।
अन्त्यसदेशानन्त्यसदेशोभयवर्णविषयं च ॥ २३६ ॥
तल्लक्ष्ये पर्याप्तं यस्योद्देश्यत्वमस्ति तच्छास्त्रे ।
अन्त्यसदेशस्येत्युपतिष्ठत इत्येष निष्कर्षः ॥ २३७ ॥

---

भूतं यद्धनं तदनुयोगिकसंबन्धस्य प्राधान्यात्तन्निमित्तकषष्ठ्या अप्रधानसाहित्यरूपसंबन्धनिमित्तकतृतीयापेक्षया बलवत्त्वेन षष्ठ्येव भवतीत्यर्थः ॥ २३४ ॥

वाचनिकत्वसाधर्म्येणानन्त्यविकार इति परिभाषामवतारयति—नन्विति । लत्वतुल्यम्—यथा चलीक्लृप्यत इत्यत्र कृपो रोल इति लत्वं द्वयोरपि रेफयोर्भवति तद्वदित्यर्थः ॥ २३५ ॥

न अन्त्यविकारो येन तदनन्त्यविकारम्, एवम्भूते शास्त्रेऽन्त्यसदेशस्येत्युपतिष्ठत इति परिभाषार्थः । तेन अदद्य् अङ् इति स्थितौ, अदसोऽसेरित्यस्यान्त्ययकारविकाराप्रयोजकत्वेन तत्सूत्रेऽन्त्यसदेशस्येत्यस्योपस्थितौ, अन्त्ययकारात्पूर्वत्वात्तद्विजातीयवर्णाव्यवहितत्वाच्चान्त्यसदेशो दकारस्तस्य मकारादेशे प्रत्यासत्त्या ततः परस्य रेफस्योत्वे च अदमुयङ् इति सिध्यति । पूर्वदकारस्यान्त्यसदेशत्वाभावेन मुत्वपरिहारश्च भवति । न चामू इत्यादावन्त्यौकारस्थानिकोकाररूपविकारप्रयोजकत्वेन तत्सूत्रेऽन्त्यसदेशस्योपस्थितिर्न युक्तेति वाच्यम् । विधेयभेदेन वाक्यभेदाद् 'दस्य मः' इति शास्त्रस्यान्त्यविकाराप्रयोजकत्वेन तत्र तदुपस्थितिसम्भवात् । तेनानन्त्यसदेशस्य मत्वाप्रवृत्त्या तत्सन्नियोगशिष्टमुत्वमपि न प्रवर्तत इतीष्टरूपसिद्धिः ॥ तावन्मात्रात्तौ णोनः, धात्वादेः षः स इत्यनयोस्तथात्वेन तत्र तदुपस्थितौ नेता सोतेत्यादावेव नत्वसत्वयोः प्रवृत्तिः स्यात्, न तु नमति सिञ्चतीत्यादौ । तदर्थमन्त्यसदेशानन्त्यसदेशोभयवर्णयोर्युगपद्व्याप्तिप्रयोजके तदुपस्थितिरिति कथनेऽपि नमनं नयतीति नमननीरित्यत्र सापादिकसर्वकार्यनिष्पत्त्यनन्तरमादिणकारान्त्यसदेशणकारयोरुभयोर्युगपदेकप्रयोगे नत्वप्रापके णो न इत्यतदुपस्थितौ नमतीत्यादौ णत्वाप्रवृत्तितादवस्थ्यम् । एवं सुत्वानं सूते जनयतीति सुत्वसूरित्यत्र युगपद्द्वयोः प्राप्तिसत्त्वाद्धात्वादेः षः स इत्यत्र तदुपस्थितौ सिञ्चतीत्यादौ सत्वाप्रवृत्तिः स्यादतो निष्कृष्टमर्थमाह—लक्ष्यान्त्येत्यादिना । यत्किञ्चित्प्रयोगविशिष्टे शास्त्रेऽन्त्यसदेशस्येत्युपतिष्ठते । वैशिष्ट्यं च स्वान्त्योद्देश्यकविकारा-

तेनान्त्यविकारकरे न हलादिः शेषसूत्र इदम् ।
भवति ततश्चाभ्यासे प्सयोर्निवृत्तिर्जुगुप्सतीत्यादौ ॥ २३८ ॥

अपरविशेषणविरहान्नान्त्यसदेशस्य णो न इत्यादि ।
अत एव नमति सिञ्चत्यादिष्वपि णस्य नः षः सः ॥२३९॥

तत्र च वर्णग्रहणान्न सुपो धात्विति लुको विधावेतत् ।
तेन परमराजादौ विग्रहवाक्ये द्वयोरपि सुपोर्लुक् ॥२४०॥

नत्वविधेश्च नमननीप्रभृतावुद्देश्यता धातौ ।
प्रत्येकं पर्याप्ता न तु समुदायेऽस्त्यतो न तत्रेयम् ॥२४१॥

---

प्रयोजकत्व – स्वावयवान्त्यसदेशानन्त्यसदेशोभयवृत्तिवर्णत्वव्याप्यधर्मावच्छिन्नविषयताप्रयोजकत्व–स्वपर्याप्तोद्देश्यताकत्वैतत्त्रितयसंबन्धेनेति भावः । तल्लक्ष्ये = शास्त्रप्रवृत्त्याश्रयलक्ष्ये ॥ २३६,२३७ ॥

क्रमेण तत्तन्निवेशफलमाह—तेनेत्यादिना । जुगुप्सतीत्यादौ गुप्स् इति प्रथमैकाचो द्वित्वेऽभ्यासान्त्यलोपप्रयोजकत्वाद्धलादिः शेष इति सूत्रेऽन्त्यसदेशस्येति नोपतिष्ठते । तेन प्सयोः = पकारसकारयोरुभयोर्निवृत्तिर्भवति । तदुपस्थितौ तु पकारस्यैव निवृत्तिः स्यादिति भावः ॥ २३८ ॥

अपरेति । णो नः "धात्वादेः षः सः" इत्यनयोरन्त्यसदेशानन्त्यसदेशोभयवर्णोद्देश्यकत्वाभावेन नमति सिञ्चतीत्यादावनन्त्यसदेशयोरपि णषयोर्नत्वसत्वे भवतः । अन्यथा नेता सोतेत्यादावेवान्त्यसदेशत्वेन तयोस्ते स्यातामिति भावः ॥ २३९ ॥

तत्र चेति । द्वितीयविशेषणे वर्णविषयमिति वर्णपदनिवेशात् परमसुराज्ञन् सु अ इति टजन्तसमुदायघटकसुब्लुक्प्रयोजकस्य सुपो धातुप्रातिपदिकयोरित्यस्य वर्णत्वव्याप्यधर्मावच्छिन्नविषयताप्रयोजकत्वाभावात्तत्रान्त्यसदेशस्येत्यस्यानुपस्थितया पूर्वोत्तरयोर्द्वयोरपि सुप्रत्यययोर्लुग्भवतीत्यर्थः ॥ २४० ॥

तल्लक्ष्ये पर्याप्तमित्यस्य फलमाह—नत्वविधेरिति । इदमुपलक्षणं सत्वविधेरपि । तयोर्धातुत्वावच्छिन्नोद्देश्यकत्वेन नमन,–नी, सुत्व–सू इत्यादौ धातुत्वस्य प्रत्येकधातुपर्याप्तत्वात्समुदाये धातुत्वाभावात्तयोः सूत्रयोरस्या अप्रवृत्त्या न दोषः । एवं चलीक्लृप्यत इत्यत्र कृपो रोल इत्यस्योद्देश्यतावच्छेदकं कृप्धातुत्वं न तु समुदायत्वं तस्य धातुत्वाभावात् तेन तत्रास्या अप्रवृत्त्या उभयत्र लत्वमिति बोध्यम् ॥ २४१ ॥

अन्त्यात्प्राग्वृत्तिर्योऽन्त्यविजातीयाव्यवहितश्च ।
सोऽन्त्यसदेशस्तस्माद् व्यधधातोर्यस्या न तथात्वम् ॥२४२॥
तेनानया न शक्यं वारयितुं संप्रसारणं वस्य ।
विद्धादिसिद्धयेऽतो न संप्रसारण इति कृतार्थम् ॥२४३॥
अत एवानस्तक्ष्णेत्यत्राल्लोपोऽन इत्यस्य ।
आद्याकारे नैव प्रवृत्तिरित्यपि फलं बोध्यम् ॥२४४॥
अभन्तस्य यजादिस्वादिपराङ्गस्य लुप्यतेऽकारः ।
इत्येव हि तस्यार्थो युक्तोऽङ्गे प्रत्ययस्य साकाङ्क्ष्यात् ॥ २४५ ॥
अङ्गावयवयजादिस्वादिपरस्यान इत्येवम् ।
क्लिष्टव्याख्यानाद्वरमस्याः स्वीकार एव लघुभूतः ॥ २४६ ॥
व्यङ इति सूत्रे भाष्ये प्रत्याख्यातेयमिति तु नाशङ्क्यम् ।
वार्तिककथितफलानि ह्यनेकविधकल्पनैर्निरस्यापि ॥ २४७ ॥

---

अन्त्येन समानो देशो यस्य सोऽन्त्यसदेशः। अत्र देशपदेनाकाशस्य, प्रयोगस्य, खण्डकालस्य वा ग्रहणेऽदमुयङ् इत्यादौ द्वयोरपि दकारयोस्तथात्वेनाव्यावर्तकत्वम् । खण्डकालग्रहणेऽप्यन्त्यानन्त्यवर्णोच्चारणक्षणभेदेनैककालवृत्तित्वाभावादसम्भवः, अत आह—अन्त्यात्प्राग्वृत्तिरिति। अन्त्यवर्णोच्चारणाधिकरणक्षणापेक्षया यः पूर्वक्षणस्तद्वृत्तिः, अच्त्वादिनाऽन्त्यवर्णविजातीयो यो वर्णस्तेनाव्यवहितश्च, एवंभूतोऽत्रान्त्यसदेशपदबोध्यः। एवं च यावता कालेनोभयोरव्यवधानेनोच्चारणं संभवति तावान् कालो देशपदेन विवक्षित इति न कश्चिद्दोषः। विद्ध इत्यादौ व्यध्धातोर्यकारस्यान्त्यवर्णविजातीयेनाकारेण व्यवधानादन्त्यसदेशत्वाभावेन परिभाषया वकारस्य संप्रसारणवारणासंभवान्न संप्रसारण इति सूत्रं चरितार्थम्। अदमुयङ् इत्यादौ रेफेण व्यवधानेऽपि तस्यान्त्यसजातीयत्वाद्दकारस्यान्त्यसदेशत्वमुपपन्नम् ॥ २४२, २४३ ॥

अत एवेति । एतत्परिभाषाऽऽश्रयणादेव, अनस्तक्ष्णेत्यादावल्लोपोऽन इत्यनेन पूर्वान्घटकाकारस्य लोपो न। निर्दिश्यमानपरिभाषया तु तद्वारणमशक्यं, द्वयोरप्यनीः षष्ठीप्रकृतिजन्यप्राथमिकोपस्थितीयविषयताश्रयत्वेन निर्दिश्यमानत्वादिति भावः ॥२४४॥

ननु व्यङः संप्रसारणम् ( ६।१।१३ ) इतिसूत्रस्थभाष्योक्तरीत्याऽनस्तक्ष्णेत्यादौ यजादिस्वादिप्रत्ययाव्यवहितपूर्वो योऽन् तदकारस्यैव लोप इति पूर्वान्घटकाकारलोपनिवारणं नास्याः फलमत आह—अभन्तस्येति। अङ्गे इति। प्रत्यये परेऽङ्गसंज्ञाविधानात्प्रत्ययस्याङ्गांश एवोत्थिताकाङ्क्षत्वेन तत्रैवान्वयस्यौचित्यादिति भावः ॥ २४५ ॥

क्लिष्टव्याख्यानादिति। आक्षिप्तस्य शाब्दबोधे मानाभावात्, आकडारस्थभपद-

कर्तव्येत्येवान्ते कथनाद्दोषेषु च प्रतिविधानात् ।
नास्याः प्रयोजनानीत्युक्तेस्तु न संप्रसारण इतीह ॥ २४८ ॥
अयमर्थो व्यधप्रभृतौ यणोऽन्त्यसादेश्यविरहेण ।
तत्सूत्रसाधनीयान्येतस्या न प्रयोजनानीति ॥ २४९ ॥
एतन्नागेशमतं परे त्वियं निष्फलाऽत एव खलु ।
भाष्ये प्रत्याख्याताऽनस्तक्षणेत्यपि न फलमस्याः ॥ २५० ॥
निर्दिश्यमानलक्षणघटको यो वै द्वितीयसंबन्धः ।
तदभावात्पूर्वो नो नास्ति हि निर्दिश्यमानत्वम् ॥ २५१ ॥

---

संज्ञाविषये यथोद्देशपक्षस्यैवाश्रयणेन यच्चिममित्यस्य विधिदेशे पदैकवाक्यत्वासंभवादुक्त-सूत्रस्थभाष्योक्तव्याख्यानस्य क्लिष्टत्वमेकदेश्युक्तित्वं च बोध्यम् ॥ २४६, २४७ ॥

कर्तव्येति । तथाहि तत्सूत्रे उपसंहारभाष्यम्—दोषाः खल्वपि साकल्येन परि-गणिताः । प्रयोजनानामुदाहरणमात्रम् । कुत एतत् । न हि दोषाणां लक्षणमस्ति । तस्मा-द्यान्येतस्याः परिभाषायाः प्रयोजनानि तदर्थमेषा परिभाषा कर्तव्या । प्रतिविधेयं दोषेषु । इदं प्रतिविधीयते । उदात्तनिर्देशात् सिद्धम् । यत्रैषा परिभाषेष्यते तत्रोदात्त-निर्देशः कर्तव्यः । ततो वक्तव्यम् । अनन्त्यविकारेऽन्त्यसदेशस्य कार्यं भवत्युदात्तनिर्देश इति । स तर्ह्युदात्तनिर्देशः कर्तव्यः । न कर्तव्यः । यत्रैवान्त्यसदेशश्चानन्त्यसदेशश्च युगपत्समवस्थितौ तत्रैषा परिभाषा भवति' इत्यादि । नन्वेवं न संप्रसारणे ( ६।१।३७ ) इति सूत्रे भाष्ये एनामुपन्यस्य 'नैतस्याः परिभाषायाः प्रयोजनानि' इत्युक्तिर्विरुध्येत तत्राह—नास्या इति । इत्युक्तेः=इति भाष्योक्तेः । अस्याग्रिमकारिकायामयमर्थ इत्यत्रान्वयः ॥ २४८ ॥

अन्त्यसादेश्यविरहेण=अन्त्यसदेशत्वाभावेनेत्यर्थः । तत्सूत्रसाधनीयानि= न संप्रसारणे संप्रसारणमित्येतत्सूत्रसाध्यानि प्रयोजनानि ॥ २४९ ॥

परमनवीनमतमाह—परेत्विति । प्रत्याख्यातेति । ष्यङः संप्रसारणमिति सूत्रे भाष्ये उपसंहारे 'तस्माद्यान्येतस्या परिभाषायाः प्रयोजनानि तदर्थमेषा कर्तव्या, प्रतिविधेयं दोषेषु' इत्यादिना वार्तिककारमतसमर्थनेऽपि न संप्रसारण इति सूत्रे नैतस्याः परिभाषायाः प्रयोजनानीति सामान्येन प्रयोजनाभावप्रतिपादनादियं भाष्यकारानभिप्रेतै-वेति भावः । नन्वनस्तक्ष्णेत्येतत्प्रयोजनखण्डनपरभाष्यस्योक्तरीत्यैकदेश्युक्तित्वेन तदर्थ-मेषाऽऽश्रयणीया; तत्राह—अनस्तक्षणेत्यादि ॥ २५० ॥

अनस्तक्ष्णेत्यपि न फलमित्युक्तं तत्र हेतुमाह—निर्दिश्यमानेत्यादिना निर्दिश्य-मानत्वपरिष्कारे निष्कर्षे उक्तो यो द्वितीयसंबन्धः—स्वप्रयोज्यशाब्दबोधीयविषयताना-

अदमुयङिति भवितव्यं न तु भवतीत्यभिहितं भाष्ये ।
तस्मान्न तत्प्रयोगोऽस्त्यतश्च तन्न फलमित्याहुः ॥ २५२ ॥
नन्वव्यक्तानुकरणघटकाच्छब्दादितौ परतः ।
पररूपमलोऽन्त्यस्य स्यादिति शङ्कां समाधत्ते ॥ २५३ ॥

**नानर्थकेऽलोऽन्त्यविधिरनभ्यासविकारे ॥ १०४ ॥**

आम्रेडितस्य वेति न्यासाद्वैकल्पिकेऽन्त्यपररूपे ।
सिद्धे ज्ञापकमस्याः सूत्रं नाम्रेडितस्येति ॥ २५४ ॥
अर्तिपिपर्त्योरिति खल्वभ्यासस्येत्वनिर्देशः ।
ज्ञापक इह विज्ञेयोऽनभ्यासविकार इत्यंशे ॥ २५५ ॥
तेनाभ्यासविकारेऽन्त्यस्यैव भृञामिदित्यादि ।
अर्थावृत्तेर्विरहादभ्यासोऽनर्थको ज्ञेयः ॥ २५६ ॥

---

श्रयत्वसमानाधिकरण—स्वप्रयोज्यशाब्दबोधीयविषयताऽऽश्रयसमभिव्याहृतत्ववद्वर्णाघटितस्वरूपस्तदभावात् पूर्वस्य अन् इत्यस्य निर्दिश्यमानत्वाभावादेव अल्लोपोऽन इत्यनेन तदीयाकारलोपो न भवत्यतस्तदपि न प्रकृतपरिभाषाफलमित्यर्थः ॥ २५१ ॥

अवतरणोक्तम्, अदमुयङ् इत्यपि नास्याः फलमित्याह—अदमुयङिति । भाष्ये =अदसोऽसेर्दादु दोमः ( ८।२।८० ) इति सूत्रे भाष्ये । तत्र नेत्येकेऽसेर्हि दृश्यत इति सहेतुकवचनस्यैवादरणीयत्वात्, अदद्यङ् इत्येव रूपं भवतीति भावः ॥ २५२ ॥

विकारपदघटितत्वसाधर्म्यादथवाऽनन्त्यविकारे व्यवस्थापिते तद्विरोध्यन्त्यविकारव्यवस्थापकत्वादस्या उपस्थितेरत्रोपन्यासः । अव्यक्तेति । पटत् इति पटिति इत्यादावव्यक्तस्य ध्वनेर्यदनुकरणं तद्घटको योऽच्छस्तस्मादिति शब्दे परे 'अव्यक्तानुकरणस्यात इतौ' इति सूत्रविहितं पररूपमलोऽन्त्यपरिभाषयाऽन्त्यस्य नकारमात्रस्य स्यादित्यर्थः॥ २५३॥

आम्रेडितस्य वेति । अनर्थकेऽप्यलोऽन्त्यपरिभाषाप्रवृत्तौ 'आम्रेडितस्य वा' इति न्यासेनैव तयाऽन्त्यस्य वैकल्पिकपररूपसिद्धिसंभवान्नाम्रेडितस्यान्त्यस्य तु वेति न्यासो व्यर्थः सन्नस्या ज्ञापक इत्यर्थः ॥ २५४ ॥

अर्तिपिपर्त्योरिति । अर्तिपिपर्त्योश्चेति सूत्रे पिपर्तीत्यत्राभ्यासस्येत्वविशिष्टो निर्देशोऽनभ्यासविकार इत्यंशज्ञापक इत्यर्थः ॥ २५५ ॥

अभ्यासस्यार्थवत्त्वे, नानर्थक इति निषेधाप्राप्त्याऽनभ्यासविकार इति पर्युदासो व्यर्थः स्यात्तेनाभ्यासस्यानर्थकत्वं ज्ञायते तत्र हेतुमाह—अर्थावृत्तेर्विरहा-

एषा चालोऽन्त्यादिति सूत्रे वचनातिमकोदिता भाष्ये ।
प्रत्याख्याता चान्ते फलान्यथासिद्धिकरणेन ॥ २५७ ॥
ननु च सहोक्तौ ब्राह्मणवत्सा च ब्राह्मणीवत्सः ।
अनयोः स्त्रीत्वाद्येव हि विशेष इत्येकशेषः स्यात् ॥ २५८ ॥

अत आह—

## प्रधानाप्रधानयोः प्रधाने कार्यसंप्रत्ययः ॥ १०५ ॥

मुख्यस्त्रीपुंसगतं मुख्यं स्त्रीत्वादि तज्जनित एव ।
वैरूप्य एकशेषः प्रकृतन्यायाद्विधानार्हः ॥ २५९ ॥
उक्तस्थले त्वमुख्यस्त्रीत्वादेरपि विशेषसत्त्वेन ।
न भवत्यसावितीदं तत्प्रकरणआकरे स्पष्टम् ॥ २६० ॥

---

दिति । धात्वर्थस्य द्विःप्रतीत्यभावादित्यर्थः । तत्रोत्तरखण्डस्यैवार्थवत्त्वमिति प्राङ्निरूपितम् ॥ २५६ ॥

**प्रत्याख्यातेति** । 'प्रयोजनमव्यक्तानुकरणस्यात इतौ' इत्यादीनां वार्तिकोक्तफलानां 'नैतदस्ति प्रयोजनम् । आचार्यप्रवृत्तिर्ज्ञापयति । नान्त्यस्य पररूपं भवतीति । यदयं नाम्रेडितस्यान्त्य तु वेत्याह' इत्यादिवचोभिरन्यथासिद्धिं प्रदर्श्य भाष्यकृता प्रत्याख्यातेत्यर्थः ॥ २५७ ॥

पूर्वपरिभाषयाऽनर्थकसंबन्धिकार्यव्यवस्थापने कृते तत्प्रतियोगित्वेनोपस्थितार्थवत्संबन्धिकार्यव्यवस्थापिकां परिभाषां निरूपयितुमाह—**नन्विति** । ब्राह्मणवत्सा च ब्राह्मणीवत्सश्चेत्यनयोः सहविवक्षायां तयोः स्त्रीत्वपुंस्त्वमात्रकृतवैरूप्यात्पुमान् स्त्रियेति सूत्रेणैकशेषापत्तिरित्यर्थः ॥२५८॥

**प्रधानाप्रधानयोरिति** । लौकिकोऽयं न्यायः । सैनिकानां जयेऽपि राज्ञ एव जयव्यवहारात् । **मुख्येति** । पुमान् स्त्रियेति सूत्रेण स्त्रीपुंसयोः सहविवक्षायामेकशेषो विहितः स च प्रकृतन्यायबलेन प्रधानयोरेव भवति । अतः प्रधानस्त्रीपुंसनिष्ठत्वेन प्रधानीभूतं यत् स्त्रीत्वादि = स्त्रीत्वं पुंस्त्वं च, तन्मात्रकृते विशेषे हंसी च हंसश्चेति हंसावित्यादावेव भवति । ब्राह्मणवत्सा च ब्राह्मणीवत्सश्चेत्यत्र तु प्रधानार्थवत्सनिष्ठस्त्रीत्वाद्यतिरिक्तोऽप्रधानब्राह्मणनिष्ठस्त्रीत्वादिरूपोऽपि विशेषोऽस्ति, तस्मात्तत्रैकशेषो न भवतीत्यर्थः । ननु लिङ्गस्य प्रातिपदिकार्थे विशेषणत्वेन सर्वत्राप्राधान्यमेवेत्युदाहरणासंभव इति चेन्न । यस्य शब्दस्य वैरूप्यं विवक्षितं तदर्थनिष्ठविशेष्यतानिरूपितप्रकारता-

अभ्यन्तरङ्गकार्यादुपजीव्याच्च प्रधानबलवत्त्वम् ।
स्पष्टं हि हेतुमति चेत्यत्रोक्तं भाष्यकैयटयोः ॥ २६१ ॥

ननु यःस्वस्रादित्वान्ङीप्प्रतिषेधोऽस्ति मातृशब्दस्य ।
स खलु परिच्छेत्रर्थकमातुरपि स्यादतः प्राह ॥ २६२ ॥

## अवयवप्रसिद्धेः समुदायप्रसिद्धिर्बलीयसी ॥१०६॥

अवयवशक्तिज्ञानानधीनसमुदायशक्तिधीजन्या ।
प्रतिबन्धिका ह्युपस्थितिरवयवशक्तिग्रहप्रयुक्तधियः ॥ २६३ ॥

---

वच्छेदकत्वरूपं लिङ्गस्याप्राधान्यम् । प्राधान्यं च तादृशशब्दार्थनिष्ठविशेष्यतानिरूपितप्रकारतावत्त्वरूपमित्यदोषात् । तत्प्रकरण इति । एकशेषप्रकरणे 'भ्रातृपुत्रौ स्वसृदुहितृभ्याम्' (१।२।६८) इति सूत्रे भाष्यकैयटयोरयमर्थः स्पष्ट इत्यर्थः ॥२५९, २६०॥

भाष्यकैयटयोरिति । 'हेतुमति च' (३।१।२६) इति सूत्रे भाष्ये हि—हेतुमच्छब्दवाच्यस्य प्रेषणादिव्यापारस्य प्रत्ययविशेषणत्वं प्रकृतिविशेषणत्वं वेति सन्दिह्य प्रत्ययार्थविशेषणपक्षे पाचयत्योदनं देवदत्तो यज्ञदत्तेनेति प्रयोज्ये कर्तरि कर्मसंज्ञा प्राप्नोति । भवति हि तस्य तस्मिन्नीप्सा" इति दूषणमुक्त्वा 'नैष दोषः । यत्तावदुच्यते पाचयत्योदनं देवदत्तो यज्ञदत्तेनेति प्रयोज्ये कर्तरि कर्मसंज्ञा प्राप्नोतीति । गतिबुद्धिप्रत्यवसानार्थशब्दकर्माकर्मकाणामणीत्येतन्नियमार्थं भविष्यति । एतेषामेव ण्यन्तानां यः कर्ता स णौ कर्मसंज्ञो भवति नान्येषामिति' इति समाहितम् । तत्र कैयटः—'एतेषामेवेति । ण्यर्थस्य प्राधान्यात्तेनेप्सिततमस्य प्रयोज्यस्य सिद्धा कर्मसंज्ञा । न च स्वव्यापारापेक्षया स्वातन्त्र्यात्परत्वात्कर्तृसंज्ञा प्राप्नोतीति युक्तम् । प्रयोज्यव्यापारस्याप्राधान्यात् प्रधानाप्रधानव्यापारसन्निधौ च प्रधाननिमित्तस्य कार्यस्य युक्तत्वात्' इति । अत्र प्रधाननिमित्तककार्यस्य सर्वतो बलवत्त्वमितिभाष्याशयः कैयटेन स्पष्टीकृतः ॥२६१॥

बलवत्त्वनिरूपणप्रसङ्गादाह—**नन्विति** । ङीप्प्रतिषेधः = नषट्स्वस्रादिभ्य इति सूत्रविहितो ङीन्निषेधः । **परिच्छेत्रर्थकेति** । मिमीते इति माता इति धान्यादिपरिच्छेत्तृपुरुषवाचिमातृशब्दादपि ङीन्निषेधः स्यादित्यर्थः ॥ २६२ ॥

परिभाषाबीजमाह—अवयवेति । अवयवाः प्रकृतिप्रत्ययादयः । अवयवशक्तिग्रहप्रयुक्तधियः = अवयवशक्तिज्ञानाधीनसमुदायशक्तिज्ञानप्रयुक्तशाब्दबोधस्य; उक्तविधोपस्थितिः प्रतिबन्धिकेति लोकसिद्धा वस्तुस्थितिः, सैवास्या मूलम् । रूढिर्योगापहारिणीति प्रवादोऽप्येतन्मूलकः । रूढ्यर्थस्य शीघ्रोपस्थितिकत्वेन बलवत्त्वाद्योगार्थापहार-

अन्यतरार्थविवक्षानिर्णयलिङ्गं न यत्रास्ति ।
तत्र हि लोके दृष्टाऽर्थगतिः समुदायशक्त्यैव ॥ २६४ ॥

अपि चार्थोऽयं सिध्यति रथकाराधिकरणन्यायात् ।
तत्र हि योगाद्रूढिर्बलीयसीत्येतदाश्रित्य ॥ २६५ ॥

वर्षास्वग्न्याधाने रथकारस्य श्रुतेऽधिकारितया ।
सौधन्वनापराख्यो रूढ्यर्थो निश्चितो, न रथकर्ता ॥ २६६ ॥

---

कत्वम् । तेन माधातुतृच्प्रत्ययरूपावयवशक्तिज्ञानाधीनो यो मातृशब्दाद्धान्यादिपरिच्छेतृरूपार्थबोधस्तस्य केवलसमुदायशक्तिज्ञानप्रयोज्यजननीरूपार्थोपस्थित्या प्रतिबन्धात्स्वस्रादिगणे जननीवाचकस्यैव मातृशब्दस्य ग्रहणं न तु परिच्छेतृवाचकस्येति तस्य ङीब्निषेधो नेति भावः ॥ २६३ ॥

अस्यार्थस्य लोकव्युत्पत्तिसिद्धत्वं दर्शयति—अन्यतरेति । यत्र रूढ्यर्थयोगार्थयोरन्यतरस्मिन्वक्तुस्तात्पर्यनिर्णायकं प्रकरणादि लिङ्गं नास्ति, तत्र लोके **समुदायशक्त्यैव** = समुदायशक्तिज्ञानेनैव **अर्थगतिः** = अर्थावगतिर्दृष्टेत्यर्थः । योगार्थे तात्पर्यग्राहकसत्त्वे तु तस्यैवोपस्थितिः । यथा 'कह्लारकैरवमुखेष्वपि पङ्कजेषु' इत्यत्र योगरूढस्य पङ्कजशब्दस्य पद्मवाचित्वे कह्लारादिसामानाधिकरण्यासम्भवात्पङ्कजनिकर्तृरूपार्थबोधकत्वम् । एवं चोक्तप्रतिबध्यप्रतिबन्धकभावेऽन्यतरार्थतात्पर्यनिर्णायकाभावे सतीति पूरणीयमिति भावः ॥ २६४ ॥

जैमिनीयतन्त्रोक्तरथकाराधिकरणन्यायेनाप्ययमर्थो निश्चीयत इत्याह अपि चेति ॥ २६५ ॥

वर्षास्विति । 'वसन्ते ब्राह्मणोऽग्नीनादधीत ग्रीष्मे राजन्यः शरदि वैश्यः' इति विधाय 'वर्षासु रथकारोऽग्निमादधीत' इति श्रूयते । तत्र किं ब्राह्मणादीनामेव रथकरणे निमित्ते वसन्तादिकालबाधेन वर्षाकालविधानम्, अथवा रथकारसंज्ञकस्यावान्तरवर्णस्याधानान्तरविधानमिति संशये पूर्वमीमांसाया वचनाद्रथकारस्याऽऽधानस्यासर्वशेषत्वात् ( ६ । १ । ४४ ) इति सूत्रेण रूढिबलेन योगबाधाद्वचनबलाच्च सौधन्वनापरपर्यायस्यावान्तरवर्णस्यैवापूर्वमाधानविधानमिति सिद्धान्तितम् । **न रथकर्ता** = योगलभ्योऽर्थो—रथनिर्माता त्रैवर्णिकोऽधिकारितया न निर्णीत इत्यर्थः ॥ २६६ ॥

ननु वातायनवाचिनि गवाक्षशब्देऽवङ्गो विकल्पेन ।
तदभावे गो अक्षो गोऽक्ष इति स्यादतश्चाह ॥ २६७ ॥

## व्यवस्थितविभाषयाऽपि कार्याणि क्रियन्ते ॥१०७॥

युक्तौ भावाभावौ सर्वस्मिन्नपि विकल्पविधिविषये ।
अविशेषेणैव तयोरुद्देश्यव्यापकविधानात् ॥ २६८ ॥
लक्ष्यानुरोधतस्तु क्वचिदन्यतरप्रवृत्तिरित्यर्थः ।
सैषा भाष्यकृदुक्तस्थलेषु नियता व्यवस्थितविभाषा ॥ २६९ ॥
देवत्रातो गल इत्यादीनि निदर्शनान्यस्याः ।
शाच्छोरिति सूत्रे खलु भाष्यकृता संगृहीतानि ॥ २७० ॥

---

रूढिप्रसङ्गाद्गवाक्षादिरूढशब्दे कार्यव्यवस्थापिकां परिभाषामवतारयति-नन्विति । अवङ्गो विकल्पेनेति । अवङ्स्फोटायनस्येत्येतद्विहितस्यावङोवैकल्पिकत्वादित्यर्थः । तदभावे—। अवङभावे प्रकृतिभावे पूर्वरूपे च सति ॥ २६७ ॥

सर्वस्मिन्निति । सर्वस्मिन्नपि विकल्पविधिविषये भावाभावयोः पर्यायेण प्रवृत्तिर्युक्ता, तयोरुद्देश्यतावच्छेदकावच्छेदेन विधानादित्यर्थः ॥ २६८ ॥

लक्ष्येति । क्वचित्तु लक्ष्यानुरोधेन भावाभावयोर्मध्येऽन्यतरस्यैव प्रवृत्तिरिति परिभाषार्थः । सैषेति । सेयं व्यवस्थितविभाषा भाष्योक्तस्थलेष्वेवाश्रयणीया न तु यत्र कुत्रापि मानाभावादिति भावः ॥ २६९ ॥

देवत्रात इति—। 'देवत्रातो गलो ग्राह इति योगे च सद्विधिः । मिथस्ते न विभाष्यन्ते गवाक्षः संशितव्रतः ॥' इति शाच्छोरन्यतरस्याम् ( ७ । ४ । ४१ ) इति सूत्रे भाष्ये व्यवस्थितविभाषोदाहरणानि संगृहीतानि । तेषु, देवत्रात इत्यत्र राजविशेषे वाच्ये नुदविदेति प्राप्तस्य पाक्षिकस्य निष्ठानत्वस्याभाव एव । क्रियाशब्दे तु त्राणस्त्रात इत्युभयम् । देवग्रहणं संज्ञाविषयोपलक्षणार्थम् । तेन भवत्रात इत्यादावपि संज्ञात्वान्नत्वाभावः । गल इति । अचि विभाषेति लत्वं कण्ठे वाच्ये नित्यं भवति । विषे तु गर इति लत्वाभावः । क्रियाशब्दे तूभयं गरो गल इति । ग्राह इति । विभाषा ग्रह इति णप्रत्ययो जलचरे वाच्ये नित्यं भवति । ज्योतिषि तु ग्रह इति पचाद्यजेव । इति योगे

## विधिनियमसम्भवे विधिरेव ज्यायान् ॥ १०८ ॥

विधिरत्यन्ताप्राप्तौ नियमः स्यात् पाक्षिकाप्राप्तौ ।
प्राप्तौ तत्रान्यत्र च परिसंङ्ख्या पण्डितैरुक्ता ॥२७१॥
सोमेन यजेतेति ज्ञेयो विधिरन्यतोऽप्राप्तेः ।
व्रीहीनवहन्तीति च नियमः पक्षे तदप्राप्तेः ॥२७२॥
नखविदलनाद्युपायैरपि वैतुष्यं हि संभवति ।
तत्पक्षेऽवहननमप्राप्तमतस्तद्विधानमेतेन ॥२७३॥

---

इति । लक्षणहेत्वोः क्रियाया इति पाक्षिकः शतृशानज्विधिरितियोगे हन्तीति पलायत इत्यादौ न भवति । गवाक्ष इति । वातायनेऽर्थेऽवङ् स्फोटायनस्येत्यवङ् नित्यं भवति । प्राण्यङ्गे तु गोरक्षि गोऽक्षि । अन्यत्र तु विकल्पेन । संशितव्रत इति । व्रते वाच्ये शाच्छोरिति नित्यमित्वं भवति । अन्यत्र तु विकल्पेनेति । एतच्चोदाहरणमात्रं न तु परिगणनम्, अन्यासामपि व्यवस्थितविभाषाणां भाष्ये दर्शनात् ॥ २७० ॥

पूर्वपरिभाषायां व्यस्थितविभाषासु भावाभावयोरन्यतरनियम उक्तस्तत्प्रसङ्गादाह—विधीत्यादि । 'विधिरत्यन्तमप्राप्ते नियमः पाक्षिके सति । तत्र चान्यत्र च प्राप्ते परिसङ्ख्येति गीयते ॥' इति तन्त्रवार्तिकश्लोकमनुसृत्य विध्यादिपदार्थान्क्रमेण निरूपयति-विधिरित्यादिना । प्रमाणान्तरेणात्यन्तमप्राप्तमर्थं यः प्रापयति स विधिः । यस्य पाक्षिकी अप्राप्तिस्तस्याप्राप्तांशपूरणात्मको विधिर्नियमविधिः । उभयोर्युगपत्प्राप्तावितरव्यावृत्तिपरो विधिः परिसंख्याविधिरित्यर्थः ॥ २७१ ॥

उदाहरणैः स्पष्टीकरोति—सोमेन यजेतेत्यादिना । सोमेन यजेतेत्यस्य सोमवता यागेनेष्टं भावयेदित्यर्थः । इष्टं च ज्योतिष्टोमेन स्वर्गकामो यजेतेत्यधिकारविध्यवगतस्वर्गरूपम् । तत्र यागस्य स्वर्गसाधनत्वं प्रमाणान्तरेण न ज्ञातम् । तदनेनैव ज्ञाप्यतेऽतोऽयमपूर्वविधिः । व्रीहीनवहन्तीति । अवहन्यादित्यर्थः । अवहननं वैतुष्यार्थम् । तस्य तदर्थत्वं चान्वयव्यतिरेकसिद्धमतोऽयं नापूर्वोविधिः । किन्तु यदाऽवघातं परित्यज्योपायान्तरं ग्रहीतुमिच्छति तदाऽवघातस्याप्राप्तत्वेन तद्विधानरूपमप्राप्तांशपूरणमनेन क्रियते । अतोऽयं नियमविधिरिति भावः ॥ २७२ ॥

पाक्षिकाप्राप्तिमेव दर्शयति—नखेत्यादिना । आदिपदेनाश्मकुट्टनादिसंग्रहः । अस्य च नियमविधेः फलं यागापूर्वमेव । अवघातनिष्पन्नतण्डुलकृतपुरोडाशसिद्धो

परिसंङ्ख्या पञ्चनखा भक्ष्याः पञ्चेति विज्ञेया ।
पञ्चनखापञ्चनखाशनस्य रागात्प्रसक्तत्वात् ॥२७४॥
वचनमिदं परिगणितेतरपञ्चनखाशननिवृत्त्यै ।
इति जैमिनीयसमयोऽत्र तु नियमपदेन परिसंख्या ॥२७५॥
प्राप्ता यथा समासेऽन्यत्रापि प्रातिपदिकाख्या ।
तस्याः पुनः समासे विधिरत एषाऽस्ति परिसंख्या ॥२७६॥
तत्रान्यनिवृत्तिः खलु सामर्थ्यादश्रुतैव परिकल्प्या ।
उक्तस्य चानुवादो दोषः स्याद्विधिमुखप्रवृत्तिमते ॥२७७॥

---

यागोऽपूर्वसाधको न तु नखविदलनादिनिष्पन्नतण्डुलकृतपुरोडाशसिद्ध इति तात्पर्यात् ॥ २७३ ॥

**परिसंख्येति** । 'पञ्च पञ्चनखा भक्ष्या ब्रह्मक्षत्रेण राघव । शल्यकः श्वाविधो गोधा शशः कूर्मश्च पञ्चमः ॥' इति रामायणे भगवन्तं श्रीरामचन्द्रं प्रति वालिवचनम् । इदं वाक्यं न भक्षणविधिपरम्, तस्य क्षुत्प्रतिघातार्थे रागतः प्राप्तत्वात् । नापि नियमपरम्, उक्तपञ्चनखानां तद्व्यतिरिक्तानां च भक्षणस्य युगपत् प्राप्तेः पक्षेऽप्राप्त्यभावात् । अत इदं वचनं परिगणितपञ्चातिरिक्तपञ्चनखभक्षणनिवृत्तितात्पर्यकम् । तस्मादयं परिसंख्याविधिरित्यर्थः । **जैमिनीयसमयः** = जैमिनीयानां सिद्धान्तः । समयाः शपथाचारकालसिद्धान्तसंविद इति कोशात् । अत्र तु—अस्मिन्व्याकरणशास्त्रे तु, नियमपदेन परिसंख्या, व्यवह्रियत इति शेषः । अन्यवृत्तिसाधर्म्येण गौण्या वृत्त्येति भावः ॥ २७४, २७५ ॥

अस्मिञ्छास्त्रे नियमत्वेन व्यवह्रियमाणेषु परिसंख्यालक्षणान्वयं दर्शयति—**प्राप्ता यथेति** । अर्थवत्सूत्रे भाष्ये— अर्थवत्समुदायानां समासग्रहणं नियमार्थम् । समास एवार्थवतां समुदायानां प्रातिपदिकसंज्ञा भवति नान्य इति' इत्युक्तम् । तत्र समासस्य तद्भिन्नार्थवत्समुदायस्य च प्रातिपदिकसंज्ञाऽर्थवदधातुरिति सूत्रेण युगपत्प्राप्ताऽस्ति । तस्याः पुनः कृत्तद्धितसमासाश्चेत्यनेन समासे विधानम्, अत एषा परिसंख्यैवेत्यर्थः ॥ २७६ ॥

नियमशास्त्राणां विधिमुखेन प्रवृत्तिरिति सिद्धान्तितमते तावन्नियमाश्रयणस्य दोषयुक्तत्वमाह—**तत्रेति** । **सामर्थ्यात्** = विधानस्यान्यथाऽनुपपन्नत्वेन तत्सामर्थ्यात् । **अश्रुता** = शब्देन साक्षादप्रतिपादिता ॥ २७७ ॥

यदि तु निषेधमुखेन प्रवृत्तिरुच्येत नियमानाम् ।
तर्हि समासान्यस्य न भवतीत्यर्थो हि लक्षणालभ्यः ॥२७८॥

तत्र श्रुतहान्यश्रुतक्लृप्ती प्राप्तस्य बाध इति दोषाः ।
तस्मात्सम्भवति विधौ नियमोऽनुचितोऽन्यथा त्वगत्या सः॥२७९॥

आशंसायां भूतवदित्यतिदेशो यथैव लुङः ।
तद्वल्लङो लिटोऽपि स्यादिति शङ्कां निवारयति ॥ २८० ॥

## सामान्यातिदेशे विशेषानतिदेशः ॥ १०९ ॥

सादृश्यप्रतियोगिनि योऽवच्छेदकतया स्थितो धर्मः ।
तद्व्यापकश्च यस्तावतिदेश्यौ नैव तद्व्याप्यः ॥ २८१ ॥

---

**समासान्यस्य** = समासातिरिक्तस्य पूर्वभागपदघटितस्य सङ्घातस्य । **न भवतीत्यर्थः** = प्रातिपदिकसंज्ञा न भवतीत्यर्थः । **लक्षणालभ्यः**—। समासपदस्य समासातिरिक्ते, भवति पदस्य च न भवतीत्यर्थे लक्षणया लभ्यः ॥ २७८ ॥

**श्रुतेति**—। श्रुतस्य, समासः प्रातिपदिकसंज्ञो भवतीत्यर्थस्य हानिस्त्यागः । अश्रुतस्य, समासातिरिक्तः पूर्वभागपदघटितः सङ्घातः प्रातिपदिकसंज्ञो न भवतीत्यर्थस्य क्लृप्तिः कल्पनम् । समासातिरिक्ते प्राप्तायाः संज्ञाया बाधश्चेति दोषत्रयमित्यर्थः । निगमयति—**तस्मादिति** । **सम्भवति विधौ** = विधित्वसम्भवे इत्यर्थः । **अन्यथा तु** = विधित्वासंभवे तु, **अगत्या** = गत्यन्तराभावादेव **सः** = नियम आश्रीयत इत्यर्थः । 'इदं च यस्य हलः' ( ६।४।४९ ) इति सूत्रे भाष्ये स्पष्टम् । तत्र हि यस्येति सङ्घातग्रहणमिति पक्षेऽन्त्यलोपस्यातो लोप इत्यनेनैव सिद्धत्वादिदं सामर्थ्यात् सर्वलोपविधायकम् । आहोस्वित्, अत इत्यनुवर्त्य हलः परस्यैव यशब्दस्यातो लोपो नान्यतः तेन लोलूयितेत्यादौ नेति नियामकमिति सन्दिह्य विधेयासंभवे नियमो भवति, अत्र तु सर्वलोपरूपविधेयसंभवादपूर्व एव विधिर्भविष्यति न नियम इत्युक्तम् ॥ २७९ ॥

न्यायसिद्धत्वसाधर्म्यादत्र सामान्यातिदेश इति परिभाषोपन्यासः । **आशंसायामिति** । आशंसायां भूतवच्च । ( ३।३।१३२ ) भविष्यति काले भूतवद्वर्तमानवच्च प्रत्यया वा स्युराशंसायाम् । अत्र भूतवदित्यतिदेशेन, देवश्चेदवर्षीत् धान्यमवाप्स्म इति यथा लुङतिदेशो भवति तथा अनद्यतने लङ्, परोक्षे लिट् इत्यनयोरप्यतिदेशः स्यादित्यर्थः ॥ २८० ॥

भूतवदित्यनेन भविष्यति भूतसादृश्यं विधीयते । सादृश्य च तद्गतधर्मवत्त्वम् ।

तस्माद्भूतत्वस्य च तत्कार्यलुङोऽतिदेशनं तेन ।
न तु भूतत्वव्याप्यानद्यतनत्वादितत्कृतलङादेः ॥ २८२ ॥

यत्त्वेतदनित्यत्वं निवेद्यते न ल्यपीति लिङ्गेन ।
क्त्वो हि विशेषः क्त्त्वं तदनतिदेशेऽस्य वैयर्थ्यात् ॥ २८३ ॥

इत्याहुस्तदयुक्तं स्थानिवदिति संग्रहार्थकं हि वचः ।
अतिदेशस्तु विशेषात्मनाऽन्यथाऽतिप्रसङ्गः स्यात् ॥ २८४ ॥

---

स च धर्मः प्रतियोगितावच्छेदकतया शब्दादुपस्थितस्तज्ज्ञानादनुमितस्तद्व्यापकश्च गृह्यते, न तु तद्व्याप्यस्तदुपस्थापकसामग्र्यभावादिति न्यायसिद्धेयम्, तदाह—सादृश्येति । अवच्छेदकतया स्थितः । सादृश्यप्रतियोगितावच्छेदक इत्यर्थः ॥ २८१ ॥

भूतत्वातिदेशद्वारा लुङ्रूपकार्यातिदेश एव तात्पर्यादाह—तत्कार्येति । अनद्यतनत्वादीति । आदिपदेन परोक्षभूतत्वस्य संग्रहः । लङादेः = लङ्लिटोः । इदं च स्थानिवत्सूत्रे भाष्ये स्पष्टम् । तत्र हि 'सामान्यातिदेशे हि विशेषानतिदेशः* । सामान्ये ह्यतिदिश्यमाने विशेषो नातिदिष्टो भवति । तद्यथा । ब्राह्मणवदस्मिन् क्षत्रिये वर्तितव्यमिति सामान्यं यद् ब्राह्मणकार्यं तत्क्षत्रियेऽतिदिश्यते । यद्विशिष्टं माठरे कौण्डिन्ये वा न तदतिदिश्यते' इत्युक्तम् । सामान्यं ब्राह्मणकार्यमभ्युत्थानादिकम् । विशिष्टमृत्विक्त्वेन वरणादिकम् ॥ २८२ ॥

परिभाषेन्दुशेखरोक्तमस्याः परिभाषाया अनित्यत्वं निरसितुं तावदनुवदति—यत्त्विति । न क्त्वा सेडित्यनेन सेटः क्त्वाप्रत्ययस्य कित्त्वाभावबोधनादनिट एव तस्य कित्त्वम् । अतः कित्त्वं तस्य विशेषधर्मस्तेन स्थानिवदिति सूत्रेण तदतिदेशाभावे ल्यपि घुमास्थेतीत्वस्या प्राप्त्या निषेधो व्यर्थः सन्नस्या अनित्यत्वं ज्ञापयति । तेन स्थानिवत्सूत्रेण विशेषातिदेशोऽपि भवतीति तदभिप्रायः ॥ २८३ ॥

तदयुक्तम्—। वक्ष्यमाणरीत्या ज्ञापकासंभवात्फलाभावाच्चेति भावः । न ल्यपीत्यस्य ज्ञापकत्वासंभवं दर्शयति—स्थानिवदित्यादिना । संग्रहार्थकम्—। सर्वेषां स्थानिवद्भावानां संग्राहकवाक्यरूपं स्थानिवत्सूत्रमित्यर्थः । अतिदेशस्तु—। अतिदेशवाक्यं तु अयमादेश एतत्स्थानिवदित्येवं विशेषरूपेणैव । अन्यथा = सामान्यरूपेणातिदेशाङ्गीकारे । अतिप्रसङ्गः = अन्यादेशोऽन्यस्थानिवदित्यव्यवस्थाऽऽपत्तिः स्यादित्यर्थः ॥ २८४ ॥

तत्क्त्वाव्यापि च क्त्वं यत्स्थाने ल्यप् प्रदायादौ ।
तेन स्थानिवदीत्वप्राप्त्या प्रतिषेधसार्थक्यात् ॥ २८५ ॥
ननु क्रिरतीत्यादावप्यृत इतस्त्वित्त्वमाश्रित्य ।
वित्स्वरितमिति स्वरितः स्यादित्यत आह परिभाषाम् ॥२८६॥

## प्रत्ययाप्रत्यययोः प्रत्ययस्य ग्रहणम् ॥ ११० ॥

अङ्गस्येत्यत्रेयं पठिता भाष्येऽस्ति वाचनिकी ।
वर्णग्रहणे नेति च तत्सूत्रे कैयटे स्पष्टम् ॥२८७॥
अनयैव सनाशंसेत्यत्र तथा वल इतीह सूत्रे च ।
सन्वलयोः प्रत्यययोर्ग्रहणं न तु धातुसंज्ञयोरनयोः ॥२८८॥
वर्णग्रहणे नैषेत्यतश्च शुक्लीभवत्यादौ ।
अस्य च्वाविति सिध्यत्यस्येत्वं प्रत्ययेतरस्यापि ॥२८९॥

---

तत् क्त्वेति । प्रदाय प्रधायेत्यादौ यस्य क्त्वः स्थाने ल्यब्भवति तत् क्त्वाव्यक्तिव्यापकमेव क्त्वं, तस्यानिट्त्वात् । एवं च तत्र स्थानिवद्भावप्रवृत्तेरव्याहतत्वाद्घुमास्थेतीत्वस्य प्राप्त्या तन्निवारणार्थत्वेन न ल्यपीति निषेधस्य चारितार्थ्यान्न ज्ञापकत्वमित्यर्थः ॥ २८५ ॥

लुङ्गादिप्रत्ययप्रसङ्गादाह—नन्विति । ऋत इतः = ऋत इद्धातोरिति सूत्रविहितस्येतः ॥ २८६, २८७॥

सनाशंसेत्यत्र = 'सनाशंसभिक्ष उः' इति सूत्रे । वल इतीह = 'वले' इत्यस्मिन् । आद्ये 'षणुदाने' इत्यस्य षण संभक्तावित्यस्य च ग्रहणापत्तिः । अन्त्ये तु 'वलसंवरणे' इत्यस्य ॥ २८८ ॥

वर्णेति—वर्णग्रहणेऽस्या अप्रवृत्तेरेव शुक्लीभवति गङ्गीभवतीत्यादौ प्रत्ययभिन्नस्यापि, अस्य = अवर्णस्य, 'अस्य च्वौ' इति सूत्रेणेत्वं सिध्यतीत्यर्थः ॥ २८९ ॥

अन्ये तु वदन्त्येषा न लक्ष्यसिद्ध्यर्थमाश्रिता क्वापि ।
अङ्गस्येत्यत्र तु तत्प्रत्याख्यानार्थमेकदेशिनैवोक्ता ॥२९०॥

अत एव वार्तिककृता तिति कार्यं प्रत्ययग्रहणमुक्तम् ।
सन्वल्लयोः प्रत्यययोर्ग्रहणं तु व्याख्ययैवेति ॥२९१॥

वस्तुत इयं वसोः संप्रसारणेऽपि च वनो रचेत्यादौ ।
वसुवनधातुग्रहणाभावार्थमवश्यमन्तव्या ॥२९२॥

ननु च परा सेना जयतीत्यर्थपरे पराजयति सेना ।
इह विपराभ्यां जेरिति तङानयोः प्राप्तिरत आह ॥ २९३ ॥

## सहचरितासहचरितयोः सहचरितस्यैव ग्रहणम् ॥१११॥

सहचरितपदं सदृशार्थकं सदृशयोर्हि सहचरणम् ।
अपि रामलक्ष्मणावित्यादौ सादृश्यमर्थनियमकरम् ॥ २९४ ॥

---

"प्रत्ययाप्रत्यययोः प्रत्यये संप्रत्यय इति परिभाषा तु भाष्यवार्तिककाराभ्यां न क्वचिदाश्रिता" इति "तित्स्वरितम्" ( ६।१।१८५ ) इति सूत्रे कैयटेनोक्तम् । परिभाषेन्दुशेखरेऽपि परे त्वित्यादिना तदेवानुसृतं तन्मतमनुवदति—अन्ये त्विति । एकदेशिनैवोक्तेति । वर्णग्रहणेऽस्या अप्रवृत्तेरङ्गस्येत्यधिकाराभावेऽभक्ष इत्यादावपोभीत्यादिप्रसङ्गादेनामाश्रित्याङ्गस्येत्यधिकारसूत्रप्रत्याख्यानस्यायुक्तत्वात्तद्भाष्यस्यैकदेश्युक्तित्वमेवेति भाष्यकृदसम्मतेयमिति भावः ॥ २९० ॥

अत एवेति । अस्या अनाश्रयणादेव 'तित्स्वरितम्' ( ६।१।१८५ ) इति सूत्रे वार्तिककृता किरति गिरतीत्यादौ स्वरितत्त्वापत्तिवारणाय 'तितिप्रत्ययग्रहणं कर्तव्यम्' इत्युक्तमित्यर्थः । व्याख्ययैव = व्याख्यानादेवेत्यर्थः । व्याख्यानं च वले इत्यत्र संज्ञायामित्यनुवर्तनात्, सनाशंसेत्यत्र प्रतिपदोक्तपरिभाषाबलाच्च तयोः प्रत्यययोरेव ग्रहणमिति बोध्यम् ॥ २९१ ॥

वसोः संप्रसारणे = वसोः संप्रसारणमिति सूत्रे । वसुवनेति । वसुस्तम्भे इत्यस्य, वनशब्दे वन संभक्तावित्यस्य च ग्रहणाभावार्थमित्यर्थः ॥ २९२ ॥

नियमप्रसङ्गादाह—ननु चेति । साहचर्यस्याभिधानियामकत्वं "संयोगो विप्रयोगश्च साहचर्यं विरोधिता" इत्याद्यभियुक्तवचनेषु प्रसिद्धम् । तदेवास्याः परि-

लोके हि सहविवक्षा सहप्रयोगश्च सदृशयोरेव ।
ध्वनितं चेदं भाष्ये कर्मप्रवचनीययुक्त इति सूत्रे ॥ २९५ ॥

एवं च विसादृश्यात्परेत्ययं ग्राह्य उपसर्गः ।
विश्वपरासादृश्यात्पक्ष्यर्थकभिन्न उपसर्गः ॥ २९६ ॥

द्विस्त्रिश्चतुरिति सूत्रे द्विस्त्रिरिति सुजन्तसाहचर्येण ।
सिद्धे कृत्वोऽर्थवचनमनित्यतां ज्ञापयत्यस्याः ॥ २९७ ॥

---

भाषाया मूलम् । तच्च रामलक्ष्मणावित्यादौ द्वयोर्वनगमनादौ सहप्रवृत्त्या सङ्गच्छते, प्रकृते तु विपरेत्यनयोः क्वचिदपि सहप्रवृत्त्यभावान्न संभवति । अतः कथमनयोक्तस्थले व्यवस्थेत्यत आह—सहचरितपदमित्यादि । तस्य सदृशार्थकत्वे हेतुमाह—सदृशयोरिति । लोके सदृशयोरेव सहचारस्य दर्शनादत्र सहचरितपदेन सदृश एव विवक्षित इति भावः । संयोगो विप्रयोगश्चेत्यादिश्लोकेऽपि साहचर्यशब्देन सादृश्यमेव विवक्षितमित्याह—अपीति । रामलक्ष्मणावित्यत्र लक्ष्मणशब्दः स्वसमभिव्याहृतरामपदबोध्यार्थप्रतियोगिकाद् भ्रातृत्वप्रयुक्तसादृश्याद् दुर्योधनापत्यभिन्नबोधकः । तादृशश्च लक्ष्मणपदबोध्यो दाशरथिरेवेति तत्साहचर्याद्रामपदबोध्योऽपि दाशरथिरेव न तु परशुरामो बलरामो वेति परस्परसाहचर्यादर्थनिर्णयः । एवं च स्वसमभिव्याहृतपदार्थनिरूपितं सादृश्यमेवार्थविशेषप्रतीतिनियामकं न तु सहचरणमिति बोध्यम् ॥ २९३,२९४ ॥

उक्तमर्थं लोकव्युत्पत्त्या दृढयति—लोके हीत्यादिना । अत्रार्थे भाष्यं प्रमाणयति—ध्वनितमिति । कर्मप्रवचनीययुक्ते द्वितीया ( २।३।८ ) इति सूत्रे भाष्ये हि—'पञ्चम्यपाङ्परिभिरित्यत्र परिशब्दो वर्जनार्थ एव ग्राह्य इति प्रतिपादयितुं 'यद्यपि तावदयं परिर्दृष्टापचारो वर्जने चावर्जने च । अयं खल्वपशब्दोऽदृष्टापचारो वर्जनार्थ एव । तस्य कोऽन्यो द्वितीयः सहायो भवितुमर्हति अन्यदतो वर्जनार्थात् । तद्यथा । अस्य गोर्द्वितीयेनार्थ इति गौरेवानीयते नाश्वो न गर्दभः' इत्युक्तम् । अनेन सदृशयोरेव सहप्रयोग इति बोधितमित्यर्थः ॥ २९५ ॥

उक्तरीत्या विपराभ्यां जेरित्यत्र परस्परसाहचर्यादुपसर्गयोरेव ग्रहणमिति दर्शयति—एवं चेति । विसादृश्यात् = स्वसमभिव्याहृतविपदबोध्यविशब्दप्रतियोगिकात्प्रादित्वरूपसमानधर्मप्रयुक्तात्सादृश्यात्पराशब्द उपसर्गसंज्ञक एव ग्राह्य इत्यर्थः । एवं परासादृश्यादित्यत्रापि योज्यम् ॥ २९६ ॥

परिभाषेन्दुशेखरानुसारेणास्या अनित्यत्वं तावज्ज्ञापकेन साधयति—द्विस्त्रिरिति । सिद्धे इति । चतुःशब्दस्य सुजन्तस्यैव ग्रहणे सिद्धे इत्यर्थः ॥ २९७ ॥

तेन च दीधीवेवीटामिह सति धातुसाहचर्येऽपि ।
आगम एवेट्शब्दाद् ग्राह्यो न तु धातुरित्याहुः ॥ २९८ ॥

तन्न सुजन्ततयेह न सादृश्यमपि तु सुजर्थवृत्तितया ।
इति बोधयितुं तत्र हि कृत्वोऽर्थग्रहणमत एव ॥ २९९ ॥

षो भवति चतुष्पञ्चाशदिह सुजर्थे बहुव्रीहौ ।
दीधीत्यत्रेडागमधीस्तु हलनुबन्धकत्वसादृश्यात् ॥ ३०० ॥

नन्वस्थिदधीत्यमुना नपुंसकाङ्गस्य विहितोऽनङ् ।
प्रियसक्थ्ना विप्रेणेत्यत्र कथं पुंसि तत्राह ॥ ३०१ ॥

---

अनित्यत्वज्ञापनफलमाह—तेन चेति । आगमः = इडागमः । धातुः = इट् धातुः ॥ २९८ ॥

उक्तमतं निरस्यति—तन्नेति । तत्र = द्वित्रिश्चतुरिति सूत्रे । अत एवेति । इदमुत्तरकारिकायामन्वेति ॥ २९९ ॥

षो भवतीति । त्रिरावृत्ता दश त्रिदशा इतिवत्, चतुरावृत्ताः पञ्चाशत् चतुष्पञ्चाशदिति सुजर्थे संख्ययाव्ययासन्नेति सूत्रेण बहुव्रीहौ चतुःशब्दस्य सुजन्तत्वाभावेऽपि सुजर्थवृत्तित्वेन तदीयविसर्गस्य वैकल्पिकं षत्वं सिध्यतीत्यर्थः । एवं च कृत्वोऽर्थग्रहणस्य चारितार्थ्यान्नोक्तार्थज्ञापकत्वमिति भावः । यच्चानित्यत्वफलमुक्तं तदपि न सम्यगित्याह—दीधीति । हलनुबन्धकत्वेति । धातुत्वेनैव साहचर्यं ग्राह्यं न तु हलनुबन्धकत्वेनेत्यत्र विनिगमकाभावादिति भावः । एवं चानित्यत्वेन यत्राप्रवृत्तिरिष्टा तत्र धर्मान्तरेणैव सादृश्यं ग्राह्यमतो निष्प्रमाणमनित्यत्वं नोचितमित्याशयः ॥ ३०० ॥

फलतो नियमप्रतिपादकत्वेन तादृशपरिभाषाद्वयमध्येऽस्या उपन्यासः । नन्विति । अस्थिदधीति सूत्रे नपुंसकस्य झलच इत्यतो नपुंसकस्येत्यनुवर्तते । तस्य च नह्युपाधेरुपाधिर्भवतीति भाष्यवचनात्प्रधानाप्रधानयोः प्रधाने कार्यसंप्रत्यय इति न्यायाच्च प्रधानीभूताङ्गविशेषणत्वौचित्याद्, भाष्योदाहृते प्रियसक्थ्ना ब्राह्मणेनेत्यत्राङ्गस्य पुँल्लिङ्गत्वेन नपुंसकत्वाभावादनङादेशोऽनुपपन्न इति शङ्कायामाहेत्यर्थः ॥ ३०१ ॥

## श्रुतानुमितयोः श्रुतसंबन्धो बलवान् ॥ ११२ ॥

अस्थ्यादयः श्रुतत्वात्प्रथममधिगता अतश्च तेष्वेव ।
जाते नपुंसकत्वान्वये निराकाङ्क्षभावेन ॥ ३०२ ॥

स्वरितत्वानुमितेऽङ्गेऽन्वयो न युक्तो नपुंसकत्वस्य ।
कथितं हि जैमिनीये श्रुतिलिङ्गादिषु परस्य दौर्बल्यम् ॥ ३०३ ॥

तेनोक्तोदाहरणे सक्थीत्यस्य हि नपुंसकत्वेन ।
प्रियसक्थीत्यङ्गस्यानपुंसकत्वेऽप्यनङ् सिद्धः ॥ ३०४ ॥

श्रुतपदविरहात्तु शिशीलुङ्नुम्त्रिधिसाधकेषु सूत्रेषु ।
अङ्गेनैव क्लीबान्वयो भवत्यश्रुतेनापि ॥ ३०५ ॥

---

श्रुतानुमितयोरिति निर्धारणे षष्ठी। श्रुतेन सह संबन्धः श्रुतसंबन्धः। अस्या न्यायमूलत्वं दर्शयति—अस्थ्यादय इत्यादिना। प्रथममधिगताः—। अङ्गापेक्षया पूर्वमुपस्थिताः। एवं च शीघ्रोपस्थितिकत्वेन तेष्वेव नपुंसकपदार्थान्वयः। जाते च तत्रान्वये नपुंसकपदस्य निराकाङ्क्षत्वेन स्वरितत्वरूपलिङ्गानुमिते पश्चादुपस्थितेऽङ्गेऽन्वयो न युक्त इति न्यायमूलेयम्। उक्तन्यायद्वयं तूभयोः श्रुतत्व एवेति भावः। अयमर्थः पूर्वमीमांसायां प्रसिद्ध इत्याह—कथितं हीति। श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां समवाये पारदौर्बल्यमर्थविप्रकर्षात्। ( पू·मी·अ·३ पा·३ सू·१४ ) इति जैमिनीयं सूत्रम्। श्रुत्यादीनां षण्णां मध्ये द्वयोर्विरुद्धयोः समवाये = एकत्र सन्निपाते, पारदौर्बल्यम् = पूर्वापेक्षया परस्य दुर्बलत्वम्। दुर्बलत्वाच्च पूर्वेणोत्तरस्य बाधः। अर्थविप्रकर्षात् उत्तरप्रमाणस्य पूर्वप्रमाणकल्पनाद्वारा श्रुतिकल्पनया विनियोजकत्वेनार्थस्य विनियोगस्याङ्गाङ्गित्वनिर्णयस्येति यावत्, विप्रकर्षाद् विलम्बादिति तदर्थः। अत्र सामर्थ्यात्मकलिङ्गानुमितार्थापेक्षया प्रत्यक्षश्रुतिबोधितोऽर्थो बलवानिति स्पष्टम्। तद्वदत्रापि श्रुतानुमिताभ्यां संबन्धप्राप्तौ श्रुतेनैव संबन्धो बलवानिति भावः। परिभाषेन्दुशेखरे—अनुमितेनेत्यस्य प्रकरणादिप्राप्तेनेत्यर्थोक्तेरपि स्वरितत्वादिनाऽनुमितत्वेन श्रोतृबुद्धिस्थस्वरूपप्रकरणप्राप्तेनेत्यर्थ एव तात्पर्यम्। यथाश्रुते प्रयाजादीनां दर्शपूर्णमासाद्यङ्गत्वसाधकोभयाकाङ्क्षारूपपारिभाषिकप्रकरणस्यात्रासंभवादसङ्गतत्वापत्तेः ॥ ३०२, ३०३, ३०४ ॥

श्रुतेति। इयादिविधायकेषु जश्शसोः शिरित्यादिसूत्रेषु नपुंसकत्वान्वययोग्यार्थकस्य

वा शावितिवाच्ये वा नपुंसकस्येति सूत्रेऽस्मिन् ।
उक्तं नपुंसकपदं विज्ञेयं ज्ञापकमपीह ॥ ३०६ ॥

तद्धि समीपश्रुतशतृबोध्यतदन्ते नपुंसकान्वयतः ।
शत्रन्तक्लीबत्वेऽङ्गस्य तु पुंस्त्वेऽपि नुम्प्रवृत्त्यर्थम् ॥ ३०७ ॥

ननु तत्पुरुषे तु ल्यार्थेतिप्रकृतिस्वरविधानम् ।
परमेण कारकेणेति विग्रहे परमकारकादौ स्यात् ॥ ३०८ ॥

गातिस्थेति सिचो लुक् कृतात्वपैधातुतोऽपि स्यात् ।
इत्याद्यतिप्रसङ्गान्परिहर्तुं प्राह परिभाषाम् ॥ ३०९ ॥

---

साक्षाच्छ्रुतपदस्याभावादश्रुतेन स्वरितत्वेनानुमितेनाङ्गेन सह नपुंसकत्वान्वयो भवतीत्यर्थः ॥ ३०५ ॥

ज्ञापकमपीति । उक्तरीत्या न्यायसिद्धायामस्यां ज्ञापकमपीत्यर्थः ॥ ३०६ ॥

तद्धीति । तन्नपुंसकग्रहणं हि, तत्सूत्राव्यवहितपूर्वान्नाभ्यस्ताच्छतुरिति सूत्रादनुवृत्तत्वेन शीघ्रोपस्थितत्वात् श्रुतपदत्वेन विवक्षितं यच्छतृपदं तस्य प्रत्ययग्रहणपरिभाषया तदन्तपरत्वात्तद्बोध्ये शत्रन्ते नपुंसकान्वयो यथा स्यात् । दूरस्थत्वेन विलम्बोपस्थितेऽङ्गेऽन्वयो माभूदित्यर्थकत्वेन शत्रन्तस्य नपुंसकत्वे, शत्रन्तान्ताङ्गस्य पुंस्त्वेऽपि वैकल्पिकनुम्प्रवृत्तिसाधनाय कृतम् । तेन बहवो ददतो येषु तानि कुलानि बहुददतीत्यत्र न नुम् । बहूनि ददन्ति दातृकुलानि येषु ते बहुददन्तो ग्रामा इत्यत्र तु भवत्येव । वा शाविति न्यासे त्वङ्गस्य नपुंसकत्व एव नुम् स्यात् । तद्वारणार्थं क्रियमाणं नपुंसकग्रहणं प्रकृतपरिभाषां विनाऽनुपपन्नम् । अस्या अभावे नपुंसकग्रहणे कृतेऽपि प्राधान्यादङ्ग एव नपुंसकत्वान्वयेनोक्तव्यवस्थाया असिद्धेः । तस्मात्तदस्या ज्ञापकमिति भावः । इयं च स्वमोर्नपुंसकात् ( ७।१।२३ ) इति सूत्रे भाष्ये ध्वनिता । तत्र हि 'शिशीलुङ्नुम्विधिषु प्रकृतस्यार्थो विशेष्यते, अस्थ्यादिषु गृह्यमाणस्य, इत्युक्तम् । अनेन गृह्यमाणसम्भवे नपुंसकस्येति तद्विशेषणमेव तदभावे प्रकृतस्याङ्गस्येति सूचितम् ॥ ३०७ ॥

नन्विति । तत्पुरुषे तुल्यार्थतृतीयासप्तम्युपमानाव्ययद्वितीयाकृत्याः । सप्तैते पूर्वपदभूतास्तत्पुरुषे प्रकृत्या स्युः । अयं पूर्वपदप्रकृतिस्वरविधिर्यथा किरिणा काणः

## लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैव ग्रहणम् ॥११३॥

लक्षणया लक्षणपदमिह लाक्षणिकार्थमित्याहुः ।
वस्तुत इदं प्रतिपदोक्तव्यतिरिक्तार्थकं ज्ञेयम् ॥ ३१० ॥

स्वगतानुपूर्व्युपेते विधेयता यत्र किंच यो विहितः ।
स्वार्थान्वय्यर्थकपदसरूपपदबोध्यमुद्दिश्य ॥ ३११ ॥

इत्येवं द्विविधोऽत्र ज्ञेयोऽर्थः प्रतिपदोक्तशब्देन ।
सूत्रस्थपासरूपः पा पाने विहित इत्यतः स तथा ॥ ३१२ ॥

तत्पुरुषपदार्थान्वय्यर्थतृतीयासरूपपदघटितम् ।
सूत्रं हि तृतीया तत्कृतेति तद्विहित एव तत्रेष्टः ॥ ३१३ ॥

---

किरिकाण इत्यादौ भवति तथा परमेण कारकेण परमकारकेणेति परिनिष्ठितविभक्त्या कर्मधारयेऽपि पूर्वपदस्य तृतीयान्तत्वात्स्यादिति भावः ॥ ३०८,३०९ ॥

लक्षणयेति । परिभाषायां लक्षणपदेन लक्षणावृत्त्या लक्षणवशनिष्पन्नं लाक्षणिकं शब्दरूपं बोध्यत इति नागेशादय आहुः । किन्त्वत्रार्थे तृतीया तत्कृतार्थेन गुणवचनेनेति सूत्रविहितस्य तत्पुरुषस्यापि लाक्षणिकत्वापत्तिः । इष्यते तु तस्य प्रतिपदोक्तत्वमेवेत्यरुचेराह—वस्तुत इति ॥ ३१० ॥

प्रतिपदोक्तपदार्थं निर्वक्ति—स्वगतेत्यादिना । सरूपेत्यस्य समानानुपूर्वीकेत्यर्थः । स्ववृत्त्यानुपूर्व्यवच्छिन्नविधेयताऽऽश्रयत्व—स्वार्थान्वय्यर्थकपदवृत्त्यानुपूर्वी मत्पदप्रयोज्योद्देश्यतानिरूपितविधेयताश्रयत्वैतदन्यतरसंबन्धेन यत्किञ्चित्पदविशिष्टत्वं प्रतिपदोक्तत्वम् । स्वपदेन यस्य पदस्यार्थे प्रतिपदोक्तत्वं विवक्षितं तत्पदं ग्राह्यम् । अन्यतरघटकप्रथमसंबन्धमादाय समन्वयमाह—सूत्रस्थेति । गातिस्थेति सूत्रस्थो यः पाशब्दस्तत्सरूपः= तत्समानानुपूर्वीकः, पा पाने इति पानार्थे पाधातुः साधुरित्येवं विहितः पाशब्द एव तस्य प्रतिपदोक्तोऽर्थः, न तु पै शोषण इति, तस्य तत्समानानुपूर्वीकत्वाभावात् । अत॰उक्तसूत्रे पाग्रहणेन तद्ग्रहणाभावात्ततः परस्य सिचो लुग् न भवति ॥ ३११,३१२ ॥

द्वितीयमादाय समन्वयमाह—तत्पुरुषेति । तत्पुरुषे तुल्यार्थतृतीयेत्यादिसूत्रे यत् तत्पुरुषपदं तदर्थान्वय्यर्थकं पदं तृतीयेति तत्समानानुपूर्वीकं तृतीयातत्कृतार्थेन

लाक्षणिकं हि विलम्बोपस्थितिकं लक्षणानुसन्धानात् ।
तदपेक्षया च शीघ्रोपस्थितमिति गृह्यते प्रतिपदोक्तम् ॥ ३१४ ॥

वर्णग्रहणेऽप्येषौत्सूत्रेऽप्यस्याः प्रवर्तनाद्भाष्ये ।
उपदेशग्रहणस्य त्वादेच इतीह फलमन्यत् ॥ ३१५ ॥-

---

गुणवचनेनेति सूत्रस्थं तृतीयापदं तत्प्रयोज्योद्देश्यतानिरूपितविधेयताश्रयत्वेन तत्सूत्रविहित एव तत्पुरुषसमासः पूर्वपदप्रकृतिस्वरविधायकोक्तसूत्रस्थतत्पुरुषपदस्य प्रतिपदोक्तोऽर्थः । तेन किरिणा काणः किरिकाण इत्यादावेव तृतीयान्तपूर्वपदस्य प्रकृतिस्वरः, नतु परमेण कारकेण परमकारकेणेत्यादाविति भावः ॥ ३१३ ॥

लाक्षणिकापेक्षया प्रतिपदोक्तस्य बलवत्त्वे बीजमाह—**लाक्षणिकं हीति** । **लक्षणानुसन्धानात्** = तदुपस्थितेर्लक्षणस्मरणसापेक्षत्वादित्यर्थः ॥ ३१४ ॥

यत्तु आदेच उपदेशेऽशितीति सूत्रे उपदेशग्रहणादियं वर्णग्रहणेषु न प्रवर्तते । तद्धि चेता स्तोतेत्यादावात्वाप्रवृत्त्यर्थम् । वर्णग्रहणेऽप्यस्याः प्रवृत्तौ त्वनयैव निर्वाहे तद्वैयर्थ्यस्य स्पष्टत्वादिति प्राचीनमतं तन्न युक्तमित्याशयेनाह—**वर्णग्रहणेऽपीति । ओत्सूत्र इति** । ओत् ( १।१।१५ ) इति सूत्रे भाष्ये—अनदः अदः अभवत् अदोऽभवदित्यादौ च्व्यन्तत्वेन निपातत्वादोकारान्तस्य प्रगृह्यत्वमाशङ्क्य लक्षणप्रतिपदोक्तपरिभाषया समाहितम् । तेन वर्णग्रहणेऽप्यस्याः प्रवृत्तिर्भाष्यसम्मतेति भावः । नन्वेवमादेच इत्यत्रोपदेशग्रहणं व्यर्थं स्यादत आह—**उपदेशग्रहणस्य त्विति** । तथाच, आदेच ( ६।१।४५ ) इति सूत्रे भाष्ये गोभ्यामित्यादौ प्रातिपदिकस्यात्वापत्तिमाशङ्क्य 'धात्वधिकारात्प्रातिपदिकस्यात्वं न भविष्यति । धातोरिति प्रकृतम् । क्व प्रकृतम् ? लिटि धातोरनभ्यासस्येति । अथापि निवृत्तम् । एवमप्यदोषः । उपदेश इत्युच्यते । 'उद्देशश्च प्रातिपदिकानां नोपदेशः' इत्युपदेशग्रहणस्य प्रयोजनं दर्शितम् ॥ अनुबन्धलोपोत्तरं तद्विनिर्मुक्तस्यैव धातुत्वसत्त्वेन 'आदेच'—इत्यत्र धातोरित्यस्यानुवृत्तौ, उदत्वां माङो व्यतीहारे इत्यत्र मेङ आत्वाप्रवृत्त्या माङ् इति निर्देशानुपपत्तिः स्यादतस्तदस्वरसाभिप्रायेण अथापीत्यादिना पक्षान्तरमुपन्यस्य उपदेशग्रहणेनैवोक्ता शङ्का समाहितेति बोध्यम् । केचित्तु फलाभावाद्वर्णग्रहणेऽस्या अप्रवृत्तिः । न चौत्सूत्रभाष्यविरोधः । अन्ते गोऽभवदित्यादौ गौणमुख्यन्यायेनैव समाधानस्योक्तत्वात्तस्यैव व्यापकत्वेन युक्तत्वात्पूर्वभाष्यस्यैकदेश्युक्तित्वादित्याहुः ॥ ३१५ ॥

भुव इत्यत्र महाव्याहृतेरिति विशेषणादनित्येयम् ।
तेन च लाक्षणिका अपि यत्वे भोःप्रभृतयस्तथाघ्नेर्निधेट्॥ ३१६ ॥

नन्वेवं सति देङ्दोधात्वोर्घुत्वं कृतात्वयोर्न स्यात् ।
सेङश्चात्वे नेर्णः प्रणिमातेत्यत्र नैव स्यात् ॥ ३१७ ॥

गैधातोश्च कृतात्वस्येत्वं न स्याद्घुमास्थेति ।
तेषां लाक्षणिकत्वादतस्तदपवादमाचष्टे ॥ ३१८ ॥

## गामादाग्रहणेष्वविशेषः ॥ ११४ ॥

अत्र च दैपः पित्त्वं ज्ञापकमेतद्धयदाविति निषेधे ।
दाब्दैपोरुभयोरपि दाबिति शब्देन संग्रहाय कृतम् ॥ ३१९ ॥

यदि तु विधौ दाशब्दाद् गृह्येत प्रतिपदोक्त एवासौ ।
दैब्निष्पन्नस्य तदा घुत्वाप्राप्त्या किमेतेन ॥ ३२० ॥

---

भुव इति । भुवश्च महाव्याहृतेरिति सूत्रे महाव्याहृतेरिति विशेषणं हि जसन्ते भुव इत्यत्र रुत्वरेफयोर्विकल्पविधानाप्रवृत्त्यर्थम् । तस्य लाक्षणिकत्वादेव तत्रोक्तविध्यप्रवृत्तौ तद्व्यर्थं सदस्या अनित्यत्वज्ञापकम् । तेन यत्वे = रोर्यत्वविधौ, भो भगो अघो अपूर्वस्य योऽशि इत्यत्र विभाषा भवद्भगवदघवतामोच्चावस्येति वार्तिकनिष्पन्ना लाक्षणिका अपि भो इत्यादयो गृह्यन्ते । घ्नि घः कर्मणि घ्नन् इत्यत्र घापदेन लाक्षणिकोऽपि कृतात्वो धेट् धातुर्गृह्यत इत्यर्थः ॥ ३१६ ॥

अपवादसङ्गत्याऽऽह—नन्वेवमिति । उक्तसर्वापत्तिसाधारणं हेतुमाह—तेषां लाक्षणिकत्वादिति । तदपवादम् = तस्या लक्षणप्रतिपदोक्तपरिभाषाया अपवादम् । आचष्टे = आहेत्यर्थः ॥ ३१७,३१८ ॥

गामादाग्रहणेषु सामान्यमेव गृह्यते न तु विशेष इति परिभाषार्थः एतद्धीति । दैपः पित्त्वं हि दा धा घ्वदाबिति सूत्रे, अदाप् इति निषेधबोधके पदे यो दाप्शब्दस्तेन दाप् लवने, दैप् शोधने इत्युभयोरपि संग्रहाय कृतमित्यर्थः ॥ ३१९ ॥

दैपः पित्त्वस्य प्रकृतपरिभाषाऽभावे वैयर्थ्यमाह—यदित्वित्यादिना । = विधौ दा धा घ्विति संज्ञाविधिवाक्ये । एतेन = इत्संज्ञकपकारकरणेन ॥ ३२० ॥

अपि चास्य दाप्पदेन ग्रहणं न स्यादतश्च तद्द्वयर्थम् ।
तेनेयं परिभाषा ज्ञाप्यत एकांशसम्मत्या ॥ ३२१ ॥

लाक्षणिकसानुबन्धकलुग्विकरणवारणार्थपरिभाषाः ।
अनया बाध्यन्त इयं दाधाघ्विति सूत्रभाष्य उल्लिखिता ॥ ३२२ ॥

दाग्रहणं यस्मिन्निति दाधाघ्विति सूत्रमेव दाग्रहणम् ।
गा मा दाग्रहणं चेत्येवं द्वन्द्वेन संग्रहो घेटः ॥ ३२३ ॥

गातिस्थेति तु सूत्रे लुग्विकरणगातिनिर्देशात् ।
इणूस्थानिक एवासौ ग्राह्य इति स्पष्टमिह भाष्ये ॥ ३२४ ॥

---

अन्यमपि वैयर्थ्यहेतुमाह—अपि चेति । दाप्पदेन = अदाबित्येतद्घटकदाप्पदेन । एवं निरनुबन्धकपरिभाषया दोऽवखण्डन इत्यस्यैव दापदेन ग्रहणे दैपो घुत्वाप्राप्त्या पित्त्वस्य वैयर्थ्यं बोध्यम् । एकांशसम्मत्या = एकदेशानुमत्या ॥ ३२१ ॥

लाक्षणिकेत्यादि स्पष्टार्थम् । उल्लिखिता । लक्षणप्रतिपदोक्तपरिभाषाया दोषत्वेन पठिता ॥ ३२२ ॥

नन्वेवमपि धेट् पाने इत्यस्यात्वे लाक्षणिकत्वाद्घुसंज्ञा नैव स्यात् । घेटो गामादास्वनन्तर्भावात् । गामादां ग्रहणं येषु सूत्रेषु तानि गामादाग्रहणानीति समासेन दा धा घ्विति सूत्रे दाग्रहणसत्त्वेन तत्र विशेषानाश्रयणाद् घेटो घुत्वसिद्धिरिति तु न वक्तुं युक्तम् । गाघटितत्वेन गातिस्थेति सूत्रेऽपि विशेषानाश्रयणे रक्षणार्थकपाधातोः परस्यापि सिचो लुगापत्तेः, अत आह—दाग्रहणमिति । गामेति । गाश्च माश्च दाग्रहणं चेति द्वन्द्वेनेत्यर्थः । दाग्रहणं यस्मिन्निति दाग्रहणपदेन दाघटितं सूत्रं बोध्यम् । संग्रह इति । घाग्रहणेऽप्यविशेष इत्यर्थलाभेन कृतात्वस्य घेटोऽपि घुसंज्ञासिद्धिरित्यर्थः ॥ ३२३ ॥

गाग्रहणेऽविशेषाश्रयणे दोषमाशङ्क्य समाधत्ते—गातिस्थेति । उक्तसूत्रे इणो गा लुङीत्यादादिकेण् धात्वादेशस्य गा इत्यस्यानुकरणात् श्तिपि परे शपो लुकं कृत्वा गातीति निर्देशाद् इणूस्थानिक एव गा ग्राह्य इत्यर्थः । भाष्ये—गातिस्था (२।४।७७) इति सूत्रे भाष्ये । तत्र हि 'इण्ग्रहणे तावद्गातेर्निर्देशादेव व्यक्तं लुग्विकरणस्य ग्रहणमिति' इत्युक्तम् ॥ ३२४ ॥

ननु वृद्ध्यादिकसंज्ञाः आकारप्रभृतिवर्णनिचये स्युः ।
साहित्यावच्छिन्नं ह्यासामुद्देश्यमत आह ॥ ३२५ ॥

## प्रत्येकं वाक्यपरिसमाप्तिः ॥ ११५ ॥

वाक्यसमुद्भवशाब्दज्ञानीयोद्देश्यताख्यधर्मस्य ।
पर्याप्तिः प्रत्येकं भवति न समुदाय इत्यर्थः ॥ ३२६ ॥

भोज्यन्तां चैत्रादय इत्युक्ते भोजनं प्रतिव्यक्ति ।
अन्वेत्येवं संज्ञा साहित्यमिहोपलक्षणं ज्ञेयम् ॥ ३२७ ॥

## क्वचित्समुदायेऽपि ॥ ११६ ॥

गर्गा दण्ड्यन्तां शतमत्र यथा दण्डनं हि समुदाये ।
राजानो हि हिरण्यार्थिन इति शतमेव मुख्यमिह ॥३२८॥

---

घुसंज्ञाप्रसङ्गेन वृद्ध्यादिसंज्ञास्मरणात्तद्विषय आह—नन्विति । वृद्धिरादैच्, अदेङ् गुणः दाधाघ्वदाप इत्यादिसूत्रविहितसंज्ञा आ ऐ औ इत्यादिवर्णसमुदाये दाधादिशब्दसमुदाये च स्युः। तत्र हेतुमाह—साहित्येति । उद्देश्यतावच्छेदकपर्याप्त्यनुयोगितावच्छेदकधर्म एव विधेयपर्याप्त्यनुयोगितावच्छेदको भवतीत्युत्सर्गात्, वृद्धिरादैच् 'इत्यादेश्च' आदैचो वृद्धिपदाभिन्ना इत्यर्थेन साहित्यस्योद्देश्यतावच्छेदकत्वात्तत्पर्याप्त्यनुयोगितावच्छेदकत्वस्य त्रित्व एव सत्त्वात्त्रित्वाश्रयवर्णसमुदायपर्याप्त्यैव वृद्धिसंज्ञा स्यान्न तु प्रत्येकपर्याप्तेति भावः ॥३२५॥

परिभाषायां वाक्यपदेन वाक्यजन्यशाब्दबोधीयोद्देश्यता विवक्षिता। तस्याः परिसमाप्तिः = पर्याप्तिलक्षणः सम्बन्धः, प्रत्येकम् = प्रत्येकवृत्तिर्भवतीत्यर्थस्तदाह—वाक्यसमुद्भवेति । वृद्धिरादैजित्यादौ प्रत्येकनिष्ठमात्त्वादिकमेवोद्देश्यतावच्छेदकमिति भावः ॥ ३२६ ॥

अयमर्थो लोकन्यायसिद्ध इत्याह—भोज्यन्तामिति । अन्वेति = संबध्यते । एवं संज्ञा । वृद्ध्यादिसंज्ञाप्येवं प्रतिव्यक्ति सम्बध्यते समुदायस्य संज्ञाकरणे फलाभावादिति भावः । साहित्यमुपलक्षणम् । अवच्छेदकं तु आत्वम्, ऐत्वम्, औत्वं चेति तत्पर्याप्त्यनुयोगितावच्छेदकमेकत्वमेव वृद्धिसंज्ञारूपविधेयपर्याप्त्यनुयोगितावच्छेदकम् । अतः प्रत्येकवर्णस्य संज्ञासिद्धिरिति भावः ॥ ३२७ ॥

क्वचित्तु लक्ष्यानुरोधात्साहित्यस्यावच्छेदकत्वेन समुदायस्यैवोद्देश्यत्वमित्याह—क्वचिदिति । अत्रापि लौकिकदृष्टान्तमाह—गर्गा इति । तथा च 'हलोऽनन्तराः

तेनाप्रधानगर्गानुरोधतो नोचिता शतावृत्तिः ।
एवमनन्तरशब्दात्संयोगाख्या समूहस्य ॥३२९॥
अभ्यस्ताख्या चोभे इति वचनेनोभयोर्हि समुदितयोः ।
एवं समाससंज्ञा सहेति वचनात्समूह इत्याहुः ॥३३०॥
वस्तुत उभे पदं हि प्रत्याख्यातं सहेति च विभक्तम् ।
अत एतयोर्व्यवस्था ज्ञेया लक्ष्यानुरोधेन ॥३३१॥
ननु च व्यक्तिमते यू स्त्र्याख्यावित्यत्र दीर्घनिर्देशात् ।
अण्त्वाभावादणुदित्सूत्राप्राप्त्या सवर्णधीविरहात् ॥३३२॥

---

संयोगः' ( १।१।७ ) इति सूत्रे भाष्ये गुणवृद्धिसंज्ञावत्संयोगसंज्ञाप्येकैकस्य हलः स्यादित्याशङ्क्योक्तम्—'ननु चायमप्यस्ति दृष्टान्तः । समुदाये वाक्यपरिसमाप्तिरिति । तद्यथा । गर्गाः शतं दण्डयन्ताम् । अर्थिनश्च राजानो हिरण्येन भवन्ति । न च प्रत्येकं दण्डयन्ति' इति । दण्डिश्चेह ग्रहणार्थो न तु निग्रहार्थः । तेन शतमिति प्रधानकर्म । अपादानस्थानापन्ना गर्गास्त्वकथितं चेति सूत्रेणाप्रधानं कर्म ॥ ३२८ ॥

नोचिता शतावृत्तिः—एकैकस्य गार्ग्यस्य शतदण्डनं नोचितमित्यर्थः । अनन्तरशब्दात्—। हलोऽनन्तराः संयोग इत्यत्रानन्तरग्रहणसामर्थ्यात् । समूहस्य = अजव्यवहितहल्समुदायस्येत्यर्थः ॥ ३२९ ॥

एवमन्यत्राप्याह—अभ्यस्तेति । सहेतिवचनात् । सह सुपेति सूत्रे सहशब्दोपादानात् । समूहे—पदसमूहस्यैव समाससंज्ञेत्यर्थः । आहुरित्यस्वरसोद्भावनबीजमग्रिमकारिकायां स्पष्टम् ॥ ३३० ॥

वस्तुत इति । उभे अभ्यस्तम् ( ६।१।५ ) इति सूत्रे भाष्ये हि—द्वे इत्यस्यानुवृत्त्यैव संज्ञिनिर्देशस्य सिद्धत्वादुभे ग्रहणं सहार्थमिति प्रथममुक्त्वा, उपसंहारे यथा प्रत्येकमिति वचनाभावेऽपि वृद्धिगुणसंज्ञे प्रत्येकं वाक्यपरिसमाप्तिरिति न्यायेन प्रत्येकमेव भवतस्तथाऽभ्यस्तसंज्ञाऽप्युभेग्रहणाभावेऽपि समुदाये वाक्यपरिसमाप्तिरिति न्यायेन द्विरुक्तसमुदायस्यैव भविष्यति तस्मात्सहार्थकस्य उभेग्रहणस्य न प्रयोजनमित्यर्थकोक्त्या तत्प्रत्याख्यातम् । विभक्तमिति । सह सुपा ( २।१।४ ) इति सूत्रे भाष्ये गर्गाः शतं दण्ड्यन्तामिति दृष्टान्तेन समुदाये वाक्यपरिसमाप्तिमाश्रित्य सहग्रहणं विनापि सहभूतयोरेव समाससंज्ञासिद्धेः, सहेति योगविभागेन अनुव्यचलदित्यादि तिङन्तोत्तरपदकसमाससाधनार्थमिति निर्णीतम् । तस्मादनयोर्न्याययोर्लक्ष्यानुसारेणैव व्यवस्था न तु तत्तद्वचनसामर्थ्येनेति भावः ॥ ३३१ ॥

संज्ञाप्रसङ्गादाह—ननु चेति । जातिपक्षे त्वभेदका गुणा इत्यस्य नोपयोग इत्यन्ते

तत्रोदात्तादीनामन्यतमो यद्गुण उपात्तः ।
तद्भिन्नगुणस्य नदासंज्ञा न स्यादतः प्राह ॥३३३॥

## अभेदका गुणाः ॥ ११७ ॥

असति हि यत्नविशेषे यो गुण उच्चारितः स्वरूपेण ।
स खलु स्वेतरगुणक—व्यावृत्तिं नैव विदधाति ॥ ३३४ ॥
ज्ञापकमत्रास्थिदधीत्यत्रोदात्तग्रहणमेव ।
अनङ उदात्तस्योच्चारणेन सिद्धे हि किन्तेन ॥ ३३५ ॥
यस्त्वनुदात्तादिपदान्युच्चार्योक्तः स भेदकोऽवश्यम् ।
अनुदात्तादेरन्तोदात्तादित्यादिकेषु यथा ॥ ३३६ ॥
उञ ऊँ इत्यत्र स्थान्यनुरूपे निरनुनासिके पाठ्ये ।
अनुनासिकपाठात्मकयत्नविशेषाद्विवक्षैव ॥ ३३७ ॥

---

वक्ष्यमाणत्वादाह—व्यक्तिमत इति। सवर्णधीविरहात्=यू इति दीर्घेकारोकाराभ्यां तत्सवर्णग्रहणाभावात् ॥ ३३२ ॥

यद्गुण इति। उदात्तत्वानुदात्तत्वस्वरितत्वानुनासिकत्वनिरनुनासिकत्वानि गुणास्तन्मध्ये यद्गुणविशिष्ट ईकार ऊकारश्च सूत्रे गृहीतस्तद्भिन्नगुणविशिष्टस्य नदीसंज्ञा न स्यादित्यर्थः ॥ ३३३ ॥

स्वं रूपमिति सूत्रे रूपपदेनोदात्तत्वादयो गुणा न विवक्षिताः। अतस्ते स्वरूपेणोपात्ता अपि न व्यावर्तका इति परिभाषार्थस्तत्फलितमाह—असतीत्यादि ॥ ३३४ ॥ अस्थिदधीत्यत्र='अस्थिदधिसक्थ्यक्ष्णामनङुदात्तः' इति सूत्रे । अनङः=अनङोऽकारस्य । उदात्तस्य=उदात्तत्वगुणविशिष्टस्य । सिद्धे उदात्तान्विधाने सिद्धे । किं तेन—प्रकृतपरिभाषाऽभावे तत्सूत्रे उदात्तग्रहणेन किम्? न किंचिदपि फलमित्यर्थः । इदमुदात्तग्रहणमेव स्वरूपेणोच्चारित इति विशेषणांशमपि ज्ञापयति । अविशेषेण सूत्रबोधितगुणानामव्यावर्तकत्वाङ्गीकारे, परिभाषाज्ञापनोत्तरमप्युदात्तग्रहणस्याचारितार्थ्यापत्तेः ॥ ३३५ ॥

स्वरूपेणोच्चारितो गुणो न भेदक इति विशेषणस्य फलमाह—यस्त्विति। भेदकोऽवश्यम्=व्यावर्तको भवत्येवेत्यर्थः । अनुदात्तादेरिति। यथा 'अनुदात्तादेरञ्,' 'अन्तोदात्तादुत्तरपदादन्यतरस्यामनित्यसमासे' इत्यादिसूत्रेष्वित्यर्थः ॥ ३३६ ॥

उदात्तादिशब्दानुच्चारणेऽपि यत्नाधिक्येनोच्चारणं विवक्षासूचकमेवेत्याह—उञ ऊँ इति। विवक्षैव—अनुनासिकत्वविशिष्टस्य विवक्षाऽस्त्येवेत्यर्थः ॥ ३३७ ॥

नन्वस्थ्यादीनां नञ्विषयस्येत्याद्युदात्तत्वात् ।
स्थान्यनुसार्यनुदात्ते पाठ्य उदात्तो विवक्षार्थः ॥ ३३८ ॥

मैवं परमास्थ्यादावन्तोदात्तेऽस्त्युदात्तगुणकोऽपि ।
अनङः स्थान्यत एतद्विवक्षितत्वे न मानमिति ॥ ३३९ ॥

चतसर्यादिरुदात्तो निपात्य इत्यादिभाष्यवचनानि ।
एकश्रुत्या पाठोऽष्टाध्याया इति मतेन बोध्यानि ॥ ३४० ॥

ज्ञापकपरं तु भाष्यं त्रैस्वर्येणैव पाठ इति पक्षे ।
इति कैयटादिकथनं तत्त्वनुचितमिति परे प्राहुः ॥ ३४१ ॥

---

उदात्तग्रहणस्य ज्ञापकत्वासम्भवमाशङ्कते—नन्विति। नञ्विषयस्येति। 'नञ्विषयस्यानिसन्तस्य' इति फिट्सूत्रम्। इसन्तवर्जितस्य नित्यनपुंसकस्यादिरुदात्तो भवतीति तदर्थः। अनेनास्थ्यादिशब्दानामाद्युदात्तत्वादनुदात्तं पदमेकवर्जमिति परिभाषयाऽन्यस्यानुदात्तत्वेन तत्स्थानिकानङादेशस्याप्यनुदात्तत्वादनुदात्त उच्चारणीये यत्नाधिक्येनोदात्तोच्चारणं विवक्षार्थं भविष्यति एवं च स्वांशे चारितार्थ्याभावादुदात्तपदं न ज्ञापकमित्यर्थः ॥ ३३८ ॥

परिहरति—मैवमिति। परमास्थ्यादौ समासे समासस्येत्यनेनान्तोदात्तत्वादुदात्तगुणकस्याप्यनङ्स्थानिनः सत्त्वेन तस्योदात्तत्वस्यापि संभवादुदात्तोच्चारणस्य विवक्षार्थत्वकल्पनाया असंभवादुदात्तग्रहणमावश्यकमिति भावः ॥ ३३९ ॥

ननु यत्नविशेषमकृत्वास्वरूपेणोच्चारितस्य गुणस्याविवक्षितत्वे त्रिचतुरोः स्त्रियां तिसृचतसृ (७।२।९९) इति सूत्रे भाष्ये चतस्रः पश्येत्यत्र चतुरः शसीत्यन्तोदात्तनिवारणार्थं चतसर्याद्युदात्तनिपातनं च* इति भाष्यवार्तिकमसङ्गतं स्यात्। एवं वधिषीष्टेत्यत्रेट्प्रतिषेधवारणाय वधादेशस्याद्युदात्तत्वनिपातनं, पदादीनामन्तोदात्तत्वनिपातनसहादेशस्य सस्योदात्तत्वनिपातनं च–प्रतिपादयद् भाष्यमसङ्गतं स्यादित्याशंकायां तावत् कैयटोक्तं समाधानमाह—चतसरीति। एकश्रुत्येति। उदात्तादीनां स्वराणामविभागेनावस्थानमेकश्रुतिस्तयेत्यर्थः ॥ ३४० ॥

नन्वेवमस्थिदधीत्यत्रोदात्तग्रहणस्य प्रकृतपरिभाषाज्ञापकत्वपरभाष्यानुपपत्तिरत आह–ज्ञापकपरमिति। उक्तकैयटमतस्यायुक्तत्वमाह—तत्त्वित्यादिना। परे=नागेशादयः ॥ ३४१ ॥

न हि युज्यते विकल्पो वस्तुनि सिद्धेऽत एकमवधार्यम् ।
संपूर्णाष्टाध्याय्यामेकश्रुतिरिति मतं तु निर्मूलम् ॥ ३४२ ॥

द्वन्द्वत्वादुच्चार्येऽन्तोदात्ते तिसृचतस्रितीह पदे ।
चतसृपदाद्यजुदात्तोच्चारणतः सङ्गतैव हि विवक्षा ॥ ३४३ ॥

क्वचिदेकश्रुतिपाठो भिन्नस्वरशब्दसंग्रहाय कृतः ।
ऐक्ष्वाकेत्यत्र यथा निपातने दाण्डिनायनादीनाम् ॥ ३४४ ॥

अङ्गान्येकश्रुत्या पठन्ति सम्प्रति तथाप्युदात्तादेः ।
ज्ञेयं निपातनमिह व्याख्यानेनानुनासिकत्वमिव ॥ ३४५ ॥

---

अयुक्तत्वे हेतुमाह—नहीति । साध्यरूपायां हि क्रियायामतिरात्रे षोडशिग्रहणाग्रहणवद्विकल्पः संभवति, न तु सिद्धे वस्तुनि । तत्र स्थाणुर्वा पुरुषो वेति कोटिद्वयावगाहिज्ञानस्याप्रमात्वात् । पाठस्य च सिद्धत्वात्तत्र प्रकारविकल्पो नोचितः । तस्मादुभयोर्मध्ये एकमेव निश्चेतव्यमित्यर्थः । संपूर्णेति । संपूर्णाष्टाध्याय्येकश्रुत्या पठितेति मतस्य निष्प्रमाणत्वात्त्रैस्वर्येणैव पाठो निश्चीयत इति भावः ॥ ३४२ ॥

चतसर्याद्युदात्तनिपातनं कर्तव्यमित्यादिभाष्यस्य त्रैस्वर्यपाठेऽप्युपपत्तिमाह—द्वन्द्वत्वादिति । निपातनं नामान्यादृशे प्रयोगे प्राप्तेऽन्यादृशप्रयोगकरणभूतञ्च यत्नाधिक्याद्विवक्षार्थमेव । त्रिचतुरोरिति सूत्रे तिसृचतसृ इत्यस्य द्वन्द्वसमासत्वात्समासस्येत्यनेनान्तोदात्तप्राप्त्याऽन्तोदात्त उच्चारणीये चतसृशब्दस्याद्युदात्तोच्चारणं विवक्षार्थमेव, एवमन्यत्रापि स्थान्यनुरूपे स्वर उच्चारणीये तद्भिन्नस्वरोच्चारणं विवक्षार्थमतो न काचिदनुपपत्तिरिति भावः ॥ ३४३ ॥

भिन्नस्वरेति बहुव्रीहिः । ऐक्ष्वाकेति । 'दाण्डिनायनहास्तिनायन' (६।४।१७४) इत्यादिनिपातनसूत्रे भाष्ये—ऐक्ष्वाकस्य स्वरे भेदान्निपातनं पृथक्त्वेन* 'इति वार्तिकेन ऐक्ष्वाकः ऐक्ष्वाकः, इति पृथक्त्वेन निपातनं कर्तव्यमित्युक्ते 'एकश्रुतिनिर्देशात्सिद्धम्* एकश्रुतिः स्वरसर्वनाम । यथा नपुंसकं लिङ्गसर्वनाम' इत्युक्तम् । तत्रेक्ष्वाकुशब्दादपत्यार्थे जनपदशब्दात्क्षत्रियादञ् इत्यञि उलोपे आद्युदान्त एक ऐक्ष्वाकशब्दः । अपरस्तु इक्ष्वाकुषु जनपदेषु जात इत्यर्थे कोपधादणित्यणन्तत्वेनान्तोदात्तः । उभयोरप्येकशेषेणोकारलोपार्थमेकश्रुत्या निपातनमाश्रितम् ॥ ३४४ ॥

ननु सूत्रकारेण त्रैस्वर्यपाठे कृतेऽप्यध्येतॄणामेकश्रुत्यैव पाठदर्शनात्कथं स्वरनिर्णय इत्यत आह—अङ्गानीति । पठन्तीति । वेदाङ्गाध्येतार इति शेषः । अनुनासिकत्वमिवेति । यथा उपदेशेऽजनुनासिक इत् इत्यनेनानुनासिकस्याच इत्संज्ञाविधानात्,

न विधेयाण्विषय इयं तत्र सवर्णग्रहनिषेधात् ।
तेन घटवदित्यादौ न मतोर्मस्यानुनासिकवकारः ॥ ३४६ ॥

जातिमते तु तदाश्रयसकलग्रहणादियं ह्यनुपयुक्ता ।
दीर्घत्वसमानाश्रयजात्युक्तेर्ह्रस्वधीर्न यूप्रभृतेः ॥ ३४७ ॥

ननु सर्वनामशब्दे सूत्रकृता णत्वरहित उक्तेऽपि ।
पूर्वपदादिति णत्वं लोके स्यादेव तत्राह ॥ ३४८ ॥

## बाधकान्येव निपातनानि ॥ ११८ ॥

तत्तत्कार्येऽवश्यं प्राप्ते तत्तन्निपातनारम्भात् ।
सिद्धेयमतो णत्वं न भवति लोकेऽपि सर्वनामपदे ॥ ३४९ ॥

यस्तु पुराणप्रोक्तेष्वित्यत्र निपातितोऽस्ति तुडभावः ।
तेन पुरातनशब्दो न बाध्यतेऽस्य हि पृषोदरादित्वात् ॥ ३५० ॥

---

एध वृद्धावित्यादावित्संज्ञकाकारादेरनुनासिकत्वविशिष्टः पाठः प्राक् स्थित इत्यनुमीयते । स यद्यपीदानीं परिभ्रष्टस्तथापि वृत्तिकारादिव्याख्यानेनानुनसिकत्वं ज्ञायते तथादात्तादिनिपातनमपीत्यर्थः ॥ ३४५ ॥

सवर्णग्रहनिषेधात् । अणुदित्सूत्रे, अप्रत्यय इत्यनेनैकदेशानुमत्या भाव्यमानेन सवर्णानां ग्रहणं नेति परिभाषाज्ञापनेन तथा सवर्णग्रहणनिषेधादित्यर्थः ॥ ३४६ ॥

व्यक्तिपक्ष एवेयं परिभाषोपयुक्ता न जातिपक्ष इत्याह जातिमतेत्विति । तत्र तत्तज्जात्यवच्छिन्नानां सर्वेषां ग्रहणसिद्धेरित्यर्थः । ननु जातिपक्षे यू स्त्र्याख्यावित्यादौ ह्रस्वस्यापि ग्रहणं स्यादत आह—दीर्घत्वेति । दीर्घत्वसमानाधिकरणाया इत्वादिजातेरीकारादिना, उक्तः—बोधनात्, ह्रस्वधीर्न = ह्रस्वग्रहणं नेत्यर्थः ॥ ३४७ ॥

पूर्वपरिभाषाव्याख्याने चतसर्याद्युदात्तनिपातनमित्यादि निपातनप्रस्तावादाह—नन्विति । सर्वादीनि सर्वनामानीति सूत्रे भगवता पाणिनिना सर्वनामशब्दे प्राप्तस्य 'पूर्वपदात्संज्ञायामगः' इति णत्वस्याभावनिपातनेऽपि लोके सणकारप्रयोगस्य साधुत्वं स्यादेवेत्यर्थः ॥ ३४८ ॥

निपातनान्यप्यपवादवचनवद् येन नाप्राप्तन्यायेनोत्सर्गस्य नित्यबाधकानीत्येतन्न्यायमूलेयमित्याह—तत्तदिति ॥ ३४९ ॥

ननु निपातनानि बाधकान्येवेति नियमस्वीकारे पुराशब्दाद्भवार्थे सायं चिरमिति

उभयोः पृषोदरादिषु पाठादेवेष्टसिद्धिरित्यन्ये ।
यत्पुनरबाधकान्यपि निपातनानीति तन्न भाष्यमतम् ॥३५१॥

उखश्वातोः स्वत एव ह्रस्वतयाऽभ्यासह्रस्वता न पूर्वमिति ।
आदिहलः शेषेऽथ च दीर्घे ह्रस्वप्रसक्तिरत आह ॥३५२॥

## पर्जन्यवल्लक्षणप्रवृत्तिः ॥ ११९ ॥

यत्र स्वकृतविशेषो न सम्भवति तादृशेऽपि जलपूर्णे ।
वर्षति मेघस्तत्सममविशेषेऽपि प्रवर्तते शास्त्रम् ॥३५३॥

तेन च ह्रस्वस्यापि ह्रस्वेऽस्य सकृत्प्रवृत्तत्वात् ।
न पुनः प्रवृत्तिरस्ति च दीर्घश्रवणं पुरः प्रवृत्तिफलम् ॥३५४॥

---

सूत्रेण ट्युप्रत्यये तस्य तुडागमे चावश्यं प्राप्ते आरभ्यमाणेन पुराणप्रोक्तेषु ब्राह्मणकल्पेष्विति सूत्रे पुराणशब्दे तुडागमाभावनिपातनेन तुट्सहितस्य पुरातनेत्यस्य बाधः स्यात् । सचानिष्टः पुरातनशब्दस्यापि साधुत्वादत आह—यस्त्विति । अस्य = पुरातनशब्दस्य । पृषोदरादित्वात्—। पृषोदरादिगणे—पाठकल्पनेन पृषोदरादीनि यथोपदिष्टमिति साधुत्वादित्यर्थः ॥ ३५० ॥

पक्षान्तरमाह —उभयोरिति । उभयोः = पुराणपुरातनशब्दयोः । पाठात् = पाठकल्पनात् । पाठादेवेत्येवकारेण पुराणप्रोक्तेष्वित्यत्र निपातनस्य व्यावृत्तिः । एवं चोक्तनिपातनक्लेशाभावादत्र पक्षे लाघवमिति बोध्यम् । कैयटाद्युक्तिं खण्डयति—यत्पुनरिति । न भाष्यमतम्—। सर्वादीनि ( १।१।२७ ) इति सूत्रे भाष्यकृता निपातनानां बाधकत्वस्यैव निर्णीतत्वादबाधकान्यपीति कथनं भाष्यविरुद्धमिति भावः ॥ ३५१ ॥

न्यायसिद्धत्वसाम्यादेतदादिपरिभाषात्रयोपन्याससङ्गतिर्ज्ञेया । अभ्यासह्रस्वता—। ह्रस्व इति सूत्रेणाभ्यासस्य ह्रस्वत्वम् । न पूर्वम्—। पूर्वं न प्रवर्तेत । इति = अतः । दीर्घे इति द्वयोरुकारयोः सवर्णदीर्घप्रवृत्त्युत्तरमूखतुरित्यादौ ह्रस्वः स्यादिति शङ्कानिवारणार्थमाहेत्यर्थः ॥ ३५२ ॥

तत्समम् = तत्तुल्यम् । अविशेषेऽपि = स्वकृतविशेषासम्भवेऽपि ॥ ३५३ ॥

तेन चेति । उक्तन्यायेन ह्रस्वेऽपि ह्रस्वशास्त्रप्रवृत्त्या पूर्वं ह्रस्वे कृते लक्ष्ये लक्षणं सकृदेव प्रवर्तेत इति न्यायेन सवर्णदीर्घोत्तरं पुनर्ह्रस्वो नेत्यर्थः । ननु प्रयोजनमन्तरेण न

तदिदमिको झलूसूत्रे स्पष्टं भाष्येऽत्र कथितं हि।
कृतकारि खल्वपि भवति शास्त्रं पर्जन्यवदिति वचः ॥३५५॥

लक्ष्ये सकृदेव भवति लक्षणसञ्चार इत्यत्र।
मानं समस्सुटीति त्रिसकारार्थं रुविधिसूत्रम् ॥ ३५६ ॥

संस्कर्त्तेत्यत्र समो वा लोपे ह्येकसं ततो द्वित्वे।
द्विसमत्र पुनर्द्वित्वे त्रिसमिति सिद्धेऽस्य वैयर्थ्यात् ॥३५७॥

न विकारकृतो नाप्यागमकृत इह लक्ष्यभेद इति बोध्यम्।
उदवोढामिह वृद्धावोत्वे च पुनर्न वृद्धिरिति भाष्यात् ॥३५८॥

---

कस्यचित्प्रवृत्तिरत आह—अस्ति चेति। प्रकृते ह्रस्वस्य पूर्वप्रवृत्तावपि लक्ष्ये लक्षणमिति न्यायद्वारा पुनर्ह्रस्वाप्रवृत्त्या दीर्घश्रवणरूपं प्रयोजनमस्त्येवेति भावः ॥ ३५४ ॥

अस्या भाष्यसम्मतत्वमाह—तदिदमिति। इको झल् (१।२।९) इति सूत्रे भाष्ये हि—प्रयोजनविशेषात्पुनः प्रवृत्तिर्भवतीत्युपपाद्य दीर्घाणां पुनर्दीर्घत्ववचनेन न किञ्चित्प्रयोजनमस्ति। अकृतकारि खल्वपि शास्त्रमग्निवद्भवति। तद्यथा। अग्निर्यददग्धं तद्दहति यद्दग्धं तन्न दहति' इत्याशङ्क्य 'दीर्घाणामपि दीर्घवचन एतत्प्रयोजनं गुणो मा भूदिति। कृतकारि खल्वपि शास्त्रं पर्जन्यवत्। तद्यथा पर्जन्यो यावदूनं पूर्णं च सर्वमभिवर्षति' इत्युक्तम् ॥ ३५५ ॥

लक्ष्ये लक्षणस्य सकृदेव प्रवृत्तिरित्यत्र मानमाह—लक्ष्ये इत्यादिना। त्रिसकारार्थमिति। संस्कर्तेत्यादौ समो वा लोपमेके इति लोपविधानेनैव वक्ष्यमाणरीत्या त्रिसकाररूपसिद्धिसंभवात्तदर्थं रुविधानं व्यर्थं सदुक्तार्थज्ञापकमिति भावः ॥ ३५६ ॥

वैयर्थ्यमेवोपपादयति—संस्कर्तेत्यादिना ॥ ३५७ ॥

विकारादिकृतो लक्ष्यभेदो न मन्यत इत्यत्र भाष्यं प्रमाणयति—उदवोढामिति। सिचि वृद्धिः परस्मैपदेषु (७।२।१) इति सूत्रे भाष्ये—उदवोढामित्यादावोकारस्य वदव्रजहलन्तस्य चेति प्राप्तवृद्धिवारणाय कृतस्य सिचिवृद्धावोकारप्रतिषेध इति वार्तिकस्य खण्डनाय, परत्वाद्वृद्धिरेवादौ भवति, ततः सहिवहोरोदिति सूत्रे वर्णग्रहणादाकारस्याप्योकार इति न दोष इत्यर्थकमुक्तम्। लक्ष्ये लक्षणमिति न्यायेन पुनर्वृद्धिर्नेति तदाशयः। तत्रोदवोढामिति लक्ष्ये ओकाररूपविकारसत्त्वेऽप्युक्तन्यायाश्रयणेन विकारकृतो लक्ष्यभेदो नेति भाष्यकाराभिप्रायः स्पष्ट इति भावः ॥ ३५८ ॥

स्वीयप्रथमप्रवृत्तावुद्देश्यचयेन योऽस्ति घटकतया ।
उक्तचयघटकमात्रोद्देश्यविकारागमातिरिक्तश्च ॥ ३५९ ॥
तदघटितत्वे सति च स्वप्रथमप्राप्त्यनुत्तरप्राप्तेः ।
विषयेणाघटितत्वं तल्लक्ष्यत्वं परिज्ञेयम् ॥ ३६० ॥
उदवोढामत्रौत्वे सर्वेषामिह कृतेऽपि सुटि ।
तल्लक्ष्यमेव तस्मात्सकृत्प्रवृत्तौ पुनर्न वृद्धिसुटौ ॥ ३६१ ॥
मात्रपदात्काण्डे इह ह्रस्वापादनपरं भाष्यम् ।
उपपन्नं चान्त्यदलान्न संप्रसारण इतीदमपि सूत्रम् ॥ ३६२ ॥

---

विकारागमयोः सतोरपि लक्ष्यभेदानङ्गीकारात्तल्लक्ष्यत्वमेवेत्युक्तम् । तदेव तल्लक्ष्यत्वमव्याप्त्यतिव्याप्तिपरिहाराय परिष्करोति **स्वीयेत्यादिना पद्यद्वयेन । उक्तचयेति ।** उक्तो यश्चयः स्वीयप्राथमिकप्रवृत्तावुद्देश्यत्वेनाश्रीयमाणः समुदायस्तद्घटकमात्रोद्देश्यकौ यौ विकारागमौ तदतिरिक्त इत्यर्थः । **स्वप्रथमेति ।** स्वस्य या प्रथमा प्राप्तिस्तदपेक्षयोत्तरकालिकी न भवत्येवंभूता या प्राप्तिस्तस्या विषयेणेत्यर्थः । स्वीयप्राथमिकप्रवृत्तावुद्देश्यत्वेनाश्रीयमाणो यः समुदायस्तदघटकस्तादृशसमुदायघटकमात्रोद्देश्यकविकारागमातिरिक्तश्च यो वर्णस्तदघटितत्वे सति, स्वीयप्राथमिकप्रवृत्त्युत्तरकालिकप्राप्तिविषयाघटितत्वं तल्लक्ष्यत्वमिति समुदितार्थः । एवं तत्तच्छास्त्रम् । ३५९, ३६० ।

तत्तन्निवेशफलान्याह—**उदवोढामित्यादिना पद्यत्रयेण ।** उदवोढामिति, उदुपसर्गपूर्वकवहधातोर्लुङि प्रथमपुरुषद्विवचनान्तं रूपम् । अत्र वदव्रजेति सूत्रस्य प्राथमिकप्रवृत्तावुद्देश्यत्वेनाश्रीयमाणः समुदायः, अवह् स् ताम् इति । तत्र वृद्धावौत्वे च कृते अवोह स् ताम् इति । तद्घटकौकारस्य प्रथमोक्तलक्ष्याघटकत्वेऽपि तद्घटकाकारोद्देश्यकविकाररूपत्वादोकारघटितस्यापि प्रथमलक्ष्याभिन्नत्वम् । तेन लक्ष्ये लक्षणमिति न्यायप्रवृत्त्या न पुनर्वृद्धिः । एवं सर्वेषामित्यत्र सुडागमे सत्यपि तल्लक्ष्यत्वाच्च पुनः सुट ॥ ३६१ ॥

**मात्रपदादिति ।** ह्रस्वो नपुंसके प्रातिपदिकस्य ( १।२।४७ ) इति सूत्रे भाष्ये काण्डे कुडये इत्यादेर्विभक्त्यन्तस्यापि नपुंसके वृत्त्या ह्रस्वाशङ्का कृता । तत्राद्गुण इत्येकादेशस्य अकारेकारोभयोद्देश्यकत्वेन प्रथमलक्ष्यकाण्डशब्दघटकाकारमात्रोद्देश्यकत्वाभावेन लक्ष्यभेदात्पुनर्ह्रस्वाशङ्कोपपन्नेति भावः । **अन्त्यदलात् –।** स्वप्रथमेत्यादि विशेषणदलात्, न संप्रसारण इति सूत्रमुपपन्नम् । अन्यथा, युवन् शब्दावयववकारस्य संप्रसारणे यून् इत्यस्य सत्यन्तोक्तविशेषणविशिष्टत्वेन युवन् रूपलक्ष्याभिन्नत्वापत्तौ लक्ष्ये

भूयादित्यादौ च प्रवर्त्तते द्विः सलोपविधिस्तत्रम् ।
तत्रानुत्तरशब्दात्षड्ढ्त्स्वित्यादौ पुनश्चर्त्वम् ॥ ३६३ ॥

ननु च न वृद्भ्य इतीट् प्रतिषेधस्य स्यन्त्स्यतीत्यादौ ।
बहिरङ्गत्वादूदित इतीड्विकल्पप्रसक्तिरत आह ॥ ३६४ ॥

## निषेधाश्च बलीयांसः ॥ १२० ॥

अप्यन्तरङ्गभूतान्निजोपजीव्याच्च विधिशास्त्रात् ।
प्रतिषेधाः प्रबलतरा विधिमुच्छेत्तुं प्रवृत्तत्वात् ॥ ३६५ ॥

वचनं तु चतुर्भ्यं इति स्पष्टार्थकमेतयेष्टसंसिद्धेः ।
अत एव च भाष्योक्तं तत्प्रत्याख्यानमुपपन्नम् ॥३६६॥

---

लक्षणमिति न्यायेन पुनर्वकारस्य संप्रसारणाप्राप्त्या न संप्रसारणे संप्रसारणमिति निषेधो व्यर्थः स्यात् । तदुक्तौ तु प्रथमं या वकारे संप्रसारणप्रवृत्तिस्तत्समकालिकसंप्रसारणप्राप्ति-विषयकारघटितत्वेन तल्लक्ष्यत्वाभावादुक्तन्यायाप्रवृत्त्या तच्चरितार्थमिति भावः ॥ ३६२ ॥

भूयादिति । अन्त्यदलनिवेशादेव भूयादित्यादौ भूयास् सत् इति स्थितौ स्कोः संयोगाद्योरित्यस्य द्विः प्रवृत्त्या सकारद्वयस्य निवृत्तिरित्यर्थः । उक्तप्रयोजनानां समान-कालिकप्राप्तिनिवेशेनैव सिद्धेरनुत्तरकालिकप्राप्तिनिवेशे किं प्रयोजनमिति जिज्ञासाया-माह—तत्रेति । खरिचेत्यत्र पदस्येत्यधिकारात् षड् ध् सु इति पदं लक्ष्यम् । तत्र प्रथमं धकारे चर्त्वप्रवृत्तिस्तस्य खर्परत्वात् । डकारे चर्त्वप्राप्तिर्न तत्समकालिकी किन्तु धुडुत्पत्तेः प्राक्सकारे परे तत्प्राप्त्या पूर्वकालिकी । अतस्तथा निवेशे तल्लक्ष्यत्वापत्तौ डकारे पुनश्चर्त्वप्रवृत्तिर्न स्यादतस्तदर्थमनुत्तरेत्युक्तमिति दिक् ॥ ३६३ ॥

न वृद्भ्य इति । स्यन्त्स्यतीत्यादौ न वृद्भ्यश्चतुर्भ्य इति सूत्रबोधितस्येण्निषेधस्य आत्मनेपदाभावरूपाधिकनिमित्तकत्वेन बहिरङ्गत्वात्तदपेक्षयाऽन्तरङ्गःस्वरतिसूतीति सूत्र-विहितऊदित्त्वप्रयुक्त इड्विकल्पः स्यादित्यर्थः ॥ ३६४ ॥

परिभाषार्थं तद्बीजं चाह—अपीत्यादिना । प्राप्तिं विना निषेधानुपपत्तेर्विधे-र्निषेधोपजीव्यत्वम् । उच्छेत्तुम् = स्वविषयान्निवर्त्तयितुम् ॥ ३६५ ॥

ननु "ऊदिल्लक्षणमन्तरङ्गमपि विकल्पं बाधित्वा चतुर्ग्रहणसामर्थ्यान्नवृद्भ्य इति निषेधः" इति कौमुद्युक्तरीत्या चतुर्ग्रहणसामर्थ्यादेव स्यन्त्स्यतीत्यादाविण्निषेधसिद्धेर्नैत-दस्याः फलमत आह—वचनं त्विति । एतया = प्रकृतपरिभाषया । इष्टसंसिद्धेः =

उपजीव्याद्बलवत्त्वाङ्गीकारान्नाज्झलाविति निषेधे ।
न सवर्णत्वविकल्पोऽन्यथा तु मीमांसकसरण्या ॥३६७॥

उपजीव्यत्वेन विधेः प्राबल्यात्तन्निषेधवचनाच्च ।
अतिरात्रे षोडशिनो ग्रहणस्येव हि विकल्पः स्यात् ॥३६८॥

अत एव द्वन्द्वे चेत्यनेन संज्ञानिषेधमनुशिष्य ।
जसि तद्विकल्पबोधकसूत्रस्यारम्भ उपपन्नः ॥ ३६९ ॥

---

इष्टस्येण्निषेधस्य सिद्धिसंभवादित्यर्थः । अत एव च = चतुर्ग्रहणस्य स्पष्टार्थकत्वादेव, कौमुद्युक्तप्रयोजनाभावादेव चेत्यर्थः ॥ ३६६ ॥

एवमन्तरङ्गान्निषेधस्य बलवत्त्वं प्रतिपाद्य स्वोपजीव्याद्विधिशास्त्रादपि तस्य बलवत्त्वं फलसहितं दर्शयति—उपजीव्यादित्यादिना । इति निषेधे—। इत्येत्येतन्निषेधशास्त्रविषये । अन्यथा तु—विध्यपेक्षया निषेधस्य बलीयस्त्वानङ्गीकारे त्वित्यर्थः । सरण्या रीत्या । अस्याग्रिमकारिकायामन्वयः ॥ ३६७ ॥

उपजीव्यत्वेनेति । मीमांसका हि—'यजतिषु येयजामहं करोति नानुयाजेषु' इति वाक्ये नञो निषेधार्थत्वे निषेधस्य विशेषविषयत्वेनेव विधेरुपजीव्यत्वेन प्राबल्यान्निषेधेन विधेरत्यन्तबाधो न युक्तः न च नानुयाजेष्विति विशेषशास्त्रेण यजतिषु ये यजामहं करोतीति सामान्यशास्त्रस्य बाध इत्यपि वक्तुं शक्यम् । परस्परनिरपेक्षयोरेव शास्त्रयोर्बाध्यबाधकभावाभ्युपगमात् । अतो विहितप्रतिषिद्धत्वाद्विकल्पः स्यात्, स च न युक्तोऽष्टदोषदुष्टत्वात्, तत्परिहारार्थं नानुयाजेष्वित्यत्र पर्युदासमाश्रित्यानुयाजव्यतिरिक्तेष्वित्यर्थं व्यवस्थापयन्ति । यत्र तु पर्युदास आश्रयितुं न शक्यते तत्र विकल्पप्रसक्तावप्यगत्या निषेधमाश्रयन्ति । यथा—'अतिरात्रे षोडशिनं गृह्णाति । नातिरात्रे षोडशिनं' गृह्णाति' इत्यत्र ज्योतिष्टोमसंस्थाविशेषेऽतिरात्रयागे षोडशिनामकग्रहग्रहणस्य विकल्पो नञश्च निषेधार्थत्वमाश्रीयते । एवमत्र सवर्णसंज्ञादेर्निषेधविषये विकल्पापत्तिरिति भावः । न च व्याकरणस्य शब्दसाधुत्वप्रतिपादकशास्त्रत्वात्साधुत्वस्यैव विकल्पः स्यात् स च नोचितः साधुत्वस्य नित्यत्वेन पुरुषानिर्वर्त्यत्वात् । इति चेन्न । साधुत्वस्याविकल्प्यत्वेऽपि साधुत्वाङ्गानां संज्ञादीनां विकल्पस्य न वेति विभाषा ( १।१।४४ ) इति सूत्रे भाष्ये व्यवस्थापितत्वेन विकल्पापत्तेरुपपत्तेः ॥ ३६८ ॥

अत एव = निषेधस्य बलवत्त्वेन तद्विषये विकल्पाभावादेवेत्यर्थः । संज्ञानिषेधम् = सर्वनामसंज्ञाया निषेधम् । अनुशिष्य = प्रतिपाद्य । जसीति । जसः शीभावे

नन्वत्यन्तस्वार्थिककप्रभृतेरर्थवत्त्वविरहेण ।
अर्थप्रत्यायकताऽऽत्मकं कथं प्रत्ययत्वमत आह ॥ ३७० ॥

## अनिर्दिष्टार्थाः प्रत्ययाः स्वार्थे ॥ १२१ ॥

स्वपदं स्वीयार्थमिह स्वप्रकृतेरर्थ एव ते ज्ञेयाः ।
स्वस्य स्वप्रकृतेर्वा योऽर्थं प्रत्याययेत् स तत्संज्ञः ॥ ३७१ ॥
प्रत्यय इत्येषा खलु महती संज्ञाऽर्थबोधजनकार्था ।
तेनार्थाकाङ्क्षायामितराभावादियं सिद्धा ॥ ३७२ ॥

## योगविभागादिष्टसिद्धिः ॥ १२२ ॥

योगः सूत्रं तस्य व्याख्यात्रुपदर्शितविभागात् ।
इष्टस्य सिद्धिरेव हि कार्याऽनिष्टस्य नापत्तिः ॥ ३७३ ॥

---

कर्तव्ये द्वन्द्वे सर्वनामसंज्ञाविकल्पबोधकस्य विभाषा जसीति सूत्रस्यारम्भ उपपन्नः। अन्यथा द्वन्द्वेचेति निषेधेनैव विकल्पलाभे तद्वैयर्थ्यं स्पष्टमिति भावः। इयं परिभाषा न लुमताङ्गस्य (१।१।६३) कर्मेणिङ् (३।१।३०) इत्यनयोः सूत्रयोर्भाष्ये स्पष्टा ॥३६९॥

नन्विति। प्रत्ययसंज्ञाया भाष्येऽन्वर्थत्वाङ्गीकारात् प्रतिपूर्वादिण्धातोरन्तर्भावितण्यर्थादच्प्रत्ययेन निष्पन्नात्प्रत्ययशब्दादर्थप्रत्यायकत्वरूपोर्थो लभ्यते। अविरेवाविकः, याव एव यावक इत्यादाववेः कः यावादिभ्यः कन्नित्यादिसूत्रैरर्थविशेषमनिर्दिश्य-विहितानां कप्रत्ययादीनां त्वन्वयव्यतिरेकाभ्यां वाच्यार्थानवधारणान्तरवादिष्वतिशायनादिरूपद्योत्यार्थवदेषां द्योत्यार्थस्याप्यभावात्प्रत्ययत्वमनुपपन्नमिति भावः ॥ ३७० ॥

स्वस्येति। स्व-स्वप्रकृत्यन्यतरार्थप्रत्यायकत्वं प्रत्ययत्वमित्यङ्गीकारात्कप्रत्ययादीनां स्वार्थप्रत्यायकत्वाभावेऽपि स्वप्रकृत्यर्थेनैव तेषामर्थवत्त्वात्स्वप्रकृत्यर्थप्रत्यायकत्वसत्त्वात्प्रत्ययत्वमुपपन्नमिति भावः। तत्संज्ञः = प्रत्ययसंज्ञः ॥ ३७१ ॥

इयं च न्यायसिद्धेत्याह—प्रत्यय इति। अर्थबोधजनकार्था—अर्थप्रत्यायकत्वरूपार्थविशिष्टेत्यर्थः इद च प्रत्ययः (३।१।१) इति सूत्रे भाष्ये स्पष्टम्। इतराभावात् = प्रकृत्यर्थव्यतिरिक्तस्यानुपस्थितत्वादित्यर्थः। इयं सुपि स्थः (३।२।४) इत्यादौ भाष्ये स्पष्टा ॥ ३७२ ॥

पूर्वपरिभाषा सुपि स्थ (३।२।४) इति सूत्रे भाष्ये उपनिबद्धा तत्र योगविभागा-

तत्तदभिन्नविधेयकयोगान्तरकरणसामर्थ्यात् ।
प्रथमस्यानित्यत्वं ज्ञाप्यत इति बीजमेतस्याः ॥ ३७४ ॥

## पर्यायशब्दानां लाघवगौरवचर्चा नाद्रियते ॥ १२३ ॥

वेत्येव लघुनि वाच्येऽन्यतरस्यामिति तथा विभाषेति ।
सूत्रेषु विनिर्देशो व्यर्थः सञ्ज्ञापयत्येताम् ॥ ३७५ ॥

## ज्ञापकसिद्धं न सर्वत्र ॥ १२४ ॥

स्पष्टतया पठितव्येऽनुमानतो बोधजननं हि ।
क्लेशकरं ज्ञानजनकचित्तव्यापारगौरवात्तत्र ॥ ३७६ ॥

तेनासार्वत्रिकता ज्ञापकसिद्धस्य सूच्यतेऽतश्च ।
ज्ञापकसिद्धार्थेनानिष्टं नापाद्यमिति भावः ॥ ३७७ ॥

---

श्रयणात्तत्प्रसङ्गेनाह—योगेति । नापत्तिः अनिष्टप्रयोगापादनं न कार्यमित्यर्थः । तेनातो धातोरित्यत्र आत इति योगविभागेन क्त्वः श्न इत्यादिप्रयोगसिद्धिरेव भवति । न तु हाहानित्यादौ तत्प्रवृत्त्याऽनिष्टापादनम् । योगविभागादिभिरनेकार्थबोधकत्वमेव, सूत्राणां विश्वतो मुखत्वम् । तदुक्तमभियुक्तैः—अल्पाक्षरमसन्दिग्धं सारवद्विश्वतो मुखम् । अस्तोभमनवद्यं च सूत्रं सूत्रविदो विदुरिति ॥ ३७३ ॥

तत्तदिति । यथा आत इति योगविधेय आलोप एव धातोरित्यस्यापि विधेयः । तत्र आत इत्यस्य सर्वादन्ताङ्गविषयकत्वे धातोरित्यस्य वैयर्थ्यं स्पष्टम् । अतस्तत्सामर्थ्यात्पूर्वस्य आत इत्यस्यानित्यत्वं = काचित्कत्वं ज्ञाप्यते । तदेवास्या बीजमित्यर्थः ॥३७४॥

योगविभागेषु यथा वाक्यभेदादिगौरवमङ्गीक्रियते तथाऽन्यत्राप्युच्चारणगौरवमङ्गीक्रियत इत्याह—पर्यायशब्दानामिति । तत्र ज्ञापकमाह—वेत्यादिना । एवं पर्यायशब्देषूच्चारणगौरवेणार्थान्तरकल्पनाऽऽग्रहो न कर्तव्य इति भावः ॥ ३७५ ॥

नञ्घटितत्वसाम्यादाह—ज्ञापकेति । अस्या बीजमाह—स्पष्टतयेति । वर्णाभिव्यक्तिजनककण्ठताल्वाद्यभिघातगौरवमेवादर्तव्यं न तु ज्ञानजनकमनोव्यापारगौरवमिति राजाज्ञाया अभावात् स्पष्टोच्चारणे प्रतिपत्तिलाघवाच्चेति भावः ॥ ३७६ ॥

असार्वत्रिकतेति । तेन अपपरिबहिरञ्चवः पञ्चम्येति सूत्रे पञ्चमीग्रहणेन ज्ञापिताया बहिर्योगे पञ्चम्याः करस्य करभो बहिरित्यमरोक्तावभाव उपपन्नः ॥ ३७७ ॥

भाष्यकृता ध्वनितमिदं वर्जयता ज्ञापितान्यनिष्टेषु ।
ज्ञापकपदमुपलक्षणमसर्वगं न्यायसिद्धमपि ॥ ३७८ ॥

न्यायज्ञापकसिद्धान्यपि कथितान्यत्र कानिचिच्छास्त्रे ।
तैरपि लिङ्गन्यायाधिगतस्यानित्यता ज्ञेया ॥ ३७९ ॥

तत्स्थानापन्न इति न्यायाप्तं स्थानिवत्सूत्रम् ।
जग्धिविधौ ल्यब् ग्रहणाज्ज्ञप्तं चानल्विधाविति निगदितम् ॥ ३८० ॥

ननु वीप्सायां द्रोग्धा द्रोग्धेत्यादौ घढोरसिद्धत्वात् ।
द्वित्वोत्तरमेकत्र घ इतरत्र च ढः कुतो न तत्राह ॥ ३८१ ॥

## पूर्वत्रासिद्धीयमद्वित्वे ॥ १२५ ॥

त्रैपादिकेषु शास्त्रेष्वद्वित्व इति ह्युपस्थितं भवति ।
द्वित्वव्यतिरिक्ते खलु पूर्वस्मिन्परमसिद्धमित्यर्थः ॥ ३८२ ॥

---

ध्वनितमिति । ङ्याप्प्रातिपदिकात् ( ४।१।१ ) इति सूत्रे ज्ञापकसिद्धाया लिङ्ग-विशिष्टपरिभाषाया द्विषतीताप इत्यादावप्रवृत्त्यङ्गीकारादन्यत्रापि न्यायज्ञापकसिद्ध-वचनानामनिष्टापत्तिस्थलेष्वप्रवृत्तिप्रतिपादनाच्च भाष्यकृतेदं ध्वनितमित्यर्थः । असर्वगम् । न्यायसिद्धमप्यसार्वत्रिकमित्यर्थः ॥ ३७८ ॥

अत्रार्थेऽन्यदपि गमकमाह—न्यायेत्यादिना ॥ ३७९ ॥

तादृशानां कथनमुदाहरति—तत्स्थानेति । तत्स्थानापन्नस्तद्धर्मं लभते यथा गुरोः स्थाने शिष्यो याज्यकुलानि गत्वाऽग्रासनादीनि लभत इति लौकिकन्यायसिद्धार्थस्यैव बोधकं स्थानिवदादेश इति सूत्रं कृतम् । तथा अदो जग्धिरित्यत्र ति कितीत्येव सिद्धे ल्यब्ग्रहणाज्ज्ञापितमनल्विधाविति निषेधवचनमारब्धम् । इदं च स्वं रूपमित्यस्य प्रत्या-ख्यानपक्षे । तत्सत्त्वे तु तत्स्थानापन्न इति न्यायस्यात्र शास्त्रे आश्रयितुमशक्यत्वापूर्व एव स्थानिवत्सूत्रारम्भ इति बोध्यम् ॥ ३८० ॥

स्थानिवदित्यतिदेशप्रसङ्गाद्वचनसिद्धस्य तु वचनेनैव निवृत्तिरित्याशयाच्चाह—नन्विति । द्रुह धातोस्तृचि द्रोग्धा, द्रोढेति च रूपद्वयम् । तत्र नित्यवीप्सयोरित्यनेन वीप्सायां द्वित्वे द्रोग्धा द्रोग्धा, द्रोढा द्रोढेति भवति । अत्र वाद्रुह मुहेति घत्वस्य, हो ढ इति ढत्वस्य च त्रैपादिकत्वेन द्वित्वदृष्ट्याऽसिद्धत्वाद् द्रोहृता इत्यस्य द्वित्वे घत्वस्य वैकल्पिकत्वेनेच्छयैकत्र घत्वमपरत्र ढत्वमित्यापत्तिः स्यादिति भावः ॥ ३८१ ॥

त्रैपादिकेष्विति । पूर्वत्रासिद्धमित्येतदधिकारभवं शास्त्रं पूर्वत्रासिद्धीयं तत्र अद्वि-

द्वित्वविधौ पूर्वत्रासिद्धमिति न संचरेदिति त्वर्थे ।
द्वित्वस्यासिद्धत्वं न स्यात्सापादिके कार्ये ॥ ३८३ ॥
एवं सति दिव्भ्यामिह परभावादर्नाचचेति वद्वित्वे ।
पश्चादन्त्यस्यात्वे पूर्ववकारश्रुतिः प्रसज्येत ॥३८४॥
यत्र च फले विशेषः सिद्धत्वे चाऽप्यसिद्धत्वे ।
तत्रैवेयं न्यत्र तु नास्ति विशेषो यथा हि कृष्णर्द्धौ ॥३८५॥
पूर्व जश्त्वे धस्य द्वित्वे वा रूपमेकविधमेव ।
धद्वित्वे सति जश्त्वप्रवर्तनात्तत्र नेयमफलत्वात् ॥३८६॥
एषा सर्वस्य द्वे इति सूत्रे वार्तिकात्मिका भाष्ये ।
न सु नेऽत्र नेति योगविभागात्सिद्धेयमिति केचित् ॥३८७॥

---

त्वे इत्युपतिष्ठते इति परिभाषार्थः सप्तम्यर्थे प्रथमा तत्फलितार्थमाह—द्वित्वव्यतिरिक्त इति ॥३८२॥

द्वित्वे कर्तव्ये पूर्वत्रासिद्धमिति सूत्रं न प्रवर्तत इति सीरदेवाद्युक्तमर्थं निरस्यति—द्वित्वेति । द्वित्वस्य = त्रैपादिकद्वित्वस्य ॥ ३८३ ॥

दिव्भ्यामिहेति । इति स्थिते इत्यर्थः । परभावात् = परत्वात् । वद्वित्वे वकारस्य द्वित्वे । उत्वे = दिव उदित्यनेनोत्वे ॥ ३८४ ॥

कृष्णर्द्धौ = कृष्णर्द्धिरित्यत्र ॥ ३८५ ॥

पूर्वं जश्त्व इति । कृष्णर् ध् धिः, इति स्थितेऽनयाऽचोरहाभ्यामिति द्वित्वदृष्ट्या झलां जश् झशीति जश्त्वस्यासिद्धत्वाभावे परत्वाजश्त्वेन धातुधकारस्य दकारे ततो द्वित्वे दकारद्वयसहितैकधकारविशिष्टं रूपम् । तदेव परिभाषाया अप्रवर्तनेऽपि जश्त्वात्प्राग् धकारद्वित्वे तदुत्तरं जश्त्वप्रवृत्त्या सिध्यति । अतस्तत्र निष्फलत्वादस्या न प्रवृत्तिरित्यर्थः । कौमुद्यां द्धिधमित्याद्युक्तिस्तु प्रक्रियाऽभिप्रायेण । वर्णद्वित्वेऽप्यस्याः प्रवृत्तिर्भवति । अत एव अनचि च ( ८।४।४७ ) इति सूत्रे वाक्क् इति भाष्योक्तमुदाहरणं संगच्छते । अन्यथा चर्त्वस्यासिद्धत्वाद्गकारद्वित्वेऽन्त्यस्य वाऽवसान इति चर्त्वेऽपि पूर्वगकारश्रवणापत्तेरिति बोध्यम् ॥ ३८६ ॥

वार्तिकात्मिकेति । सर्वस्य द्वे ( ८।१।१ ) इति सूत्रे भाष्ये द्रोग्धा द्रोग्धेत्यादिसिद्ध्यर्थं 'पूर्वत्रासिद्धीयमद्विर्वचन इति वक्ष्यामि' इति वचनरूपेयं पठितेत्यर्थः ॥ इति

एषा चानित्योभौ साभ्यासस्येति सूत्रकृतिलिङ्गात् ।
सिद्धमतः प्रणिनायेत्यादि द्वित्वे कृते णत्वात् ॥३८८॥

ननु गोष्वश्वेष्वपि च स्वामीत्यादीव गोषु चाश्वानाम् ।
स्वामीति षष्ठ्यपि स्यादुभयविधानादतः प्राह ॥ ३८९ ॥

**एकस्या आकृतेश्चरितः प्रयोगो द्वितीयस्यास्तृतीयस्याश्च न भविष्यति ॥ १२६ ॥**

यस्मिन्नर्थे यादृग्रूपः शब्दः प्रयुज्यते पूर्वम् ।
तस्मिन्नर्थेऽन्योऽपि हि तादृग्रूपः प्रयोज्य इति भावः ॥ ३९० ॥

यत्रान्याकृतिकरणेऽर्थान्तरसम्भावना स विषयोऽस्याः ।
कृञ्चेत्यस्मिन्सूत्रे भाष्य इयं स्पष्टमुल्लिखिता ॥ ३९१ ॥

---

केचिदिति । एतन्मतं त्वयुक्तम् । न मु ने ( ८।२।३ ) इति सूत्रे नेति योगविभागस्य भाष्येऽदर्शनात् ॥ ३८७ ॥

**सूत्रकृतिलिङ्गात्** = सूत्रारम्भरूपज्ञापकादस्या नित्यत्वे त्वनयैव णत्वोत्तरं द्वित्वेन प्राणिणदित्यादिसिद्धेस्तद्वैयर्थ्यं स्पष्टम् ॥ ३८८ ॥

विरूपप्रयोगापत्तिनिवारकत्वसाधर्म्यादाह **न्विति** । गोष्वश्वेषु च स्वामीत्युभयत्र सप्तमी गवामश्वानां च स्वामीत्युभयत्र षष्ठी च यथा प्रयोगार्हा तद्वत् गोष्वश्वानां च स्वामीत्येकत्र सप्तम्यन्यत्र षष्ठ्यपि प्रयोगार्हा स्यात् । स्वामीश्वरेति सूत्रेण स्वाम्यादियोगे षष्ठीसप्तम्योर्द्वयोरपि विधानादित्यर्थः ॥ ३८९ ॥

आकृतिरसाधारणो धर्मः । स चात्र श्रावणप्रत्यक्षविषयतावच्छेदको ज्ञेयः । तद्विशिष्टस्यैकस्य शब्दस्य यदर्थबोधनाय प्रयोग उपक्रान्तस्तदर्थबोधनाय पुनः शब्दान्तरे प्रयोक्तव्ये पूर्वोक्तसमानश्रावणप्रत्यक्षविषयतावच्छेदकधर्मविशिष्टस्यैव प्रयोगः कर्तव्यः । न त्वन्यस्येति परिभाषाऽर्थस्तदाह—**यस्मिन्निति** । **यादृग्रूपः** = श्रावणप्रत्यक्षविषयतावच्छेदकयद्धर्मविशिष्ट इत्यर्थः । एवं चोभयत्र षष्ठ्येव सप्तम्येव वा प्रयोक्तव्या । त्वेकत्र षष्ठ्यपरत्र सप्तमीति । अतो नोक्तदोषः ॥ ३९० ॥

**अर्थान्तरसम्भावना** । अन्यार्थप्रतीतिसम्भावना, यथा गोष्वश्वानां स्वामीति प्रयोगे, अश्वानां स्वामी गोषु तिष्ठतीत्यधिकरणार्थप्रतीतिः संभाव्यते । तन्निवारणाय प्रकरणाद्यन्वेषणे गौरवम् । उभयत्र षष्ठीप्रयोगे सप्तमी प्रयोगे वा झटित्यसंदिग्धार्थप्रतीतिरिति लाघवम् । तदेवास्या बीजम् । द्रोग्धा द्रोग्घा द्रोढा द्रोढेत्यादौ तु घत्वढ-

ननु विव्याधेत्यादौ कृते परतयाऽऽदिहल्शेषे ।
स्याद्धस्य संप्रसारणमित्याशङ्कां निराकुरुते ॥ ३९२ ॥

## संप्रसारणं तदाश्रयं च कार्यं बलवत् ॥ १२७ ॥

भृष्टे रमागमविधिं जुहुवतुरित्यत्र चाल्लोपम् ।
शुशुवतुरित्यत्रेयङ्यणौ विबाध्य प्रसारणं ह्यनया ॥ ३९३ ॥
इति फलमुदीर्य भाष्ये प्रत्याख्यातेयमन्यथा सिद्धया ।
विव्याधेत्यादावपि नादिहलः शेष आदितो भवति ॥ ३९४ ॥
उभयेषामिति वचनाद्विनिश्चितं संप्रसारणं ह्येषाम् ।
अपि णौ च संश्वङोरित्यादौ दोषो न विषयसप्तम्या ॥ ३९५ ॥

---

त्वाभ्यामर्थे विशेषाभावान्नास्याः प्रवृत्तिः । एतेन प्राचीनानामनया तत्साधनोक्तिरपास्ता । कृञ्चेति । कृञ्चानुप्रयुज्यते लिटि ( ३।१।४० ) इति सूत्रे भाष्ये—कृञोऽनुप्रयोगवचनं लिट्परस्यैवानुप्रयोगो यथा स्यादन्यपरस्य माभूदित्यर्थमित्युक्तिखण्डनायेयमुक्ता । आमन्तस्य लिङन्तत्वादनया परिभाषया लिङन्तानामेव कृभ्वस्तीनामनुप्रयोगो भविष्यतीति न तदर्थं कृञोऽनुप्रयोगवचनमिति तदाशयः ॥ ३९१ ॥

द्विर्वचनप्रस्तावाद्द्विरुक्तेषु कार्यक्रमव्यवस्थापनायाह—नन्विति । परतयेति । संप्रसारणविधायकाल्लिट्यभ्यासस्येत्यस्मात्, हलादिः शेष इत्यस्य परत्वेनेत्यर्थः ॥३९२॥

तदाश्रयम् = संप्रसारणाच्चेति पूर्वरूपम् । भृष्टे इति । लिट्यभ्यासस्योभयेषाम् (६।१।१७) इति सूत्रे भाष्ये विव्याधेत्याद्यर्थमुक्तस्य 'अभ्याससंप्रसारणं हलादिःशेषाद्विप्रतिषेधेन' इति पूर्वविप्रतिषेधप्रतिपादकवार्तिकस्य खण्डनाय 'न वा संप्रसारणाश्रयबलीयस्त्वादन्यत्रापि' इति वचनमुपन्यस्य 'प्रयोजनं रमाल्लोपेयङ्यणाः' इत्युक्तम् । तत्र भृष्टो भृष्टवानित्यादौ संप्रसारणात्परत्वाद् भ्रस्तो रोपधयोरिति रमागमः प्राप्नोति । ह्वेञो लिटि जुहुवतुरित्यादावाकारलोपः प्राप्नोति । सति त्वाकारलोपे तस्य स्थानिवद्भावादुवङ् न स्यात्, यणादेशः प्रसज्येत । श्वयतेर्लिटि शुशुवतुरित्यादौ च संप्रसारणात्प्रागियङादेशः प्राप्नोति संप्रसारणोत्तरं च पूर्वरूपात्परत्वाद्यणादेशः प्राप्नोति । एतान्बाधित्वा संप्रसारणं तदाश्रयं पूर्वरूपं च यथा स्यादित्यर्थं परिभाषारूपमुक्तवचनमाश्रयणीयम् । इति प्रयोजनान्युक्त्वा, संप्रसारणस्य नित्यत्वेन पूर्वरूपस्य चान्तरङ्गत्वेनैवोक्तप्रयोगसिद्धिं प्रदर्श्य तत्प्रत्याख्यातम् । अवतरणोक्तस्य विव्याधेत्यादेरपि प्रकारान्तरेण सिद्धिमाह—विव्याधेति। तत्रापि हलादिः शेष इत्यस्य संप्रसारणात्प्राङ् न प्रवृत्तिरित्यर्थः ॥ ३९३, ३९४ ॥

हलादिः शेषस्य पूर्वमप्रवृत्तौ हेतुमाह—उभयेषामिति । लिट्यभ्यासस्येत्यत्र

यत्तु—

**क्वचिद्विकृतिः प्रकृतिं गृह्णाति ॥ १२८ ॥**

अनया निसमुपविभ्यो ह्व इति कृतात्वानुकरणसत्त्वेऽपि ।
ह्वापदतो ह्वेग्रहणान्निह्वयत इतीह तङ्सिद्धिः ॥ ३९६ ॥

एवम्—

**औपदेशिकप्रायोगिकयोरौपदेशिकस्यैव ग्रहणम् ॥१२९॥**

अत उपदेशे दादिर्यो धातुस्तस्य हो घ इत्यर्थात् ।
सिद्धमधोगिति घत्वं दामलिडादौ च तदभावः ॥ ३९७ ॥
तन्न प्रमाणविरहाद्भाष्यकृता चाव्यवहृतत्वात् ।
न च विकृतिः प्रकृतिं गृह्णातीत्यवहेलिता चाद्या ॥ ३९८ ॥

---

वच्यादीनां ग्रह्यादीनां चानुवृत्त्यैव सिद्धे उभयेषामिति पदेन तद्बोधनं हि उभयेषामभ्यासस्य संप्रसारणमेव यथा स्यात्, यदन्यत्प्राप्नोति तन्मा भूदित्यर्थम्। ननु प्रकृतपरिभाषानाश्रयणे श्विधातोर्णिजन्ताल्लुङि चङि द्वित्वे वृद्धेरायादेशस्य चान्तरङ्गत्वात्प्रसारणात्पूर्वं प्रवृत्तावशूशु-वदित्यादि न सिध्येत् । एवं णिजन्तात्सनि शुशावयिषतीति न सिध्येदत आह—अपि णौ चेति । णौ च संश्चङोरित्यादौ संश्चङोरिति विषयार्थे सप्तम्याश्रीयते । तेन द्वित्वात्प्रागेव संप्रसारणप्रवृत्त्या नोक्तदोषः । आदिपदेन स्वपिस्यमिव्येञां यङीत्यस्य संग्रहः । तत्रापि विषयसप्तम्यभावेऽपरनिमित्तकत्वेनान्तरङ्गत्वाद् द्वित्वे उत्तरखण्डस्यैव संप्रसारणे सोषुप्यत इत्यादिरूपासिद्ध्यापत्तिरिति बोध्यम् ॥ ३९५ ॥

प्राचीनसम्मतं वाचनिकं परिभाषाद्वयं भाष्यकारानिष्टत्वादनूद्य खण्डयति यत्त्वित्यादिना । ह्वापदत इति । विकृतिभूतह्वाशब्देन तत्प्रकृतेर्ह्वेधातोर्बोधनान्निह्वयत इत्यादौ तङ्सिद्धिः । तङित्युपलक्षणम्, आत्मनेपदसिद्धिरित्यर्थः ॥ ३९६ ॥

प्रयोजनमाह—अत इति । दादेर्धातोर्घ इत्यत्रानया परिभाषया, उपदेशकालिकदादित्ववत एव धातोर्ग्रहणेन, अधोगित्यादावडागमे कृते दादित्वाभावेऽप्यौपदेशिकदादित्वसत्त्वेन तदीयहकारस्य घत्वं सिद्धम् । दामलिहमात्मन इच्छतीति दामलिट् इत्यादौ च दादित्वसत्त्वेऽप्युपदेशाभावान्न घत्वमित्यर्थः ॥ ३९७ ॥

उक्तपरिभाषाद्वयं निरस्यति—तन्नेति । प्रमाणविरहात् = तदुपष्टम्भकज्ञापकन्यायाभावात् । नन्वाद्याया न व्यो लिटीति विकृतनिर्देश एव ज्ञापकोऽस्तु । द्वितीयायाश्च

ह्व इति ह्वेञोऽनुकृतौ ज्ञेयः सौत्रः प्रयोगोऽसौ ।
तेनात्मनेपदं ञिद्विषये परगामिनि फलेऽपि ॥ ३९९ ॥
अन्त्याऽपि तत्र तत्र ग्रहणादुपदेशशब्दस्य ।
पाणिनिकात्यायनयोरसम्मतेत्येव विज्ञेयम् ॥ ४०० ॥
भाष्यकृताऽपि घसंज्ञासूत्रे लोके प्रयोगविरहे हि ।
उपदेश उपास्यत इति कथनात्तदसम्मतैवेयम् ॥ ४०१ ॥

---

श्वीदितो निष्ठायामित्यत्र श्विग्रहणं ज्ञापकम् । अन्यथा श्युकः कितीत्यत्रोक्तपदेन प्रायोगिकोगन्तस्यापि ग्रहणे तेनैव शून इत्यादाविडभावसिद्धेस्तद्वैयर्थ्यं स्पष्टम् । न च तीर्णं इत्याद्यर्थं तत्रोपदेशपदानुवृत्त्यङ्गीकारान्न तेन शून इत्यादिसिद्धिरिति वाच्यम् । तदनुवृत्त्यभावेऽप्यनयेष्टसिद्धेरत आह—भाष्यकृता चेति । आद्यायास्तु न केवलमव्यवहृतत्वमेव किन्तु दूषितत्वमपीत्याह—न चेति । अवहेलिता । ग्रहिज्या ( ६।१।१६ ) इति सूत्रे भाष्ये उक्तवचनेन तिरस्कृतेत्यर्थः ॥ ३९८ ॥

प्रयोजनस्यान्यथासिद्धिमाह—ह्व इति । नन्वशितीत्यत्र न शितीति प्रसज्य प्रतिषेधाश्रयणेऽपि 'ह्वे' इत्यादेरात्वाभावाय शित्परत्वयोग्यस्यैवादेच इत्यनेनात्वविधानात्, अत्रात्वाप्रवृत्त्याऽऽतो धातोरित्यस्याप्यप्रवृत्त्या ह्व इति रूपं दुर्लभमत आह—सौत्रः प्रयोग इति । कर्त्रभिप्राये क्रियाफले तु ञित्वादात्मनेपदं सिद्धमत आह—परगामिनीति ॥ ३९९ ॥

अन्त्यापीति । द्वितीयपरिभाषाऽप्युपदेशेऽजनुनासिक इत् एकाच उपदेशेऽनुदात्तादित्यादिसूत्रेषु, उपदेशग्रहणात्सूत्रकृतः, 'स्यसिच्'—( ६।४।६२ ) इत्यादिसूत्रेषु चिण्वद्भाव उपदेशवचनमृकारगुणबलीयस्त्वात्॥ । इत्यादिवार्तिकैरुपदेशग्रहणप्रयोजनप्रतिपादनाद् वार्तिककृतोऽप्यसम्मता । अन्यथा तयौपदेशिकस्यैव ग्रहणे किमुपदेशग्रहणेनेति भावः ॥ ४०० ॥

भाष्यकृताऽपीति । तरप्तमपौ घः ( १।१।२२ ) इति सूत्रे भाष्ये नद्यास्तरो नदीतर इत्यत्र तरेत्यस्य घसंज्ञामाशङ्क्य 'इह हि व्याकरणे सर्वेष्वेव सानुबन्धग्रहणेषु रूपमाश्रीयते । यत्रास्यैतद्रूपमिति । रूपनिर्ग्रहश्च शब्दस्य नान्तरेण लौकिकं प्रयोगम् । तस्मिंश्च लौकिके प्रयोगे सानुबन्धकानां प्रयोगो नास्तीति कृत्वा द्वितीयः प्रयोग उपास्यते । कोऽसौ ? उपदेशो नाम । न चैष उपदेशे तरप्शब्दः' इत्युक्तम् । सानुबन्धकग्रहणेष्विति प्रकृताभिप्रायम् । शब्दमात्रग्रहणेऽपि स्वं रूपमित्यनेन रूपाश्रयणादिति बोध्यम् । नदीतर इत्यत्र तरेत्यस्य तरप्त्वं तु ऋदोरबिति सूत्रपर्यालोचनावगतत्वेन काल्पनिकं न तु साक्षान्निर्दिष्टमतो न तद्ग्रहणमिति भावः । अनेन भाष्येण प्रायोगिकालाभ एवौपदेशिकग्रहणस्य प्रतिपादनादियं भाष्यकारासंमतेत्यर्थः ॥ ४०१ ॥

दादेरिति सूत्रे चापदेशकालिकदकारादौ ।
दादिपदं लाक्षणिकं तेनादोषान्न फलमस्याः ॥ ४०२ ॥

यदपि—

ननु बेभिदीत्यजर्घा इत्यादौ गणकृता विकरणाः स्युः ।
बेभिदितेत्यादौ चेट् प्रतिषेधापत्तिरत आह ॥ ४०३ ॥

**शितपा शपाऽनुबन्धेन निर्दिष्टं यद्गणेन च ।**
**यत्रैकाज्ग्रहणं चैव पञ्चैतानि न यङ्लुकि ॥१३०॥**

शितब्निर्देशो नेर्गदसूत्रे स्यति हन्ति यात्यादिः ।
शब्निर्देशश्च सनीवन्तेत्यस्मिन् भरेत्येषः ॥ ४०४ ॥

अनुबन्धेन द्विविधः स्वरूपतो ङित्किदादिशब्दैश्च ।
दीङो युडचीत्यपि चानुदात्तङित इत्युदाहरणे ॥ ४०५ ॥

तुर्यश्च दिवादिभ्यः श्यन्निति चरमं त्विटो निषेधकरम् ।
एकाच इत्यमीभिर्विहितानि न यङ्लुकि भवन्ति ॥४०६॥

---

प्रयोजनस्यान्यथासिद्धिमाह—दादेरिति ॥ ४०२ ॥

प्राचीनाभिमतं वाचनिकं पूर्वपरिभाषाद्वयं यथा खण्डितं तथा तैर्ज्ञापकसिद्धत्वेनाभिमतां शितपा शपेति परिभाषामपि भाष्याननुगृहीतत्वात्खण्डयितुमुपक्रमते यदपीति । गणकृताः = तत्तद्गणप्रयुक्ताः । इट्प्रतिषेधापत्तिरिति । भिदधातोरुपदेशे एकाच्त्वादनुदात्तत्वाच्च यङ्लुक्यपि एकाच उपदेशेऽनुदात्तादित्यनेनेण्निषेधापत्तिरित्यर्थः ॥४०३॥

शितपेति । शितबन्तादिनिर्देशैर्गणनिर्देशेन चोद्दिश्य विहितानि यानि कार्याणि; एकाच्पदघटितसूत्रेण च विहितं यत्कार्यम्, एतानि पञ्च यङ्लुकि न भवन्तीत्यर्थः ॥ उदाहरणान्याह शितबित्यादिना ॥ ४०४ ॥

अनुबन्धेनेति—। अनुबन्धविशिष्टो निर्देशो द्विविध इत्यर्थः । आद्योदाहरणं दीङो युऽचि क्ङितीत्यत्र दीङ इति । द्वितीयोदाहरणम्—अनुदात्तङित आत्मनेपदमित्यादौ अनुदात्तङित इत्यादिः ॥ ४०५ ॥

तुर्यः = चतुर्थो गणनिर्देशः । एकाच इति । एकाच उपदेशेऽनुदात्तादिति सूत्रम् ॥ ४०६ ॥

ज्ञापकमत्रैकाच्पदमेकाच इतीण्निषेधसूत्रस्थम् ।
उपदेशेऽनेकाचामुदात्तपाठात्तदन्यथा व्यर्थम् ॥४०७॥
परिभाषेयमनित्या यङ्लुक्यभ्यासगुणविधानात् ।
एकाच्पदघटितकृत-द्वित्वाभावेऽस्य वैयर्थ्यात् ॥४०८॥
अत एकाच्सम्बन्धेऽपि जायते सन्यङोरिति द्वित्वम् ।
भष्भावोऽजर्घा इति भूवादय इति च धातुत्वम् ॥४०९॥
इत्याहुः प्राचीनास्तदपि न भाष्याननुमतत्वात् ।
एकाज्ग्रहणस्य वधिव्यावृत्त्यैवोपयुक्तत्वात् ॥४१०॥
सति साक्षादुपदेशे स्थान्युपदेशाश्रयायोगात् ।
अपि चोपदेशताऽवच्छेदेनैकाजिति तदर्थात् ॥४११॥
किञ्चोत्तरार्थमिदमत उपदेश उगन्ततामुपादाय ।
प्राप्तोऽपि जागरितवानित्यादौ श्र्युक इतीण्निषेधो न ॥ ४१२ ॥

---

ज्ञापकम्—एकदेशानुमत्या ज्ञापकमिति भावः। अनेकाचाम् = जागृचकास-प्रभृतीनाम्। तद् = एकाज्ग्रहणम्। अन्यथा प्रकृतपरिभाषाज्ञापनाभावे। व्यर्थम्—अनुदात्तग्रहणेनैवानेकाज्व्यावृत्तिसिद्धेरिति भावः ॥ ४०७ ॥

नन्वेतत्परिभाषाङ्गीकारे सन्यङोरिति द्वित्वं यङ्लुकि न स्यात्, तत्राप्येकाच इत्यस्य संबन्धात्। एवमजर्घा इत्यादावेकाचो बशो भष् झषन्तस्य स्ध्वोरिति भष्भावो न स्यादत आह— परिभाषेति। द्वित्वविधायकस्य सन्यङोरित्यस्यैकाच्पदघटितत्वेन यङ्लुक्यप्रवृत्तौ द्वित्वाभावेऽभ्यासस्यासंभवात्, गुणो यङ्लुकोरिति यङ्लुक्यभ्यासगुण-विधानस्य वैयर्थ्यापत्तेस्तेनास्या अनित्यत्वं ज्ञाप्यत इत्यर्थः ॥ ४०८ ॥

सनाद्यन्ता धातव इत्यस्य प्रत्याख्यानपक्षे गणनिर्दिष्टं धातुत्वमप्यस्या अनित्यत्वादेवे-त्याह—भूवादय इति ॥ ४०९ ॥

भाष्याननुमतत्वात्—। भाष्ये साक्षादपठितत्वादध्वनितत्वाच्चेति भावः। एकाज्ग्रह-णस्यैतज्ज्ञापकत्वमपि न युक्तमित्याह—एकाज्ग्रहणस्येति। वधिव्यावृत्त्येति। हन्तेर्वधादेशस्य अवधीदित्यादौ वृद्ध्यभावायादन्तत्वाङ्गीकारेणानेकाच्त्वात्तद्व्यावृत्त्यैवैका-ज्ग्रहणस्य चारितार्थ्यान्न ज्ञापकत्वमिति भावः ॥ ४१० ॥

ननु वधेः स्वस्थानिहन्त्युपदेशे एकाच्त्वात्कथं तद्व्यावृत्तिरत आह—सतीति। आदेशोपदेशस्य प्राधान्यानाश्रयणेऽप्याह—अपि चेति। अवच्छेदकावच्छेदेनान्वय-स्यौत्सर्गिकत्वादिति भावः ॥ ४११ ॥

नन्वेकाच्त्वस्येवानुदात्तत्वस्याप्यवच्छेदकावच्छेदेनान्वयाद्वधादेशस्याद्युदात्तत्वनिपात-

ननु भाष्ये बेभिदितेत्यादौ यङ्लोप इट्प्रवृत्त्यर्थम् ।
उपदेशे नुदात्तादेकाचः श्रूयमाणाङ्गात् ॥ ४१३ ॥
इत्यर्थसमाश्रयणे बिभित्सतीत्यादिकेष्वपि स्यादिट् ।
तद्वारणाय सन इट्प्रतिषेधो वाच्य इत्युक्तम् ॥ ४१४ ॥
तद्वद्यङ्लुकि दोषो नोक्तस्तेनेष्यते तत्रेट् ।
स च परिभाषासाध्योऽत इयं भाष्याभ्युपगतैव ॥ ४१५ ॥
यङ्लुग्विषयं तु न तल्लोपेनोपक्रमात्तथैवान्ते ।
इट्प्रतिषेधनिरसनादल्लोपस्थानिवत्त्वेन ॥ ४१६ ॥

---

नेनानुदात्तत्वाभावान्निषेधाप्राप्त्या एकाज्ग्रहणं न वधिन्याबृत्त्यर्थमत आह—किञ्चेति। उत्तरार्थम् = श्र्युकः कितीति सूत्रेऽनुवृत्त्यर्थम्। अतः = उत्तरसूत्रे श्र्युक इत्यत्रैकाज्ग्रहणानुवृत्तेरेव। उपदेशे = उपदेशकाले वर्तमानामित्यर्थः। तत्रोपदेश इत्यस्यानुवृत्तिश्च स्तीर्णमित्यादाविण्निषेधायावश्यकी ॥ ४१२ ॥

अस्याः परिभाषाया भाष्यानुमतत्वमाशङ्कते—नन्विति। भाष्ये = एकाच उपदेशेऽनुदात्तात् (७।२।१०) इति सूत्रे भाष्ये। तत्र हि उपदेशे य एकाच् उपदेशेऽनुदात्तश्च ततः परस्येत्यर्थे भिद्धातोर्यङन्ताल्लुटि तासि यलोपेऽल्लोपे च संप्रत्यनेकाच्त्वेऽप्युपदेशे एकाच्त्वादिण्निषेधः स्यात्तद्वारणाय, उपदेशेऽनुदात्तादेकाचः श्रूयमाणादङ्गात्परस्येण्नेत्यर्थ आश्रितस्तत्र च बिभित्सतीत्यादाविडापत्त्या। सनश्चेट्प्रतिषेधो वक्तव्य इत्यपूर्ववचनारम्भगौरवरूपो दोष उपन्यस्तः। न चैकाच इत्यार्धधातुकाक्षिप्तधातोर्विशेषणम्। एवं च बिभित्सतीत्यादावुत्तरखण्डरूपधातोरेकाच्त्वेनेण्निषेधसिद्धया तद्भाष्यसङ्गतिरिति वाच्यम्। आर्धधातुकप्रत्ययानां धातुसम्बद्धत्वनियमेन धात्वाक्षेपेऽप्याक्षिप्तस्य शाब्दबोधेऽन्वयानौचित्यात्। पदवृत्त्युपस्थापितस्यैव शाब्दबोधे भानाङ्गीकारात्। अङ्गत्वं तु विशिष्ट एव। धातुत्वमर्थवत्त्वेनोत्तरखण्डस्यैवेति प्राङ् निरूपितम् ॥ ४१३, ४१४ ॥

दोषो नोक्तः—। यङ्लुकीट्प्रतिषेधो वक्तव्य इति दोषो नोक्त इत्यर्थः। तेनेति। यङ्लुकि दोषानुपन्यासेन तत्रेडिष्ट इति भाष्यकाराभिप्राय उन्नीयत इति भावः। स च = इट् च। परिभाषासाध्यः। उपदेशे य एकाच्, उपदेशेऽनुदात्तश्चेति सिद्धान्तितार्थे परिभाषां विना यङ्लुकि इडसिद्धेरिति भावः ॥ ४१५ ॥

ननु यङ्लोपार्थमिति भाष्यं यङ्लुग्विषयमेव। प्रागुक्त एव च सूत्रार्थोऽस्तु। एवं च यङ्लुकि इण्निषेधाप्राप्त्या परिभाषाया नोपयोग इत्यत आह—यङ्लुगिति। लोपेनेति। उपक्रमे यङ्लोपार्थमिति लोपशब्दोपादानात्, उपसंहारे च, उपदेशेऽनुदात्तादुपदेश एकाच इत्यर्थमुक्त्वा 'यङ्लोपे कथम्' इति शङ्कायाम्, 'अकारेण व्यव-

तस्योभयविषयत्वे यङ्लोपे स्थानिवत्त्वमिव ।
यङ्लुकि नोक्त उपायस्तेन स्यान्न्यूनतेति चेन्मैवम् ॥ ४१७ ॥
लोकेऽस्येड्विषयेऽनभिधानाद्वेदेऽखिलविकल्पात् ।
दोषानुक्त्युपपत्तेरेकाज्ग्रहणस्य चान्यफलकथनात् ॥ ४१८ ॥
पठितं च चर्करीतमदादिषु तस्माच्छ्यनादयो न ततः ।
वार्या चेतरकार्यापत्तिश्छान्दसतयेति नागेशः ॥ ४१९ ॥
वधिषीष्ट जागरितवानित्याद्येकाचपदफलानाम् ।
भाष्येऽन्यथैव सिद्धिप्रदर्शनाज्ज्ञापकं तदित्यन्ये ॥ ४२० ॥

---

हितत्वान्न भविष्यति । ननु च लोपे कृते नास्ति व्यवधानम् । स्थानिवद्भावाद्व्यवधान-मेव' इत्युक्तत्वात्तद्भाष्यं यङ्लोपविषयमेव । न तु यङ्लुग्विषयं, तत्राकारव्यवधानासंभ-वादिति भावः ॥ ४१६ ॥

ननु लोपत्वस्योभयव्यापकत्वाल्लुग्लोपोभयविषयं तदस्तु, तत्राह—तस्येति । नन्वित्यादिनोक्तां भाष्यसम्मतत्वाशङ्कां परिहरति—मैवमित्यादिना ॥ ४१७ ॥

अस्य = यङ्लुकः । अखिलविकल्पात्— । षष्ठीयुक्तश्छन्दसि वेत्यत्र वेति योगवि-भागेन छन्दसि सर्वविधीनां वैकल्पिकत्वबोधनादित्यर्थः । दोषानुक्तीति । यङ्लुकि इडापत्तिनिवारणार्थकवचनारम्भरूपदोषानुपन्यासस्योपपत्तेरित्यर्थः । अन्येति । एकाज्ग्रहणमुत्तरत्र जागर्त्यर्थम्, इह वध्यर्थमिति फलकथनात्तस्य परिभाषाज्ञापकत्वमयु-क्तमिति भावः ॥ ४१८ ॥

एवं बेभिदितेत्यादावविण्निषेधाप्रवृत्तिरूपं प्रयोजनं निरस्य, अजर्घा इत्यादौ श्यन्नादि-विकरणाप्रवृत्तिरूपं प्रयोजनमपि निरस्यति—पठितं चेति । चर्करीतमिति यङ्लुगन्त-स्य पूर्वाचार्याणां संज्ञा । अदादिगणे 'चर्करीतं च' इति वचनेन यङ्लुगन्तस्यादादिक-त्वबोधनाद्गणान्तरप्रयुक्तविकरणानामप्राप्तिः । श्वादित्वस्य सर्वधातुसाधारणतया प्राप्तस्य शपश्च 'अदिप्रभृतिभ्यः शपः' इति लुग्विधानान्न दोष इति भावः । वार्या = वारणीया । इतरकार्यापत्तिः = नेर्गदन देत्यादिविहितणत्वादिकार्यापत्तिः । छान्दसतयेति । यङ्लुकः प्रायश्छन्दस्येव प्रयोगदर्शनाद् बहुलं छन्दसीति सूत्राद् यङोऽचि चेत्यत्रच्छन्दसी-त्यनुवृत्तेश्छन्दसि च दृष्टस्यैवानुविधानान्न दोषः । लोके तत्प्रयोगस्तु बहुलग्रहणानुवृत्त्या बाहुलकादेवेति भावः । इति नागेशः । मन्यत इति शेषः ॥ ४१९ ॥

एवं नागेशमतमुक्त्वा तत्रारुचिकारणोपन्यासपूर्वकं मतान्तरमाह— वधिषीष्टे-त्यादिना । एकाच उपदेशेऽनुदात्तात् ( ७ । २ । १० ) इति सूत्रे भाष्ये वधादेशस्या-द्युदात्तत्वनिपातनेन व. धिषीष्टेत्यादाविण्निषेधाप्रवृत्तेरेकाज्ग्रहणस्य न फलम्, उत्तरत्र

छान्दससिद्धयर्थमपि प्रयत्नसत्त्वादियं समादृत्या ।
गणमनुदीर्यं च वा द्रुहमुहेति पाठोऽपि लिङ्गमिह ॥ ४२१ ॥
ननु सूत्रत्रयमेवास्तु जभोऽचि, रधेश्च, नेट्यलिट्येवम् ।
रधिधातोर्द्विर्ग्रहणं गुरुभूतमयुक्तमत आह ॥ ४२२ ॥

पदगौरवाद्योगविभागो गरीयान् ॥ १३१ ॥

योगविभागे वाक्यजबोधो ह्यधिकोऽस्य हेतवश्चेति ।
क्लेशकरं गौरवमिह तद्धेयत्वं च लोकतः सिद्धम् ॥ ४२३ ॥
भाष्ये त्वियं न पठिता टाङसिसूत्रस्थतद्विरुद्धा च ।
प्रत्याख्यातस्तत्र हि योगविभागाश्रयादिनेकारः ॥ ४२४ ॥

---

श्लुकः किर्तीति सूत्रे उपदेशपदानुवृत्त्यभावेऽपि आस्तीर्ण इत्यादाविट्सनि वेति ऋकारान्तानां सनीड्विकल्पविधानाद् यस्य विभाषेत्यनेनैवेण्निषेधसिद्धेरुपदेशपदानुवृत्त्यनुपयोगाज्जागरितवानित्यादौ गुणे कृतेऽनुगन्तत्वादिण्निषेधप्राप्त्या तत्रैकाज्ग्रहणानुवृत्तेरपि न फलमिति प्रतिपादनात्तस्य परिभाषाज्ञापकत्वमक्षतमिति भावः ॥ ४२० ॥

यदुक्तं यङ्लुकश्छान्दसत्वादितरकार्याप्रवृत्तिरिति तत्राह—छान्दसेति । छान्दसप्रयोगसिद्धयर्थमपि सूत्रकारादीनां सूत्रादिप्रणयनरूपप्रयत्नदर्शनात्तदर्थमपि परिभाषाङ्गीकार आवश्यक इति भावः । किञ्चास्याः सत्वादेव भाष्ये उपदेशेऽनुदात्तादुपदेश एकाच इति सिद्धान्तितार्थे यङ्लोपेऽल्लोपस्थानिवत्त्ववत्, यङ्लुक्युपायान्तरं न प्रदर्शितमित्येव कल्पना ज्यायसी । लोके इड्विषये यङ्लुकोऽनभिधाने तु न मानम् । ज्ञापकान्तरमाह—गणमनुदीर्येति । वा द्रुहादीनामिति गणनिर्देशमकृत्वा वा द्रुहमुहष्णुहष्णिहामिति पाठो हि दोध्रुक् दोध्रुट् इति घत्वविकल्पार्थः । गणनिर्देशे तु निर्दिष्टं यद् गणेन चेति यङ्लुकि तत्प्रवृत्तिर्न स्यादतः स एकदेशानुमत्याऽस्या ज्ञापक इति भावः ॥ ४२१ ॥

वक्ष्यमाणपरिभाषया लाघवस्यानन्दहेतुतां दर्शयिष्यन् प्रसङ्गाद्गौरवस्य त्याज्यतां निरूपयितुमाह—नन्विति । द्विर्ग्रहणम् । 'रधिजभोरचि', नेटयलिटि रधेः' इति रध्धातोर्द्विरुपादानम् ॥ ४२२ ॥

योगविभागे गौरवमुपपादयति—योगेत्यादिना । अस्य = वाक्यजन्यबोधस्य । हेतवश्चेति । अधिका इत्यनुषङ्गः । तद्धेयत्वं चेति । अल्पायाससाध्येनेष्टसिद्धौ बह्वायाससाध्यत्वस्य त्याज्यत्वं लोके प्रसिद्धं तेनेयं लोकसिद्धेति भावः ॥ ४२३ ॥

टाङसीति । टाङसिङसामिनात्स्याः ( ७।१।१२ ) इति सूत्रे भाष्ये आङि चाप इत्यत्र, 'आङि च' । आपः । इति योगविभागेन बहुवचने झल्येदिति सूत्रादेकारानुवृत्त्या च वृक्षेणेत्यादि रूपसिद्धिं प्रदर्श्य टाप्रत्ययस्य नादेश एव विधेयो न त्विनादेश इति

वस्तुत उक्तप्रत्याख्यानपरं भाष्यमेकदेश्युक्तिः ।
क्लिष्टेनानेकविध--प्रकल्पनेनाल्पगौरवापहृतेः ॥ ४२५ ॥

**अर्धमात्रालाघवेन पुत्रोत्सवं मन्यन्ते वैयाकरणाः ॥१३२॥**

सुतजन्मसदृशसुखदं शाब्दिकहृद्यल्पलाघवमपीति ।
ए ओङ् ऐ औजनयोर्भाष्यकृता ध्वनितमत्र कथितं हि ॥ ४२६ ॥
न हि लोके वेदे चास्त्यर्धैकारो न चार्ध ओकारः ।
यदि तौ स्यातां तावेवोपदिशेदिति तदिह मानम् ॥ ४२७ ॥
तत्रानेकपदघटितसूत्रे पदलाघवस्यैव ।
भवति विचारः प्रायो न तु मात्रालाघवविचारः ॥ ४२८ ॥

---

प्रतिपादितम् । तद्विरोधादियमप्रामाणिकीति बहूनां मतमिति नागेशभट्टेनोक्तम् । इनेकारः—इनादेशस्येकारः ॥ ४२४ ॥

नवीनमतमाह—वस्तुत इति । अत एव ऋलृक्सूत्रे वार्तिककारेण महता क्लेशेन कृतस्य लृकारोपदेशप्रत्याख्यानस्यावहेलनपरं 'स एष सूत्रभेदेन लृकारोपदेशः प्लुत्याद्यर्थः सन् प्रत्याख्यायते । सैषा महतो वंशस्तम्बाल्लट्वाऽनुकृष्यते' इति भाष्यं सङ्गच्छते ॥४२५॥

ग्रन्थान्ते मङ्गलार्थं लाघवस्यानन्दजनकताप्रतिपादिकां परिभाषामाह—अर्धेति । लाघवेनेति हेतौ तृतीया। पुत्रोत्सवपदं च लक्षणया पुत्रजन्मजन्यानन्दसदृशानन्दबोधकम् । तत्फलितमाह—सुतजन्मेति । अल्पलाघवमपि । अर्धमात्रात्मकमत्यल्पलाघवमपि वैयाकरणानां विशिष्टानन्दजनकं किमुताधिकलाघवमित्यर्थः । तत्र मानमाह—एओङ् इत्यादिना॥ ४२६ ॥

उक्तसूत्रयोर्भाष्ये यदुक्तं तदाह—नहीति । तत्र हि एकारादीनां सन्ध्यक्षराणां तपरोपदेशाभावे एकारौकाराभ्यां मात्रिकयोरर्धैकारार्धौकारयोरपि ग्रहणाद् एचो ह्रस्वादेशशासनेषु तौ स्यातां, तद्वारणाय एच इग्घ्रस्वादेशे इति सूत्रं कर्तव्यमित्याद्युक्त्वा 'न तौ स्तः । यदि तौ स्यातां तावेवायमुपदिशेत्। ननु च भोश्छन्दोगानां सात्यमुग्रिराणायनीया अर्धमेकारमर्धमोकारं चाधीयते । सुजाते ए अश्व सूनृते । अध्वर्यो ओ अद्रिभिः सुतम् । शुक्रं ते ए अन्यद्यजतम् । ते ए अन्यदिति । पारिषदकृतिरेषा तत्रभवताम् । नैव हि लोके नान्यस्मिन्वेदेऽर्ध एकारोऽर्ध ओकारो वाऽस्ति' इत्युक्तम् । तत्राल्पलाघवस्याप्यादरणीयत्वं स्पष्टम् ॥ ४२७ ॥

लाघवविषये व्यवस्थामाह—तत्रेति ॥ ४२८ ॥

इति सूचितमूकालोऽजपृक्त इति सूत्रयोर्भाष्ये ।
पदसंख्याया एवाधिक्यस्य निरूपणाच्च साम्यस्य ॥ ४२९ ॥
प्रायः पदाच्च कुत्र चिदनेकपदघटितसूत्रेऽपि ।
मात्रालाघवमेव प्रदर्शयद्भाष्यमुपपन्नम् ॥ ४३० ॥

---

तत्र प्रमाणमाह—इति सूचितमित्यादिना । पदसंख्याया इति—ऊकालोऽजिति सूत्रे पदसंख्याया एवाधिक्यस्य गौरवप्रयोजकस्य निरूपणात् । अपृक्त एकाल्प्रत्यय इति सूत्रे च पदसंख्यासाम्येनैव लाघवकृतविशेषाभावस्य निरूपणादित्यर्थः । ऊकालोऽज्झ्रस्वदीर्घप्लुतः (१।१।२७) इति सूत्रे भाष्ये हि ग्राहकसूत्रेण दीर्घप्लुतयोरपि ह्रस्वसंज्ञापत्तिमाशङ्क्य, ह्रस्वसंज्ञावचनसामर्थ्याद्दीर्घप्लुतयोर्ह्रस्वसंज्ञा नेति समाधाय सामर्थ्योपपादनाय लाघवगौरवविचारः कृतः । दीर्घप्लुतयोरपि ह्रस्वसंज्ञायामेव इग्घ्रस्वादेश इत्यस्योक्तिसंभव एव संज्ञाकरणप्रयोजनम् । संज्ञाया अकरणे, ह्रस्वो नपुंसके, णौ चङि, ह्रस्वः (अभ्यासस्य) इत्येतेषु त्रिषु ह्रस्वविधिप्रदेशेषु एच इगिति वक्तव्यम्, एवं च षडेव पदानि । संज्ञाकरणे तु ऊकाल इत्यत्र ह्रस्वपदम्, उक्तेषु त्रिषु ह्रस्वप्रदेशेषु त्रिर्ह्रस्वग्रहणम्, एच इग् ह्रस्वादेश इति सूत्रघटकपदचतुष्टयं चेत्यष्टौ पदानि । एवं च लघीयसा न्यासेन सिद्धे ह्रस्वसंज्ञाकरणरूपं यद्गरीयांसं यत्नमारभते तस्यैतत्प्रयोजनं दीर्घप्लुतयोर्ह्रस्वसंज्ञा माभूदिति । अत्र पदलाघवमेव विचारितम् । अपृक्त एकाल्प्रत्ययः (१।२।४१) इति सूत्रे भाष्ये—'अपृक्तसंज्ञायां हल्ग्रहणं स्वादिलोपे हलोऽग्रहणार्थमिति वार्तिकविवरणेऽल्ग्रहणयोर्विशेषविचारे, संज्ञाया हल्ग्रहणे तदेकं ण्यक्षत्रियेति सूत्रेऽणिञोरिति पदद्वयमिति त्रीणि पदानि । अल्ग्रहणेऽपि संज्ञाविधौ तदेकं, स्वादिलोपे हल्ग्रहणं, ण्यक्षत्रियेति सूत्रेऽपृक्तस्येति त्रीण्येव पदानि । अतस्तत्र नास्ति लाघवकृतो विशेष इत्युक्तम् । तच्च पदलाघवविचार एव सङ्गच्छते । मात्रालाघवविचारे तु हल्ग्रहणपक्षे उक्तानां पदानां संकलने सार्धाः सप्त मात्रा भवन्ति, अल्ग्रहणपक्षे दशमात्रा, इति विशेषस्य स्पष्टत्वात्तदसङ्गतिः स्यादिति भावः । यत्तूक्तस्थले संज्ञाशब्दानां सार्धमात्रिकत्वेन मात्रालाघवकृतविशेषस्याप्यभावात्, अकालोऽजिति सूत्रे पदगौरवप्रदर्शनेन मात्रागौरवस्याप्युक्तप्रायत्वान्मात्रालाघवमेवानुगतत्वेन सर्वत्रादरणीयमिति केचित् । तन्न । संज्ञाशब्दानां सार्धमात्रिकत्वाङ्गीकारे हल् अपृक्त इत्यनयोः संज्ञाशब्दत्वात्सार्धमात्रिकत्वे हल्ग्रहणपक्षे उक्तपदानां सप्तमात्राः, अल्ग्रहणपक्षे तु सार्धाः षडित्यल्ग्रहणपक्ष एव लाघवस्य वक्तुं युक्तत्वेन नास्ति लाघवकृतो विशेष इति भाष्योक्तेरसङ्गतत्वापत्तेः । संज्ञानां सार्धमात्रिकत्वे भाष्यसम्मतमानाभावाच्च । तस्मादुप्रदर्शिता नागेशभट्टोक्तव्यवस्थैव युक्ता ॥ ४२९ ॥

तत्रानेकेति कारिकायां प्रायः पदमुक्तं, तत्प्रयोजनमाह—प्रायः पदाच्चेति । मात्रालाघवमेवेत्येवकारेण पदलाघवव्यावृत्तिः ॥ ४३० ॥

लण्सूत्रे भाष्ये खलु पूर्वेण परेण वा णकारेणेण् ।
इति सन्देहेऽचिश्न्वति सूत्र इण इति त्रिमात्रकेणैव ॥ ४३१ ॥

सिद्धे य्वोरिति सार्धत्रिमात्रनिर्देशकरणेन ।
ज्ञप्तं हि परेणैवेणिति निःसन्देहसिद्धिरिति ॥ ४३२ ॥

एकाधिकसप्ततियुग्-द्वादशशतकात्मिकेयममृतकृतिः ।
परिभाषेन्दुविभूषितविबुधवरप्रीतये भवतु ॥ ४३३ ॥

रामाङ्काङ्कमहीसंख्ये विक्रमार्कस्य वत्सरे ।
माघमासे पूर्णिमायां पूर्णेयं गुरुवासरे ॥

इति श्रीमद्व्यासोपनामकत्रिभुवनशर्म्मात्मजेनामृतलालशर्म्मणा विरचिता परिभाषेन्दुप्रभानाम्नी वैयाकरणपरिभाषाव्याख्या समाप्ता ॥

॥ श्रीमदुमामहेश्वरार्पणमस्तु ॥

---

मात्रालाघवप्रदर्शनपरं लण्सूत्रभाष्यमर्थत उपनिबध्नाति—लण्सूत्र इत्यादिना । इण् = इण्प्रत्याहारः त्रिमात्रकेणेति—इदं पदच्छेदाभिप्रायेण । संहितायां रुत्वयत्वयलोपेषु सार्धमात्रद्वयमिति बोध्यम् । त्रिमात्रकेणैवेत्यस्याग्रिमकारिकास्थे सिद्धे इत्यत्रान्वयः ॥ ४३१ ॥

ज्ञप्तमिति—। उक्तरीत्या लघीयसा न्यासेन सिद्धे गुरुन्यासकरणरूपयत्नाधिक्येन, इण्प्रत्याहारः परणकारेणैव भवति न तु पूर्वणकारेणेति भगवता पाणिनिना ज्ञाप्यते तेन सन्देहनिवृत्त्येष्टसिद्धिरिति लणसूत्रे भाष्ये भगवता पतञ्जलिनोक्तमित्यर्थः । सिद्धिशब्दो ग्रन्थान्ते मङ्गलार्थः ॥ ४३२ ॥

एकाधिकेति—युगिति युक्तेत्यर्थकम् । पद्यानामेकसप्ततियुक्तानि द्वादशशतकानि आत्मा = स्वरूपं यस्या एवंभूताऽमृतशर्मणः कृतिः परिभाषेन्दुप्रभानाम्नीयं व्याख्या परिभाषेन्दुरिवेति परिभाषेन्दुस्तदर्थज्ञानाभूषितानां विबुधवराणां विद्वद्वराणां प्रीतये प्रीतिजनिका भवतु । अपि च परितो भाष्यन्ते कल्याणार्थिभिः स्तूयत इति परिभाषा भगवत्युमा इन्दुश्चन्द्रश्च ताभ्यां विभूषितो विबुधवरो देवश्रेष्ठः श्रीमहेश्वरस्तत्प्रीतये भवत्विति श्लेषः ॥

इति ग्रन्थकृता स्वयं विरचिता भावप्रकाशिकानाम्नी व्याख्या समाप्ता ।

शुभं भूयात्

॥ ॐ ॥

# ॥ ईश्वरोपकारनिरूपणस्तुतिः ॥

करुणावरुणालय प्रभो विहितान्प्राणिहिताय ये त्वया।
उपकारभरान्विचिन्त्य तान् मनुजो नम्रशिरा न को भवेत्॥ १॥
विपदां प्रभवे भवे भ्रमन् नरदेहं भवसागरप्लवम्।
भवता भवतापहारिणा कृपया जन्तुरवापितः सुखम्॥ २॥
जननीजठरे समागतं क्वथितं जाठरवह्निना भृशम्।
अवता भवता प्रदर्शिताऽनुपमा दीनदयालुता विभो॥ ३॥
अथ लब्धजनिं क्षुधातुरं दशनैर्हीनमतीव कोमलम्।
परिपोषयितुं सुधासमं विहितं मातुरुरोजयोः पयः॥ ४॥
शिशुमात्मवपुःप्रपुष्टयेऽशनपानादिसमर्जनेऽक्षमम् ।
अवितुं पितृचेतसि त्वया सुतवात्सल्यमहो महत्कृतम्॥ ५॥
रचना वचनातिगामिनी तनुयन्त्रस्य कृता महाद्भुता।
असुभिः परिपालिता मनोमुकुरस्वप्रतिबिम्बभूषिता॥ ६॥
खगणं खगुणादिगोचरं वचनादानसुखक्रियापटुम्।
प्रविधाय मतिर्निवेशिता सदसद्वस्तुविवेचनक्षमा॥ ७॥
द्युमणिं भुवनप्रकाशकं तनुरक्षौपयिकौष्ण्यदायिनम्।
नयनं जगतः सुमङ्गलं गतियुक्तं दधसे नभोऽङ्गणे॥ ८॥
निशि चन्दनवारिशीतलैः शशिनं तप्तजनार्तिशान्तये।
सकलौषधिपुष्टिकारकं कमनीयं प्रकटीकरोषि च॥ ९॥
भुवनान्यमितानि यत्र च ग्रहनक्षत्रगणाश्चकासति।
विपुलं तदनन्तलीलया सुखसञ्चारकृते कृतं नभः॥१०॥
क्षणमेकमपीह यं विना न जनो जीवनधारणे क्षमः।
सुलभः स तु मूल्यमन्तरा श्वसनो विश्वहिताय निर्मितः॥११॥
शुभयज्ञविधानसिद्धये जठरस्थान्नरसादिपक्तये।
तपनास्तमये प्रकाशदं सृजसि स्मेष्टदजातवेदसम्॥१२॥
निहितं भुवि वारि शीतलं तृषितप्राणितृषानिवृत्तये।
सकलाघहरं सुशान्तिदं शुचि गंगादिजलं प्रवाहितम्॥१३॥
विविधान्नरसप्रदौषधिः फलनम्रद्रुमराजिमण्डिता।
मणिरत्नहिरण्यसंभृता सुखदावासकृते कृता मही॥१४॥

समदृष्टितया महीभुजे धनहीनाय च जीवनाश्रयम् ।
अनिशं ददता त्वया समो भुवने नास्ति वदान्यसत्तमः ॥१५॥
पुरुषार्थचतुष्कसाधनान्यधिकारानुगमेन देहिनाम् ।
परिदर्शयितुं सुधोपमा मधुरा वेदगिराऽभ्युदीरिता ॥१६॥
शुभसाधनबोधनाय च श्रुतिपाठानधिकारिणां नृणाम् ।
इतिहासपुराणवाङ्मयं मुनिभिर्व्यासमुखैरकारयः ॥१७॥
निगमागमपारदृश्वता सुधियां यच्च कलासु नैपुणम् ।
तवशक्तिरियं विजृंभते भगवन् ! सत्वगुणोदयात्मिका ॥१८॥
धृतिशौर्यदयादयो गुणाः सुयशः श्रीश्च मनोहराकृतिः ।
तनुभृत्सु विभूतयो भवत्सकृपापाङ्गविलोकनोद्भवाः ॥१९॥
परिबाधितमुद्धतासुरैः श्रुतिधर्मं भुवनं च रक्षितुम् ।
झषकूर्मनृसिंहवामनादिकमूर्तीरधरः सुमङ्गलाः ॥२०॥
रघुनन्दननन्दनन्दनेत्यभिधे दिव्यतनू विधृत्य च ।
चरितानि चकर्थ गायतामघहारीणि विमुक्तिदानि च ॥२१॥
उपदिश्य च पाण्डुनन्दनं युधि गीतामृतमात्मदर्शनम् ।
श्रुतिसारमनन्तशान्तिदं जगदुद्धारकृदूचिवान्भवान् ॥२२॥
महिमा मनसोऽप्यगोचरः श्रुतिभिर्नेति च नेत्युदीरितः ।
गदितुं तव केन शक्यते विधिना वाक्पतिनापि दुर्वचः ॥२३॥
उपकारगणान्प्रतिक्षणं क्रियमाणान्गणयेम ते कथम् ? ।
नमनान्न मनागपीतरद् भवतः प्रत्युपकर्तुमीश्महे ॥२४॥
जगदीश ! जगत्त्रये न किं भवदीयं भवतेऽर्पयेम यत् ।
ममतामपहाय केवलं वरिवस्येम भवत्पदाम्बुजम् ॥२५॥
त्वयि जाग्रति कल्पपादपे सकलाभीष्टकरे सुशान्तिदे ।
इतराश्रयकांक्षिणो नराः फलमिच्छन्त्यवकेशिनो द्रुमात् ॥२६॥
प्रविभातु मदीयमानसे तव रूपं रुचिरं रमापते ।
अपगच्छतु चान्तरं तमोऽभ्युदियाद् या तु मतिः कृतिः शुभा ॥२७॥
असुरघ्न ! ममान्तरे स्थितानसुरान्काममुखान्विनाशय ।
अघहन् ! बहुजन्मसञ्चितानघराशीनखिलानपाकुरु ॥२८॥
श्रुतिगीतमनामरूपकं परमं तत्त्वमजं निरञ्जनम् ।
यतयोऽनुभवन्तु हृत्तु मे सगुणां दिव्यतनुं दिदृक्षते ॥२९॥
समुपैतु सुखासुखादिकं स्वकृतप्राक्तनकर्मणः फलम् ।
भवदीयपदाम्बुजे रतिर्हृदयान्नाथ न जात्वपैतु मे ॥३०॥
अतिदुस्तरदुःखसागरेऽनवलम्बेऽत्र निमज्जतो भवे ।

शरणं सकलार्तिवारणं चरणं ते तरणीयतां मम ॥३१॥
अपराधशतानि मे प्रभो जगदावास न सन्तु ते क्रुधे ।
उदरस्थशिशोः पदाहतिर्जननीचेतसि रोषकृन्न हि ॥३२॥
सचराचरविश्वमोहिनी तव माया बहुभावदर्शिनी ।
स्मरतस्तवपादपंकजं हृदयं जातु न मेऽपकर्षतु ॥३३॥
बहुजन्मनिरूढवासनावशगं मे चपलं हि गोव्रजम् ।
विषयाटविकाभ्रमाकुलं कुरु गोपाल निजालये स्थिरम् ॥३४॥
भवदावमहाग्नितापितं विषयाशीविषदंशमूर्च्छितम् ।
अमृतेशकृपासुधासिचा स्वदृशाप्याय मां दयानिधे ॥३५॥
उपकारनिरूपणस्तुतिर्विहितैषामृतलालशर्मणा ।
पठतां प्रयतात्मनामिमां परमेशप्रवणं मनो भवेत् ॥३६॥
उपकारपरंपरां स्मरन् जगदीशेन कृतां निरन्तरम् ।
मनुजो भगवत्पदाम्बुजे दृढभक्तिः कृतकृत्यतां व्रजेत् ॥३७॥
समवाप्यमनीषितानिहाभ्युदयान्विश्वपतेः प्रसादतः ।
परमं नरजन्मनः फलं परमानन्दपदं लभेत सः ॥३८॥
शरवस्वङ्कभूसंख्ये विक्रमार्कस्य वत्सरे ।
चैत्रमासे सिते पक्षे नवम्यां बुधवासरे ॥३९॥
प्रह्लादाख्यपुरे श्रेष्ठिनारायणविनिर्मिते ।
विद्यासद्मनि पूर्णेयं स्तुतिरस्त्वीशतुष्टिकृत् ॥४०॥

## ईश्वरोपकारनिरूपणस्तुतिः समाप्ता

॥ श्रीहरिः शरणम् ॥

ॐ शान्तिः शान्तिः शान्तिः



---

ध्येयम् :—

एकाकी निर्ममश्शान्तः पाणिपात्रो दिगम्बरः ।
कदा शंभो भविष्यामि कर्मनिर्मूलने क्षमः ॥

( राग :— धीरसमीरे यमुनातीरे वसति वने वनमाली )

## मोक्षमार्गोपदेशः

हे मन ! आश्रय शम्भुपदाम्बुजमपनय चञ्चलभावम् ।
शीतलमीशपदं व्यपनेष्यति तीव्रतरं भवदावम् ॥१॥ हे मन ! आ०
अतिगहने भ्रमता भवविपिने विषयसुखाय नितान्तम् ।
अगणितदारानगणितपुत्रानधिगत्यापि न शान्तम् ॥२॥ हे मन ! आ०
चिरमनुभूतान्पुनरपि विषयान् धावसि कथमादातुम् ।
मधुविषमिश्रितमन्नमहो ! त्वं कथमिच्छसि न विहातुम् ॥३॥ हे मन ! आ०
पश्यसि विषतरुममृतफलाढ्यं स्वादुतरं मृगतोयम् ।
दस्युगणञ्च निजं प्रियमित्रं जीव ! मृषाधिगमोऽयम् ॥४॥ हे मन ! आ०
प्रबलपराक्रमनिर्जितरिपवो निखिलधरावलयेशाः ।
विततयशःशशिनोऽपि गताः खलु नलनहुषादिनरेशाः ॥५॥ हे मन ! आ०
क्व तव पिता क्व पितामहमुख्याः क्व च जननी क्व पितृव्यः ।
कोऽपि कृतान्तमुखान्न विमुक्तः प्राणिगणोऽस्य शरव्यः ॥६॥ हे मन ! आ०
कमलदलस्थितजलकणसन्निभमायुरतीव हि चपलम् ।
तत्र न विस्रम्भणमलमुचितं द्रुतमाश्रय शिवमचलम् ॥७॥ हे मन ! आ०
विशरणशीले घृणितशरीरे परिहर दृढमनुरागम् ।
अविचलनिर्मलबोधसुखात्मनि साधय निजमविभागम् ॥८॥ हे मन ! आ०
चेतसि शान्ते स्थिरतां याते स्फुरति सुखं निजरूपम् ।
तच्छमयेन्द्रियगणमपि दमय त्यज कष्टं भवरूपम् ॥९॥ हे मन ! आ०
परपरिवादं परिहर नित्यं दूरीकुरु निजदोषान् ।
द्वन्द्वसहिष्णूपार्जय नित्यं सत्यदयार्जवतोषान् ॥१०॥ हे मन ! आ०
हे रसने रससारविभाविनि प्रियमधुरे शृणु तथ्यम् ।
साम्बशिवेत्यक्षररसमपरं न हि मधुरं न च पथ्यम् ॥११॥ हे मन ! आ०
हे नयने रुचिरेक्षणनिरते शृणुतमिदं स्ववधानम् ।
श्रीमदुमेशसमं रमणीयं जगति न सौख्यनिदानम् ॥१२॥ हे मन ! आ०

सुखसाधनचिन्तक हे चेतः सन्त्यज विफलविचारम् ।
सकलनिगमसारं भज शङ्करमविचलसुखदातारम् ॥१३॥ हे मन ! आ०
संसृतियन्त्रे निजकृतितन्त्रे जन्मजराऽऽदिकराले ।
अगणितकालं भ्रान्तमतः कुरु विश्रमणं शशिभाले ॥१४॥ हे मन ! आ०
तृणमपि न विचालयितुं शक्यं हित्वा यस्य निदेशम् ।
सकलसुरासुरसेवितचरणं शरणमुपेहि महेशम् ॥१५॥ हे मन ! आ०
हिमकरविशदमनोहरविग्रहमिन्दुकलाङ्कितभालम् ।
गिरितनयागजमुखलसदङ्कं विधृतमहोरगमालम् ॥१६॥ हे मन ! आ०
महति कपर्दे धृतसुरसरितं गिरिवरशृङ्गनिवासम् ।
कण्ठनिवेशितभुवनभयावहगरकृतमरकतभासम् ॥१७॥ हे मन ! आ०
रविशशिवह्निदृशं करधृतमृगपरशुवराभयरुचिरम् ।
कृत्तिवसनमघतिमिरहरं हृदि शिवमनुचिन्तय सुचिरम् ॥१८॥ हे मन ! आ०
कर्मसकलमपि तत्प्रीत्यर्थं कुरु शोधय निजचित्तम् ।
अभिमानमहंताममतारूपं दूरय बन्धनिमित्तम् ॥१९॥ हे मन ! आ०
श्रोत्रियमात्मरतञ्च दयालुं मोहतिमिरहर्तारम् ।
शरणमुपेत्य गुरुं परिशीलय वेदरहस्यविचारम् ॥२०॥ हे मन ! आ०
त्वंपद-तत्पदलक्ष्यमखण्डं चिन्तय वारंवारम् ।
चिद्घनमेकमनन्तमपारं रसमपरोक्षय सारम् ॥२१॥ हे मन ! आ०
न कुरु मनागपि बाह्यविचारं कामप्रमुखविकारम् ।
तेनैव हि नीतोऽसि भयङ्करसंसृतिकारागारम् ॥२२॥ हे मन ! आ०
प्रशमय निखिलानर्थनिदानं स्वावगमेनाज्ञानम् ।
निजभासा सकलार्थविभासकमनुभव परमात्मानम् ॥२३॥ हे मन ! आ०
संचितकर्म विनङ्क्ष्यति सकलं ज्ञानानलपरिदग्धम् ।
भर्जितबीजवदभिनवमफलं क्षिणु भोगेनारब्धम् ॥२४॥ हे मन ! आ०
मानुषजन्मसुदुर्लभमेतत् प्लवरूपं हि सुकल्पम् ।
सुकृतचयैरुपलब्धमतस्त्वं तर भवसिन्धुमनल्पम् ॥२५॥ हे मन ! आ०
सति हि विरागे शमदमसंपत् तामनुभक्तिज्ञानम् ।
इत्यमृतोक्तं परमपदाप्त्यै श्रय सुखदं पन्थानम् ॥२६॥
हे मन ! आश्रय शंभुपदाम्बुजमपनय चञ्चलभावम् ।

॥ इति शम् ॥

